# सूर्योदयः ।

( विविधविषयविभूषितं संस्कृतमासिकपत्रम् )

षष्ठे वर्षे } गुरु पूर्णिमा, सं० १९८७ । { प्रथम संख्या

## सम्पादकीया अभिप्रायाः ।

—:०*:०—

### भोज्याभोज्यपदार्थविमर्शः ।

अनभ्यासेन वेदानामाचारस्य च वर्जनात् ।
आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति ॥ ( मनुः )

विश्वजनीनस्य लोकोत्तरदिव्यमर्यादाप्रतिष्ठापनशीलस्याधममध्यमोत्तम-त्रिविधजीवग्रामाणां यथाधिकारं त्रिविधाभ्युदयनिष्पादनदक्षस्य विश्वव्यापक-स्वरूपस्य वर्णाश्रममर्यादाव्यूहप्रतिष्ठितस्य बाह्याभ्यन्तरशुद्ध्योः समानरूपे-णैव समर्थकस्यास्य सनातनधर्मस्य सात्त्विक-राजसिक-तामसिकभेदेन तत्तद्द्र-व्याणां गुणविमर्शोऽस्ति सुमहानाग्रहः । परस्परविवदमानानामपि धर्मशास्त्रा-णामस्मिन् विषये प्रशंसनीयमैकमत्यमेव सर्वतः समुपलभ्यते । श्रीमता पूर्णावतारेण भगवता श्रीकृष्णेनापि स्वमुखतः श्रीमद्भगवद्गीतोपनिषदि सप्त-दशेऽध्याये भोज्याभोज्यपदार्थानां गुणविमर्शो विहितोऽस्ति । तथाहि—

आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥
कट्वम्ललवणात्युष्ण-तीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकाऽऽमयप्रदाः ॥
यातयामं गतरसं पूतिपर्युषितञ्च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥

वैदिकदर्शनसिद्धान्ते स्थूलशरीरपोषकस्य सर्वस्यैव पदार्थजातस्या-स्त्यन्नमित्यभिधानम् । पादपेभ्यो यथा आपोऽन्नं तथैव मानवेभ्यो विविधानि खाद्यानि, अन्नशब्देनैवाभिधीयन्ते । यथा—गोधूमाः, तण्डुलाः, द्विदलानि,

फलानि, पुष्पाणि, मूलानि, कन्दाश्चेत्यादीनि सर्वाण्यपि मनुष्याणां कृतेऽन्नान्येवोच्यन्ते। तत्रापि घृतं दुग्धञ्चेति सनातनमार्गावलम्बिनां भारतीयानां प्रधानं भोज्यम्। विशेषतो यज्ञादिषु परमोपयोगित्वात् घृतन्तु प्रधानतमं भोज्यपदार्थेषु गण्यते भारतीयैः। बृहदारण्यकोपनिषदि प्रधानभोज्यत्वेन घृतदुग्धानामुपादानमायाति तथाहि—"पयो ह्येवाग्रे मनुष्याश्च पशवश्चोपजीवन्ति तस्मात्कुमारं जातं घृतं वैवाग्रे प्रतिलेहयन्ति स्तनं वानुधापयन्ति अथ वत्सं जातमाहुरतृणाद इति"।

प्राच्यपाश्चात्यदार्शनिकानां पदार्थशुद्धाशुद्धत्वादिविचारपद्धतौ महदस्ति वैषम्यम्। प्राच्या महर्षयः सात्त्विक-राजस-तामसादिभेदेन पदार्थानां शुद्धाशुद्धत्वमवगच्छन्ति, नेयं पाश्चात्यवैज्ञानिकानां सरणिः पदार्थगुणदोषविचारे। लसुनपलाण्डुप्रभृतयः फलस्थानीया अपि पदार्था अस्माकं दृष्टौ तमोगुणबहुलत्वादशुद्धतमत्वेन हेयतमत्वेन च परिगणिताः। यद्यपि वैद्यके लसुनस्य रसायनराज इत्युपाधिभिः भूयसी प्रशंसा श्रूयते, तथापि धर्म्मशास्त्रादिषु तस्य सर्वतोऽपि गर्हितत्वादधर्मजनकत्वाच्च धार्मिकसमाजे—"अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्मृतिः" इति प्रामाण्यबलात् हेयत्वमेव प्रख्यातम्। मधु हिंसाजन्यमपि सात्त्विकत्वात् पवित्रतमत्वेन देवपितृयज्ञादिषु प्रधानद्रव्यत्वेन च परिगणितमस्ति। पाश्चात्या वैज्ञानिकास्तु अपवित्रांस्तामसिकान् हिंसाजन्यानमेध्यप्रभवानपि पदार्थान् स्वीयरसायनिकपदार्थविज्ञानविद्यया (सायन्स) परीक्षितान् कृत्वा भोज्यानुपादेयतमान् स्वीकुर्वन्तीति महदस्ति पार्थक्यमन्तरञ्च प्राच्य-पाश्चात्य-विदुषोः पदार्थगुणविवेचनपद्धतौ।

यूरोपे अमेरिकायां च पदार्थविज्ञानविदां विदुषां पदार्थ-विज्ञानविद्योन्नत्या सहास्मिन्विषये महान् प्रयत्नोऽस्ति यत्किमपि तुच्छातितुच्छमपि पार्थिवं पदार्थजातमनुपयुक्तं सन्नष्टं न भवेदिति। पदार्थविज्ञानविद्याद्वारा सर्वस्यैव क्षुद्रतमस्याऽपि पदार्थस्योपयोगः कर्तव्य एव। तदनुसारमेव ते धूमतोऽपि विविधानि वस्तुजातानि उद्भावयन्ति, तथा काष्ठतोऽपि बहूपयोगि पदार्थजातं निःसारयन्ति। पदार्थविज्ञानविद्याविदः पाश्चात्यविद्वांसो व्यतीते महायुद्धे पञ्चत्वमुपेतानां योद्धृणां मृतशरीरतोऽपि वसामेदः प्रभृति निःसार्य्य द्रव्यान्तरे समुपयुज्याधिकमार्थिकलाभं साधितवन्त इति विश्वविदितमेव वृत्तमस्ति।

अद्यत्वे एवमपि श्रूयते यत्ते मानवानां मलमूत्रतोऽपि खाद्यपदार्थं निर्मान्ति । ते हि मन्यन्ते यन्मानवाः प्रतिदिनं यावन्ति तैल-घृत-हैयङ्गवीनादिकानि भुञ्जते तावतां भूयांसो भागा मलमूत्ररूपतः एव निःसरन्ति । खाद्यपदार्थानां यावन्तो भागा मानवानां मलमूत्रादिषु यान्ति,तावतां सर्वेषामपि पदार्थविज्ञानविद्यया ( सायन्स ) संग्रहं विधाय मानवैरुपयोक्तुं योग्यं कृतकं तैलं घृतं निर्माय ते विक्रीणन्ति, स्वयं च स्वच्छन्दतस्तदुपयोगमाचरन्ति । यतो हि तेषां पदार्थशुद्ध्यशुद्धिप्रकारस्तु भारतीयेभ्यो विभिन्न एवास्ति । अत एव अत्रत्या एतद्रहस्यवेदिनो भारतीया धर्ममर्मविदो विद्वांसः शङ्किताः सन्ति-यदिदानीं भारते कृतकं घृतं तैलञ्च सर्वत्रैव बहुप्रचलितमुपलभ्यते, तत्र को जानाति यत् तान्येव मानवमलमूत्रमेदःसमुद्भूतानि तैलघृतकल्पानि पदार्थजातानि न सन्ति ? अथवा तान्येव सत्यघृततैलादिषु सम्पर्कमुपेत्यात्र भारते न समागतानीत्यत्र किं मानमस्ति ? अतो हि तेषां पदार्थशुद्धाशुद्धत्वविवेकप्रकारस्तु विचित्ररूप एव वर्त्तते । विदेशनिवासिनां वणिजां कृते किमत्र चित्रं यत्ते इमान्येव गर्हितानि भारतीयैः स्प्रष्टुमप्ययोग्यानि मानवमलमूत्रमेदोनिर्मितानि कृतकतैलघृतादीनि सत्यतैलघृतादिषु मेलयित्वा पृथगेव वा अधिकलाभदृष्ट्या अत्र भारते न प्रहिण्वन्ति ?

इदानीमापणे सर्वत्रैव वनस्पतिघृतनाम्ना ख्यातं कृतकं घृतं बहुप्रचलितं विद्यते । परन्तु अग्नौ प्रतापने ततो दुर्गन्धो निःसरति । तन्निर्मितभोज्यमपि निःस्वादु भवतीति जना निगदन्ति । समर्थमप्यस्ति । एवं बहु समर्थं तैलमप्येकं सर्वत्रैवोपलभ्यते । इत्यादिकं सर्वं वैदेशिकं वस्तुजातं विदेशिवणिग्भिरत्र भारते लाभबुद्ध्या प्रचारितं किमस्ति इति धर्मप्राणैर्विज्ञैर्भारतीयैः सावधानैर्विमृशेलिमम् ।

हा कष्टम् ! येषां हिन्दूनां धर्मशास्त्रस्य डिमडिमघोषोऽस्ति यद्-अज्ञातोत्पत्तिप्रकारं किमपि वस्तु न गृह्णीयात्, नाभ्यवहरेत्, नोपयुञ्जीत, त एवेदानीमेव अन्धीभूय वैदेशिकैः वणिग्भिरुद्भावितं धर्मधनस्वास्थ्य-सर्वस्वापहारकं वैदेशिकं सप्तसमुद्रोपारभवं कृतकं, घृतं, तैलमौषधमन्यच्चाच्छाद्यं, लेप्यं लेह्यं, भोज्यं, चर्व्यं, भक्ष्यं, किम्बहुना सर्वविधमपि वस्तु जातं गृह्णन्ति उपयुञ्जन्ति च, किमितोऽपि पतितावस्था काचनान्या आगमिष्यति ? स्वराज्यनेतारश्च केचन वैदेशिकभावापन्ना अज्ञातहिन्दुधर्म्ममर्माणो भारतीयसंस्कृत्यपरिचिता अत्र विषये ध्यानमेव न ददति, अत्रत्याश्च जन्मसिद्धनेतारो ब्राह्मणाः कुलपुरोधसः कुलगुरव आचार्याः साधवः संन्यासिनश्च विस्मृतस्वकर्त्तव्या दम्भाहङ्कार-

वृथाडम्बर-वाग्वैडालव्रतादिष्वेवासक्ता यत्किमपि कुर्वन्ति तदपि देशकालात्मज्ञानाभावात् देशसमाजोन्नतिविपरीतमेव भवति ।

अस्तु नाम । वयं सूर्योदयपाठकाननुरुन्ध्मः, यत्तेऽस्मिन् विषये जागरूका भूत्वा विदेशतोऽत्र भारते दैनंदिनं वारिप्रवाहवत् समेधमानं तैलघृतौषध्यादि भोज्यवस्तुजातमप्रत्यापणमुपलभ्यमानं सर्वप्रकारतो बहिष्कुर्वन्तु । यदि तत्र कियत्यप्येतादृग्गर्हितपदार्थलेश-सम्भावनाऽपि प्रतीयेत चेत्तर्हि तेषां वस्तूनां सर्वत्रैव समागमनं निरोद्धुं यावच्छक्यं यतन्ताम् । देशगा राजानश्च सर्वत्रैव स्वराज्येऽस्य प्रवेशं निरुन्धन्तु । ब्राह्मणाश्च पुरोधसः येषां यावती शक्तिरस्ति ते तदनुरूपानेव समुपायान् कुर्वन्तः प्रतिग्रामं प्रतिनगरं प्रतिखर्वटं प्रतिरथ्यं गत्वा व्याख्यानादिभिस्तेषां दोषान् दर्शयित्वा सर्वैरप्यस्य सर्वथा त्यागं कारयन्तु, स्वयं चैवं भूतानां पदार्थानां स्पर्शमपि प्रायश्चित्तार्हमवगच्छन्तः तन्निरोधं कारयित्वैव विश्राम्यन्तु ।

—— ०※० ——

## सूर्योदयाभ्युदयः ।

"कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे
एति जीवन्तमानन्दो नरं वर्षशतादपि"

इति नियमादस्मिन् षष्ठे हायने सूर्योदयोऽपि स्वीयां बाल्यकालिकीमनेकविघ्नबाधां दूरीकुर्वन् संस्कृतविश्वविद्यालयाभ्युदयेन सह स्वीयमधिकमभ्युदयं सम्पादयन् बाल्यकालं विहाय, पौगण्डिकीमवस्थामासादयन्नवीनया आकारप्रकारसमृद्ध्योन्नतिसाम्राज्यं साधु समधितिष्ठति । अत एव त्रिचतुरैः स्फारैः स्वीयकलेवरवृद्ध्या स्थूलशरीरः सन् पाक्षिकरूपां स्वकीयां द्रुतगतिं विजहदिदानीं गम्भीरया मासिकया गत्या वार्षिकमध्वानं समापयिष्यति । तत्र च "नूतने ऽस्मिन् महीपाले सर्वं नवमिवाभवदिति" वत् नूतनया पद्धत्या व्रजन्नयं सूर्योदयो बहुसमृद्धिशालिनीं सर्वप्रियां विश्वजनीनां सुस्थिरामुपयोगितामासादयन्नधिकमधिकं स्वीयान् पाठक-प्रवरानानन्दयिष्यतीत्यस्माकं सुदृढो विश्वासः। यतो हि सम्प्रति सामयिकैः सुविदुषां निबन्धादिभिर्गवेषणापूर्णलेखैर्मञ्जुलमसृणमनोज्ञप्रसादगुणगुम्फितैः चमत्कारिभिः पद्यकुसुमैः, वर्तमानप्रगतिप्रतिस्पर्द्धिभिश्च सर्वमुखीनैर्विविधाभिप्रायविशिष्टैः सम्पादकीयलेखैःसर्वविधैश्च सम्वादसमाचारादिभिः परिपूर्णोऽपि नियमतः प्रतिमासमनर्घरत्नाभ्यामद्याप्यप्रकाशिताभ्यां द्वाभ्यां ग्रन्थाभ्यामयं सर्वदा समेधितशोभो

भविष्यति। येन सूर्य्योदयपाठकानां संग्रहालयेऽनायासेनैवामूल्यग्रन्थराशि-सञ्चयोऽपि भविता। प्रथमतः सर्वतोऽप्यभ्यर्हितस्य सर्वलोकोपयोगिनोऽद्यत्वे परमापेक्षितविषयस्याधुनिकवैज्ञानिकमनोविमोहकस्य कर्मयोगविज्ञानप्रतिपाद-कस्य कर्ममीमांसादर्शनस्य सभाष्यप्रकाशनं भवति। यथा हि भगवान् वेदः कर्मोपासनाज्ञानात्मकेन काण्डत्रयेण विभक्तस्तथैव मीमांसाशास्त्रमपि काण्डत्र-यात्मकं त्रिविधमवगन्तव्यम्। ज्ञानकाण्ड-प्रतिपादकं ब्रह्ममीमांसापुस्तकं तु व्यासप्रणीतमुपलभ्यते। उपासनाकाण्डप्रतिपादकं महर्षिणा अङ्गिरसा प्रोक्तं तु नोपलभ्यते। श्रीभारतधर्ममहामण्डलसञ्चालकैरिदं समुद्धृतमास्ते। तच्च सूर्योदये समुदितं भविष्यति। कर्मकाण्डप्रतिपादकस्य मीमांसाशा-स्त्रस्य पूर्वार्धमुत्तरार्धमिति भागद्वयम्। तत्रोत्तरार्द्धं जैमिनिप्रणीतमुपलभ्यते, परन्तु भरद्वाजप्रोक्तं पूर्वार्द्धं कालप्रभावतो विलुप्तमासीत्। तदेव कर्ममीमांसा-दर्शनं महता प्रयत्नेन समुद्धृत्य पुस्तकरूपेण "सूर्योदये" क्रमशः प्रका-श्यते। अस्योपयोगिता एतत्संख्याप्रकाशितभाष्यभूमिकाध्ययनेनैव पाठकै-रवगम्येत। एतस्य दर्शनस्य दर्शनमात्रेणैव सनातनधर्मसम्बन्धिनी सर्वाऽपि शङ्का समुन्मूलिता स्यात्। एतत्प्रकाशनानन्तरं सभाष्यस्यैव दैवीमीमांसादर्शनस्य, योगदर्शनस्य, सांख्यदर्शनस्यापि मुद्रापणं भविता। दर्श-नानामेषां भाष्याणि अपूर्वाणि अद्याप्यप्रकाशितानि सन्ति। सांख्य-दर्शनभाष्यन्तु सर्वेषामपि दार्शनिकानां सांख्यगतमनीश्वरवादभ्रमं मूलत एवो-न्मूलयिष्यति। एतदतिरिक्ताश्च लययोगसंहिता, राजयोगसंहिता तथा सप्त-शतीगीताया भावत्रयात्मिका मातृमाहात्म्यप्रख्यापिका भावत्रयसम्वलिता अपूर्वा टीका, प्राचीनभारतगौरवज्ञापकं नवीनदृष्टौ प्रवीणभारतमित्येतादृशा बह-वोऽनर्घा अप्रकाशिताः संस्कृतग्रन्थाः क्रमशोऽत्र सूर्य्योदये प्रकाशिता भविष्यन्ति। सूर्य्योदयपाठकैरेषां ग्रन्थानां स्फाराः प्रतिमासं सुरक्षणीया वर्षान्ते च संकलय्य बद्धपृष्ठान् विधाय स्वसंग्रहालये स्थापनीया, येन "एकाक्रियार्थद्वयकृत्प्रसिद्धा" इतिन्यायतः समाचारपत्रेण सहामूल्यग्रन्थानामपि लाभः स्यादिति। अतोऽधुना-ऽस्माभिः सर्वेऽपि सूर्य्योदयसंरक्षकाः पृष्ठपोषका माननीयाः सहायकाः साधा-रणाश्च सदस्याः सादरं सानुनयं सबहुमानं समभ्यर्थ्यन्ते यदेतहायनेऽस्मिन् न्यू-नातिन्यूनान् पञ्च स्वश्रेणिगान् सूर्य्योदयसदस्यानवश्यं वर्द्धयन्तु येन वयं द्विगुणोत्साहाः प्रभवाम उत्तरोत्तरं सूर्य्योदयमधिकाधिकं संवर्द्धयितुम्। सर्व-विधं सौकर्यमालोच्य गुरुपूर्णिमात एव सूर्योदयस्य वर्षारम्भः क्रियते इति।

× × × ×

## संस्कृतविश्वविद्यालयः ।

अयि श्रीमन्तः सूर्योदयपाठकाः! विदितमेव तत्रभवतां श्रीमतां यत् स्वधर्मप्रतिष्ठापनाय धार्मिकशिक्षाविस्ताराय वर्णाश्रममर्य्यादासुरक्षणाय विशेषतः सुरभारत्याः पुनरपि भारते सर्वत्रैव द्वीपद्वीपान्तरेषु च अविहतप्रचाराय विविधविद्योन्नतिविस्तराय वाराणस्यामखिलभारतवर्षीयसंस्कृत-विश्वविद्यालयः प्रतिष्ठापितोऽभूदिति । हर्षास्पदमिदं यदिदानीं तस्य सुदृढतायै वाराणसीविद्यापरिषद् आयुर्वेदसम्मिलनी इति नामिके चिरप्रचलिते सर्वपरिचिते द्वे अपि संस्थे सम्मेलनेन सह सम्बन्धभाजौ कृत्वा तदन्तर्भूते अक्रियेताम्। प्रथमतोऽस्य स्वजातीयस्य राष्ट्रियस्य संस्कृतविश्वविद्यालयस्य परीक्षाकेन्द्राणि प्रतिप्रान्तमुद्घाटितानि भविष्यन्ति। तदर्थं परीक्षापाठ्यपुस्तकानां प्रारम्भिक-नियमावली मुद्रिता सती सर्वत्रैव प्रेषितुं प्रस्तुता विद्यते। ये खलु महोदयाः स्वदेशधर्मसंरक्षणविचक्षणाः स्वदेशानुरागिणः स्वनगरे स्वग्रामे संस्कृत-विश्वविद्यालयसम्बन्धि परीक्षाकेन्द्रं प्रतिष्ठापयितुमीहन्ते तैरवश्यं शीघ्रमितः सर्वविधज्ञातव्यविषयसम्वलितं नियमावलीपुस्तकं गृहेलिमम्। सर्वेषां सौकर्य्याय प्रथमतो नियमावलीपुस्तकमतिसंक्षिप्तं सर्वोपयोगि च सम्पादितं विद्यते। यत्र कुत्रापि संस्कृतपाठशालाया अध्यापको विद्वान् तत्सञ्चालको वा योऽपि कोपि परीक्षाकेन्द्रं स्थापयितुमिच्छेत् स एव एतत्संख्यायां स्थानान्तरप्रकाशितनियमानुसारं स्वविद्यालये परीक्षाकेन्द्रं प्रतिष्ठापयितुं प्रभवति। अखिलभारतवर्षीय-संस्कृतविश्वविद्यालयस्य प्रधानाधिष्ठातारः, संयुक्तप्रधानाधिष्ठातारः, उपप्रधानाधिष्ठातारः, संयुक्ताधिष्ठातारो, नियामकाः, परिदर्शकाः, अपरे च सदस्याः, सर्वेऽपि तदीयव्यवस्थापकसभया सर्वसम्मतया निर्वाचिताः स्वस्वकार्ये नियोजिताश्च सन्ति।

× × × × ×

## ग्राहकाणां विशिष्टसौकर्य्यम् ।

सूर्य्योदयग्राहकाः सदस्याश्चतसृभिः श्रेणिभिर्विभक्ता भविष्यन्ति। ये खलु ५) रूप्यकपञ्चकं प्रतिवर्षं मुद्राशतमेककालिकं वा दास्यन्ति, ते हि सर्वमान्याः संरक्षकसदस्या भविष्यन्ति। रूप्यकत्रयञ्च प्रतिवर्षं दातारोः ग्राहका भवितारः। ये च २) रूप्यकद्वयं प्रतिवर्षं दास्यन्ति, तैस्तु श्रीभारतधर्ममहा-मण्डलस्यापि साधारणसदस्यता सम्प्राप्ता भवेत्। तेषां कृते संस्कृतभावनिबद्धं

मुद्रितमेकं सुमनोहरं दर्शनीयं मानपत्रं श्रीभारतधर्ममहामण्डलसञ्चालकैः वितीर्णं स्यात्। तेभ्यः सूर्योदयस्तु विना मूल्यमेव वितीर्णो भवेत्। सर्वेऽपीमे सूर्योदयग्राहकसदस्याः श्रीभारतधर्ममहामण्डलीयसमाजहितकारिकोषवृद्ध्या स्वपरिवारसहायका भविष्यन्ति। समाजहितकारिकोषस्य संक्षिप्तनियमावलीपुस्तकमाणकैकचिटिकां प्रेष्यावश्यमितो गृहीत्वा द्रष्टव्यम्। धनहीनेभ्यो विद्यार्थिभ्यः सर्वप्रकार पुस्तकालयेभ्यश्चैकरूप्यकेणैव सूर्योदयो वितीर्य्येत। प्राचीनैः स्वीयग्राकसंख्या, नूतनैश्च नवीनोऽहं ग्राहको भवामीति च सुस्पष्टं पूर्णसंकेतेन सहैव लिखेलिमे।

× × × × ×

## धर्मशिक्षाविस्तारः।

अखिलभारतवर्षीयसंस्कृतविश्वविद्यालयोन्नतया सहैव सर्वत्रैव महाविद्यालये, विद्यालये, इंग्लिशकलाशालायां, स्कूलविभागे, हिन्दीविद्यालयादिषु च श्रीसनातनधर्मशिक्षणस्य कृतेऽपि विशिष्टः समुद्योगो विहितोऽस्ति। यस्य सुदृढतायै श्रीभारतधर्ममहामण्डलेन अखिलभारतवर्षीयक्षत्रियमहासभया परस्परं सम्मन्त्र्य एकं विशिष्टं शिक्षाकोषनिधिं प्रतिष्ठापयितुं महदायोजनं क्रियमाणमस्ति। यस्य निधेः साहाय्येन सर्वत्रैव यत्र कुत्रापि विद्यालयादिषु अध्येतारश्छात्रा इतः प्रचारितां धार्मिकपरीक्षां समुत्तीर्य विशेषवृत्तिभाजो भविष्यन्ति। अनेन प्रशस्तेन समुद्योगेन विद्यादानेन सहैव धार्मिकशिक्षाया अपि सुमहान् सुदृढो विस्तारो भवितेति साधीयसीं व्यवस्थामिमां समीक्ष्योभाभ्यामपि श्रीभारतधर्ममहामण्डलाखिलक्षत्रियमहासभासञ्चालकाभ्यां सम्पादकसमितिसदस्याः शतशः साधुवादान् प्रयच्छन्ति।

× × × × ×

## हिन्दीभाषायां महाकोषप्रकाशनम्।

अस्मिन् वर्षे श्रीभारतधर्ममहामण्डलेन स्वीयविशिष्टसाहाय्येन एकस्य महतः शुभकार्यस्य प्रारम्भः कारितोऽस्ति यद् हिन्दीभाषायां भारतवर्षस्य राष्ट्रियमहाकोषं (राष्ट्रियइन्साइक्लोपीडिया) प्रकाशयितुं श्रीभारतधर्मसिण्डिकेटलिमिटेड-सञ्चालका नियोजिताः सन्ति। कापि जातिः कापि भाषा किमपि राष्ट्रं तावदुन्नतं न गण्यते, यावत्तदीयराष्ट्रभाषाया महाकोषः (इन्साइक्लोपीडिया) पूर्णविवरणेन सह सर्वविधज्ञातव्यविषयसम्वलितस्तत्रत्यभाषायां मुद्रितो न भवेत्। अद्य यावद्येऽपि संस्कृत-वंग-महाराष्ट्र-गुर्जर-हिन्दी-भाषासु ईदृशाः

कोषग्रन्थाः प्रकाशिताः सन्ति, ते महाकोष (इन्साइक्लोपीडिया) इति संज्ञां लब्धुमसमर्था एव। अस्मादेव कारणादस्यापयोगिनो राष्ट्रहितकरस्य विश्वजनीनस्य सर्वविद्वत्प्रशस्तस्य तस्य महतः कर्मणः सम्पादने समुद्योगः श्रीभारतधर्ममहामण्डलेन नवीनसुदृढलंस्कारसमेधितया। "भारतधर्मसिण्डिकेट् लिमिटेड्" संस्थया प्रारब्धः। यस्याभिधानम् "शब्दज्ञानार्णव" इति भविता। सर्वप्रथमं सर्वान्तर्य्यामिपरमेश्वरमभ्यर्थयामहे, यस्य प्रसादतोऽस्य महतो विश्वजन्यस्यसमुद्योगस्य साफल्यं विन्देम इति।

× × × × ×

## निन्दनीया युद्धपद्धतिः।

विदितचरमेव पाठकमहाभागानां यदद्यत्वे भारतस्वाधीनता-संग्रामो देशेऽत्र प्रबलेन वेगेन प्रबन्धेन प्रयत्नेन च परिचाल्यमानो दृश्यते। संग्रामस्यैतस्य बहुविधविधेयेषु मादकवस्तुनिषेधोऽपि स्थिरीकृतोऽस्ति। धर्मशास्त्रेषु मद्यादि-मादकपदार्थानां निषेवणं पातकेषु परिगणितमास्ते। अतो हि को वा सनातनधर्माभिमानो कार्यक्रममिमं हृदयेन न समर्थयेत्? किञ्च कार्यक्रमस्यैतस्य संसिद्ध्यै संख्यातीतानां तालद्रुमाणामुच्छेदनं श्रावं श्रावं चेखिद्यते चेतः। का कथा धर्मशास्त्रप्रणेतॄणां महर्षीणां, स्थूलदृष्टिसम्पन्नाः पदार्थविद्यावेत्तार आधुनिका विद्वांसोऽपि वृक्षादिषु जीवसद्भावमापतन्ति। प्रतिदिनं च शाशो द्रुमस्थजीवानां हननं नूनमहिंसासंग्रामस्य विपरीतं बाधकं च मन्यामहे। यथा च लौकिकसाम्राज्यसंचालनाय तत्तत्पदाधिकारिणो नियुज्यन्ते, तथैवास्य महतः स्थूलजगतः संरक्षणसंवर्द्धनादिकृते दैवी व्यवस्था विहिता विद्यते। एतेन वृक्षहत्यारूपेण कर्मणा तदधिष्ठातारो देवा अकृत्वा साहाय्यं, सर्वथाऽभ्यर्हितेऽपि स्वाधीनता-संग्रामेऽत्र विरोधमाचरिष्यन्ति। उदुम्बराश्वत्थ-वटादिपवित्र-वृक्षश्रेणिषु तालस्यापि परिगणना परिदृश्यते। तदुच्छेदनं हत्यासमानं गुरुपातकमिति धार्मिकदृष्ट्या कार्यमिदमतीव निन्द्यम्। इदानीं यावत् पञ्चविंशतिसहस्रसंख्याकानां तालवृक्षाणां विनाशोऽभूदिति श्रूयते। यदि प्रत्येकवृक्षस्य रूप्यकपञ्चकमेव मूल्यं स्यात्, तदापि दीनदेशस्यास्य सार्द्धद्विलक्षमुद्रा भस्मसादभूवन्। यदि च पापीयानयं कार्यक्रमो न निरुद्धस्तदाऽचिरेणैव भारतवर्षस्य कोटिमुद्राणां विनाशो दुर्निवार इति आर्थिकयाऽपि दृष्ट्या कार्यक्रमोऽयं न सद्विचारकोटीमाटीकते। तालरसो हि मादको भवतीति सत्यम्, किन्तु किञ्चिच्चूर्णसम्मेलनेनैवासौ स्वीयां मादकतां विजहाति। तेन बहुमूल्यलभ्याः

सितसर्करादयः सुस्वाद्या अत्युपयोगिनः पदार्थाः प्रस्तूयन्ते। अनुमानतः, एकेन तालवृक्षेण एकस्य मानवस्य निर्वाहः समीचीनरूपेण भवितुमर्हति। यावन्तस्तालवृक्षा हता हन्यन्ते वा तावतामेव मानवानां जीविका विनष्टेति निर्विवादं व्यवसायात्मिकयाऽपि दृष्ट्या तालवृक्षच्छेदनमिदं कार्यं नितरां भयमावहति। अन्यच्च मद्यं हि भारते इक्षु-द्राक्षा-मधूकादिभिरपि निर्मीयते, तर्हि किमेतेषामपि समूलध्वंसनं विधास्यते? हन्त भोः! नैषा कार्यप्रणाली साधीयसीति राजनीतिनेतारः स्थिरेण शान्तेन च मनसा सुचिरं विमृशन्तु। अन्यथा भारतस्य महीयानपकर्षः सम्भाव्यते। यद्युपायान्तरमनाश्रित्य तालरसनिरोध एव राजनीतिनेतृणामभिप्रेतस्तदा तालानां रसाधारमञ्जरीकर्त्तनेनापि तत्कार्यं सेत्स्यति। श्रीमता भारतधर्ममहामण्डलेन विषयेऽत्र निखिलभारतवर्षीय-राजनीतिमहासभाप्रधानकार्यालये प्रयागस्थस्वराज्यभवने पत्रं प्रहितमासीत्, परन्तु ततः सन्तोषजनकमुत्तरं नासादितम्। अतः संस्कृतज्ञा विद्वांसस्तथा प्रयतन्तां, येन सर्वतः प्रशंसनीयतमेऽस्मिन् भारतस्वाधीनता-संग्रामे दैव-प्रकोप-परम्परा न समुत्पद्येतेति।

× × × × ×

## विचित्रं पटपरिवर्त्तनम्।

ज्येष्ठमासस्य (सं० १९८७) एकादश्यां तिथौ शनिवासरे रात्रावष्ट-वादनावसरे सदाचारकुलकमलदिवाकराणां विविधविरुदावलीविभूषितानां मेवाड़नरेश-हिन्दुसूर्य-महाराणा-फतेहसिंहबहादुरमहोदयानां सहसैव पाञ्च-भौतिकनश्वरशरीरपरित्यागेन वयं नितरां विषीदामः। प्राचीनक्षत्रियनर-पतयः कथमिव सदाचारपरायणाः प्रजापालका धर्मप्राणा वीरपुङ्गवा दयालवश्च भवन्ति स्मेति तेषां दर्शनमात्रेणावगम्यतेस्म। एतेषां वियोगेन हिन्दुजातेः सनातनधर्मस्य च यादृशी क्षतिः संजाता, न सा पुनःकदापि पूर्त्तिमाप्स्यति। साम्प्रतं हिन्दुस्थानं रोदिति, किन्तु स्वर्गो हसति। अस्तु, करालकालस्य कुटिलविचेष्टिते नास्ति कस्याऽप्यधिकारः। एतत्कुलप्रसूतो मर्यादापुरुषोत्तमो भगवान् रामचन्द्रः सर्वविधमर्यादापरिपालकेभ्य एतेभ्यः स्वचरणं शरणं प्रादा-दिति विश्वस्यते। स्वर्गीयपितृचरणानामौर्द्ध्वदैहिकीं क्रियां यथाशास्त्रमनु-ष्ठाय जूनमासस्य पञ्चम्यां तिथौ तदीयस्तनुजन्मा श्रीमान् हिन्दुकुलसूर्यो महाराणाभूपालसिंहबहादुरमहोदयःपरम्परयैव परमपवित्रं मेवाड़शासन-सिंहासनं समलङ्कृतवानिति प्रमोदामहे। पितृपरम्परानुसारमयमपि निखिल

गुणानामाकरः प्रजानुरञ्जको धर्मात्मेति श्रीभारतधर्ममहामण्डलसञ्चालकै-र्विशिष्य विज्ञायते। जीवत्स्वेव पितृपादेषु प्रायशो नववर्षतः प्रजापालनसम्ब-न्धीनि सर्वाण्यपि विविधानि विधेयानि अनेनैव विधीयन्तेस्म। सर्वत्रैव कार्ये भगवानेकलिङ्गः साहाय्यं विदधात्विति स्वीयं शुभाशीर्वादमेतस्मै नूतननृप-तये सादरं सस्नेहं सबहुमानपुरस्सरं वितरतामस्माकं कालिदासस्याधो-निर्दिष्टं पद्यं स्मृतिपथमायाति—

यात्येकतोऽस्तशिखरं पतिरोषधीनाम्,
आविष्कृतारुणपुरस्सर एकतोऽर्कः।
तेजोद्वयस्य युगपद् व्यसनोदयाभ्याम्,
लोको नियम्यत इवैष दशान्तरेषु॥

× × × × ×

## सात्त्विकं दानम्।

प्रायो निखिला एव भारतीया विशेषतो वङ्गप्रान्तीया विद्वांसो जानन्ति यत् प्रातःस्मरणीयः स्वर्गीयो भूदेवमुखोपाध्यायः स्वजीवनोपार्जितां लक्षचतुष्ट-यतोऽप्यधिकां सम्पत्तिं स्वीयपितृचरणनाम्ना विश्वनाथट्रस्टरूपेण न्यासीकृतवा-निति। एतत्कुसीदेनैव बहुसंख्यकेभ्यः पण्डितप्रकाण्डेभ्यो निजगृहेष्वेव छात्रा-नध्यापयद्भ्यः समुचिता वृत्तयः प्रदीयन्ते। 'आत्मा वै जायते पुत्र' इतिवत् भूदेवात्मजो महनीयकीर्त्तिः सदाचारकुलधौरेयो मुकुन्ददेवोऽपि निजोपार्जितं धनं भूदेवट्रष्टनाम्ना न्यासीकृतवान्, येन भारतस्य तत्तत्प्रान्तनिवासिभ्यो विद्वद्भ्यो विद्यार्थिभ्यश्च वृत्तयः प्रदीयन्ते। भारतवर्षेऽत्र परमादर्शभूतस्य संस्थाद्वय-स्यैतस्य 'सूर्योदयः' परमः सहायको वर्त्तते। प्रातःस्मरणीयौ स्वर्गीयौ भूदेवमुकु-न्ददेवनामानौ द्वावप्येतौ श्रीमहामण्डलस्य संस्थापकेष्वन्यतमावास्ताम्। सात्त्वि-कदानस्यैतस्य नितान्तमद्भुतमितिहासमग्रिमाङ्के वर्णयिष्यामः।

× × × × ×

## ध्यानं दातुं निवेद्यन्ते।

विहारोत्कलसंस्कृतसमितेर्विगतेषु वार्षिकोत्सवेषु संस्कृतविद्यालयनिरी-क्षकाणां नियुक्तिविषये कतिधा प्रस्तावाः स्वीकृताः, तत्सम्बन्धे च विहारशिक्षा-ध्यक्षा अपि बहुशो विज्ञापितास्तत्रत्यैरिति। परन्त्वद्यापि तस्य सन्तोषप्रदः परि-णामो नाऽभवत्। ये च विद्यालया मण्डलसमितेर् (डिष्ट्रिक्टबोर्ड) आधीनस्थाः, तेषां निरीक्षणं डिपुटीइन्सपेक्टर-सबइन्सपेक्टरनामकैर्निरीक्षकैरेव क्रियते।

एतेषु बहवो माहम्मदा अपि वर्त्तन्ते। अनाघ्रातसंस्कृतगन्धा माहम्मदाः कथङ्कारं संस्कृतविद्यालयान् निरीक्षन्ते, तानुन्नमयन्ति वेति भगवानेव जानाति। माहम्मद-विद्याशाला-निरीक्षणार्थं तु माहम्मदा एव निरीक्षका नियुज्यन्ते। न किमिद-मन्याय्यम्? सूर्योदय-पाठकपरिचिता विद्वद्धुरीणा विहारोत्कलसंस्कृतसमिते-र्मन्त्रिणो महामहोपाध्यायकाः श्रीमन्त ईश्वरीदत्तदौर्गादत्तिशास्त्रिणः एम्० ए०, एम्०ओ० एल्० महोदया विषयेऽत्र ध्यानं दातुं निवेद्यन्ते। ऐषम एवैते मन्त्रि-प्रदे प्रतिष्ठिताः। एतेषां मन्त्रित्वलाभेन वयं नितरां प्रीतिमापन्ना विहारे सर्वविधां संस्कृतोन्नतिं कामयामहे।

---

## अभिभाषणम् *



विश्वनाथपुरी धन्या मूर्धन्या धरणीतले।
विद्यापीठमविच्छिन्नं याऽऽस्ते ज्ञानाधिदैवतम्॥

पिनाकाकृतिरम्येयं प्रत्यञ्चायितजह्नुजा।
शम्भुनाधिष्ठिता नित्यं भक्तपापापनोदिनी॥

सिद्धानां सदनं काशी विबुधानां निकेतनम्।
भवनं विभवानाञ्च तीर्थमध्यात्मसम्पदाम्॥

देवदुर्लभदृश्या या तीर्थराजेऽपि न स्फुटा।
साऽत्र क्रीडति निर्द्वन्द्वं गेहे गेहे सरस्वती॥

योगक्षेममिहत्यानां विहस्य विधिलेखनीम्।
अहर्दिवमविश्रान्तमन्नपूर्णा प्रयच्छति॥

विवादे विजिगीषूणां पताका भृशमुद्धताः।
जाता लज्जापराङ्मुख्यः शिवशूलसमुच्छ्रयात्॥

वैचित्र्यं विश्वनाथस्य स्वभावे विश्वविश्रुतम्।
वेषो भूषा परीवारो यस्य सर्वमलौकिकम्॥

त्रिलोकी भिक्षते यस्मात्सोऽयं वसति भिक्षुवत्।
कपालपाणिर्दिग्वासाः शूली भुजगभूषणः॥

---

*वाराणस्यां निखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्य द्वादशाधिवेशनावसरे कविसम्मेलन-सभापतिपदेन (फाल्गुनशुक्लैकादश्यां सं० १९८६) प्रदत्तम्।

विश्वनाथपुरीवासाद्विश्वनाथपरायणा ।
अत्रत्या जनता मन्ये विश्वनाथात्मतां गता ॥
नो चेत्कथं नियुज्येत मादृशोऽत्र महत्पदे ।
शक्तो धुर्यधुरं वोढुं कथं दम्यो निरङ्कुशः ॥
तन्न चित्रं विचित्रा चेद्रुचिरत्र निवासिनाम् ।
सत्यं वदति लोकोऽयं "यथा राजा, तथा प्रजा," ॥
जीवसृष्टं चेशसृष्टं वेदान्ते द्विविधं जगत् ।
मनोमयं चाणुमयमिति जानन्ति तद्विदः ॥
तार्तीयीकं शब्दमयं जगत् ताभ्यां विलक्षणम् ।
अजरामरमस्त्यन्यत् कविसृष्टं मते मम ॥
श्रुतां चाप्यनुभूतां च सत्कविस्तां परिस्थितिम् ।
चिकीर्षुर्देशकल्याणममरीकुरुते बलात् ॥
रामो जातो दशरथात्कौशल्यागर्भसम्भवः ।
अयोध्याधिपतिर्नाद्य दृश्यो लक्ष्मणपूर्वजः ॥
न वा वृन्दावनप्राणः प्राणो गोगोपसुभ्रुवाम् ।
कृष्णः पाण्डवतन्तूनां प्रेष्ठो लोचनगोचरः ॥
प्रकृतिप्राप्तदेहास्ते याताः सर्वे यथागतम् ।
किन्तु वाल्मीकिना सृष्टो जातः सारस्वतामृतात् ॥
दृश्योऽद्य भगवान् रामो देशे देशे गृहे गृहे ।
जीवसृष्टे चेशसृष्टे नश्यमानेऽपि भूरिशः ॥
अगम्यः कालसङ्ख्यानामदम्यः प्रकृतेर्गुणैः ।
व्याससृष्टस्तु गोविन्दो नित्यं नवनवायते ॥
सुप्रभौ सुरभारत्या विस्तीर्णे गगनाङ्गणे ।
सूर्याचन्द्रमसौ रम्यौ व्यासवाल्मीकिनामकौ ॥
यदीमौ न प्रकाशेतां तदान्यः शास्त्रविस्तरः ।
शक्तो द्योतयितुं नाऽलमस्मत्प्राचीनसभ्यताम् ॥
छलाद् भारतमाक्रम्य धूर्तान् पाश्चात्यनिन्दकान् ।
अशकद् विमुखान् कर्तुं कालिदासशकुन्तला ॥
सुकवेरमरैः शब्दैरङ्किता प्राच्यसभ्यता ।

दीनं हीनं पथो भ्रष्टं नष्टबुद्धिं हतौजसम् ।
देशमुद्धर्तुमीशीत नूनं सुकविभारती ॥
कविशब्दे महाशक्तिः स्थिताऽऽस्ते पारमेश्वरी ।
कविर्मनीषी वेदेषु स्वयम्भूः परिभूः स्मृतः ॥
देशे समाजे जातौ च प्रवृत्तमतिदुस्तरम् ।
अज्ञानमुन्मूलयितुं क्षमा सत्कविभारती ॥

किन्तु—

धनिकेङ्गितनिहितमतिर्मलिनीकुर्वन् सरस्वतीभासम् ।
उदरम्भरिस्तु कुकविः कचकुचमात्रे परिश्राम्यन् ॥
अद्य सर्वा मही जाता विस्तीर्णैककुटुम्बवत् ।
तत्कूपभेकवद्वस्तुं शक्यं नापि च जीवितुम् ॥
एकत्र चेत्सुखं दुःखं तदन्यत्र प्रकाशते ।
अमेरिकायामायातकरे चेत्परिवर्तनम् ॥
तत्प्रभावोऽद्य चीनेषु जापाने क्षोभसंचरः ।
रूसे गोधूमनाशश्चेत् फ्रांसस्तत्फलमश्नुते ॥
भारतस्य भवेत् शूलमांग्ले मुद्राविपर्यये ।
पेन्योऽष्टादशरूप्यस्य भारतं विधमन्ति हि ॥
पाश्चात्यसभ्यता रम्या शिक्षाचार्थकरी भृशम् ।
एतादृशो महामोहः पण्डितेष्वपि दृश्यते ॥
मोहकृत्तु प्रचारोऽयं पाश्चात्यानां पदे पदे ।
निजगौरवबोधाय प्राच्यन्धकरणाय च ॥
पराधीनस्य देशस्य यावत्स्यादात्मविस्मृतिः ।
तावदेवान्यदेशीयाः शासनं कर्तुमीशते ॥
इत्येवमुद्दिश्य कृतः प्रचारोऽतिघृणास्पदम् ॥
नासीद्रामो न वा कृष्णः केवलं कविकल्पितौ ।
इतीतिहासोऽप्यभ्रंशि तैरस्मान् विपथयितुम् ॥
वस्तुतस्तु महाभ्रष्टा शिक्षा पाश्चात्यचालिता ।
आरब्धा सेवकान् लब्धुं दास्यवृत्तिप्रसारिणी ॥
शिक्षायास्त्रीणि लक्ष्याणि मन्यन्तेऽत्र विचक्षणाः ।

देहशिक्षा भवेत्तादृग् यया विपदुपस्थितौ ।
आत्मानं च धनञ्चापि रक्षेच्च ललनाजनम् ॥
मनस्तु पापभीरु स्यात्स्वातन्त्र्यप्रेमपूरितम् ।
सत्यनिष्ठं विपद्धीरं दास्यभावेन गर्हितम् ॥
स्वल्पायसबलेनैव स्वल्पकालेन साध्यते ।
योगक्षेमकृति येन शिक्षालक्ष्यं तदन्तिमम् ॥
एतत्त्रयस्थगन्धोऽपि नास्ति पाश्चात्यशिक्षणे ।
विपर्ययस्तु प्रत्यक्षस्तदलं व्यर्थविस्तरैः ॥
चातुर्य्यं चाकरी—मात्रे कौशलं वृटपालिशे ।
भाले लिखति चैतावत् शिक्षा पाश्चात्यचालिता ॥
बी० ए० पर्यन्तशिक्षायां सहस्राणां तु विंशतिः ।
व्ययीभवति चित्तन्तु केवलं दासवृत्तये ॥
यदि वार्धुषिकादेतद् धनमादाय पठ्यते ।
अष्टानव्येव वृद्धिः स्यात्प्रतिमासं शतं शतम् ॥
यदि स्यान्मुसलस्थूलं भाग्यं प्रीताश्च देवताः ।
तदा बाबू समाप्नोति वेतनं खशराङ्कितम् ॥
पञ्चाशद् वेतनं मासे वृद्धिस्तु द्विगुणा ततः ।
यावज्जन्म न निस्तारो वृद्धिर्मूलस्य का कथा ॥
विक्रीय तु पितु गेहं बन्धकीकृत्य भूषणम् ।
मातुर्वाऽपि स्त्रिया वापि बी० ए० पर्यन्तमागतः ॥
अधिकांशस्तु नाप्नोति भ्रामं भ्रामं भृतिं क्वचित् ।
करालजठरज्वालाविकलीकृतमानसः ॥
भारताकृतिराँग्लोऽसौ विश्वं पश्यति शून्यवत् ॥
एम्० ए० पर्यन्तमुत्तीर्णं इतिहासे प्रतिष्ठितः ।
छात्रो न वक्तुंशक्नोति भीष्मः कस्य सुतोऽभवत् ॥
आंगलानान्तु को राजा कतिवारं व्यमूत्रयत ।
इति सर्वं विजानाति न जानाति स्वकं गृहम् ॥
यत्प्रतापपरीतापात्सबलो मुगलेश्वरः ।
विस्मारितः सोऽकबरः कबरीबन्धमोक्षणम् ॥
दुर्गदेशश्च वंशश्च यदीयोऽद्यापि जृम्भते ।

सोऽपि राणाप्रतापोऽसौ न यथावत्प्रदर्श्यते ॥

शिववीरस्तु कथितो लुण्ठकः पर्वतोन्दुरुः ।
वारनूहेस्टङ्स्-मुखाश्च राक्षसा धूतकल्मषाः ॥

पाश्चात्यचाकचिक्यान्तर्दोषान् प्रच्छन्नपातकान् ।
अपश्यन्तो विमुह्यन्ति प्राच्या विद्वद्वरा अपि ॥

मन्ये प्राचीनशिक्षायां दोषाः सन्ति परःशताः ।
परं तत्र व्ययः कीदृक् को वा तत्र सुधारकः ॥

राजपक्षादधिक्षिप्ता प्रजापक्षादुपेक्षिता ।
म्रियते प्राच्यशिक्षा चेदूषरेऽमरवल्लिवत् ॥

यस्यामनेकलक्षाणि गौराङ्गा भुञ्जतेऽन्वहम् ।
सा शिक्षा किं प्रसूतेऽत्र विचारविषयस्त्वयम् ॥

एवं विधा अनेके ये दोषाः स्वापरपक्षयोः ।
ते देशहितमिच्छद्भिः कविभिः क्रान्तदर्शिभिः ॥

सरस्वतीप्रसादेन बोधनीया यथायथम् ।
सुखोदर्कं च कर्त्तव्यं 'कविसम्मेलनं' सदा ॥

—श्रीशालग्रामशास्त्रिणः ।

---

## प्रचारकाणामावश्यकता ।

भारतस्य प्रतिप्रान्तं प्रतिनगरं प्रतिविद्यालयं 'सूर्योदयं' प्रचारयितुं, श्रीभारतधर्ममहामण्डलस्य सर्वविधसभ्यसंख्यां वर्द्धयितुञ्च प्रचारकाणाम्-आवश्यकता वर्तते । तैस्तु दास्यमन्तरेणैव स्वगृहमधिवसद्भिरेव यथेच्छं धनोपार्जनं विधीयेत । आवेदनपत्राणि सूर्योदय-कार्यालयसङ्केतेन प्रेषणीयानि ।

---

## पौराणिकपण्डितानां प्रयोजनम् ।

निखिलभारतवर्षीयसंस्कृतविश्वविद्यालयसञ्चालका भारतवर्षस्य प्रतिप्रान्तं पुनरपि पुराणानां प्रचारणं प्रसारणं च समीहन्ते । एतस्य शुभकार्यस्य कृते बहुसंख्यकानां पौराणिकपण्डितानां प्रयोजनं वर्त्तते । पौराणिककथावाचयितारः सदाचारसम्पन्ना ये च विद्वांसो ब्राह्मणाः स्वप्रान्तेषु कथारूपेण पुराणप्रचारकार्यं वाञ्छन्ति, तेभ्यो यथेष्टं धनपारितोषिकं दीयेत । तैस्तु द्रुततरमेव "कार्याध्यक्षः, पुराणप्रचार-विभागः, संस्कृतविश्वविद्यालयः, महामण्डलभवनम्, (जगत्गंज) काशी" इति सङ्केतेन पत्राणि प्रेषणीयानि ।

---

## विहारे संस्कृतसमभ्युदयः !

विहारोत्कलसंस्कृतशिक्षापरिषदो व्यवस्था ऐषमो नवीनपद्धत्या प्रचलिता भविष्यति इति तदीयवर्तमानशिक्षापरिषदा निर्धारितं विद्यते । तथाहि-प्रतिमण्डलं निर्धारिताः संस्कृतविद्वांसस्तत्तन्मण्डलीयसंस्कृतविद्वत्प्रातिनिध्येन परिषदि समवेताः संस्कृताभ्युदयसम्बन्धिकार्यकलापं सम्पादयिष्यन्ति । प्रायः पञ्चसप्तति प्रतिनिधीनां सङ्घो भविता । तत्र कियन्तो विहारोत्कलप्रान्तीयशिक्षाध्यक्षेणैव निर्धारिता भविष्यन्ति । अवशिष्टानां तु प्रतिमण्डलं निर्वाचनं भविता । तत्र च त एव संस्कृतविद्वांसो मतदातारो भविष्यन्ति ये संस्कृतोपाधिपरीक्षोत्तीर्णाः सन्ति । विहारोत्कलशिक्षासम्बद्धविद्यालयेषु ये अध्यापका वर्तन्ते तेषां निःशुल्कमेव मतदानेऽधिकारः। तदतिरिक्तविद्यालयाध्यापकानामनध्यापकानां पण्डितानां वा प्रतिवर्षं रूप्यकैकशुल्कप्रदानेन मतदानेऽधिकारः । उपाधिपरीक्षोत्तीर्णता तु सर्वत्रैवापेक्षिता । अतः सर्वेऽपि छपरामण्डलान्तर्गता उत्तीर्णोपाधिपरीक्षा विद्वांसोऽभ्यर्थ्यन्ते यत्ते शीघ्रमेव स्वीयपूर्णसङ्केतेन सह स्वाभिधानं "श्रीगोपालशास्त्री, दर्शनविद्यालयः, लक्ष्मीकुण्डम्, काशी ।" इति सङ्केतेन अस्मत्सन्निधाने प्रेषयन्तु । वयं च तेषां सर्वेषां नामावलीं परिषत्कार्यालये प्रेषयिष्यामो येन सर्वेषामपि मतदातृनामावलीसूच्यां स्यात् शीघ्रमनायासेनैव प्रवेश इति ।

---

## संस्कृतविश्वविद्यालयपरीक्षानामानि ।

उपाध्यायपरीक्षा, महोपाध्यायपरीक्षा, श्रौतकर्मविशारदपरीक्षा, स्मार्तकर्मविशारदपरीक्षा, धर्माचार्यपरीक्षा, राष्ट्रभाषाविशारदपरीक्षा, धर्मोपदेशकपरीक्षा, धर्मविनोदिनीपरीक्षा ( स्त्रीणां कृते ), धर्मसम्बन्धीया प्रथमा मध्यमा च परीक्षा (आंग्लविद्यार्थिनां कृते), आयुर्वेदे च प्रथम-मध्यम-परीक्षे, आयुर्वेदशास्त्रिपरीक्षा, आयुर्वेदाचार्यपरीक्षा चेति । आंग्लविद्यालय-विद्यार्थिनां कृते ये द्वे धर्मसम्बन्धिन्यौ प्रथम-मध्यम-परीक्षे निर्धारिते, तत्रोत्तीर्णेभ्यः समुचिता छात्रवृत्तिप्रदानव्यवस्था विहिता । यदि ते कुत्रापि विद्यालये पठनमिच्छेयुः ।

अस्य संस्कृतविश्वविद्यालयस्य परीक्षाकेन्द्रं स्थापयितुं नास्त्यल्पीयोऽपि धनव्ययप्रयोजनम् । संरक्षकाणां पूज्यपादानामाचार्यमहोदयानां संस्थानेषु, संरक्षकाणां स्वाधीननरपतीनां राज्येषु, श्रीमहामण्डलविशिष्टप्रतिनिधेः प्रस्तावतो यत्र कुत्रापि, यत्र च श्रीमहामण्डलस्य सप्त साधारणसभ्याः सन्ति, यत्र च संस्कृतविद्यालये न्यूनतोऽपि न्यूनास्त्रयः अध्यापकाः, सूर्योदयस्य च पञ्चग्राहकाः सन्ति, तेषु तेषु स्थानेषु निखिलभारतवर्षीयसंस्कृतविश्वविद्यालयस्य परीक्षाकेन्द्राणि संस्थापयितुं शक्यन्त इति ।

---

श्रीविश्वनाथो जयति ।

# कर्ममीमांसादर्शनम् ।

## भाष्य-भूमिका ।

अनन्तदिङ्मण्डलमेव यद्वपुर्यद्रोमराजिश्च रवीन्दुतारकाः ।
यत्प्राणरूपेण तु कर्म राजते विराड्वपुष्कं पुरुषं तमाश्रये ॥१॥
यः सच्चिदानन्दमयोऽद्वितीयो भक्तैस्त्रिधैकोऽपि सदा सुदृश्यः ।
ब्रह्मेशरूपे च विराट्स्वरूपे परात्परेशं पुरुषं तमीडे ॥२॥
यद्ज्ञानसिन्धोरपि बिन्दुमात्रमासाद्य जिज्ञासुगणाः कृतार्थाः ।
अद्यापि यस्यास्ति तपःप्रभावाद् द्विजातिवंशो विमलो धरायाम् ॥३॥
तं ज्ञानदीपोज्ज्वलितार्यवंशं श्रीमद्भरद्वाजमहर्षिवर्य्यम् ।
नत्वा समभ्यर्चितपादपद्मं प्रारभ्यते भाष्यमिदं विधातुम् ॥४॥

यथैक एवाद्वितीयः परमात्मा त्रिभिर्ब्रह्मेशविराड्रूपैः प्रतिभासत एवमेवाध्यात्माधिदैवाधिभूतभावत्रयसम्बद्धतयाऽपौरुषेयः सदा सत्तावान् वेदोऽपि काण्डत्रयात्मकः। तस्य च कर्मोपासनाज्ञानात्मकस्य काण्डत्रयस्य भावत्रयस्य च सम्बन्धेनैव वेदमाहात्म्यमधिकाधिकं विज्ञायते । वेदे च कर्मण एव पूर्वप्रतिपद्यत्वात् । तदुक्तं स्मृतौ—

कर्मणाऽमी भान्ति देवाः परत्र, कर्मणैवेह प्लवते मातरिश्वा ।
अहोरात्रं विदधत्कर्मणैव, अतन्द्रितः शश्वदुदेति सूर्यः ॥
मासार्द्धमासानथ नक्षत्रयोगानतन्द्रितश्चन्द्रमाश्चाभ्युपैति ।
अतन्द्रितो दहते जातवेदाः समिध्यमानः कर्म कुर्वन् प्रजाभ्यः ॥
अतन्द्रिता भारमिमं महान्तं बिभर्त्ति देवी पृथिवी बलेन ।
अतन्द्रिताः शीघ्रमपो वहन्ति सन्तर्पयन्त्यः सर्वभूतानि नद्यः ॥
हित्वा सुखं मनसश्चाप्रियाणि देवः शक्रः कर्मणा श्रैष्ठ्यमाप ।
बृहस्पति ब्रह्मचर्यं चचार समाहितः संशितात्मा यथावत् ॥
हित्वा सुखं प्रतिरुध्येन्द्रियाणि तेन देवानामगमद्गौरवं सः ।
तथा नक्षत्राणि कर्मणाऽमुत्र भान्ति रुद्रादित्या वसवोऽथापि विश्वे ॥

कर्मैव भवति जगतो मूलम् । तत एवोत्पत्तिस्थितिलयाः सम्भवन्ति ब्रह्माण्डस्य'

तदुपजीव्यत्वादेव "एकोऽहं बहु स्यां प्रजायेय" एवमादयः श्रुतयः चरितार्थतां लभन्ते । कारणवारि कर्मण एव रूपान्तरम् ।

"नासदासीन्नो सदासीत्तदानीम् नासीद्रजो नो व्योमपरो यत् ।
किमावरीवः कुहकस्य शर्मन्नम्भः किमासीद् गहनं गभीरम् ।।
न मृत्युरासीदमृतं न तर्हि न रात्र्यन्ह आसीत् प्रकेतः ।
आसीदवातं स्वधया तदेकं तस्मादन्यानपरः किञ्चनाऽऽस ।।
कामस्तदग्रे समवर्त्तताऽधिमनसो रेतः प्रथमं यदासीत् ।
सतो बन्धुमसति निरविन्दन् हृदि प्रतिष्या कवयो मनीषा ।।"

एवं विधानां श्रुतीनामपि चारितार्थ्ये कर्मैव कारणत्वभाक् । ईश्वर एव रजोगुणाधिष्ठातृब्रह्म-सत्त्वगुणाधिष्ठातृविष्णु-तमोगुणाधिष्ठातृरुद्रभावं समासाद्य स्वयं ब्रह्माण्डस्योत्पत्तिं स्थितिं लयञ्च विदधाति । अत्रापि कर्मण एव कारणत्वम् । अनन्तकोटिब्रह्माण्डस्य सृष्टिस्थितिप्रलयाः कर्मणैव भवन्ति । ब्रह्माण्डस्य स्थितिदशायां कर्मैव धर्मरूपतामापद्य ब्रह्माण्डं पाति । कर्मैव क्रमशो जीवमुद्भिज्जस्वेदजाण्डजजरायुजयोनिभिः समुन्नमय्य देवैरपि दुरापां मनुष्ययोनिं प्रापयति । अभ्युदयनिःश्रेयसौ च तदेव वितरति । परमपुरुषार्थकारणत्वात् कर्मणो महत्त्वं वेदेषु सर्वप्राधान्येन वर्णितम् । जीवदशायाः प्रथमविकाशसमये कर्मैव सहचरतामापद्यते जीवस्य । पूर्णज्ञानशक्तिप्रदानेन जीवन्मुक्तदशां प्रापय्य शरीरावसाने विदेहलयं सम्पादयति । अतः कर्मप्राधान्यमभ्युपगच्छतां विदुषां मतद्वयं परिलक्ष्यते। प्रथममतावलम्बिनो विपश्चित ईश्वरास्तित्वोपगमे न किञ्चिदपि प्रयोजनमाकलयन्ति । यस्मादादितोऽन्तं यावत् कर्मण एवोपलभ्यते शक्तिर्नेतरस्येति सिद्धान्तमिममाश्रित्य भुवि अनन्ता जैनबौद्धादि—संप्रदायाः प्रादुर्बभूवुः, संभविष्यन्ति चेति स्वतः सिद्धम् । कर्मप्रधानानां विद्वद्वर्याणां यदन्यन्मतं तत्सर्ववादिनामेव सम्मतम् । वेदानुकूलं सर्वहितप्रदं सर्वतन्त्रसिद्धान्तयुक्तं यन्मतं पूज्यपादैर्महर्षिभिरैकमत्यमालम्ब्य स्वीकृतं तदेव कर्ममीमांसादर्शनेन प्रतिपादितम् । कर्मणः पूर्णा गतिः, सूक्ष्मातिसूक्ष्मावस्था, कर्मबीजानां संस्काराणामुत्पत्तिस्थितिलयाः, कर्मणो जडक्रियायां चैतन्यस्यावश्यकता, एवमादिसमधिगम्यभावविदो मुनयो निर्विवादमीश्वरसत्तामङ्गीकुर्वन्ति । यतः पूर्णं दर्शनं पूर्णज्ञानेऽलं साहाय्यमावहति । न चैवंविधे ज्ञाने भ्रमसंभावनावस्थातुमर्हति ।

ईश्वरास्तित्ववादिषु कर्ममीमांसाप्रतिपादको वेदाभिहितकर्मकाण्डस्य साहाय्यसंपादकश्चैवं विधं सिद्धान्तद्वयं प्रचलितं वर्त्तते । यतो वेदेऽपि संस्कारशुद्धिं क्रियाशुद्धिञ्च समभिलक्ष्य प्रवर्त्तितौ द्वौ पन्थानौ ।

एकेन तावत्साक्षात् बाह्यशुद्धिर्जायते ततश्चान्तःशुद्धिः सम्पद्यते। द्वितीयेन तु युगपदेव बहिःशुद्धिरन्तःशुद्धिश्चेत्येतद्द्वयमप्युपजायते। एकस्य बहिर्याग-सहायकत्वमपरस्यान्तर्यागसहायकत्वम्। प्रथमे क्रियासम्बन्धस्य द्वितीये विज्ञान-सम्बन्धस्य चाधिक्यम्। प्रथमस्याचार्य्या जैमिनि-क्रतु-दक्ष-मैत्रेयादयो महर्षयः। परस्य च भरद्वाज-कश्यप-वशिष्ठ-बृहस्पत्यादयो महर्षयः। इति चतुर्विंशतिमते विज्ञानभाष्यादिशास्त्रेषु च समुपलभ्यते।

स्थूलातिस्थूलशारीरिकक्रियासम्बन्धतो विद्यते खल्वाचारस्य प्रथमधर्मत्वम्। अपि चाचारबलमाश्रित्यैव परम्परया ब्रह्मसद्भावलक्षणः परमपुरुषार्थोऽपि समधिगम्यते। स्मर्य्यते च यथा—

"आचारमूला जातिः स्यादाचारः शास्त्रमूलकः।
वेदवाक्यं शास्त्रमूलं वेदः साधकमूलकः॥
क्रियामूलः साधकश्च क्रियापि फलमूलिका।
फलमूलं सुखं देव! सुखमानन्दमूलकम्॥
आनन्दो ज्ञानमूलश्च ज्ञानं वै ज्ञेयमूलकम्।
तत्त्वमूलं ज्ञेयमात्रं तत्त्वं हि ब्रह्ममूलकम्॥
ब्रह्मज्ञानं त्वैक्यमूलमैक्यं स्यात् सर्वमूलकम्।
ऐक्यं हि परमेशान! भावातीतं सुनिश्चितम्॥
भावातीतमिदं सर्वं प्रकाशभावमात्रकम्।"

सदाचारतो ब्रह्मसद्भावपर्यन्तं येन मीमांसादर्शनेन प्रतिपाद्यते तस्यैव महत्त्वाधिक्यमित्यत्र न कापि विप्रतिपत्तिः। सदाचारस्य मूलतत्त्वं, संस्कार-रहस्यं, संस्कारस्य प्रधानभेदाः, वर्णाश्रमधर्मविज्ञानं, स्त्रीपुरुषधर्माधिकारनिर्णयः, तयोर्मूलभित्तिः, नित्यनैमित्तिककाम्यानाञ्च कर्मणां रहस्यं, युक्तायुक्तकर्मणो-र्भेदाः, धर्माधर्मरहस्यं, धर्मस्य तदङ्गानाञ्च लक्षणानि, सामान्यधर्मस्य विशेष-धर्मस्य च तात्पर्य्यं, कर्मभिः सृष्टेः साक्षात् सम्बन्धः, जीवानां क्रमोन्नतिः, कर्मणा जीवानामूर्द्ध्वगतिरधोगतिश्च, परलोकवादः, जीवानामातिवाहिकगतिः, संस्कारशुद्ध्या क्रियाशुद्धिः, तथा चापवर्गाधिगमः, एवमादीनां प्रधानविषयाणां सम्बन्धोऽस्ति कर्ममीमांसादर्शनेन सह। वर्णाश्रमधर्मभित्ते र्दार्ढ्यसम्पादने परमा-श्रयभूतमिदं कर्ममीमांसादर्शनम् नाम। ईश्वरभक्तेरास्तिकतायाश्च कर्ममीमांसा-दर्शनमेतत् परमनिदानम्। किञ्चानेन नास्तिकादीनां मतानि निरस्याधि-काधिकं स्फुटं दृढीक्रियते जन्मान्तरसद्भाववादः। अपि च कर्ममीमांसादर्शन-विज्ञानमन्तरा दैवीमीमांसादर्शनस्य ब्रह्ममीमांसादर्शनस्य च सिद्धान्तोपलम्भो-दुःशक एव। तस्मादस्य परमावश्यकत्वं सर्वहितात्मकत्वञ्चावश्यमभ्युपगन्तव्यम्।

यथा स्वानुशासनेन सह राज्ञः सम्बन्धस्तथैव कर्मभिर्ब्रह्मणोऽपि सम्बन्धः। ब्रह्मतच्छक्त्योरिव कारणब्रह्म-कार्यब्रह्मणोश्चाप्यभेदः। यथा साक्षाद्राजसम्मानमसंपादयन्नपि तदीयानुशासनपालकस्तत्प्रसादभाग् भवति, यथा वा राजमानं विदधदपि तदीयानुशासनमतिक्रम्य दण्ड्यः स्यात्, तथैवाज्ञानतः परमेश्वरमनङ्गीकुर्वाणा अपि कर्मविज्ञानानि यथावदनुतिष्ठन्तः परमेश्वरदयामासाद्यार्हेयुरेवोन्नतिमासादयितुम्। एवंविधस्यैव विज्ञानस्य साहाय्येन स्वस्वसंप्रदायानुकूलानि दर्शनानि निर्माय स्वस्वसाधनसरणिञ्च प्रवर्त्य जैनादिधर्मसंप्रदाया अभ्युदयं संप्राप्ताः। परन्तु या प्रजा राजानं तदीयमनुशासनञ्च सममाद्रियते सा यथा सुशिक्षिता सर्वथा योग्येति चोच्यते, तद्वद् यस्मिन् दर्शनशास्त्रे कर्मविज्ञानेश्वरविज्ञानयोः समानरूपेण निर्णयस्तदेवाभ्रान्तं पूर्णञ्चेति नात्र संशयः।

प्रकृतेस्त्रैगुण्यात्मकत्वेन कर्तृकर्मणोरपि त्रैविध्यम्। तथा चोक्तं गीतोपनिषदि—

मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्त्ता सात्त्विक उच्यते॥
रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः।
हर्षशोकान्वितः कर्त्ता राजसः परिकीर्तितः॥
अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः।
विषादी दीर्घसूत्री च कर्त्ता तामस उच्यते॥
नियतं सङ्गरहितमरागद्वेषतः कृतम्।
अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते॥
यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः।
क्रियते बहुलायासं तद्राजसमुदाहृतम्॥
अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम्।
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते॥

अतोऽधिकारत्रैविध्येन कर्मणोऽपि त्रैविध्यं वेदेषु वर्णितम्। विज्ञानञ्चैतदनुसृत्य वेदप्रतिपादिता वैधी हिंसापि धर्मानुकूलैव सिद्धान्तिता। यथा कर्त्तृकर्मणोस्त्रैविध्यात् सात्त्विकराजसिकतामसिकभेदेनाधिकारस्य त्रैविध्यं तथैवावस्थाधिकारभेदेन यज्ञधर्मत्रैविध्यम्। तदुक्तं गीतोपनिषदि—

अफलाकाङ्क्षिभिर्यज्ञो विधिदिष्टो य इज्यते।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः॥
अभिसंधाय तु फलं दम्भार्थमपि चैव यत्।
इज्यते भरतश्रेष्ठ! तं यज्ञं विद्धि राजसम्॥

विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ।।

लक्षणैरेभिः सात्त्विकयज्ञ एव आदर्शस्थानीयो निःश्रेयसकरश्च सिद्ध्यति। राजसिकस्तु साक्षान्निःश्रेयसकरत्वाभावे ऽभ्युदयकरो ज्ञेय इति। तद्यथा—हिंसाविरहितः सात्त्विको यज्ञः सात्त्विकानुष्ठातृकृते परमधर्मो निःश्रेयसकरश्च किन्तु स एव राजसिककर्तृकृते प्रकृत्यधिकारविरुद्धत्वान्नोपयुज्यते। तत्कृते राजसिकयज्ञस्यैव परमधर्मत्वमभ्युदयकरत्वञ्चेति नात्रसंदेहावतारः। हिंसात्मकराजसिकयज्ञस्य राजसिककर्त्तृकृते समभ्युदयकारकत्वम्, यतोहि यज्ञेन तेनासौ कर्त्ता परमपुरुषार्थेऽग्रेसरो भवति। अतो यज्ञस्येदृशस्येदृशकर्तृकृते परमधर्मत्वं सिद्ध्यति। सिद्धान्ततस्तु राजसिकपशुयागे हिंसाजन्यं कुफलं कर्तरि नूनं समुदेति, किन्तु, तदपेक्षया प्रधानयज्ञस्यानुष्ठानेन कर्तुर्बहुलतरशुभफलावाप्तिस्तु प्रधानतया समुपजायते। अपि च भावशुद्धिद्वारा मङ्गलावाप्तिरूपमन्यत्फलन्तु विद्यत एव। अतो धर्मबाहुल्यात् हिंसात्मकराजसिकयागोऽपि राजसिकानुष्ठातृकृते साक्षादभ्युदयकरः परम्परया तु निःश्रेयसकरश्च। अतो वेदेषु वैधहिंसाया हिंसाकोटौ गणनैव नास्ति।

धर्मस्वरूपनिर्णयावसरे पूज्यपादेन महर्षिणा कणादेनाभिहितम् 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म" इति। इत्यतः तामसिकेन श्येनयागादिनैहलौकिकं, राजसिकेनाश्वमेधादिना पारलौकिकं स्वर्गादिसुखं समधिगम्यते। किन्तु तत्तत्सुखसाधनकर्मजन्यादृष्टक्षये यादृशः परिणामः संभवति स चोभयत्राप्यवश्यम्भावीति सिद्धम्। परमानन्दावाप्तिलक्षणं यत्त्वविनश्वरं सुखं तत्सात्त्विककर्मायत्तमेव। तस्मादत्र सात्त्विका एव कर्तारोऽधिकारभाजः।

निष्कामकर्मयोगस्याधिकारो विलक्षण एव विद्यते। निष्कामव्रतपरायणैः कर्मयोगिभिरनुष्ठीयमानानि यावन्त्येव कर्माणि तावन्ति तेषामपवर्गाधिगमाय पर्याप्तानि, यतो हि खल्वेषां वासनाविलयेन स्वत एवोपजायते संस्कारशुद्धिः सदायुक्तत्वाच्च क्रियाशुद्धिः। तदुक्तं गीतोपनिषदि—

"कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः।
स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥
यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥
त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।

गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ पुनश्च—
यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥
योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥
न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥
नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥
नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः
शरीरयात्रापि च ते न प्रसिध्येदकर्मणः ॥
कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।
लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि ॥
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥
सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ॥
यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥
त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति सः ॥
काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥
त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।
यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥
एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्त्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥
नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः ॥
दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।

स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥
कार्य्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलञ्चैव स त्यागः सात्त्विको मतः ॥
संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते ॥
ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥
कर्मण्येवाधिकारस्ते माफलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि" ॥

पूज्यपादेन महर्षिणा श्रीभरद्वाजेन प्रतिपादिते कर्ममीमांसाविज्ञाने कर्मणः पूर्णस्वरूपं, विस्तरेण तद्विज्ञानं, विविधा गतयश्चैवमाद्या विषयाः सम्यक् सन्दर्शिताः सन्ति । पूज्याङ्घ्रिसरोजेन परमर्षिणा भगवता जैमिनिना प्रणीतायां कर्ममीमांसायां कर्माधिकृत्य सार्वदैशिकविज्ञानं यन्न प्रतिपादितमुपलभ्यते, तत्रायं हेतुः यद् भगवान् जैमिनिर्निजगुरोरादेशमनुरुध्य केवलं वेदोक्तकर्मकाण्डीयक्रियापक्षस्यैव परिपुष्टये विशेषतः प्रयत्नं कृतवान् । फलतो भरद्वाजोक्तदर्शनशास्त्रं परमावश्यकं प्रतिभाति । यतोऽस्याध्ययनमन्तरा कर्मविज्ञाने जिज्ञासूनां प्रवेशो न भवितुमर्हति । सिद्धान्ततः कर्ममीमांसाशास्त्रस्येदं दर्शनं पूर्वार्द्धं श्रीजैमिनिकृतं कर्ममीमांसाशास्त्रमुत्तरार्द्धमिति सिध्यति । अस्तु-व्याहृतद्विप्रकारां कर्ममीमांसाविज्ञानशैलीं समभ्यस्यैव जिज्ञासवो वेदोक्तकर्ममीमांसायाः सर्वं रहस्यं वेत्तुं प्रभवन्ति नान्यथेति विज्ञानस्योभयस्याध्ययनं परमावश्यकमिति ।

वेदस्य नित्यत्वमपौरुषेयत्वादभ्रान्तत्वाच्च । प्रलयकाले ज्ञानरूपेण वेदः परमात्मनि तिष्ठति । पुनश्च सृष्टिदशायां पृथक् पृथक् ब्रह्माण्ड-लोक-कल्प-देश-काल-पात्रेषु यथावश्यकमाविर्भवति । ये महर्षयस्तपःपूर्णतां संपाद्य योगस्य विशेषसिद्धिं प्राप्नुवन्ति तेषामेव समाधिसिद्धान्तःकरणेषु श्रुतिरूपेण वेदानामाविर्भाव इति । नैव वेदेषु भ्रमसंभावना । प्रकृतमानवास्तु वैज्ञानिकबुद्धेरल्पतया अन्तर्दृष्टेरभावेन च श्रुतीनामध्यात्माधिदैवाधिभूतरूपार्थत्रैविध्यं नैव बोद्धुं पारयन्ति । पूर्णज्ञानत्वेन समाधिगम्यबुद्धेरुपलब्ध्या च विकसितान्तःकरणस्य महर्षेः समक्षमेव श्रुतयः स्वीयं स्वरूपत्रयं प्रकटयन्ति । ये च वेदेषु परस्परविरोधिन उपदेशाः संदृश्यन्ते, ये च सत्त्वरजस्तमसां गुणानां विविधाः क्रियाकलापास्समुपलभ्यन्ते, योऽपि वेदेषु जीवानां भावत्रयात्मकोऽधिकारो वर्णितः, सर्वञ्चैतत् मानवानां स्वस्वतन्त्राधिकारमूलकमेव । कृत्स्न-

स्याधिकारस्य प्रतिपादकत्वाद् वेदस्य पूर्णत्वमेव सिद्ध्यति। वैदिककर्मकाण्डे स्वव्याहृतधर्माधर्मनिर्णये च वेदस्यैव स्वतः प्रामाण्यम्। यथा ब्रह्मेशविराडात्मके त्रिविधस्वरूपे परमात्मा दृश्यते तथैव कर्मोपासनाज्ञानात्मककाण्डत्रये विभक्तो वेद उपलभ्यते । धर्मस्यान्येषामखिलानामङ्गानां त्रिष्वेष्वेवान्तर्भूतत्वात् त्रिविधस्यैतस्यैवाङ्गस्य सर्वप्राधान्यम्। काण्डत्रयात्मकत्वे च वेदस्यैतदेव कारणम्। वेदस्य त्रीण्यपि काण्डानि स्वस्वाधिकारानुसारं मुक्तिं प्रयच्छन्ति। विशेषतः कर्मणः प्राधान्यात् कर्मकाण्डविस्तारः कर्मकाण्डमाहात्म्यञ्चागमेऽधिकमुपलभ्यते। एवमुक्तवैदिककर्मविज्ञानोदये कर्ममीमांसायाः प्राधान्यम्।

यथा हि वायोर्वेगेन जलाशये तरङ्गाः समुद्भवन्ति एवमेवानादिवासनासन्तानेनानादिकर्माण्युत्पद्यन्ते प्रकृतिराज्ये। तानि चानादिसिद्धानि। यथा–घातप्रतिघातैस्तरङ्गाणां स्वरूपाण्यनन्तानि भवन्ति तथैव गुणत्रयवैषम्येण कर्मगतयोऽनन्ताःसंपद्यन्ते। विषमशीलया प्रकृत्या साकं नैसर्गिकः कर्मणः सम्बन्धः। कार्यब्रह्मात्मकस्य ब्रह्माण्डस्यैकः परमाणुरपि कर्मसम्बन्धं विरहय्य न वर्त्तते। ब्रह्माण्डस्यास्यैकं तृणमपि कर्मसम्बन्धमन्तरा स्थातुं न शक्नुयात्। न चावस्थान्तरमधिगन्तुं प्रभवेत्। अतः कर्मशक्तिः सर्वतो बलीयसी। यथा महाब्धेरन्तराले प्रवहदेकं तृणमनुकूलतरङ्गसाहाय्यं समासाद्य समुद्रतटं समुपेयात् नान्यथा, तथैव मानवैरनुकूलानि कर्माणि संगृह्यावश्यं क्रमोन्नतिप्राप्तिपुरःस्सरं शक्येत मोक्षपदमासादयितुम् । तस्मात् अनुकूलप्रतिकूलकर्मरहस्यं विज्ञायैव पुरुषार्थे ये प्रवर्त्तन्ते त एवाभ्युदयं लभन्ते। अपि च ये तत्त्वज्ञानेन कर्मणामकर्मणां विकर्मणाञ्च कुटिलां गतिं स्फुटमनुभवितुं समर्थास्त एव कर्मबन्धनं विभिद्य निःश्रेयसं समधिगच्छन्ति।

प्रकृतिस्वभावस्यानुकूलं प्रतिकूलञ्च धर्माधर्मरहस्यं, जीवानामभ्युदयनिःश्रेयसयोः साधकानां धर्माङ्गानां वर्णनं, धर्मस्य सूक्ष्मातिसूक्ष्मा गतय इत्यादयो विषया दर्शनस्यास्य प्रथमपादे वर्णिता इति हेतो र्भवति धर्मपाद इति संज्ञा तस्य पादस्य। द्वितीयपादे संस्कारविज्ञानं, संस्कारभेदविज्ञानं, संस्कारभेदाः, संस्कार शुद्ध्युपायादयश्च विषया वर्णिता इत्यस्य संस्कारपाद इति समाख्या । तृतीये पादे संस्कारशुद्ध्या क्रियाशुद्धिस्तथाक्रियाशुद्ध्युपायास्तद्भेदाश्च वर्णिता इति तस्य क्रियापाद इति संज्ञा। चतुर्थे क्रियाशुद्धीनां फलं मोक्षश्च प्रतिपादितस्तेनासौ मोक्षपादोऽभिधीयते। इति।

---

ॐ तत्सत् ।

# कर्ममीमांसादर्शनम् ।

## धर्मपादः ।

कर्मोपासनाज्ञानकाण्डात्मकेषु वेदेषु प्रथमस्य कर्मकाण्डस्य प्रतिपादकमिदं मीमांसाशास्त्रम् । तत्रापि कर्मविज्ञानस्य प्राधान्यतो द्वैविध्यं पुण्यपापरूपसदसत्कर्मभेदात् । ते च धर्माधर्ममूलके तत्राधर्मस्य हानं धर्मस्योपादानम् इत्यनयोरेवाभ्युदयनिःश्रेयसौ प्रति कारणत्वात् धर्मविज्ञानप्रतिपादनार्थं धर्माभिधस्य प्रथमपादस्यारम्भं प्रतिजानीते—

अथातो धर्मजिज्ञासा ॥ १ ॥

अत्रायमथशब्दो मङ्गलार्थो मङ्गलार्थकस्य तस्य मन्त्ररूपत्वात् । मङ्गलाचरणस्य परम्परया शिष्टाचारात्,श्रुतितश्च फलदर्शनादिति तस्य प्रयोगः । अथ शब्दप्रयोगेणैव मनःपूतत्वं समधिगम्य ब्रह्मणि युज्यते । तेन ब्रह्मसम्बद्धेन मनसा समारभ्यमाणस्य कार्यस्य विघ्नविफलताभ्यां वाध्यत्वाभावात् शुभकार्यारम्भे मङ्गलाचरणप्रथा साधीयसी । श्रुतिश्च—"समाप्तिकामो मङ्गलमाचरेत्" इति । मङ्गलं विघ्नविध्वंसपूर्वकं समाप्तिसाधकं,विघ्नध्वंसकरमेवेति द्विविधः शिष्टाचारोऽपि गीयते । आनन्तर्येऽप्यथवात्राथशब्दस्तद्यथा—ज्ञानदा-संन्यासदा-योगदा-लीलोन्मुक्तीनां चतसृणां ज्ञानभूमीनामनुकूलानि चत्वारि न्यायवैशेषिकयोगसांख्यशास्त्राण्युपन्यस्य तदनन्तरमिदानीं सत्पदाख्यज्ञानभूम्यनुसारं कर्ममीमांसादर्शनं प्रतिपिपादयिषुर्भगवान् परमकारुणिको महर्षि र्लोककल्याणायादौ मङ्गलव्यञ्जकानन्तर्य्यवाचकस्य शास्त्रीयपद्धत्यनुकूलस्याथशब्दस्योपादानं करोति । अथेति । धर्मजिज्ञासामन्तरा वैदिकविज्ञाने प्रवेशो दुराप इति धर्मजिज्ञासा कर्तव्येत्यतोऽतः शब्दः । पूर्वव्याहृतानां चतसृणां ज्ञानभूमीनां विज्ञानेऽन्येषां सिद्धान्तानां निर्णयो जातः । तदनन्तरमिदानीं धर्मविज्ञानं वर्णयति । अनुकूलप्रतिकूलभेदेन कर्मणो द्वैविध्यम् । अनुकूलकर्मैव धर्मपदवाच्यं प्रतिकूलकर्मैवाधर्मपदप्रतिपाद्यम्। मीमांसाशास्त्रम्–अनुकूलकर्मभेदं,तदङ्गवर्णनं,तत्कर्मणोत्तरोत्तराभ्युदयनिःश्रेयसौ च वर्णयति ।अत एव प्रथमसूत्रे धर्मजिज्ञासेतिपदं प्रायुज्यत। दाहकत्वशक्तिशून्यस्य वह्नेर्नास्तित्वप्रतीतिरिव धर्मसत्ता-विरहितस्य ब्रह्माण्डस्य तदङ्गस्य वा

नास्तित्वमेव। तत्साहाय्यमाश्रित्यैव ब्रह्माण्डस्योत्पत्ति-स्थिति-लयाः सम्पद्यन्ते । अधर्मस्य साहाय्येन जीवोऽधिकाधिकामधोगतिं लभते। परन्तु धर्मस्यैव साहाय्येन जीवः क्रमश उन्नतिमधिगच्छन् अन्ते दुरापं मुक्तिपदं लभत इत्यतो धर्मजिज्ञासयैव सर्वं ज्ञातव्यमिति ॥१॥

शास्त्रमारभमाणस्तन्मुख्यविषयं धर्मं निरूपयति—

धारको धर्मः ॥२॥

समष्टिव्यष्टिरूपब्रह्माण्डपिण्डमयसम्पूर्णसृष्टिक्रियां धरति यः स धर्मः । व्युत्पत्तिलभ्यस्यैवार्थस्य श्रुतिस्मृति-बोध्यत्वं तद् यथा—"धर्मो विश्वस्य जगतः प्रतिष्ठा, लोके धर्मिष्ठं प्रजा उपसर्पन्ति। धर्मेण पापमपनुदति, धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति" "धारणाद्धर्ममित्याहुर्धर्मो धारयते प्रजाः,यत्स्याद्धारण-संयुक्तं स धर्म इति निश्चयः" इति । धर्मेणैव पूर्वसंस्कारमनुसृत्यानन्तपिण्डब्रह्माण्डात्मकसृष्टि रुत्पत्तिस्थितिलयशालिनी यथावद् सम्भवतीति दृश्यते। प्रत्येक ब्रह्माण्डान्तर्गता अनेक-ग्रहोपग्रहादयः स्वस्वस्थानत उत्पद्य स्वस्मिन् स्वस्मिन् स्थानेऽधिवसन्तः पिण्डमयानन्तजीवशरीरं समाश्रयन्तो यन्महाकाशे यथावत्स्थितिं लभन्तेऽत्रापि हेतुर्धर्म एव । धर्मेणैव किल जीवदेहात्मकस्य पिण्डस्य सृष्टिस्थिति-प्रलयाः संपद्यन्ते । उद्भिज्जस्वेदजाण्डजजरायुजयोनीनामगणितानि स्वरूपाणि धारयन्तो जीवाः क्रमश उन्नतिं प्राप्य मानवीं योनिमासादयन्त्येतदपि धर्मनिबन्धन-मेव। धर्मस्यैवं साहाय्यतः प्राणिभिरैहिकामुष्मिकाभ्युदयं प्राप्नुवद्भिः क्रमशो वन्य-पशुवद्भिल्लत्वाद्यवस्थातोऽन्त्यजैरनार्यैरार्यैः शूद्रैर्वैश्यैः क्षत्रियैर्ब्राह्मणैर्वेदज्ञैस्तत्त्ववेतृभिर्वानप्रस्थैः संन्यासिभिः कुटीचरैर्बहूदकैर्हंसैः परमहंसैश्च भवद्भिरन्तेऽपवर्गोऽपि प्राप्यते। प्रथमदशायां जीवा अभ्युदयेन युज्यन्तेऽन्ते च मोक्षमाप्नुवन्ति तत्र धर्म एव कारणतामधिगच्छति। साधारणविशिष्टभेदेन धर्मद्वैविध्यम् । ब्रह्माण्डस्य पिण्डस्य चोत्पत्तिस्थितिलयक्रिया येन धार्यतेऽसौ साधारणः। सृष्टेर्विशिष्टा अवयवा विशिष्टा अवस्था च धार्यते येन स विशिष्टः। तत्र मनुष्यधर्मजीवधर्मप्राकृतिकधर्मादयः साधारणधर्मत्वेनावगन्तव्याः । आर्यधर्मानार्यधर्मवर्णाश्रमधर्म-पुरुषधर्मनारीधर्मादयो विशिष्टधर्मत्वेनेति ॥ २ ॥

ननु धर्मः कुतः किं विधत्ते इत्याह—

अभ्युदयकरः सत्त्वप्राधान्यात् ॥ ३ ॥

पूर्वसूत्राद्धर्म इत्यनुवर्त्तते। सत्त्वबाहुल्यादिष्टसाधकत्वं धर्मस्येत्यर्थः। रजः-साहाय्यमाश्रित्य तमोभिमुखीभूय स्वस्वकारणसत्तायां जडपदार्थोलीनो भवति। यथोद्भिज्जशरीरवतः काष्ठस्य मृतशरीरस्य वा तमोगुणबाहुल्यात् सर्वेषां तदीय

क्षित्यादिभूतपञ्चकपरमाणूनां यथायथं स्वस्वहेतुभूते महाभूतपञ्चके जायते लयः। यदि चोक्तशरीरद्वयं नाग्निसात्क्रियेत, तत्तथैव स्थाप्येत वा तथापि तत् कालान्तरे यथावत्परिणामात्पूर्णलयमाप्नुयात्। परन्तु नैवंविधो विलयः संपद्यते चेतनस्य सत्त्वसापेक्षस्य। अयं हि क्रमशः सत्त्वगुणोद्रेकादुद्भिज्जस्वेदजाण्डजजरायुज-योनिमासादयन् मनुष्ययोनिमुपैति। निरुक्तयोनिषु यथाक्रमं सत्त्वगुणो विकास-मापद्यते। नृयोनावपि तेनैव न्यायेन प्रथमावस्थायामैहिकोन्नति द्वितीयदशायां च पारलौकिकोन्नतिः। एतदेवालोक्य महर्षिणा प्रतिपादितं यज्जीवानां गतिः सत्त्वप्राधान्यमूलेति। धर्मोऽभ्युदयप्रदो धर्माधिष्ठितस्य न कर्हिचिदधःसंपातः। किन्तूत्तरोत्तरमुन्नतिरेवोपजायत इति। अत्र स्मर्यते—"प्रकाशकत्वात्सत्त्वस्य ज्ञान-हेतुत्वमीर्य्यते। लघुत्वादूर्द्ध्वनेतृत्वं सत्त्वाद्धर्मो हि निर्भयौ"। धर्मः सत्त्वगुण-प्रकाशकतया ज्ञानहेतुः। सूक्ष्मतया सत्त्वोन्नतिनिदानम् ॥ ३ ॥

अपि च—

निःश्रेयसकरः शक्तिमत्त्वात् ॥ ४ ॥

धर्म इत्यनुवर्त्तते। धर्मो निःश्रेयसकरः, निरतिशयं श्रेयः, निश्चितं श्रेयो वा करोतीतिकरः तस्य करः सः, मोक्षजनक इत्यर्थः। विलक्षणशक्तिवैशिष्ट्यात् पर-ब्रह्मणः पर्याप्तां शक्तिं बिभ्रतो धर्मस्यैवाश्रयणात् योन्यन्तरं परिभ्रमन् जीवो मनुष्य-योनिं प्राप्नोति। अज्ञानततिनिमग्नस्य बालस्य मातृकृतपालनपोषणादिवत् धर्म-स्याज्ञानजीवदशायां क्रमशो जीवानुन्नमयतो मानवयोनिप्रदातृत्वम्। तद्योनिं समासादयतो जीवस्य कर्तव्याकर्तव्यज्ञानलाभः। तेन च तस्य स्वपिण्डस्य प्रभुत्व-संपादकत्वम्। तदानीं स मातृपित्राचार्यगुरुजनशास्त्रवेदसाहाय्येन धर्माधर्मभेद-बोधसामर्थ्यात् प्रथमदशायां राजानुशासन-समाजानुशासनयो द्वितीयदशायामा-चार्यानुशासनवेदानुशासनयोस्तृतीयदशायां योगानुशासनस्य साहाय्येनाधर्म-मार्गं परित्यज्यैकं धर्ममार्गमेवाश्रयते, तथा भवन् क्रमशोऽभ्युदयम् अनेकजन्मना सिद्धिं च लभते। तथा चोक्तं गीतोपनिषदि—

"प्रयत्नाद् यतमानस्तु योगी संशुद्धकिल्विषः।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥

स्मर्यते चात्र—"उन्नतिं निखिला जीवा धर्मेणैव क्रमादिह।
विदधानाः सावधाना लभन्तेऽन्ते परं पदम्" ॥

प्रथमावस्थात एव जीवानां तत्तत्कर्माणि तत्सहचरतामापद्यन्ते। क्रियाशुद्धिस्तूत्तरोत्तरं संस्कारशुद्धितो जायते। मानवा यावन्ति सत्त्वान्युप-

चिन्वन्ति तावन्त्येव तत्त्वज्ञानान्यपि । उदिते पर्याप्ततत्त्वज्ञाने क्रियाया विरामात् निवृत्तकर्मबन्धनो जीवन्मुक्तो निःश्रेयसपदं लभते । ईदृशक्रमोन्नतावन्ते परमपद-प्राप्त्यर्थञ्च धर्मस्यैव शक्तिमत्त्वम् । इति ॥ ४ ॥

प्रसङ्गोपात्तमधर्मं वर्णयति—

प्रतीपकर्माऽधर्मः ॥ ५ ॥

प्रतीपं विपरीतं कर्मैवाधर्मपदवाच्यम् । ननु धर्मप्रतिपादके शास्त्रेऽधर्मा-नुसन्धानं मुधैवेति चेन्न, प्रतिकूलविषयस्वरूपप्रबोधनमन्तरा प्रतिपाद्यविषयस्य त्रैकालिकसम्बन्धेनादार्ढ्यप्रसङ्गात् । प्रकाशस्य पदार्थस्य पूर्णं परिज्ञानं तद्वि-रोधि-तिमिरपदार्थज्ञानाधीनमेव । न हि दुःखमनारुह्य नरः सुखं कः पदार्थ इति जानीयात् । अतः पूज्यपादैः महर्षिभिरद्धाजोऽधर्मस्वरूपं प्रतिपादयाञ्चकार । यथा सत्त्वगुणवर्द्धकस्य कर्मणो धर्मत्वमेवं तमोगुणवर्द्धकस्यैवाधर्मसंज्ञा । येन येन शारीरिकवाचिक-मानसिक-कर्मणा तमस उपचयो भवेत्तस्यैवाधर्मपदवाच्य-त्वम् । एतद्विमृश्यैवाधर्मकार्यं निर्णीय ततः शास्त्रानुशासनेन मनुष्यानपसार-यति । धर्माधर्मलक्षणन्तु स्मृतौ—श्रुतिस्मृत्युदितो धर्मस्त्वधर्मस्तद्विपर्ययः । इति ॥ ५ ॥

प्रकारभेदेनोभयोः शक्तिसाम्यं प्रतिपादयति—

समौ शक्तिवैशिष्ट्यात् ॥ ६ ॥

धर्मोऽधर्म इतिद्वयमनुवर्त्तते । विशिष्टस्य भावो वैशिष्ट्यं शक्तेर्वैशिष्ट्यं प्रभाव इति यावत् । तस्मात् शक्तप्रभावात् धर्माधर्मौ समानाविति । यथा धर्म-स्याभ्युदयपरमपुरुषार्थौ प्रति सर्वशक्तिशालित्वं तथैवाधर्मस्यापि जीवाधोगतिं प्रति । तथाहि धर्मसाहाय्येन मानवयोनिमासाद्य ब्राह्मण-देवर्षि-प्रभृति-स्वरूपमा-श्रयमाणाः शक्नुवन्त्यधिगन्तुमपवर्गमपि । एवमधर्मप्रभावेण मनुष्या नरक-प्रेतत्व-पशुत्वादिकमुपलभमानाः स्थावरत्वं यावदधिगच्छन्तीत्यतोऽधर्मस्याधः-कारिण्या गतेः सदा सर्वथा भेतव्यम् ॥ ६ ॥

अतोऽधर्मस्य हेयत्वमाह—

अहितत्वाद्धेयः ॥ ७ ॥

अधर्म इत्यनुवर्त्तते । हितप्रतिकूलत्वादधर्मो वर्जनीयः । यदैव मनुष्याः शरीरेण मनसा बुद्ध्या वा ऽधर्मान् संचिन्वन्ति तदैवाधःसरणं श्रयन्ते । कायिके-नाधर्मेणाधिभौतिकीं, मानसिकेनाधिदैविकीं, बुद्धिकृतेनाध्यात्मिकीमवनतिं तदानी-मेवाश्नुवते । तस्मात् परमपुरुषार्थं कामयमानैः सद्भिरनुक्षणमेवाधर्मतो भयं संभाव्य ततो विरक्तिरास्थेयेति ॥ ७ ॥

ननु धर्माधर्मयो र्निर्णयः कथं संपद्यत इत्यत आह—

**सत्त्वतमोभ्यां धर्माधर्मनिर्णयः ॥ ८ ॥**

सत्त्वतमोगुणाभ्यां धर्माधर्मयोरवधारणं भवति। सत्त्वगुणवर्द्धको धर्मः, तमोगुणवर्द्धकोऽधर्म इत्यर्थः। स्मर्यते चात्र—

देवा ! उद्भावकं सत्त्वतमसोः कर्म कथ्यते।
धर्मःसत्त्वप्रधानत्वादधर्मस्तद्विपर्ययः ॥ ८ ॥

नन्वेवं कुत्र भवतीत्यत्राह—

**सर्वत्रैवं दर्शनात् ॥ ९ ॥**

समष्टिव्यष्टिरूपेऽखिलप्रपञ्चे सत्त्वतमोभ्यामेव धर्माधर्मनिर्णयः तथा-अनुभवाद् वेदशास्त्रसदाचाराणाममुष्मिन् विज्ञाने संमतत्त्वाच्च। यतो हि मानवानां कायवाङ्मनोजन्यासु सर्वास्वपि क्रियासु वेदशास्त्रसदाचारानुरोधेन धर्माधर्मसम्बन्धनिर्णयः। वैदिकदर्शनविज्ञानतो लोके नैतादृशः, देशः, कालः, क्रिया, पदार्थो वा विद्यते यत्र धर्माधर्मसम्बन्धो नास्ति। यतो हि धर्म ईश्वरीयनियमः। स्मर्यते च—

या बिभर्त्ति जगत्सर्वमीश्वरेच्छा ह्यलौकिकी।
सैव धर्मो हि सुभगे ! नेह कश्चन संशयः ॥ इति ॥ ९ ॥

अत्र प्रथममुदाहरणं दर्शयति—

**भक्ष्याभक्ष्ये ॥ १० ॥**

पूर्वसूत्रादेवमित्यनुवर्तते। भक्षितुं योग्यं भक्ष्यं तद्विपरीतमभक्ष्यं, भक्ष्यश्चाभक्ष्यश्च तयोः समाहारस्तस्मिन्नेवं भवति। सत्त्वप्रधानभक्ष्यभोजने धर्मः। तमःप्रधानाभक्ष्यभोजनेऽधर्म इति भावः। वैदिकविज्ञानाश्रयतो द्रव्यस्य पूतापूतत्वविमर्शस्सत्त्वतमोमूलकः संपद्यते, न तु बाह्यस्वरूपाश्रयतः। सत्त्वगुणसम्बन्धवतः पदार्थसमुदायस्य शुद्धत्वम्। तमोगुणसम्बन्धवतोऽशुद्धत्वम्। स्मृतिशास्त्रे भक्ष्याभक्ष्यनिर्णयस्य तदनुसारित्वात्। पूज्यपादा महर्षयः समाधिसिद्धया धिया-सत्त्वगुणवर्द्धकान् पदार्थान् भक्ष्यश्रेण्यां तमोगुणवर्द्धकान् पदार्थानभक्ष्यश्रेण्यां गणयामासुः। तथा हि स्मर्यते मनुना—

लशुनं गृञ्जनञ्चैव पलाण्डुकवकानि च।
अभक्ष्याणि द्विजातीनाममेध्यप्रभवाणि च ॥
लोहितान् वृक्षनिर्यासान् वृश्चनप्रभवांस्तथा।
शेलं गव्यञ्च पेयूषं प्रयत्नेन विवर्जयेत् ॥

वृथा कृसरसंयावं पायसापूपमेव च ।
अनुपाकृतमांसानि देवान्नानि हवींषि च ॥
आरण्यानाञ्च सर्वेषां मृगाणां माहिषं विना ।
स्त्रीक्षीरञ्चैव वर्ज्यानि सर्वशुक्तानि चैव हि ॥
यत्किञ्चित् स्नेहसंयुक्तं भक्ष्यं भोज्यमगर्हितम् ।
तत्पर्युषितमप्याद्यं हविःशेषञ्च यद्भवेत् ॥
चिरस्थितमपि त्वाद्यमस्नेहाक्तं द्विजातिभिः ।
यवगोधूमजं सर्वं पयसश्चैव विक्रिया इति ॥ १० ॥

अपि च—

स्पृश्यास्पृश्ये ॥ ११ ॥

स्प्रष्टुं योग्यं स्पृश्यं तद्विपरीतमस्पृश्यं, स्पृश्यञ्चास्पृश्यञ्च तयोः समाहारस्तस्मिन्नेवं भवति । सत्त्ववर्द्धकस्पृश्यस्पर्शे धर्मः तमोवर्द्धकास्पृश्यस्पर्शेऽधर्म इति भावः । सर्वव्यापकमहाप्राणस्य क्रियावत्त्वात् प्राणशक्तेराकर्षणविकर्षणक्रियायाः सर्वव्यापकत्वाच्च यत्र व्यक्तौ यस्मिन् पदार्थे वा यो गुणो विद्यते तत्स्पर्शेन तेनैव गुणेन सम्बन्धोऽभिजायते । अत एव तामसिक प्राणिनः तामसिकपदार्थस्य वा, सात्त्विकप्राणिनः सात्त्विकपदार्थस्य वा स्पर्शेन तद्गुणसम्बन्धोऽवश्यं कर्तरि समुपजायते । विज्ञानञ्चेदमाश्रित्यैव पूज्यपादा धर्माचार्याः स्पृश्यास्पृश्ययोर्विचारं शास्त्रे विहितवन्तः । स्मर्यते च दिङ्मात्रम्—

प्रायश्चित्तीयतां प्राप्य दैवात्पूर्वकृतेन वा ।
न संसर्गं व्रजेत् सद्भिः प्रायश्चित्तेऽकृते द्विजः ॥
ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।
महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ॥
न संवसेच्च पतितैर्न चाण्डालैर्न पुल्कसैः ।
न मूर्खैर्नावलिप्तैश्च नान्त्यैर्नान्त्यावसायिभिः ॥
मक्षिका विप्रुषश्छाया गौरश्वः सूर्यरश्मयः ।
रजो भूर्वायुरग्निश्च स्पर्शमेध्यानि निर्दिशेत् ॥ इति ॥ ११ ॥

किञ्च—

शुद्धाशुद्धे ॥ १२ ॥

शुद्धञ्चाशुद्धञ्च तयोः समाहारस्तस्मिन्नेवं भवति । सत्त्ववर्द्धकशुद्धवस्तुना धर्मः तमोवर्द्धकाशुद्धवस्तुनाऽधर्म इति भावः । विज्ञानमिदमाश्रित्य पदार्थानां शुद्धाशुद्ध्यो विचारः प्रतिपादितः । असंख्यजीवान् निहत्य प्राप्तस्य

मधुपदार्थस्य, गोरोचनादिपदार्थस्य च पवित्रतायाम्प्रथमं स्थानम् । पदार्था-न्नाञ्चामीषां हिंसाजन्यत्वेऽपि विपुलसत्त्वगुणवर्द्धकत्वात् धर्मजनकत्वमेव । पवित्रफलमूलकोटिप्रविष्टानामपि पलाण्डवादिपदार्थानां तमोगुणवर्द्धकत्वाद् अपूतश्रेण्यां गणना अधर्मजनकता चेति ।

अपरञ्च—

## पूजोपचारे ॥ १३ ॥

उपचरणमुपचारः पूजाया उपचारस्तस्मिन्नेवं भवति । सत्त्ववर्द्धकपूजो-पचारेण धर्मः । तमोवर्द्धकपूजोपचारेणाधर्म इति भावः । इमामेव वैज्ञानिक-सरणिमालम्ब्य उपासना-कर्मकाण्डयोः पूजाद्रव्योपचारद्रव्ये निर्णीते स्तः । पूजोपचारे धूपदीपनैवेद्यादयः, कर्मकाण्डोपचारे कुशतिलयवसमिधश्च सत्त्ववृद्धया सूक्ष्मगत्याऽन्तःकरणसंशोधनेन च दैवजगतः सम्बन्धाधाने समर्था इति तत्र गृहीताश्च । ननु कस्याँश्चिद् विशेषोपासनापद्धतौ, मारणवशीकरणादि-तान्त्रिकयागे, श्येनादिवैदिकयागे च कथं तामसिकद्रव्यसम्बन्धः ? इति शङ्कायाः स्पष्टमेवोत्तरम् । तदेवाह यैर्यैरुपासनाकार्यैर्यज्ञकार्यैश्चात्मोन्नति-जगत्कल्याण-दैव-राज्यसंवर्द्धनानि सम्पद्यन्ते, तानि सात्त्विककार्याणि । तत्र सात्त्विकोपचार-सम्बन्ध आवश्यकः । यत्रानुष्ठातृतरजनामङ्गलसम्बन्धस्तानि सर्वाणि कार्याणि तामसिकानि । तादृशतामसिककार्यैःसह तामसिकोपचारसम्बन्धः स्वतः सिद्धः ॥ १३ ॥

अन्यच्च—

## वासो वसने ॥ १४ ॥

वाससो वस्त्रस्य परिधानेऽपि धर्माधर्मयो निर्णयो भवति । सत्त्ववर्द्धक-वस्त्रपरिधाने धर्मः । तमोवर्द्धकवस्त्रपरिधानेऽधर्म इति भावः । एवमेवा-न्यत्रापि बोद्धव्यम् । पूज्यपादैर्महर्षिभिर्धर्माधर्मयोर्व्यापकत्वप्रदर्शनार्थं साधा-रणेऽपि वस्त्रपरिधानादिके कार्ये तत्सम्बन्धोऽभिधीयते । प्रवृत्त्याश्रमनिवृत्त्याश्रम-माश्रित्य व्यवहरतोर्गृहस्थसंन्यासिनोः कृते परिधानीयस्य वस्त्रस्य भिन्नतया स्व-स्वाधिकारविरुद्धमाचारतोरुभयोरप्यधर्मः—यथा—संन्यासिनां काषायवस्त्रं परि-त्यज्य बहुमूल्यवस्त्रपरिधानेऽधर्मः, ब्राह्मणक्षत्रियविट्शूद्रादीनां गृहस्थानां स्वस्वाधिकारविहितवस्त्रपरिधाने धर्मः, इतरथाऽधर्मः । तथैव नव्यव-स्त्रपरिधानक्षणे स्वेष्टदेवस्मृतिपुरःसरा शास्त्रप्रकारानुसारिणी वस्त्रधृति धर्माय कल्पत इति ॥ १४ ॥

अथ धर्ममाहात्म्यविख्यापयिषया तदधिष्ठातृस्वरूपं व्याहरति—

सच्चिदेकं तत् ॥ १५ ॥

धर्मस्य विश्वधारकत्वेऽपि तदधिष्ठातुर्विश्वात्मनो विश्वोत्पत्तिस्थितिलयकारिणो विश्वं विराड्रूपेण स्वस्मिन् बिभ्रतः परमात्मनः स्वरूपन्तु सद्रूपम्, चिद्रूपम्, एकमद्वितीयञ्चेति । व्याहृतञ्च गीतोपनिषदि—

ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ इति

अस्तिरूपेण तद् ब्रह्म सत्स्वरूपमत एव नित्यमिति । ज्ञानसत्तारूपेण चित्स्वरूपम्, चित्सत्तामन्तरेण विश्वस्यास्तित्वप्रतीत्यभावात् । एकञ्चाद्वितीयमित्यर्थः । श्रूयते च—"सच्चिदानन्दमव्ययम्" तथा च—

सच्चिदानन्दमद्वैतं सच्चिदानन्दमव्ययम् ।
सच्चिदानन्दमात्रं हि सच्चिदानन्दनामकम् ॥ इति ॥ १५ ॥

नन्वेकञ्चेद् ब्रह्म तत्कथमिह नानात्वप्रतीतिरित्यत आह—

भेदप्रतीतिरौपाधिकत्वात् ॥ १६ ॥

ब्रह्मण एकत्वेऽपि उपाधिसम्बन्धात् भिन्नत्वेन प्रतीतिः । कारणब्रह्म-कार्यब्रह्मणोः कार्यब्रह्म-तदवस्थान्तरब्रह्मणोश्चैवंविधसर्वप्रकारद्वैतभाने उपाधिरेव निदानम् । मायोपहितत्वादेवाज्ञानजन्येदृशद्वैतप्रतीतिः । तदीयविराड्रूपेण सतः, ब्रह्मरूपेण च चितः, पूर्णतया विकाशः समुपजायते । वस्तुतस्तु कार्यब्रह्मकारणब्रह्मणोरैक्यमेव । अधिगतजीवत्वानां जीवानां रजस्तमोगुणतारतम्येनाज्ञानस्यापरिमेयत्वाद् यावद् भेदप्रतीतिस्तत्राज्ञानजन्योपाधेरेव निमित्तत्वम् । स्मर्यते च—

नैवात्र विस्मयः कार्यो भवद्भिर्विप्रपुङ्गवाः !
ईश्वरस्य च जीवस्य भेदो ब्रह्मणि कल्प्यते ॥
मायाविद्यात्मकान्नूनं क्रमादावरणाद्द्विजाः !
ब्रह्मणः प्रतिबिम्बो हि जीवो देहाभिमानकः ॥
स्वस्मात्स्वभावतो भिन्न ईश्वरस्तेन मन्यते ।
ईश्वरस्य च जीवस्य भेदो यावदुपाधितः ॥
तिष्ठेत्तावत्क्षणं विप्राः ! कथञ्चित् क्व कदाचन ।
जन्ममृत्युप्रवाहोऽसौ संसारो न निवर्त्तते ॥
ईश्वरे चैव जीवे च भेदबुद्धिः कदाप्यतः ।
न कर्तव्या द्विजश्रेष्ठाः ! तत्त्वज्ञैरात्मवेदिभिः ॥ इति ॥ १६ ॥

# सूर्योदयः ।

( विविधविषयविभूषितं संस्कृतमासिकपत्रम् )

षष्ठे वर्षे } श्रावणी पूर्णिमा, सं० १९८७ । { द्वितीया संख्या


## सम्पादकीया अभिप्रायाः ।

### विद्याध्ययन-पद्धतिः ।

आत्मज्ञानप्रकाशिनी ब्रह्मशक्तिरेव विद्या । या च स्वस्वरूपमाच्छाद्य भ्रामयन्ती विपरीतं ज्ञानमुत्पादयेत्, सैवाविद्या । ज्ञानजननी विद्या । अज्ञानप्रसविनी बन्धनकारिणी चाविद्येति वेदाः शास्त्राणि च निर्दिशन्ति । इममेव दार्शनिकं सिद्धान्तं सम्मुखीकृत्य पूज्यचरणा महर्षयो विद्याध्ययनपद्धतिं निर्णीतवन्तः । ब्रह्मचर्य-गार्हस्थ्य वानप्रस्थ-संन्यासनामधेयेषु चतुर्षु आश्रमेषु, ब्राह्मण-क्षत्रिय-वैश्य-शूद्रसंज्ञकेषु चतुर्षु वर्णेषु, स्त्री-पुंधारारूपे सृष्टिप्रवाहे, प्रवृत्ति-निवृत्तिधर्मयोराचारनिर्णयादिषु च सर्वत्रैव सर्वजीवहितकाम्यया, प्राणिनामधिमानसं प्रकृत्यैव समुद्भूतस्याविद्याप्रवाहस्य प्रणाशपूर्वकमुत्तरोत्तरं ज्ञानप्रकाशकविद्याशक्तिप्रादुर्भावायैव महर्षयः पुरा विद्याध्ययनस्य परिपाटीं निर्दिदिशुः ।

तत्तदधिकारवद्भिः सर्वैरेव मानवैः स्वीयायां विद्योन्नतौ सावधानं सदा ध्यानं प्रदेयमास्ते । अत एव विद्योन्नते र्नानापद्धतयो वेदादिशास्त्रेषु वर्णाश्रमसदाचारेषु च समुपलभ्यन्ते । ब्रह्मचर्यं चरद्भि र्गुरुगृहमधिवसद्भिर्ब्रह्मचारिभिराचार्यसेवां शास्त्रसेवां समनुष्ठितवद्भिः सैव विद्या प्राप्यते स्म । सर्वशास्त्रपारदृश्वान आचार्या अपि यथाधिकारं स्वशिष्यान् ब्रह्मचारिणो विद्योन्नतिमार्गे परिचालयन्तो विदुषो विहितवन्तः । गृहिणश्च निजमुद्दामप्रवृत्तिवेगं निरुध्य, प्रवृत्तिधर्मेऽपि निवृत्तिधर्मं संचिन्वन्तो, बहुकुटुम्बितया स्वार्थभावं संकोचयन्तो, वृद्धेष्वादरं, समानेषु प्रेम, लघुषु स्नेहं कारं कारं स्वीयं गार्हस्थ्य-धर्मं परिपालयन्तस्तत्रैव विद्योन्नतिमार्गे क्रमशो यथाधिकारमग्रेसरन्ति स्म ।

वानप्रस्थाः संन्यासिनश्चालौकिकं तपस्त्यागादिकं स्वधर्मं विदधानास्तमेव विद्योन्नतेः पन्थानमन्वसरन्। ब्राह्मणानां तपः स्वाध्यायः धनाद्यैश्वर्यपरित्यागश्च, क्षत्रियाणां पुत्रवत्प्रजापालनं, धर्मयुद्धे प्राणविसर्जनं च, वैश्यानां कृषिः, गोरक्षा, वाणिज्यं, देशसमृद्ध्यै स्वधर्मवृद्ध्यै च धनोपार्जनं, शूद्राणामलौकिकः सेवाधर्मः प्रभुभक्तिश्चेति सर्वे वर्णाश्रमसदाचारा मानवान् विद्योन्नतिमार्गे प्रवर्त्तयन्ते। अविद्याप्रभावप्रणाशपूर्वकं विद्याशक्तिप्रवर्द्धनमेव वर्णाश्रमसदाचारप्रणालीनामद्वितीयं रहस्यमवगन्तव्यम्। तामेव वैज्ञानिकीं भित्तिमवलम्ब्य पुरुषजातेर्यज्ञप्रधानः स्त्रीजातेस्तपःप्रधानश्च धर्मः शास्त्रेषु वर्णितः। तदेव विज्ञानमनुसृत्य प्रवृत्तिधर्मेऽपि प्रवृत्तिरोधकविद्याभिरुचिः, निवृत्तिधर्मे च शरीरमनोबुद्धीनां क्रमशो मलविक्षेपावरणानि प्रणाश्य विद्यासाहाय्येन स्वस्वरूपोपलब्धिरित्येवमादयः सदाचाराः शास्त्रेषु निर्धारिताः। अत एव शास्त्रसम्मताया विद्याध्ययनपद्धतेरासीदाध्यात्मिकी समुन्नतिरेव मुख्या, नाधिभौतिकीति।

अधुनातनी पाश्चात्य-पण्डितप्रवर्त्तिता पठनपाठनपद्धतिः सर्वथाऽऽध्यात्मिकलक्ष्यबहिर्मुखी परिदृश्यते। तदीयाऽध्ययनप्रणाल्यामुपर्युक्तविद्याऽविद्याविचारलेशोऽपि न निभाल्यते। यथा च वास्तविक-मानवत्वप्राप्तिः, अभ्युदय-निःश्रेयसाधिगमश्चेत्यादिकं प्राच्य-प्राचीन-विद्याध्ययनपद्धतौ संरक्षितं, न तथा पाश्चात्याध्ययनपरिपाट्यामिति निश्चप्रचम्। पाश्चात्यदेशीयाऽध्ययनपद्धतिरैहलौकिकसुखावाप्तिमूलिकैव। पाश्चात्यानामाश्चर्यकरः पदार्थविद्याऽऽविष्कारः, शिल्पोन्नतिः, युद्धरीतिः, तदर्थं च शस्त्रास्त्राणामाविर्भावः, धार्मिक्यः सामाजिक्यो राजनैतिक्यश्च नीतयः, संघटनम्, वायु-धूम्र-जलयानादयो निखिला एवाविष्कारा ऐहलौकिकसुखसाधननिमित्तका एव।

प्रकृतिवैचित्र्याद्धेतो र्न सर्वैरेकः पन्था आश्रीयेत। तत्तन्मानवाधिकारानुरूपशिक्षाप्रदानमेव कल्याणाधायकम्। नहि ज्ञानाधिकारः सर्वेष्वपि समानः सम्भाव्यते। तत्त्वज्ञानप्रदानेऽधिकारविचारं नितरामावश्यकः। बीजस्वरूपाणां नराणां क्षेत्ररूपाणां नारीणां च शिक्षणसरण्यां भेदः स्वभावसिद्धः। यद्यपि शिक्षायामर्थकामावपि ध्रुवं प्रयोजनीयतामावहतः, परन्तु लक्ष्यभूतौ धर्ममोक्षावेव। केवलमैहलौकिकसुखसाधकं ज्ञानं न भारतीयानामभिप्रेतम्। तद्धि नास्तिक्यमाविर्भावयति। ईश्वरीयविज्ञानविहीनायाः शिक्षणसरणेर्दुष्परिणामः पाश्चात्यैरिव सम्प्रति भारतीयैरप्यनुभूयते। एतर्हि स्त्री-पुरुषेषु जन्य-जनकेषु, राज-प्रजासु,

विविधोपजातिषु च यदिदं पारस्परिककलहस्य नग्ननृत्यं निभाल्यते, तत्रापि पाश्चात्यशिक्षणरीतेरेव दुरुदर्को निदानभूतः। अतो हि परमात्म-परलोक-धर्मादि सम्बन्धनिबद्धैव विद्याध्ययनपद्धतिः सर्वजीवहितकारिणी विश्वजनीनश्रेयः-साधिका सांसारिकशान्तिसहायिका सदा सर्वैः समुपास्येति।

---

## विद्यमाना राजनैतिकी क्रान्तिः।

स्वीयैरलौकिकैरीश्वरतत्त्वानुशीलनैरध्यात्मतत्त्वपरिशीलनै दार्शनिकतत्त्व-मननै र्योगतत्त्वनिदिध्यासनादिभिरियमार्यजातिर्जगद्विजयिनी जगद्गुरुरासी-दिति सर्ववादिसम्मतः सिद्धान्तः। अस्यां हीनदीनमलीनावस्थायामपि हिन्दु-जातिरेव जगद्गुरु-पद-भाजनमिति सत्यानुसन्धित्सवो नवीनाः प्राचीनाश्च सार्वदेशिका विपश्चित आमनन्ति। अत्रैव सर्वप्रथमं प्राकट्यमागता विज्ञान-ज्योति र्यूनाने, ततो रोमे, ततश्च सर्वत्रैव संसारे प्रससारेति सर्वैं मन्यन्ते। जरा-जीर्णा सर्वतः शीर्णा धनधान्यविरहिता बलहीना आत्मशक्तिपरिक्षीणा सत्यपी-यमेत्राध्यात्मिकसमुन्नतिदृष्ट्या साम्प्रतमपि जगद्गुरुस्थानीया निभाल्यते। इदानीं नवीनमेकं ज्योतिराविर्भाव्य निखिलस्यापि राजनैतिकस्य जगतो ध्यानं स्वाभिमुखमाकृष्टमेतया। शस्त्राणि द्वारीकृत्यैवायोधनानि श्रूयन्ते स्म। शस्त्राणि धारयन्त एवान्योन्यं युध्यमानाः स्वशक्त्यनुरूपं जयं पराजयं वा लभन्ते स्म। परं हि शस्त्रास्त्रधारिभिः साकं निःशस्त्राणां सामूहिकं युद्ध-मिति न कदापि कर्णगोचरतामभ्युपगतमासीत्। भारतवर्षप्रादुर्भूतां नवी-नामिमां युद्धपद्धतिं विलोक्य निखिलोऽपि संसारश्चमत्कृत आस्ते। अत्यल्पी-यसैव समयेन नूतना संग्रामसरणिरियं समस्तमेव देशं व्याप्य वर्तत इत्यत्र नूनं दैवी प्रेरणा। वैयक्तिकस्वार्थराहित्यरूपस्तपोमूलकः शान्तिमयो रक्तपात-रहितो नूतनः संग्रामोऽयमाराजप्रजं सम्पूर्णमेव सभ्यजागतिकसमाजमाश्चर्य-पारावारे निपातयतीत्यत्र नास्त्यणीयानपि सन्देहावसरः। सर्वं हि वस्तु व्याप्नोति सनातनोऽयं भगवान् धर्मः। यतो धर्मस्ततो जयः। अतोऽस्मिन् क्रान्तिमये समये यदि तपस्त्यागसंयममूलिकां धर्मबुद्धिं भारतीया प्रजा न परित्यक्ष्यति न वा राज-द्वेष-धर्मद्वेष-संयमराहित्य-पूज्यपूजाव्यतिक्रम-दर्पादिषु मतिं निवेशयिष्यति, नूनं विजयमासादयिष्यतीति बलीयान् मे विश्वासः।

---

## सिक्खतीर्थजीर्णोद्धारः ।

प्रातःस्मरणीयः सनातनधर्मपरमरक्षकः सुप्रसिद्धानां सिक्खगुरूणां दशमो गुरुः श्रीमान् गुरुगोविन्दसिंहमहाराज आसीत् परमस्तपस्वी स्वदेशाभिमानी च। सनातनधर्मसुरक्षादुर्गभूतस्य तस्य जीवनमलौकिकघटनापरिपूर्णं शिक्षाप्रदं च वर्त्तते। भगवत्याश्चण्डीदेव्या एष उत्कृष्ट उपासक आसीत्। तेन सप्तशतीपुस्तकस्य हिन्दीभाषामयोऽनुवादो विहित आस्ते। यद्येष महापुरुषस्तदानीं नावतरिष्यत्, तदा भारतस्य पश्चिमोत्तरप्रदेशेषु सनातनधर्मावलम्बिनां मानवानां महीयसी हानिरभविष्यत्। पाटलिपुत्रं स्थानं हि महात्मना तेन स्वजन्मनाऽनुगृहीतम्। सिक्खधर्मस्य चतुर्षु प्रधानतीर्थेषु तदप्येकमस्ति। तीर्थस्यैतस्य नितरां शोचनीयां दशामवलोक्य सहृदयहृदयं सातिशयं खिद्यते स्म। तस्य मन्दिरादीनि जीर्णशीर्णानि नष्ट-भ्रष्टानि निभाल्यन्ते स्म। श्रीभारतधर्ममहामण्डलस्य वाराणसेयसिक्खसङ्घस्य च प्रयत्नेन तस्य समुद्धारोऽभवत्। श्रीमहामण्डलेन यदभ्यर्थितं, तच्च पाटलिपुत्रस्थः सुयोग्यो न्यायाध्यक्षमहोदयः स्वीकृतवान्। न्यायाध्यक्षमहोदयो हि पूज्यसिक्खगुरुपवित्रवंशोद्भूतं श्रीमहाराजकरतारसिंहवेदीमहोदयं जीर्णोद्धारिण्याः समितेः सभापतिपदे प्रतिष्ठापितवान् तीर्थस्य च तस्य प्रधानाध्यक्षं निर्द्धारितवान्, येन धनसंग्रहद्वारा जीर्णोद्धारकार्यं सुसम्पन्नं स्यात्। एतेन जीर्णोद्धारकर्मणा भारतवर्षस्य पूर्वोत्तरप्रान्तेषु सिक्खधर्मशिक्षायाः प्रचारे सुतरां सौविध्यं सम्पत्स्यते। ये च निरङ्कुशा मानवाः सनातनधर्मात् सिक्खधर्मं पृथक्कर्त्तुं समीहन्ते, ते कार्येणैतेन नैराश्यमनुभविष्यन्तीति परमं प्रमोदस्थानमस्माकम्।

---

## वैदेशिकपथिकसौविध्यम् ।

भारतं नाम परमरामणीयकनिधानं संसारशिरोमणिभूतं स्थानम्। तदेतन्निभालयितुम् अमेरिका-यूरोप-चीन-जापानादिभूभागतः प्रतिवर्षं प्रायः पञ्चसहस्रं मानवाः समायान्ति। तेषु देशकालादिपरिज्ञानशिक्षाभिप्रायेण यूरोपस्य मध्यप्रान्तात् अमेरिकायाश्च युक्तप्रान्तात् बहवः सज्जनाः स्वीयजिज्ञासापूर्त्तिं कामयमानाः समागच्छन्ति। परमस्माकं दुर्भाग्यतः प्रमादाच्च तेषां ये पथप्रदर्शकाः ( Guides ) वाराणसीप्रभृतिषु तीर्थस्थानेषु सन्ति ते प्रायः शिक्षाशून्या विधर्माणो निम्नश्रेणीसमुद्गताश्च भवन्ति। कारणेनैतेन भ्रमणकर्त्तारो वैदेशिका अस्माकं तीर्थ-सदाचार-सभ्यतादिसम्बन्धे स्वीयस्वान्तेषु

विरुद्धं संस्कारमादाय भारतवर्षात् स्वदेशं निवर्त्तन्ते। सम्प्रति श्रीभारतधर्म-महामण्डलेन अनौचित्यमिदमपसारयितुं प्रयत्नः समनुष्ठितः स च सफलः संजातः। तत्र चतुर्षु त्रयः सनातनधर्माणः एकश्च विधर्मी राजाज्ञां ( Licence ) प्राप्य पथप्रदर्शककार्यं नियुक्ताः सन्तः कार्यं करिष्यन्ति। श्रीमहामण्डलं द्वारी-कृत्यैव सनातनधर्माणः पथप्रदर्शका नियुक्ता भविष्यन्ति। प्रबन्धेनैतेन अल्पज्ञ-विधर्मप्रसारितमिथ्याज्ञानसमूलसमुन्मूलनपुरस्सरं वैदेशिकानां भ्रमणकर्तॄणां महान् लाभः, सनातनधर्मस्य च साधीयान् उपकारः सम्पद्येतेति।

---

## संस्कृतज्ञा अवदधतु।

विदितचरमेवास्ति सूर्योदय-पाठकमहाभागानां यत् निखिलभारतवर्षीय-संस्कृतविश्वविद्यालयः संस्कृतविद्यायाः, धार्मिकशिक्षायाः, हिन्दीभाषायाश्च प्रसारादिसदुद्देश्यसिद्धये संस्थापितो वर्त्तत इति। इदानीं यावत् मैनपुरी, दतिया, हृषीकेश, बरेली, बिजनौर, रावलपिंडी, पीलीभीत, आरा, अमृतसर, अबोहर, आगरा, गोरखपुर, कनखल, बीकानेर, बदाऊं, शाहजहाँपुर, भोपाल, रामगढ़ ( सीकर ), सागर, गण्टूर ( मद्रास ), होशंगाबाद, इन्दौर, कलकत्ता, मद्रास, बम्बई, हैदराबाद, सैलाना, गोहाटी, फिरोजपुर, नागपुर, श्रीरङ्गम्, कानपुर, मेरठ, दरभङ्गा, शिलांग, मुंगेर, जालौन, जबलपुर, काठियावाड, अलवर, बडौदा, रायबरेली, बरदवान, मथुरा, ग्वालियर, प्रभृतिस्थानेषु विश्वविद्यालयस्यैतस्य परीक्षाकेन्द्राणि संस्थापयितुं तेषां तेषां विदुषां प्रार्थना-पत्राणि समागतानि सन्ति। तेषु तेषु स्थानेषु द्रुतमेव परीक्षाकेन्द्राणि संस्था-पितानि भविष्यन्ति। भारतवर्षस्य विभिन्नप्रान्तेषु यावन्ति अधिकसंख्यया परीक्षाकेन्द्राणि संस्थापयिष्यन्ते, तावती एव स्वजाति-स्वधर्म-स्वदेश-समुन्नति-करे कार्येऽत्र सफलता समधिगता स्यात्। साम्प्रतमपि अनेकेषु नगरेषु बहुषु ग्रामेषु च बहूनि संस्कृतविद्यामन्दिराणि ससाफल्यं प्रचलितानि दरीदृश्यन्ते। यदि तत्र तत्र सूर्योदयप्रसारपुरस्सरं विश्वविद्यालयपरीक्षाकेन्द्राणि संस्थापयितुं संस्कृतज्ञा विपश्चितो बद्धपरिकरा भवेयुस्तर्हि नूनमचिरेणैव समुदेष्यति भगवान् भारती-भाग्य-भास्कर इति।

---

# देवीस्तवन-गीतिका ।

[ प्रातः भैरवीरागेण सार्धं खम्माचेन त्रितालतो गीयते । ]

जय जननि ! भ्रमजालनिवारिणि ! गीतविनोदिनि !ताललये !
विविधवरोहणमूर्च्छनमोहिनि ! हे परमेश्वरि ! हे विजये !
निखिलचराचरभूतविभाविनि ! पिण्डसमष्टिसरूपचये !
अनुपलमेव मनो मननं तव भक्तिरसस्य करोतु जये ! ॥ १ ॥

अयि मन एष भवो विभवे वरिवर्त्ति यदीयसरूपमये,
वरमनुरूपमसि त्वमपि प्रभु यत्स्थितिभाति मुदा निचये ।
भ्रमसि भवे भ्रमतो निजरूपनिरन्तरविस्मरणेन शये,
अनुपलमेव मनो मननं तव भक्तिरसस्य करोतु जये ! ॥ २ ॥

पुरुषप्रधानतया जगतीगतदम्पतियुग्मविहारनये,
निरततमा नितरामति सैव विलासिनि ! रासविलासकले ।
अखिलनिरञ्जनसत्यसनातनरूपमयी मम सा विषये;
अनुपलमेव मनो मननं तव भक्तिरसस्य करोतु जये ! ॥ ३ ॥

सरभसप्रेमपयोनिधिमज्जनलब्धरसामृतपानमये,
पुलकितमानसभृङ्गयदीयसुभक्तगणो ननु भक्तिरये ।
गुणगणगानपरो मुदमातनुते स्वरसप्तकतानलये,
अनुपलमेव मनो मननं तव भक्तिरसस्य करोतु जये ! ॥ ४ ॥

परमपिता जननी जगतां भवतीह निदानमपि प्रलये,
भवभवभूतिनिदानमलं भवरक्षणसाक्षिणि ! कालमये ।
वितथविनाशिनि ! पापविमोचिनि ! भीतिनिवारिणि ! मातरये,
अनुपलमेव मनो मननं तव भक्तिरसस्य करोतु जये ! ॥ ५ ॥

निखिलचराचरभूतविधायिनि ! भूतमहेश्वरि ! भूतधये,
जनमन अन्तरप्राणसरूपिणि ! योगनिरूपिणि ! योगमये ।
स्वजनविनोदिनि ! भक्तजनस्य सदा हृदयाम्बुजकोशशये !
अनुपलमेव मनो मननं तव भक्तिरसस्य करोतु जये ! ॥ ६ ॥

अखिलचराचरगामिनि ! साधकसाधनसाध्यसुसिद्धिमये,
सरसमनोहररूपविलासविलोकनजातललामतमे ।
ऋषिमुनयस्तव दर्शनमद्भुतमाशु नयन्ति समाधिलये,
अनुपलमेव मनो मननं तव भक्तिरसस्य करोतु जये ! ॥ ७ ॥

अनृतदृढं भ्रमजालमिदं मन आशु विदित्वा छिन्धि भये,
न पत निरन्तरमेव विलोकय रूपवरेऽखिलविश्वमये,
बहुविधरूपविवर्जितमां परमां प्रथितां निजरूपमये,
अनुपलमेव मनो मननं तव भक्तिरसस्य करोतु जये ! ॥ ८ ॥

# सङ्गः सतां किमु न मङ्गलमातनोति

लेे०—श्रीमान् पण्डितजगद्रामशर्म्मा, मुख्याध्यापकः
[ डेराइस्माइलखान-संस्कृतविद्यालयस्य ]

—*—

अथैकदा कस्मिँश्चिद्वाचनालये सानन्दं गीतामृतमास्वादयन्तं विनयमिव मूर्तिमन्तं प्रमोदमिव पिण्डीभूतं तिलकाञ्चितललाटतटं रुद्राक्षशोभितकण्ठदेशं चारुशुभ्रवेषं बहुलसद्गुणमण्डितं कञ्चन पण्डितं विलोक्य तत्पार्श्वस्थासन्दीगतो धृतोपनेत्रः कोटबूटपतलूनादिभूषितकायकङ्कालः शरीरधारीव कालः करकलितसमाचारपत्रजालः सविस्मयं सलीलं पप्रच्छ पाश्चात्यसभ्यताभिमानी सुधारकः ।

सुधारकः—ननु मिश्र ! किमिदं पुस्तकम् ? कास्य भाषा ?

पण्डितः—अयि महाशय ! श्रीमद्भगवद्गीतेयम् । संस्कृतेऽद्भुतं रत्नम् ।

सुधा०—किं सेयं संस्कृतभाषा यां शवभाषेति जल्पन्ति जनाः ।

पण्डितः—आम् , सैव, या शवानपि शिवान् करोति, मृतेष्वपि प्राणान् सञ्चारयति ।

सुधा०—अलमलमतिप्रशंसया । इयं भिक्षुकभाषा । एतत्प्रभावेणैव ब्राह्मणा यावज्जीवमुदरपूरणेऽपि सचिन्ता गृहाद्गृहमटन्ति ।

पण्डितः—(स्वगतम्) हन्त ! कीदृशेनाद्य विचित्रमानवेन समागमः (प्रकाशम्) नैवम्, नेयमितरभाषावद्धर्माय दत्ततिलाञ्जलीनुदरम्भरीन् दासान् प्रसूते । किन्तु प्राज्येऽपि राज्ये घृणां वहतः परोपकृतौ बद्धपरिकरान् श्रीभर्तृहरिप्रभृतीन् विरक्तान् स्वातन्त्र्यैकधनान् प्रतापनिभान् वीरपुङ्गवान्, कण्वप्रभृतीन् कुलपतीँश्च जनयति । एतस्याः कृपाकटाक्षेणैव महान्तश्चक्रवर्तिनोऽपि ब्राह्मणचरणानर्चिषुः, अर्चन्ति, अर्चिष्यन्ति च ।

सुधा०—'पाद्याधमा' इत्यादीन् रूक्षनादान् विहाय नास्यां किमपि तत्त्वमुपलभ्यते । किञ्च संस्कृतज्ञो बुद्धुर्भवति ।

पण्डितः—सत्यम्, निखिलं गृहं चर्वित्वा क्लर्कपदवीलाभाख्यं भवदभिमतं परतत्त्वं तु नोपलभ्यते । पितरौ यदि "डैम फूल" आदिभिर्वचःप्रसूनैः सत्कुर्यात्तदैव भवत्परिषदि चातुर्यमञ्चेत् सः । एतादृक्चातुर्यापेक्षया बुद्धुपदव्येव गरीयसी ।

सुधा०—नास्यां जीवनयात्रायै श्रेयान् कोऽप्युपायः ।

पण्डितः—नहि नहि, वैद्यकोपाध्यायज्यौतिषोपदेशग्रन्थनिर्माणतत्त्वांशोधनाध्यापनकथादयो बहुला वृत्तयः सन्ति । कर्तॄणामभावो न तु वृत्तीनाम् । अन्यत्र केवलं भुक्तिः, अत्र तु भुक्ति मुक्तिश्चापि ।

सुधा०—नास्याः काप्यावश्यकता । नाप्यस्यां लोकोपयोगिविषयाणां सन्निवेशः ।

पण्डितः—( स्वगतम् ) कथं पिष्टपेषणं करोति विवेकहीनः । ( प्रकाशम् ) महाशय ! प्राग् जन्मनोऽर्वाङ्मरणाच्चाप्यस्त्यस्या आवश्यकता । गर्भाधानादौर्ध्वदेहिकान्तं च संस्कारजातं किं कुरानायतैः विधीयते ? उपयोगिविषयाभावोऽपि तवैव चर्मदृष्टौ । गणितायुर्वेदज्यौतिषादिविषयप्रतिपादकग्रन्थरत्नानां बाहुल्येन दर्शनात् । उपरागनिर्णये तु महान्तो विज्ञानविदश्चकिता रदनाग्रासितरसना दृश्यन्तेऽद्यापि । अध्यात्मतत्त्वपरीक्षणे तु आधुनिका विज्ञानविदोऽस्माकं दर्शनविद्यालयस्य वर्णाध्यायिनो बाला एव ।

सुधा०—संस्कृतज्ञैरेवायं देशः पारतन्त्र्यपाशेन निगडितः । साम्प्रतमप्येत एव स्वराज्यमार्गे कण्टकायन्ते ।

पण्डितः—अनैतिहासिकस्यायं त उपालम्भः । गीर्वाणगिरस्तद्विदां च गौरवसमये देशोऽयं धनधान्यादिपूर्णोऽन्यदेशानां च गुरुरासीत् । अत्र जन्मलाभाय देवा अपि स्पृहाभाजोऽभूवन् । यदवधि भवादृशः सुपुत्रा जातास्तत आरभ्यैव भारतमाता सर्वथा दुःखिता सोरस्ताडनं क्रन्दति । नहि रोगिभ्यः पथ्यमिव धर्मामृतं रोचते भवद्भ्यः कामनादासेभ्यः । पण्डितास्तु प्रतिपदमधोमुखं पतद्भ्यः कुमार्गचारिभ्यो वेदगीतं सुमार्गं दर्शयन्ति । मृत्युशय्यामधिशयानस्य हि सफलता दासीव चरणौ सेवते । नहि कोऽपि स्वहस्तगतं वस्तु सुखेन ददाति । संस्कृतज्ञाः "हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्" इति भववैद्यश्रीकृष्णवचोभेषजमेव सर्वहितमिति स्फुटं कथयन्तो ध्वजायन्ते, न तु कण्टकायन्ते ।

सुधा०—( सप्रणामम् ) अहो पण्डितवर्य ! सत्यं सत्यम्, अनर्घ्यरत्नमिव गोपेन जन्मेदं मया वृथा विषयदग्धवराटिकाभिर्विक्रीतम् । बालिशेन मया भुक्तिमुक्तिरूपं स्तन्यं क्षरन्ती संस्कृतकामधेनुरवधीरिता । तदद्य प्रतिजाने यथाशक्ति स्वयम्, विशेषतस्तु स्वबालान् संस्कृतं पाठयिष्यामि । धन्या भवन्तो ये निरन्तरं सरस्वतीसमाराधनेन जन्म सफलयन्ति । श्रीमच्चरणसम्पर्कादहमप्यद्य कृतार्थोऽस्मि । सत्यमुक्तम्—"सङ्गः सतां किमु न मङ्गलमातनोति" ।

———

# संस्कृतविश्वविद्यालय-परीक्षा-पुस्तक-नियमावली ।

—— ०ॐ० ——

## उद्देशाः ।

धार्मिकशिक्षायाः प्रचारः, संस्कृतविद्याया विस्तारः, आयुर्वेदादिशास्त्राणां प्रसारः, हिन्दी-रूपाया राष्ट्रभाषायाः समुन्नतिः, नराणां नारीणां च स्वस्वधर्मपरिज्ञानमित्येवमाद्यो निखिलभारतवर्षीयसंस्कृतविश्वविद्यालयस्यास्य शुभोद्देशाः स्थिरीकृताः सन्ति ।

## परीक्षाकेन्द्राणि ।

प्राचीनेषु विद्यापीठेषु, धर्मसंस्कृतचर्चाप्रधानेषु नगरेषु, श्रीभारतधर्ममहामण्डलस्य संरक्षकाणां पूज्यपादानामाचार्यमहोदयानां संस्थानेषु, संरक्षकाणां स्वाधीननरपतीनां राज्येषु, श्रीमहामण्डलस्य विशिष्टप्रतिनिधेः शाखासभायाश्च प्रस्तावतो यत्र कुत्रापि, यत्र च श्रीमहामण्डलस्य सप्त साधारणसभ्याः सन्ति, तेषु तेषु स्थानेषु विश्वविद्यालयस्य परीक्षाकेन्द्राणि स्थापयितुं शक्यन्ते। परीक्षाकेन्द्राणि संस्थापयितुं नास्त्यल्पीयसोऽपि धनव्ययस्य प्रयोजनम्। प्रत्युत ससाफल्यं प्रचलितेषु केन्द्रेषु विश्वविद्यालयेन आर्थिकं विविधं साहाय्यं च प्रदास्यते। परीक्षाकेन्द्राणि प्रतितिष्ठापयिषुभिरावेदनपत्राणि प्रपूर्य प्रधानकार्यालये द्रुतं प्रहेलिमानि। ततश्च केन्द्रस्वीकृतिपत्रं प्रधानकार्यालयः प्रहिणुयात्। पत्रं प्रेष्य प्रधानकार्यालयादावेदनपत्राणि ग्रहीतव्यानि।

## परीक्षाणां नामानि ।

( १ ) उपाध्यायपरीक्षा । ( २ ) महोपाध्यायपरीक्षा । पौरोहित्यपरीक्षयो द्वे नामनी—( ३ ) श्रौतकर्मविशारदपरीक्षा । ( ४ ) स्मार्त्तकर्मविशारदपरीक्षा च । ( ५ ) धर्माचार्यपरीक्षा । ( ६ ) आयुर्वेदप्रथमपरीक्षा । ( ७ ) आयुर्वेदमध्यमपरीक्षा । ( ८ ) आयुर्वेदशास्त्रिपरीक्षा । ( ९ ) आयुर्वेदाचार्यपरीक्षा । हिन्दीनाम्नी भाषा वर्तमानभारतवर्षस्य राष्ट्रभाषा, तस्याः समुन्नतये—( १० ) राष्ट्रभाषाविशारदपरीक्षा । ( ११ ) धर्मोपदेशकपरीक्षा स्त्रीणां कृते— ( १२ ) धर्मविनोदिनी परीक्षा । स्कूल-कालेजाभिधाङ्गलभाषाविद्यालयीयानाम्, अन्यान्यपाठशालाध्येतॄणां छात्राणां कृते द्वे छात्रवृत्ति परीक्षे निर्द्धारिते—( १३ ) प्रथमा धर्मपरीक्षा ( १४) द्वितीया धर्मपरीक्षा चेति ।

## मानदानानि।

प्रतिवर्षं परीक्षामुत्तीर्णेभ्य उत्तीर्णाभ्यश्च वाराणस्यां तत्तत्परीक्षाकेन्द्रस्थानेषु वा सभासमारोहपूर्वकं सादरं सबहुमानं च उपाधिमानपत्राणि, पदकानि, पुरस्कारद्रव्याणि च प्रदास्यन्ते। आयुर्वेदस्य प्रथम-मध्यमपरीक्षे, छात्रवृत्तिपरीक्षे च विहाय अवशिष्टा दश परीक्षा उपाधिपरीक्षा अवगन्तव्याः। एतासु, समुत्तीर्णतायामुपाधिपत्राणि लभ्येरन्। अन्यासु पदकपुरस्कारादिप्रदानप्रबन्धो विहित आस्ते। उपाधिपत्रेषु प्रधानाधिष्ठातॄणां, संयुक्तप्रधानाधिष्ठातॄणां च हस्ताक्षराणि भविष्यन्ति।

निम्ननिर्द्धारितासु संस्कृतपरीक्षासु देशकालज्ञानोपयुक्तानि हिन्दीभाषापुस्तकानि चापि निर्द्धारितानि। वर्तमानभारतस्य राष्ट्रभाषा हिन्दीति नास्त्यत्र केषामपि सचेतसां वैमत्यम्। अनया सार्कं तत्तत्प्रान्तनिवासिनां सर्वेषां भारतीयानां विदुषां सम्बन्धो भवत्विति विमृश्यैव संस्कृतविश्वविद्यालयाधिकारिणः संस्कृतपरीक्षास्वपि हिन्दीग्रन्थान् संनिवेशितवन्तः। यत्र नास्ति हिन्दीभाषायाः प्रचारस्तत्रत्यैः परीक्षार्थिभिस्तु केनापि हिन्दीज्ञेन पण्डितेन तानि तानि हिन्दीभाषापुस्तकानि श्रुत्वा तत्तदुत्तरं संस्कृतभाषायामपि लिखित्वा निर्दिष्टा अङ्का लब्धुं शक्येरन्।

### १ उपाध्यायपरीक्षायाः पाठ्यपुस्तकानि।

प्रथमपत्रे—व्याकरणसाहित्यव्युत्पत्तिविषयकाः प्रश्नाः। द्वितीयपत्रे—सांख्यतत्त्वकौमुदी, पञ्चदशी, कर्ममीमांसादर्शनस्य प्रथमपादश्च। तृतीयपत्रे-केनोपनिषद्, शम्भुगीता, शक्तिगीता च। चतुर्थपत्रे—मनुसंहिता, याज्ञवल्क्यसंहिता मिताक्षरा, विष्णुपुराणं च। पञ्चमपत्रे—नवीन दृष्टिमें प्रवीण भारत, स्वजातीयमहायज्ञ, वर्तमानजगत् इति त्रयाणां हिन्दीभाषामयानां ग्रन्थनां प्रश्नाः। उच्चश्रेण्यां समुत्तीर्णेषु सर्वश्रेष्ठाय मानपत्र-पदकादिव्यतिरिक्तं वर्षत्रयं यावत् पञ्चाशद्रूप्यकात्मकं वार्षिकं पारितोषिकं प्रदास्यते। उच्चश्रेण्यामुत्तीर्णेभ्यः सर्वेभ्य एव विद्वद्भ्यस्ततो न्यूनं पारितोषिकं दीयेत।

### २ महोपाध्यायपरीक्षायाः पाठ्यपुस्तकानि

प्रथमपत्रे—वैदिकं छन्दः, वैदिकं व्याकरणं निरुक्तं च। द्वितीये—योगदर्शनं, सांख्यदर्शनं, कर्ममीमांसादर्शनम्, वेदान्तदर्शनचतुःसूत्री च। तृतीये—कठोपनिषत्, सभाष्या भगवद्गीता, मातृमहिमप्रकाशिन्या हिन्दीटीकयोपेता

सप्तशतीगीता, धीशगीता, सूर्यगीता च । चतुर्थे—श्रीमद्भागवतस्य तृतीय-स्कन्धः, महाभारतस्य अनुशासनपर्व, अष्टादशस्मृतयश्च । पञ्चमे प्रवीण दृष्टिमें नवीन भारत, परलोकरहस्य, चतुर्दश लोकरहस्य, धर्मसुधाकर इति चत्वारो हिन्दीभाषामया ग्रन्थाः सन्ति । उपाध्यायपरीक्षोत्तीर्णानामेवात्राधिकारः स्यात् । भारतस्य तत्तत्प्रान्तराजकीयोपाधिपरीक्षोत्तीर्णा अप्यत्राधिकारवन्तः स्युः । अत्र प्रथमश्रेण्यां समुत्तीर्णेषु सर्वश्रेष्ठाय मानपत्रपदकादिव्यतिरिक्तं वर्षत्रयं यावत् शतमुद्रात्मकं वार्षिकं पारितोषिकं दास्यते । प्रथमश्रेण्यामुत्तीर्णेभ्यो ऽन्येभ्यस्तु ततो न्यूनं पारितोषिकं दीयेत ।

## ३ श्रौतकर्मविशारदपरीक्षायाः पाठ्यपुस्तकानि ।

प्रथमपत्रे—संहिता, दर्शपौर्णमासपद्धतिश्च । द्वितीये—श्रौतसूत्रम्, कल्पसूत्रम्, गोभिलगृह्यसूत्रम्, आश्वलायनगृह्यसूत्रं च । तृतीये—सोमयागादि-प्रयोगः, कुण्डसिद्धिः, धर्मकर्मदीपिका, कर्ममीमांसादर्शनस्य धर्मपादः संस्कार-पादश्च । चतुर्थे—व्याकरणसाहित्यव्युत्पत्तिपरीक्षा, देवार्चनग्रहयागसंस्कार-श्राद्धमन्त्रार्थपरीक्षा च । पञ्चमे–नवीन दृष्टिमें प्रवीण भारत, प्रवीण दृष्टिमें नवीन भारत, वर्त्तमानजगत् इति त्रयो हिन्दीभाषाग्रन्थाः सन्ति । अत्रापि प्रथम-श्रेण्यामुत्तीर्णेषु सर्वश्रेष्ठाय मानपत्र-पदकादिव्यतिरिक्तं वर्षत्रयं यावत् मुद्राशतं वार्षिकं पारितोषिकं दास्यते । प्रथमश्रेण्यामुत्तीर्णेभ्यो ऽन्येभ्यस्तु ततो न्यूनं दीयेत ।

## ४ स्मार्त्तकर्मविशारदपरीक्षायाः पाठ्यपुस्तकानि ।

प्रथमपत्रे—दशकर्मपद्धतिः षोडशसंस्कारो वा, श्राद्धविवेकश्च । द्वितीये–प्रतिष्ठामयूखशान्तिमयूखौ । तृतीये—मातृमहिमप्रकाशिन्या टीकयोपेता सप्तशती-गीता, त्रिवेदीयश्राद्धप्रयोगः, नित्यकर्मचन्द्रिका च । चतुर्थे—आह्निकतत्त्वम्, धर्मकर्मदीपिका, त्रिवेदीय सन्ध्या च । पञ्चमे—व्याकरणसाहित्ययोः साधा-रणज्ञानपरीक्षा, नवीन दृष्टिमें प्रवीण भारत-धर्मचन्द्रिका-वर्तमानजगत् इति त्रयाणां हिन्दीभाषामयानां पुस्तकानां प्रश्नाः । अत्र प्रथमश्रेण्यामुत्तीर्णाय सर्व-श्रेष्ठाय वर्षत्रयं यावत् पञ्चाशन्मुद्रात्मकं वार्षिकं पारितोषिकं प्रदास्यते । अन्ये-भ्यस्तु ततो न्यूनं दीयेत ।

## ५ धर्माचार्यपरीक्षायाः पाठ्यपुस्तकानि ।

धर्माचार्यपरीक्षां दित्सुभिर्विद्वद्भिः श्रौतकर्मविशारद-स्मार्तकर्मविशारद-

परीक्षयोरन्यतरस्यां महोपाध्यायपरीक्षायाञ्चावश्यमेवोत्तीर्णता सम्पादनीया भवेत्, तदैव धर्माचार्यपरीक्षां दातुमधिकारःप्राप्येत । प्रथमपत्रे—न्याय-वैशेषिक-योग-सांख्य-कर्ममीमांसा-दैवीमीमांसा-ब्रह्ममीमांसा-दर्शनानां, शुद्धाद्वैतद्वैताद्वैत विशिष्टाद्वैताद्वैतपाशुपतादिसाम्प्रदायिकदर्शनानां प्रश्नाः । द्वितीये—मन्त्रयोग संहिता, हठयोगसंहिता, लययोगसंहिता, राजयोगसंहिता, मन्त्रमहोदधिश्च । तृतीये—देवीभागवतम्, श्रीमद्भागवतम्, विष्णुपुराणम्, महाभारतं च । चतुर्थे—शम्भुगीता, शक्तिगीता, संन्यासगीता, तन्त्रसारः, महानिर्वाणतन्त्रं च । पञ्चमे—हिन्दीभाषामयः सम्पूर्णो धर्मकल्पद्रुमः, शास्त्रसम्बन्धिनी रचना चेति । अत्र प्रथमश्रेण्यामुत्तीर्णेन सर्वश्रेष्ठेन मानपत्रपदकादिव्यतिरिक्तं पञ्चशतरूप्यात्मकं वार्षिकं पारितोषिकं वर्षद्वयं यावत् लभ्येत, अन्यैस्तु ततो न्यूनमिति ।

## ६ आयुर्वेदप्रथमपरीक्षायाः पाठ्यपुस्तकानि ।

प्रथमपत्रे—माधवनिदानम् ( मूलमात्रम् ) । द्वितीये—शार्ङ्गधरः ( पूर्वखण्डात्मकः ) । तृतीये—द्रव्यगुणपरिज्ञानम्, आयुर्वेदीयप्रबन्धरचना च । चतुर्थे—शक्तिगीता, सदाचारशिक्षा च । अत्र प्रथमश्रेण्यामुत्तीर्णेन सर्वोत्तमेन पदक-मानपत्रातिरिक्तं पुस्तकानि पारितोषिकरूपेण लभ्येरन् ।

## आयुर्वेदमध्यमपरीक्षायाः पाठ्यपुस्तकानि ।

प्रथमपत्रे—चक्रदत्तः [ परिभाषासहितः ] द्वितीये—रसेन्द्रसारसंग्रहः । तृतीये—वाग्भटः, [ शरीरस्थानं यावत् ] आयुर्वेदीयप्रबन्धरचना च, चतुर्थे—नीतिचन्द्रिका, सांख्यकारिका वा सप्तसतीगीता चेति । अत्रोत्तमश्रेण्यामुत्तीर्णेन सर्वोत्तमेन मानपत्रं पदकं योग्यपुस्तकानि च पारितोषिकरूपेण लभ्येरन् ।

## आयुर्वेदशास्त्रिपरीक्षायाः पाठ्यपुस्तकानि ।

प्रथमपत्रे—चरकसंहिता [ निदानेन्द्रियचिकित्सास्थानानि ] द्वितीये—सुश्रुतसंहिता [ सूत्रशारीरस्थाने ] तृतीये—विजयरक्षितकृतमधुकोषटीकोपेतं सम्पूर्णं माधवनिदानम् । चतुर्थे—अष्टाङ्गहृदयम् [ सूत्रस्थानम् ] आयुर्वेदीय-प्रबन्धरचना च । पञ्चमे—भगवद्गीता, शम्भुगीता च । अत्रोत्तमश्रेण्यामुत्तीर्णेन सर्वप्रथमेन मानपत्रं पदकं पञ्चविंशतिमुद्रात्मकं वार्षिकं पारितोषिकं च वर्षद्वयं यावत् लभ्येत ।

## आयुर्वेदाचार्यपरीक्षायाः पाठ्यपुस्तकानि ।

प्रथमपत्रे—चरकसंहिता ( सम्पूर्णा ) द्वितीये—सुश्रुतसंहिता [सम्पूर्णा]

तृतीये—अष्टाङ्गहृदयं [ सम्पूर्णम् ] चतुर्थे—अनिर्दिष्टग्रन्थेभ्य आयुर्वेदविषयक-प्रश्नाः। पञ्चमे—सांख्यदर्शनं, योगदर्शनं चेति। अत्र उत्तमश्रेण्यां सर्वप्रथमाय मानपत्रं पदकं पञ्चाशन्मुद्रात्मकं वार्षिकं पारितोषिकं च वर्षद्वयं यावत् दास्यते।

## राष्ट्रभाषाविशारदपरीक्षायाः पाठ्यपुस्तकानि।

प्रथमपत्रे—धर्मकल्पद्रुम ५, ७ खण्ड, धर्मचन्द्रिका, प्रवीण दृष्टिमें नवीन भारत, नवीन दृष्टिमें प्रवीण भारत, वर्तमान जगत्, दासबोध। द्वितीये-पद्यसाहित्यम्—कबीरकी साखी, सुजान रसखान, छत्रप्रकाश, भूषण ग्रन्थावली रामचरित्र चन्द्रिका रामायण, कविता कौमुदी, भारतभारती। तृतीये गद्य-साहित्यम्—कृषिशास्त्र, सम्पत्तिशास्त्र, शालोपयोगी भारतवर्ष, हिन्दीका इतिहास, लेखनकला। चतुर्थे—अलङ्कारमञ्जूषा, काव्यनिर्णय, छन्दःप्रभाकर। पञ्चमे—समस्यापूर्ति [ब्रजभाषा और खड़ी बोलीमें] निबन्ध लेखन, समालोचना। अत्र सर्वोत्तमेन मानपत्रं पदकं पञ्चविंशतिमुद्रात्मकं वार्षिकं पारितोषिकं च वर्षद्वयं यावत् प्राप्स्यते।

## धर्मोपदेशकपरीक्षायाः पाठ्यपुस्तकानि।

[ १ ] धर्मकल्पद्रुम १, २, ३, ४, ५ खण्ड, [ २ ] नवीन दृष्टिमें प्रवीण भारत, प्रवीण दृष्टिमें नवीन भारत, [ ३ ] चरित्र चन्द्रिका, सतीचरित्र चन्द्रिका, आचारचन्द्रिका, भगवद्गीता गीतार्थचन्द्रिकाटीकोपेता, सप्तशती गीता, त्रिवेदीय सन्ध्या। [ ४ ] इतिहास, भूगोल, पदार्थ विद्या। [ ५ ] वक्तृताविषयक-परीक्षा [ केन्द्रस्थानस्य कस्यामपि सभायां वक्तृतां प्रदाय परीक्षार्थिभिः वक्तृता-विषयकं प्रमाणपत्रं प्रेषणीयम् ] अत्र प्रथमश्रेण्यां सर्वप्रथमाय मानपत्रं पदकं पञ्चविंशतिमुद्रात्मकं वार्षिकं पारितोषिकं च वर्षद्वयं यावत् दास्यते।

## धर्मविनोदिन्याः परीक्षायाः पाठ्यपुस्तकानि।

[ इयं परीक्षा स्त्रीणां कृत एव, तास्तु गृहत एवोत्तरपत्रं लिखित्वा प्रहिणुयुः ] धर्मचन्द्रिका, सतीचरित्रचन्द्रिका, नवीन दृष्टिमें प्रवीण भारत, प्रवीण दृष्टिमें नवीन भारत, वर्त्तमान जगत्, आचार चन्द्रिका, परलोक रहस्य, नित्यकर्म चन्द्रिका, धर्मविषयक प्रबन्ध लेखन। अत्र प्रथम श्रेण्यां सर्वोत्तमया मानपत्रं, पदकं, पञ्चाशन्मुद्रात्मकं वार्षिकं पारितोषिकं च वर्षद्वयं यावत् लप्स्यते।

## प्रथमधर्मपरीक्षायाः पाठ्यपुस्तकानि।

[ १ ] धर्मचन्द्रिका, नवीन दृष्टिमें प्रवीण भारत, नीति चन्द्रिका, आचार-

चन्द्रिका, [२] चरित्र चन्द्रिका, आर्यगौरव, सनातनधर्मदीपिका, शास्त्रसोपान, तुलसीकृत रामायण ३-४-५ काण्ड [ ३ । धर्मप्रबन्ध लेखन ।

## द्वितीयधर्मपरीक्षायाः पाठ्यपुस्तकानि ।

[ १ ] धर्मकर्मदीपिका, स्वजातीयमहायज्ञसाधन, सप्तशती गीता ( सटीक ), [ २ ] शास्त्रचन्द्रिका, प्रवीण दृष्टिमें नवीन भारत, गीतार्थचन्द्रिका, [ ३ ] नित्यकर्म चन्द्रिका, त्रिवेदीयसन्ध्या, तुलसीकृत रामायण सम्पूर्ण [ ४ ] The worlds eternal religion, धर्मकल्पद्रुम १, २, ३ खण्ड, [ ५ ] धर्मप्रबन्ध रचना अनुवाद आदि। प्रथमां धर्मपरीक्षाम् उत्तीर्णा एव द्वितीयां दातुमधिकारवन्तः सन्ति ।

[ स्कूल—कालेजाख्यानाम् आङ्गलभाषाविद्यालयानाम् अन्येषां पाठालयानां विद्यार्थिनां कृत एव प्रथमा धर्मपरीक्षा, द्वितीया धर्मपरीक्षा च निर्द्धारिते। ते च छात्रवृत्तिपरीक्षानाम्ना प्रसिद्धे । अत्रोत्तीर्णैः यद्यपि नाधिगम्यते कश्चनोपाधिः, किन्तु प्रसिद्धनरपतिस्वाक्षरीकृतं मानपत्रं लभ्यत एव । विशिष्टयोग्यतानुरूपं, सुवर्णपदकं, रौप्यपदकं, पारितोषिकान्तरं च तैर्लभ्येरन् । प्रथमामुत्तीर्णैः ६०) मुद्रातः १२० मुद्रा यावत्, द्वितीयामुत्तीर्णैः १२० मुद्रातः [ २४० मुद्रा यावत् मन्त्रिसभानिर्णयानुसारं कतिपयवर्षाणि यावत् वार्षिकं पारितोषिकं लप्स्यते । ते च यत्र कुत्रापि विद्यालये पठितुं स्वतन्त्राः सन्ति । ]

## विश्वविद्यालयस्य संक्षिप्तनियमा निर्दिश्यन्ते ।

[ १ ] परीक्षायाः प्रधानकेन्द्रस्थानं श्रीकाशीधाम । प्रधान-केन्द्रस्थानत एव सर्वाणि प्रश्नपत्राणि प्रेषितानि भविष्यन्ति, अन्येषु केन्द्रेषु तैरेव प्रेषितैः परीक्षा गृहीता भवेत् ।

( २ ) धर्माचार्यपरीक्षायां ५), महोपाध्यायपरीक्षायां ४), आयुर्वेदस्य च मध्यम-शास्त्रि-आचार्यपरीक्षासु क्रमशः २), ३), ४), अन्यासु सर्वासु च प्रत्येकमेकरूप्यकं च परीक्षादातृभिः परीक्षाशुल्करूपेण दास्यन्ते । एतेन शुल्करूपेण आयेन तत्तत्परीक्षाकेन्द्रेभ्यः साहाय्यं प्रदास्यते ।

( ३ ) प्रतिप्रश्नपत्रं पूर्णसंख्याशतं भवेत् । येन प्रतिप्रश्नपत्रमन्ततस्त्रयस्त्रिंशत् संख्या लभ्यन्ते परीक्षायामसौ समुत्तीर्णो भवेत् । येनान्ततः पञ्चचत्वारिंशत् संख्या लभ्यन्ते स द्वितीयश्रेण्याम्, एवं येन प्रतिपत्रं षष्टिसंख्या लभ्यन्ते स प्रथमश्रेण्यामुत्तीर्णो भवेत् ।

(४) परीक्षार्थिभिः परीक्षासमयतो मासद्वयात् पूर्वम् "अखिलभारतवर्षीयसंस्कृतविश्वविद्यालयप्रधानकार्यालयः, महामण्डलभवनम्, जगतगंज, काशी" इति संकेतेन स्वस्वपरीक्षावेदनपत्रं प्रेषणीयम्। निर्दिष्टसमयात् परं न गृहीतं भवेत्।

(५) धर्माचार्य्य-धर्मोपदेशक-स्मार्त्तकर्मविशारद-श्रौतकर्मविशारदपरीक्षासु ब्राह्मणानामेवाधिकारो भवेत।

(६) सर्वैरेव परीक्षार्थिभिः विश्वविद्यालयस्य निर्दिष्टनियमानुवर्त्तिभिर्भवितव्यम्। यदि कश्चित् परीक्षार्थी निर्दिष्टनियमानतिक्रम्य विरुद्धे पथि वर्त्तमानः परीक्षायामत्युत्कर्षमपि दर्शयति तथापि तस्मै परीक्षार्थिने मानपत्रं पारितोषिकादिकं न किमपि प्रदेयं स्यात्।

(७) सर्वासु परीक्षासु धर्मोदेशकपरीक्षा-धर्मविनोदिनीपरीक्षा-राष्ट्रभाषाविशारदपरीक्षाऽऽङ्ग्लविद्यालयच्छात्रोपयोगिपरीक्षेतरासु परीक्षार्थिभिः स्वस्वोत्तरपत्राणि संस्कृतभाषया लेखितव्यानि। आयुर्वेदस्य च प्रथममध्यमशास्त्रि-परीक्षाणामुत्तरपत्राणि विशिष्टामनुज्ञामासाद्य स्वमातृभाषायां चापि लिखितुं शक्यन्ते। अत्र प्रथमोत्तीर्णतां विना मध्यमायां, मध्यमोत्तीर्णतां विना शास्त्रिपरीक्षायामधिकारो न लभ्येत। शास्त्रिपरीक्षोत्तीर्णाश्च आयुर्वेदाचार्यपरीक्षायामधिकारवन्तः स्युः। स्वमातृभाषां द्वारीकृत्य आयुर्वेदशास्त्रिपरीक्षोत्तीर्णैः "वैद्यभूषण" इति उपाधिर्लप्स्यते।

(८) परीक्षायाः पूर्वं कार्यसम्पादकैः परीक्षार्थिनां परीक्षादानानुमतिपत्रं प्रेषणीयम्। तत्र तैरेव परीक्षास्थानं परीक्षासमयं च परीक्षार्थिनो विज्ञापयितव्याः।

(९) धर्मोपदेशकपरीक्षां विहाय नान्यत्र मौखिकी परीक्षा भवेत्।

(१०) विशिष्टामनुमतिमन्तरेण सर्वैरेवपरीक्षार्थिभिः स्वस्वोत्तरपत्रं देवनागराक्षरेण लेखितव्यम्।

(११) सहस्र-पञ्चशत-द्विशत-शत-पञ्चाशत्-पञ्चविंशति-राजतमुद्राः स्वर्णपदक-रौप्यपदकादीन्यपि पारितोषिकाणि परीक्षोत्तीर्णेभ्यो यथासम्भवं प्रदास्यन्ते।

(१२) संस्कृतविश्वविद्यालयस्य, विशेषतस्तदीयायुर्वेदविभागस्य च विशिष्टा नियमाः पत्रं प्रेष्य ज्ञातव्याः। पत्र-प्रेषणसंकेतः—

कार्याध्यक्ष—अखिलभारतवर्षीय-
संस्कृत विश्वविद्यालय, महामण्डल भवन
जगतगंज काशी (बनारस)

# संस्कृतविश्वविद्यालयपदाधिकारिणः

अखिलभारतवर्षीयविश्वविद्यालयस्यास्य शृङ्गेरी-द्वारका-कुम्भकोणम-प्रभृतिस्थानानां शङ्कराचार्याः, नाथद्वारा-तोताद्रि सालिमाबाद-प्रभृति-स्थानानां वैष्णवाचार्याः, अष्टाविंशतिसंख्याका भारतीयाः स्वाधीनतरपतयश्च संरक्षकाः (Patrons) सन्ति। चतुस्त्रिंशत्संख्याका भारतवर्षस्य तत्तत्प्रान्तनिवासिनो महामहिमशालिनो मान्यसज्जना उपसंरक्षकपदे (Vice patrons) विराजन्ते। विविधविरुदावलिविराजमानो महाराजाधिराजः श्रीमान् मिथिलाधिपतिः प्रधानाधिष्ठा ( chancellor ), पूज्यपादविद्यासुधाकर-लालाजी-श्रीद मोदरलालजी महाराजः ( नाथद्वारा ) संयुक्तप्रधानाधिष्ठाता ( Prochancellor ), महामहाध्यापकः श्रीमान् पण्डितप्रवरप्रमथनाथभट्टाचार्यः एम. ए. महोदयः ( काशी ) उपप्रधानाधिष्ठाता (Vice-chancellor), धर्मसुधाकरः श्रीमान् राजा वेणीमाधवप्रसादसिंहमहोदय- ( विजयपुरम् ) संयुक्ताधिष्ठाता (Pro-Vice-chancellor,) काश्मीर-विद्याविभागस्य भूतपूर्वमन्त्री विद्यारञ्जन-पण्डितरमेशदत्तपाण्डेयः एम. ए. महोदयः ( काशी ) नियामकः ( Rector ), विद्याभूषण-पण्डित-श्रीमदुमाकान्तपाण्डेयः बी. ए. एल एल. बी. महाशयः (काशी) उपनियामकः (Prctor), विद्यारत्न-कुमार-रवीन्द्रनारायणसिंहः एम. ए. एल. एल. बी. महोदयः (काशी) सहायकनियामकः (Sub Proctor), महामहाध्यापको महामहोपाध्यायः श्रीमान् अन्नदाचरणतर्कचूडामणिः(काशी), धर्मतिलक-रायरायान-श्रीवरदाकान्त लाहिड़ी महोदयः (काशी), स्वामी श्रीशारदानन्दब्रह्मचारी महोदयः ( काशी ), विद्यावारिधि-पण्डितहाराणचन्द्रशास्त्री (काशी), एते प्रत्यवेक्षकाः (Visitors) वर्त्तन्ते।

आयुर्वेद-विभागस्य प्रबन्धकारिण्याः समितेः सभापतिः भिषग्भूषण-विद्यारत्न-कविराज-श्रीयतीन्द्रनाथकाव्यतीर्थ कविरत्न-महोदयः, मन्त्री च आयुर्वेदाचार्य-विद्याभूषण-सांख्यरत्न-कविराज-श्रीज्योतिश्चन्द्रकाव्यतीर्थमहोदयश्चेति।

महामहाध्यापको विद्यातिलकः साहित्यसुधाकरः पण्डितप्रवरपञ्चाननतर्करत्नमहोदयः (भाटपाड़ा), महामहोध्योपकः श्रीमान् पण्डितरत्न-पण्डितलक्ष्मणशास्त्री द्राविड़ ( काशी ), रायबहादुर-धर्मविनोद-कुँवर-कवीन्द्रनारायणसिंह महोदयः (काशी), धर्मालङ्कारः श्रीमान् एम. के. आचार्यमहोदयः (मद्रास) इत्येतत्-प्रभृतयः पञ्चचत्वारिंशत् सज्जना वरिष्ठसमितेः (Senate) सदस्याः सन्ति। एतेभ्य एव शिष्टसमितेः ( Syndicate ) सदस्या निर्वाचयिष्यन्ते।

# परीक्षाफलम् ।

—०:※:०—

[ संस्कृतविश्वविद्यालयान्तर्गतायुर्वेदसम्मिलन्याः
१९८७ वैक्रमाब्दे समुत्तीर्णानां※ नामावली ]

## शास्त्रिपरीक्षा ।

### द्वितीय विभागे-

| उत्तीर्ण-नामावली— | अध्यापक-नामावली— |
|---|---|
| श्रीयुतरामप्रतापव्यासः, | महोपाध्याय रामकृष्णशास्त्री विद्याभूषणः, संस्कृतपाठशाला भूपाल । |
| श्रीयुत देवेन्द्रनाथ चक्रवर्त्ती, | धीरेन्द्रचन्द्र आयुर्वेदशास्त्री महेशायुर्वेद पाठशाला काशी, |
| श्रीयुत शेखरमण शर्म्मा ( अयं खलु धर्म्मशास्त्रेऽपि समुत्तीर्णः ) | दीनानाथ आयुर्विज्ञानाचार्यः गंगादेवीपाठशाला काशी, |
| श्रीयुत कृपाशरणमठपालः ( अयं खलु धर्म्मशास्त्रेऽपि समुत्तीर्णः ) | कालीकिशोर विद्याविनोदः प्रणव-विद्यालय काशी, |
| श्रीयुत टंक प्रसादशर्म्मा, ( अयं खलु धर्म्मशास्त्रेऽपि समुत्तीर्णः ) | ज्योतिश्चन्द्र काव्यतीर्थः कवीन्द्र आयुर्वेदभवन काशी, |
| श्रीयुत व्रजमोहनशर्म्मा, | ज्योतिश्चन्द्र काव्यतीर्थः कवीन्द्रआयुर्वेदभवन काशी, |
| ,, परमानन्द शर्म्मा, | यतीन्द्रनाथ काव्यतीर्थः आयुर्वेदसम्मिलनी काशी, |
| ,, गोपालदत्त पाण्डेयः | ज्योतिश्चन्द्र काव्यतीर्थः कवीन्द्र आयुर्वेदभवन काशी, |
| ,, खुसीलालशर्म्मा, | महोपाध्याय रामकृष्णशास्त्री संस्कृत पाठशाला भूपाल, |

### वैद्यभूषण-परीक्षा—

| | |
|---|---|
| श्रीमती काशीमणि देवी, | जगदम्बा आयुर्वेदविद्यालय काशी, |

※ उत्तीर्णेभ्यः संस्कृतविश्वविद्यालय-प्रधानाधिष्ठातॄणां महाराजाधिराज-मिथिलेश-महोदयानां हस्ताक्षर-युक्तानि प्रमाणपत्राणि यथासमयं दास्यन्ते ।

" कमला देवी

" कौशल्या देवी

## मध्यमा परीक्षा ( संस्कृते )

प्रथमविभागे—

श्रीयुत रामप्रताप मिश्रः — श्रीशम्भुदेवशास्त्रि-भट्टाचार्य्यः षड्दर्शनायुर्वेदभवन काशी,

श्रीयुत रामचन्द्र श्रोत्रियः — कालीकिशोर विद्याविनोदः प्रणवविद्यालय काशी,

द्वितीय विभागे—

श्रीयुत शालिग्राम शर्म्मा, ( अयं खलु धर्मशास्त्रेऽपि समुत्तीर्णः ) — दीनानाथ आयुर्विज्ञानाचार्य्यः गङ्गादेवीपाठशाला काशी,

श्रीयुत गोपालाचार्य्य शर्म्मा (अयमपि धर्म्मशास्त्रे प्रथमविभागे समुत्तीर्णः,) — दीनानाथ आयुर्विज्ञानाचार्य्यः गंगादेवी पाठशाला काशी,

## मध्यमा परीक्षा ( भाषायाम् )

प्रथमविभागे—

श्रीमान् रुक्मिणीमोहन भट्टाचार्य्यः, — धीरेन्द्रचन्द्र आयुर्वेदशास्त्री, महेशायुर्वेद विद्यालय काशी,

श्रीमती मृणालिनी देवी, — जगदम्बा आयुर्वेद विद्यालय काशी,

द्वितीय विभागे—

श्रीमती सुनीति सिंहा, — "

श्रीमती निस्तारिणी देवी — "

श्रीदुर्गाप्रसन्न सेन गुप्तः, — धीरेन्द्रचन्द्र आयुर्वेद शास्त्री महेशायुर्वेद विद्यालय काशी,

श्रीमान् श्रीराम शर्म्मा धर्म्मग्रन्थेऽपि समुत्तीर्णः ) — ईश्वरीदत्त आयुर्विज्ञानाचार्य्यः महावीर पाठशाला काशी,

श्रीमान् चन्द्रचूड़ दूबे, — ज्योतिश्चन्द्र काव्यतीर्थः कवीन्द्रआयुर्वेद भवन काशी,

## प्रथमा परीक्षा ( संस्कृते )

द्वितीय विभागे—

श्रीमान् देवेन्द्रदत्त शुक्लः — श्रीज्योतिश्चन्द्र काव्यतीर्थः कवीन्द्र आ. वि. काशी,

## प्रथमा परीक्षा ( भाषायाम् )

प्रथमविभागे—

| | |
|---|---|
| श्रीमान् समीरण चन्द्रधरः | श्रीधीरेन्द्रचन्द्रः<br>महेशायुर्वेद विद्यालय काशी, |
| श्रीमती अमियबालादेवी, | जगदम्बा आ. विद्यालय, |
| श्रीमान् नृपेन्द्रकुमार सेनः | श्रीहेमेन्द्रनाथ काव्यतीर्थः,<br>सोनारपुरा काशी, |
| " क्षितीन्द्रकुमार भट्टाचार्य्यः, | धीरेन्द्रचन्द्रः<br>महेशायुर्वेद वि० काशी, |

द्वितीय विभागे—

| | |
|---|---|
| श्रीमती पद्मा देवी, | जगदम्बा आ. वि. काशी, |
| श्रीमान् पुरुषोत्तम शर्म्मा, | श्रीकालीकिशोर वि०<br>प्रणव विद्यालय काशी, |
| " विनायक रावः, | श्रीज्योतिश्चन्द्र काव्यतीर्थः<br>कवीन्द्र आयुर्वेद भवन काशी, |

---

# संगृहीतसमाचाराः।

श्रीमान् महात्मा गान्धीमहाशयः पुण्यपत्तनमण्डले एरवडास्थाने कारागृहे वसति वन्दीकृतः। प्रतिमासं शतं रूप्याणि तच्छरीरयात्रायै दीयन्ते।

इङ्गलैण्डेषु १५८४००१ जना वृत्तिहीना वर्तन्त इदानीं, प्रतिदिनमभिवर्धते च संख्या तेषाम्। वस्त्रवयनयन्त्राणां निरोध एव तत्र प्रधानं कारणम्।

अतीतमहायुद्धव्ययार्थं भारत-राज्य-शासकैः ११३६००००० स्वर्णदीनारा ब्रिटिशराज्यशासकेभ्यो दत्ता अभूवन्।

महायुद्धसमाप्तिकालात्प्रभृति हालेण्डदेशे वसतो भूतपूर्वशार्मण्यदेश-चक्रवर्तिनः कैसरमहोदयस्य शार्मण्यदेशप्रवेशानुमतिरिदानीं तद्देशीयरीच्-स्टक्सभया दत्ता वर्तते। न चिरात्स स्वदेशं प्रति निवर्तिष्यत इत्यनुमीयते।

अफगानस्थानस्य वर्तमाननरेशेन नादिरखानेन नवीननगरनिर्माणकार्यार्थ-

मस्मिन्वर्षे ऽष्टादशलक्षरूप्याणां व्ययोऽङ्गीकृतो वर्तते । नवीननगरनिर्माणकार्यं तु भूतपूर्वतद्देशाधिपतिनाऽमानुज्ञाख्यानेन समारब्धमभूत् ।

शार्मण्यदेशे बहवो जना इदानीं नग्नशरीरा वर्तन्ते । वस्त्रावरणेन शरीरस्य नारोग्यं भवतीति ते मन्यन्ते । ईश्वरेण यथा सृष्टं तथैव स्थातव्यमिति, तथा सत्येव शरीरमिदं चिरस्थायि दृढं भवितुमर्हतीति च तेषां वादः । एतादृशानां नग्नानां जनानां रथ्यासु पर्यटनं प्रतिषिद्धमस्ति तत्रत्यराज्यशासकैः । एतादृशानां निवासभूमिः परितः प्राकारेणावेष्टिताऽन्येषामगम्या च वर्तते । नग्नाः स्त्रियः पुरुषाश्च निस्सङ्कोचं तत्र निवसन्ति । इङ्गलैण्डदेशेऽपीदानीं केचिन्नग्नावस्थां बहुमन्यमानास्तथैव स्थातुमिच्छन्ति ।

इङ्गलैण्डेषु किमप्यतिमहद्भारवाहिलोहदण्डशकटं निर्मितमास्ते । तस्य भारः २२० टन परिमितः । तस्य ५६ चक्राणि सन्ति । १५० टन्भाराः पदार्था-आरोपयितुं शक्यन्ते । इङ्गलेण्डेषु मनुष्यैर्धार्याणां वस्त्राणामाकारप्रकारेषु परिष्काराधानार्थं कापि समितिस्स्थापिता वर्तते । कण्ठप्रावरणानाम् ऊरुप्रावरणानां शरीरप्रावरणानां च धारणं शारीरारोग्यभङ्गहेतुर्भवतीति समितिरियमभिप्रैति ।

इङ्गलण्डेषु मांचेस्टर्नाम्नि नगरे लोहदण्डमार्गस्य यदाश्रयस्थानमस्ति तस्य वेदिका २८३८ पाददीर्घा वर्तते । शार्मण्यदेशे बर्लिन्नगरेऽन्धानां बधिराणां च कृते कश्चन भोजनालयः पृथक् निर्मितो वर्तते तादृशा एव तत्र भुञ्जते, तेषामेव तत्र वासस्थानं दीयते ।

व्यतीतेषु दिवसेषु आसामे ब्रह्मदेशे च महान् भूमिकम्पो जातः, तेन बहवो गृहा निपतिता नष्टा अभूवन्; एकादशशतसंख्या मनुष्या अम्रियन्त । बहुलस्य धनस्य हानिर्जाता । सिंहलद्वीपे च महती वृष्टिर्जाता । कोलाम्बो नगरे जलमयमिवादृश्यत । जापानदेशेऽपि झंझावातस्समायातः । द्विशतसंख्या जना नष्टाः । पञ्चाशल्लक्षाधिकरूप्याणां हानिर्जाता । इटालीस्थाने भूकम्पेन अपूरणीया क्षति र्जाता ।

"खैरपुरमीरस" इतिनाम्नि सुप्रसिद्धे पत्तने विद्यते कश्चनच्छागः । असौ छागः सायं प्रातश्च वितरति दुग्धम् । इममाश्चर्यवहं विचित्रं छागं जातकुतूहलचेतसो मानवास्तत्र समायान्ति समवलोकितुम् । यर्हि स्वचक्षुषा तं पयोदमजं दृग्गोचरीकुर्वन्ति, तर्हि शंसन्ति किमिदम्महदैचित्र्यम् !

---

ननु निरस्ताज्ञानदशायां कीदृशी प्रतीतिरित्यत्राह—

कार्यकारणयोरनन्यत्वम् ॥१७॥

कारणस्य ब्रह्मणः कार्यस्योपाध्यादेश्चाभिन्नत्वेनैकत्वाद् एकत्वप्रतीतिः । यद्यप्यज्ञानदशायां जीवाः कारणब्रह्मरूपेणात्मना कार्यब्रह्मरूपस्य परिदृश्यमान-जगतः पृथक्त्वं पश्यन्ति । तथाप्यात्मज्ञानलाभानन्तरं तत्त्वदर्शिनामित्थं बोधः समुपजायते यत्कारण-कार्यरूपयोरात्मजगतोरैक्यमेव । अज्ञानजनन्यविद्या, ज्ञान-जननी च विद्या । विकसति तमोगुणेनाज्ञानं सत्त्वगुणेन तु ज्ञानमिति । द्वैत-प्रतीतौ बन्धने चाज्ञानमेव कारणम् । ज्ञानेनाद्वैतब्रह्मसद्भावसमुदयानन्तरं लभ्यते च परमपुरुषार्थः । धर्म-साहाय्येन संस्कारशुद्धिं क्रियाशुद्धिञ्च विदधतः साधकाः क्रमशश्चित्तशुद्धिं लभमाना आत्मज्ञानं प्राप्नुवन्ति । तदानीमेव जीव-न्मुक्ता अभेदं प्रतियन्ति, अनुभवन्ति च कारणब्रह्मकार्यब्रह्मणोरैक्यम् । यद्यपि घटं पश्यतामज्ञानां तत्स्वतन्त्रत्वे बोधः समुपजायते, तथापि पदार्थज्ञानलाभा-नन्तरं पदार्थज्ञानव्युत्पन्नानां मृत्तिका कः पदार्थः ? ततो घटोत्पत्तिः केन प्रका-रेणेति बोधवतां नैव विचिकित्सा मृत्तिकाघटयोरैक्ये । तथा तत्त्वज्ञानिनां जीव-न्मुक्तानामनुभवे कारणब्रह्म कार्यब्रह्मवाभिन्नत्वेनैव विषयो भवतीति ॥

यथा च श्रुतौ—

सर्वं ब्रह्ममयं प्रोक्तं सर्वं ब्रह्ममयं जगत् ।
सर्वमात्मैव शुद्धात्मा सर्वं चिन्मात्रमद्वयम् ॥

नित्य-निर्मलरूपात्मा ह्यात्मनोऽन्यन्न किञ्चन ।
अणुमात्रलसद्रूपमणुमात्रमिदं जगत् ॥

अणुमात्रं शरीरं वा ह्यणुमात्रमसत्यकम् ।
अणुमात्रमचिन्त्यं वा चिन्त्यं वा ह्यणुमात्रकम् ॥

ब्रह्मैव सर्वं चिन्मात्रं ब्रह्ममात्रं जगत्-त्रयम् ।
आनन्दं परमानन्दमृते किञ्चिन्न किञ्चन ॥

चैतन्यमात्रमोंकारो ब्रह्मैव सकलं स्वयम् ।
आत्मनोऽन्यत्तु नास्ति सर्वमात्ममयं जगत् ॥

ब्रह्ममात्रमिदं सर्वं ब्रह्ममात्रमसन्नहि ।
ब्रह्मणोऽन्यतरन्नास्ति ब्रह्मणोऽन्यज्जगन्न च ॥
ब्रह्मणोऽन्यत् तृणं नास्ति ब्रह्मणोऽन्यत् पदं नहि ॥ १७ ॥

कार्यस्वरूपं किमित्यत्राह—

कार्यं कार्यत्वात् ॥ १८ ॥

कार्यसम्बन्धात् कार्यं ब्रह्मेति व्याह्रियते । व्यक्तावस्थापन्नं परिदृश्यमानमेतज् जगदेव कार्यं ब्रह्म । तत्त्वज्ञानां दृष्टौ तु कारणब्रह्मगताः सच्चिदानन्दभावाः कार्यब्रह्मण्यपि अनुस्यूताः प्रतीयन्ते । तत्रैतावानेव भेदो यत् सच्चिदानन्दात्मकभावत्रयस्य कारणब्रह्मण्यद्वैतरूपेण,कार्यब्रह्मणि त्वविद्याप्रभावादनेकरूपेण तारतम्यत उच्चावचा प्रतीतिः । अतो भावत्रयस्य हेतुत्वेन कारणब्रह्मणि विद्यमानत्वात् कार्यब्रह्मरूपे जगत्यपि भावतारतम्यरूपेण वर्तमानत्वात् तत् कार्यब्रह्मेति गीयते । स्थितिश्च तस्य भावत्रयस्य कारणब्रह्मणि समत्वेनाद्वैतरूपेण च । यद्यपि समष्टिदृष्ट्या कार्यब्रह्मण्यपि भावत्रयस्य तस्य तथैवास्तित्वप्रतीतिः, परन्तु अविद्याप्रभावादद्वैतभावस्य व्यष्टिदृश्ये समत्वेन प्रतीयमानत्वाभावात् कारणब्रह्मणि कार्यब्रह्मणि च भेदप्रतीतिः । वस्तुतस्तु तत्त्वज्ञानदशायामज्ञाननिनाशेनोभयत्रापि जीवन्मुक्ताः समत्वेनैव सच्चिदानन्दभावमनुभवन्तीति ॥ १८ ॥

ननु कार्यब्रह्मनियामिकायाः शक्तेः किं स्वरूपमित्यत्राह—

नियन्तृत्वात् तत्त्वं धर्मस्य ॥ १९ ॥

धर्मस्य विश्वनियामकत्वाद् भगवद्रूपत्वम् । विश्वस्य सृष्टिस्थितिलयानां यथावत् क्रमरक्षार्थं धर्म एव प्रधानं निदानम् । महाप्रलयानन्तरं कारणवारिणि ब्रह्माण्डगोलकोत्पत्तिस्तत्र च ब्रह्मविष्णुमहेशानामाविर्भावेन त्रिश्वसर्गस्ततश्च प्रजापतीनां मानसिकी सृष्टिस्तदनु जीवानां बैजी सृष्टिः । सर्वाणि चैतानि कर्माणि कारणवारिण्यन्तर्निहितसमष्टिसंस्कारस्य धर्मशक्त्यैव सम्पद्यन्ते । तदनन्तरं सृष्टिक्रियातः प्रलयं यावत् तत्सुरक्षा ब्रह्माण्डपिण्डयोः स्थितिश्च धर्मेणैव सम्पाद्येते । तेनैव चाखिलेष्वपि ब्रह्माण्डरूपसौरजगत्सु सूर्यस्य मध्याकर्षणम्, तत्रैव चाखिलग्रहोपग्रहाणां च सूर्यलोकेन सहाकर्षणविकर्षणशक्तिसमता च संसिध्यतः । सूर्यग्रहोपग्रहादिषु आकर्षण-विकर्षण नाम्ना द्वे शक्ती विद्येते । यथाकर्षणशक्तेः प्राधान्ये ह्येको ग्रहो ग्रहान्तरे प्रविश्य विनश्येत्, तथैव विकर्षणशक्तेः प्राधान्ये ग्रहाः स्वस्वस्थानतश्च्युता विनाशमुपगच्छेयुः । तयोः साम्यं सम्पादयन्त्या धर्मशक्तेरेवाऽयं प्रभावो यन्नैवं कदापि जायते । ब्रह्माण्डस्य स्थितिक्रमो यथावत् यथानियमञ्च सततं संसरन्नेवास्ते । यथा समष्टिब्रह्माण्डे स्वधर्मरक्षाबलेन ऋषयो देवताः पितरश्च ब्रह्माण्डं गोपायन्ति, तथैव व्यष्टिस्वरूपदेहपिण्डे जीवानां क्रमोन्नतिः, मुक्तिश्च धर्मेणैव

संजायेते । सृष्टिधर्ममनुसृत्य ब्रह्माण्डस्य प्रकृतिनियमतो जीवानाम्—उद्भिज्जस्वेदजाण्डजादियोनितो जरायुजयोनिं यावत्, जरायुजेष्वपि समुन्नतपशुयोनितो मनुष्ययोनिपर्य्यन्तं समेयमाना क्रमोन्नतिः समष्टिसृष्टेः धर्मप्रभावाद् एव सम्पद्यते । धर्मस्य सत्त्वगुणवर्द्धकत्वात् जीवानां सदैव क्रमोन्नत्या सत्त्वगुण उत्तरोत्तरं विकासमापद्यते । मनुष्येष्वप्यन्त्यज-शूद्र-वैश्य-क्षत्रिय-ब्राह्मण-कुटीचर-बहूदक-हंस-परमहंसादिस्वरूपतो जीवानां क्रमोन्नतिं सम्पादयतस्तस्य परमपुरुषार्थसाधकत्वम् । समष्टिव्यष्टिसृष्ट्योर्नियन्तृत्वात् धर्मस्य भगवत्स्वरूपत्वम् । कार्यब्रह्मरूपस्य जगतो भगवद्रूपत्वे तन्नियामकस्यापि तथात्वं स्पष्टमेवेति ॥ १९ ॥

ब्रह्माण्ड-पिण्डधारक-धर्मप्रादुर्भावविज्ञानं परिदर्शयति—

**तमोरजःसाम्ये तद्विकाशः स्थितिमूलकत्वात् ॥ २० ॥**

स्थितिमूलकत्वात् तमोरजसोः साम्ये धर्मप्रादुर्भावो भवतीत्यर्थः । पूर्वमेव धर्मस्य सत्त्वमूलकत्वं सिद्धान्तितम् । अतस्तमोरजसी समत्वेन ह्रासमुपगच्छतः, सत्त्वं च यदा प्रवर्द्धते तदैव सत्त्वमूलकस्य धर्मस्योदयः । स्मर्य्यते च—

आकर्षण-विशिष्टा या शक्तिः सा राजसी मता ।
विकर्षणेन सम्पृक्ता शक्तिर्मे तामसी तथा ॥
सामञ्जस्यं विकुर्वाणा तयोः शक्त्योर्द्वयोरिह ।
सात्त्विकी सैव धर्मोऽस्ति शक्ति र्मे नात्र संशयः ॥ इति ॥ २० ॥

उपसंहरति—

**तस्माद् ब्रह्माण्डधारकः ॥ २१ ॥**

धर्मस्य स्थितिमूलत्वात् तमोरजसोः साम्य एव तद्विकाशाद् ब्रह्माण्डधारकत्वम् । पूर्वव्याहृतविज्ञानतः परमाणुमारभ्य ब्रह्माण्डं यावद् अखिलमेव वस्तुजातं धर्मस्य नियन्त्र्या शक्त्यैव धार्य्यते । धर्मेणैव परमाणुद्वयसंयोगतः सर्गारम्भस्तद्रक्षा, पिण्डब्रह्माण्डयोर्यथावत् स्थितिः, सर्वेषां प्राणिनां क्रमोन्नतिश्च सम्पादिता भवन्ति । स्मर्य्यते च—

ब्राह्मणाः ! नयते नूनं सर्वलोक-हितावहः ।
ब्रह्माण्ड-पिण्डरूपायाः सृष्टेर्यो धारको महान् ॥
मानवान् धर्म एवायं कैवल्याभ्युदयप्रदः ।
संरक्ष्याज्ञानभूमिभ्यो ज्ञानभूमिं निरन्तरम् ॥

ददच्चाभ्युदयं सम्यक् संप्रापय्यान्तिमां क्रमात् ।
ज्ञानभूमिं ततो दत्ते निःश्रेयसमहो ? परम् ॥
अहमेवास्मि धर्मस्य स्थितिस्थानं द्विजर्षभाः !
धर्माकृतिर्ममैवास्ते शक्तिरेव सनातनी ॥
विराट्सृष्टेः प्रवाहस्य धारणं कृतवत्यहो ।
परिव्याप्नोति धर्मस्य शक्तिरेषैव धारिका ॥
परमाणुभ्य आ नूनं पूर्णां ब्रह्माण्डविस्तृतिम् ॥
शक्तेः संधारिकाया मे धर्मस्यैव प्रभावतः ।
सूर्येन्द्वादिग्रहाः सर्वे तथा नक्षत्रमण्डलम् ॥
उपग्रहादयोऽप्येवं विराड्देहे ममानिशम् ।
स्व-स्वकक्षामुपाश्रित्य भ्रमन्तेऽत्र समन्ततः ॥
सृष्टे रक्षाञ्च कुर्वन्ति साहाय्यं ददतो मिथः ।
दैवासुरेण युद्धेन दैव्याः सृष्टेः पवित्रताम् ॥
सम्पादयन्ती धर्मस्य धारिका शक्तिरुत्तमा ।
प्रतिष्ठापयते देवान् स्वस्वलोकेऽसुराँस्तथा ॥
निश्चितं मातृभावेन विज्ञाः ! धर्ममयेण मे ।
प्रकृतेः पालिता जीवाः पोषिताश्च निरन्तरम् ॥
उद्भिज्जात्स्वेदजं गत्वा स्वेदजादण्डजं तथा ।
ततो गच्छन्त्यहो विप्राः ! अण्डजाच्च जरायुजम् ॥
जरायुजेषु क्रमशो मर्त्ययोनिं गताः पुनः ।
भवन्ति मोक्षमार्गस्य नूनमेतेऽधिकारिणः ॥
धारिका शक्तिरेवासौ धर्मस्य विप्रपुङ्गवाः ! ।
क्रमादुन्नमयन्ती वै मानवानुत्तरोत्तरम् ॥
कृत्वाधिकारिणो ज्ञानभूमेरन्ते च तानहो ।
कैवल्यपदवीं तेभ्यः प्रददाति शनैः शनैः ॥
सर्वेषां रक्षको धर्मः सर्वजीवहितप्रदः ।
निखिलव्यापकश्चास्ति सर्वेभ्योऽभ्युदयप्रदः ॥ इति ॥ २१ ॥

सम्प्रति मानवधर्मं विभजते—

**मानवधर्मश्चतुर्विधो विशेषासाधारणापत्साधारणभेदात् ॥ २२ ॥**

विशेषासाधारणापत्साधारणभेदेन मानवधर्मश्चतुर्विधो विज्ञेयः । यस्या-

साधारणया शक्त्योद्भिज्जादेः सहजपिण्डसमूहस्य कोटिग्रहोपग्रहपरिपूर्णस्यानन्तब्रह्माण्डसंघस्य च भवति सुरक्षणम्, तस्य विश्वविधारकधर्मस्य विज्ञानवर्णनं पूर्वसूत्रे विधाय साम्प्रतं मनुष्यपिण्डोपयोगिधर्ममनेन सूत्रेण निर्दिशति भगवान् सूत्रकारः ।

तत्सनातनधर्मस्य पादाश्चत्वार आसते ।
साधारणविशेषौ हि तथाऽसाधारणापदौ ॥

इति स्मरणाद् विशेष-धर्मोऽसाधारणधर्म आपद्धर्मः साधारणधर्मश्चेति चतुर्धा विभक्तो मानवधर्म इति ॥ २२ ॥

तत्र विशेषधर्मं निरूपयति—

**अधिकारप्राधान्यहेतुको विशेषधर्मः ॥२३॥**

अधिकारस्य प्राधान्यं, तत् हेतुर्यस्य स अधिकारप्राधान्यमूलक इति यावत् विशेषधर्मोऽवगन्तव्यः । यो हि अधिकारिविशेषमधिकृत्य निर्णीयतेऽसौ विशेषधर्म इति भावः । आर्यधर्मोऽनार्यधर्मश्च विशेषधर्मौ, वर्णाश्रमधर्मस्य लोकत्रयपवित्रकर आचारसमूहो विशेषधर्मविज्ञानमनुसृत्यैव निर्दिष्टः, पुरुषधर्मो नारीधर्मः प्रवृत्तिधर्मो निवृत्तिधर्मो राजधर्मः प्रजाधर्मश्चेत्यादयो विशेषधर्म एवान्तर्भवन्ति । स्मर्यते चात्र—

ब्रह्मचर्य्यञ्च दाम्पत्यं निवासो निर्जने वने ।
त्यागो ह्यध्यापनञ्चैव याजनञ्च प्रतिग्रहः ॥
धर्मयुद्धं प्रजारक्षा वाणिज्यं सेवनादयः ।
विशेषस्यापि धर्मस्य सन्तीमाः खलु वृत्तयः ॥

तत्तदधिकारिव्यतिरिक्तानामनुष्ठानायोग्यत्वात् सार्वजनिकहिताधायको न भवति विशेषधर्मः । यथा हि कामिनीकाञ्चनात्यन्तराहित्यरूपः संन्यासधर्मो गृहस्थकृतेऽधर्मः, एवं गृहस्थधर्मोऽपि संन्यासिकृते तथैवेति निर्गलितोऽर्थः ॥२३॥

द्वितीयं वर्णयति—

**शक्तिप्राधान्यनिमित्तोऽसाधारणधर्मः ॥ २४ ॥**

असाधारण-धर्मो हि धार्मिकशक्तिप्राधान्यकारणको भवति । शक्तेः प्राधान्यं निमित्तं यस्य स इत्यर्थः । अत्र तु पूर्वजन्मसंस्कारोऽसाधारणतपोयोगबलादीनि वा निदानम्, अतो व्यक्तिविशेष एवाधिकारी भवत्यसाधारणधर्मस्य,—

"यदा कश्चिद् विशेषस्तु धर्मः शक्तिमवाप्नुयात् ।
अधिकां भावसंशुद्ध्या कोटिं साधारणस्य सः ॥
असाधारणधर्मस्याधिकारं लभते वहन् ।"

इति स्मरणात् । विशेषतो ह्यसाधारणधर्मे दैवशक्तेरावश्यकत्वमभ्युपगन्तव्यम् । यथा च महर्षिविश्वामित्रस्यासाधारणतपःप्रभावेण तस्मिन्नेव जन्मनि क्षत्रियत्वमपहाय ब्राह्मणत्वाधिगमो द्रौपद्याः पञ्चपतित्वेऽपि महामहिममनोबलेन स्वसतीत्वसंरक्षणम् । नन्दी-कुन्ती-गण्डकीप्रभृतयश्चाप्यत्रोदाहृताश्चेति ॥ २४ ॥

तृतीयं निर्णयति—

आपन्मूलक आपद्धर्मः ॥ २५ ॥

आपद्धर्मो हि विपत्तिमूलको भवति । स चापद्येव विधीयते । अत्र भावशुद्धिमुद्दिश्याधर्मकार्यमपि धर्मकार्यवद्विधेयत्वेन प्रतिपादितम् । स्मृतौ यथा—

"आपत्कल्पेन यो धर्मं कुरुतेऽनापदि द्विजः ।
स नाऽप्नोति फलं तस्य परत्रेति विचारितम् ॥
देशभङ्गे प्रवासे वा व्याधिषु व्यसनेष्वपि ।
रक्षेदेव स्वदेहं वै पश्चाद्धर्मं समाचरेत् ॥
येन केन च धर्मेण मृदुना दारुणेन च ।
उद्धरेद्दीनमात्मानं पश्चाद्धर्मं समाचरेत् ॥
आपत्काले तु सम्प्राप्ते शौचाचारं न चिन्तयेत् ।
स्वयं समुद्धरेत् पश्चात् स्वस्थो धर्मं समाचरेत् ॥इति ॥ २५ ॥

प्रसङ्गोपात्तां शङ्कां समाधत्ते—

तत्राधर्मोऽपि धर्मो भावशुद्धेः ॥ २६ ॥

आपद्धर्मो हि बाह्यरूपेणाधर्मवत् प्रतीयते । ननु अधर्मप्रतीतिजनकापद्धर्मस्य कथं धर्मसंज्ञकत्वमिति चेन्मैवं, धर्मो हि भावशुद्धिमपेक्षते, तदानीञ्च तस्या जागरूकत्वान्न काऽप्यनुपपत्तिः । तदेव समाहितं महर्षिणा सूत्रकारेण सूत्रमिदमाविर्भाव्य । स्मर्यतेऽप्यत्र—

भावतत्त्वस्य विज्ञानं पूर्णरूपेण वेदितुम् ।
अन्तःकरण-विज्ञान-स्वरूपं वच्मि वोऽग्रतः ॥
मनो बुद्धिरहङ्कारश्चित्तमेतच्चतुर्विधम् ।

अन्तःकरणमस्तीति वित्त यूयं पितृव्रजाः !॥
मनसोऽन्तर्विभागोऽस्ति चित्तञ्चाहंकृतिर्धियः।
मायापाशैर्दृढैर्बध्वा योषित् संसारगोचरम्॥
यथा संसारिभिर्जीवैः कार्यं कारयतेऽनिशम्।
तथा चित्तं मनोबुद्धिमहङ्कारो नियम्य च॥
कार्यं कारयते शश्वन्नानावैचित्र्यसंकुलम्।
संस्कारानुचरा जीवा वर्त्तन्ते सर्वथा खलु॥
वासनोत्पन्नसंस्कारा अभिबध्नन्ति प्राणिनः।
आसक्तिरेव साक्षात्स्याद् बन्धस्यास्य तु कारणम्॥
संस्कारो वासनाजन्यः संस्कारात् कर्म जायते।
वासनोत्पद्यते भूयः कर्मणो नाऽत्र संशयः॥
वासनातः पुनर्विज्ञाः ! संस्कारो जायते ध्रुवम्।
सदैवं वासनाचक्रं जीवानाञ्च गतागतम्॥
घूर्णायमानमस्तीह चक्रनेमिर्यथा रथे।
पूर्वजन्मार्जिता यादृक् कर्मसंस्कारसंततिः॥
एतज्जन्मकृतानां वा कर्मणां यादृशी स्मृतिः।
अङ्किता जीवचित्ते स्यादासक्तिरपि तादृशी॥
तदासक्त्यनुरूपेषु विषयेषु निरन्तरम्।
प्रसज्जन्तेऽभितो जीवास्तदासक्त्यनुसारतः॥
आसक्तिश्चित्तसाहाय्यान्मनस्युत्पद्यते ध्रुवम्।
दम्पत्योः संगमाल्लोके मनश्चित्तस्वरूपयोः॥
आसक्ते र्जायते जन्म नात्र कार्या विचारणा।
प्रजातन्तुं यथा पुत्रः संरक्षँल्लभते पितुः॥
सर्वाधिकारमासक्ति र्बिभ्राणा विषयाँस्तथा।
सृष्टिं वर्द्धयते शश्वदिह दैवीं च मानवीम्॥
बुद्धिसृष्टेस्तु सिद्धान्तमपरं वित्त साम्प्रतम्।
बुद्ध्यहङ्कारसंयोगाद् भावतत्त्वोदयो भवेत्॥
भावोऽपि द्विविधो ज्ञेयः शुद्धाशुद्धप्रभेदतः।
भावोऽशुद्धस्तत्र बुद्धिं विधत्ते विषयाकृतिम्॥
शुद्धो भावः क्रमाच्चित्तं कुर्वाणो निर्मलं तथा।
बुद्धिं ब्रह्मपदं नूनं नयञ्छान्तिं प्रयच्छति॥

आसक्तिवशगा जीवा अथवा भाव-नोदिताः ।
एतत्तत्त्वद्वयस्यैव साहाय्यात् कर्म कुर्वते ॥
कायिकं वाचिकं चैव तथा मानसमेव च ।
आसक्तौ किन्तु वैवश्यं भावे स्वातन्त्र्यमस्ति ह ॥
आनन्त्याद् विषयाणां तु बहुशाखासमन्विता ।
आसक्ति विद्यते नूनं शुद्धो भावो न तादृशः ॥
अतोऽद्वैतदशां नेतुमीष्टेऽसौ नाऽत्र संशयः ।
यतो ब्रह्मपदं विज्ञाः ! विद्यतेऽद्वैतमेव हि ॥
आसक्त्या कार्यकर्त्तारो जीवाः प्रारब्धयोगतः ।
श्रीगुरो र्देवतानां वा प्रसादादेव सर्वथा ॥
पाशतुल्याद्धि विषयात् स्वान् निवर्तयितुं क्षमाः ।
अन्यथा विषये तेषां प्रसक्तिस्तत्र निश्चिता ॥
किन्तु शुद्धस्य भावस्य साहाय्यात् कार्यकारिणः ।
भाग्यवन्तो न सज्जन्ते विषयेषु कदाचन ॥
उत्तरोत्तरमेतेषां सर्वथोर्ध्वगति र्भवेत् ।
संगृहीता हि संस्काराः पूर्वजन्मनि यादृशाः ।
आसक्तिस्तादृशी जीवे प्रादुर्भवति निश्चिता ॥
तस्या एवानुसारेण जीववर्गे जनिष्यते ॥
हेयोपादेयताज्ञानं नास्ति कोऽप्यत्र संशयः ।
असत्यमपि सत्यं स्यात् प्रोक्तं जीवहिताय वै ॥
अधर्मो जायते धर्मः पशुहिंसा यथाऽध्वरे ।
यात्येवं भावसम्बन्धाच्चैतन्यं जडतामिह ॥
सत्यं मिथ्या भवेद्धर्मो जायतेऽधर्मरूपभाक् ।
भावशुद्धिसमायुक्तमसत् कर्माप्यतो ध्रुवम् ॥
आपद्धर्मे भजत्येव सद्धर्मत्वं न संशयः ॥
विधत्तेऽदश्च जीवानां मङ्गलं परमं सदा ।
गतिः सूक्ष्मास्ति धर्मस्य भवन्तोऽतः पितृव्रजाः ।
कुर्य्युश्चेत् कर्म मच्चित्ता भावशुद्धिपुरःसरम् ।
अधिकुर्य्युस्तदावश्यं पूर्णं धर्म्मं सनातनम् ॥
मन्त्राणां प्रणवः सेतुर्यथा मन्त्रच्युतिं किल ।
अपनोद्याशु सम्पूर्णां दत्ते मन्त्राधिकारिताम् ॥

तथैव भावसंशुद्ध्या, शक्ति धर्मस्य धारिका ।
सन्तिष्ठते सदाऽक्षुण्णा नितरामूर्ध्वगामिनी ॥
कदाचिदत एवालमापद्धर्मस्य निर्णये
अधर्मेणापि धर्मस्य स्वरूपे परिणम्यते ॥ २६ ॥

कदायमाश्रयणीय इत्याह—

अयमाश्रेयः कालाऽन्यथाभावे ॥ २७ ॥

नन्वापत्कालेऽधर्मस्य धर्मत्वे निश्चितेऽपि कथमस्योपयोगावसर इति शङ्कामपनेतुं सूत्रमिदमवतारयति भगवान् सूत्रकारः—

कालस्य अन्यथाभावे वैपरित्ये अयं आपद्धर्मः, आश्रीयते इत्याश्रय- आश्रयणीय इत्यर्थः ।

आपत्काले ह्युपस्थिते सङ्कटापन्नस्य पुंसः सर्वथा विशेषधर्मसाधनासम्भवेऽस्य धर्मस्याश्रयणावसरो ज्ञेयः । केवलमापत्कालाश्रयणीयत्वादेवायमापद्धर्मो निगद्यते नास्त्यवसरोऽस्यानापत्काले । अनुकूले देशकालेऽनुकूलायां वा परिस्थितौ सर्वेषामपि विशिष्टधर्माणां पालनं सुशक्यमेव । विरुद्धे हि देशकाले तत्रापि च विशेषतः कालसङ्कटे ह्युपस्थिते धर्मभीरुरपि साधकः सर्वथा धर्मसङ्कटे- पतितोऽसमर्थो धर्ममिममाश्रयतीति प्रागपि विस्तरशो विवेचितमेव । स्मृतिष्वपि बहुश उपलभ्यते, तद्यथा—

तस्मिन् प्रतिभये काले क्षते धर्मे युधिष्ठिर !
बभ्रमुः क्षुधिता मर्त्याः खादमानाः परस्परम् ॥
विश्वामित्रोऽथ भगवान् महर्षिरनिकेतनः ।
क्षुधापरिगतो धीमान् समन्तात् पर्यधावत ॥
स कदाचित् परिपतन् श्वपचानां निवेशनम् ।
हिंस्राणां प्राणिघातानामाससाद वने क्वचित् ॥
अहो कृच्छ्रं मया प्राप्तमिति निश्चित्य कौशिकः ॥
पपात भूमौ दौर्बल्यात् तस्मिन् चाण्डालपक्कणे ।
स चिन्तयामास मुनिः किन्नु मे सुकृतं भवेत् ॥
कथं वृथा न मृत्युः स्यादिति पार्थिवसत्तम ! ॥
स ददर्श श्वमांसस्य कुतन्त्रीं विततां मुनिः ।
चाण्डालस्य गृहे राजन् ! सद्यः शस्त्रहतस्य वै ॥
स चिन्तयामास तदा स्तैन्यं कार्यमितो मया ।
न हीदानीमुपायो मे विद्यते प्राणधारणे ॥

आपत्सु विहितं स्तैन्यं विशिष्टं च महीयसः ॥
विप्रेण प्राणरक्षार्थं कर्तव्यमिति निश्चयः ।
हीनादादेयमादौ स्यात् समानात्तदनन्तरम् ।
असम्भवे वाऽददीत विशिष्टादपि धार्मिकात् ॥
सोऽहमन्त्यावसायिनां हराम्येनां प्रतिग्रहात् ।
न स्तैन्यदोषं पश्यामि हरिष्यामि श्वजाघनीम् ॥

इत्येवं विचिन्त्य महर्षिविश्वामित्रो रात्रौ तथैव सुष्वाप । अनन्तरञ्च निशीथे निद्रितेषु चाण्डालपरिवारेषु शनैः श्वमांसापहरणकाम्यया पक्कणं प्रविष्टं पुरुषमवलोक्य अवबुद्धश्चाण्डालो जगर्ज । कोऽयमपजिहीर्षया मद्गृहं प्रविष्टो मद्धस्तेन स्वप्राणान् परिहातुं पर्युत्सुक इति । तच्छ्रुत्वा भीतभीतोऽतिह्रीणो मुनिरुवाच । अहं विश्वामित्रो मुनिः क्षुधार्तस्तव गृहं प्रविष्टः । साधुदर्शी त्वं कथम्मां हन्तुमुद्यतः । विश्वामित्रस्य वचो निशम्य त्रस्तोऽवसन्नचेताश्चाण्डालः शय्यां त्यक्त्वा भूमिं परिगतो बद्धाञ्जलि वेपमानः सगद्गदमुवाच । भगवन्नस्मिन् सूचीभेद्ये तमसि निशीथे किमत्रागमनकारणम् ? विश्वामित्र उवाच—

क्षुधितोऽहं गतप्राणो हरिष्यामि श्वजाघनीम् ।
क्षुधितः कलुषं जातो नास्ति ह्रीरशनार्थिनः ॥
अटन् भैक्ष्यं न विन्दामि यदा युष्माकमालये ।
तदा बुद्धिः कृता पापे हरिष्यामि श्वजाघनीम् ॥
अग्निर्मुखं पुरोधाश्च देवानां शुचिषद्विभुः ।
यथा वै सर्वभुग् ब्रह्मा तथा मां विद्धि धर्मतः ॥

ततश्चाण्डालोऽवदत्—

शृगालादधमं श्वानं प्रवदन्ति मनीषिणः ।
तस्याप्यधम उद्देशः शरीरस्य श्वजाघनी ॥
नेदं सम्यग् व्यवसितं महर्षे ! धर्मगर्हितम् ।
चाण्डालस्य स्वहरणमभक्ष्यस्य विशेषतः ॥
साध्वन्यमनुपश्य त्वमुपायं प्राणधारणे ।
न मांसलोभात्तपसो नाशस्ते स्यान्महामुने !
जानता विहितं धर्मं न कार्य्यो धर्मसङ्करः ।
मास्म धर्मं परित्याक्षीस्त्वं हि धर्मभृतां वर !
बह्वेवं प्रलपन्तन्तं विश्वामित्रोऽब्रवीन्मुनिः ॥
निराहारस्य सुमहान् मम कालोऽभिधावतः ।

न विद्यतेऽप्युपायश्च कश्चिन्मे प्राणधारणे ॥
येन येन विशेषेण कर्मणा येन केनचित् ।
अभ्युज्जीवेत् साद्यमानः समर्थो धर्ममाचरेत् ॥
ऐन्द्रो धर्मः क्षत्रियाणां ब्राह्मणानामथाग्निकः ।
ब्रह्मवह्निर्मम बलं भक्ष्यामि शमयन् क्षुधाम् ॥
यथा तथैव जीवेद्धि तत्कर्तव्यमहेलया ।
जीवितं मरणाच्छ्रेयो जीवन् धर्ममवाप्नुयात् ॥
सोऽहं जीवितमाकाङ्क्षन्नभक्ष्यस्यापि भक्षणम् ।
व्यवस्ये बुद्धिपूर्वं वै तद्भवाननुमन्यताम् ॥
बलवन्तं करिष्यामि प्रणोत्स्याम्यशुभानि च ।
तपोभिर्विद्यया चैव ज्योतींषीव महत्तमः ॥

ततः पुनः पुल्कसो जगाद—

नैतत् खादन् प्राप्नुते दीर्घमायु-
नैव प्राणान्नामृतस्येव तृप्तिः ।
भिक्षामन्यां भिक्ष मा ते मनोऽस्तु
श्वभक्षणे श्वा ह्यभक्ष्यो द्विजानाम् ॥

पुनरुवाच मुनिः—

न दुर्भिक्षे सुलभं मांसमन्यत् ।
श्वपाक ! मन्ये न च मेऽस्ति वित्तम् ॥
क्षुधार्तश्चाहमगति निराशः ।
श्वमांसे चास्मिन् षड्रसान् साधु मन्ये ॥
स्थाने भवेत् स यशः प्रेत्यभावे
निःसंशयः कर्मणां वै विनाशः ।
अहं पुनर्व्रतनित्यः शमात्मा
मूलं रक्ष्यं भक्षयिष्याम्यभक्ष्यम् ।
बुद्धात्मके व्यक्तमस्तीति पुण्यम् ॥
मोहात्मके यत्र तथा श्वभक्ष्ये ।
यद्यप्येतत् संशयात्मा चरामि ॥
नाहं भविष्यामि यथा त्वमेव ।

एवमभिधायापहृतश्वमांसो मुनिः स्वकुटजमागत्य कृतनित्यक्रियोऽचिन्तयत्—

अथास्य बुद्धिरभवत् विधिनाहं श्वजाघनीम् ।

भक्षयामि यथाकामं पूर्वं सन्तर्प्य देवताः ।
ततोऽग्निमुपसंहृत्य ब्राह्मेण विधिना मुनिः ।
ऐन्द्राग्नेयेन विधिना चरुमश्रपयत् स्वयम् ॥
ततः समारभत् कर्म दैवं पित्र्यञ्च भारत !
आहूय देवान् इन्द्रादीन् भागं भागं विधिक्रमात् ।
एतस्मिन्नेव काले तु प्रववर्ष स वासवः ॥
सञ्जीवयन् प्रजाः सर्वा जनयामास चौषधीः ।
विश्वामित्रोऽपि भगवान् तपसा दग्धकिल्बिषः ॥
कालेन महता सिद्धिमवाप परमाद्भुताम् ।
स संहृत्य च तत्कर्म अनास्वाद्य च तद्धविः ॥
तोषयामास देवांश्च पितॄंश्च द्विजसत्तम ! ॥ इति ॥ २७ ॥

चतुर्थं विविनक्ति—

**सर्वकल्याणसाधकः साधारणधर्मः ॥ २८ ॥**

साधारणधर्मः सर्वेषां कल्याणकारको भवति। स हि उक्तलक्षणस्य मनुष्यधर्मस्य चतुर्षु भेदेषु अन्तिमो मानवमात्रहिताधायक इति भावः। स्मृतावस्य लक्षणं यथा—

"धीर्विद्या सत्यमक्रोध औदार्य्यं समदर्शिता ।
परोपकार-निष्कामभावप्रभृतयः शुभाः ॥
साधारणस्य धर्मस्य विद्यन्ते वृत्तयो ध्रुवम् ।"
"धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥" इति ।

एष साधारणो धर्मः सर्वैरेवोच्चावचाधिकारनिरतैराय्यनार्य्यस्त्रीपुरुष-गृहस्थसंन्यासिप्रभृतिभि र्निर्विशेषं निर्बाधमेवानुष्ठेय इति ॥ २८ ॥

धर्माङ्गं निरूपयति—

**तदङ्गत्रैविध्यं त्रिभेदवत् ॥ २९ ॥**

सृष्टेस्त्रैविध्यमिव धर्मस्यापि त्रयो भेदा अवगन्तव्याः। अनन्तप्रवाहात्मकसर्गसंघातस्य त्रिगुण-त्रिभाव-त्रिदेवादि-त्रिभेदवत् साधारणस्यापि धर्मस्य दानतपोयज्ञात्मकं भेदत्रयमस्ति। तथा हि।

"यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥

एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्त्तव्यानीति मे पार्थ ! निश्चितं मतमुत्तमम् ॥"
"अङ्गानां त्रिविधं रूपं युष्माभिरवधार्य्यताम् ।
यज्ञो दानं तपस्त्रीणि धर्माङ्गानि प्रधानतः ॥"

इत्यादिस्मरणात् । ननु के ते सर्गस्य त्रयो भेदा इत्युच्यते—अध्यात्ममधिदैवमधिभूतमिति । तत्राद्यस्य ज्ञानरूपस्य महर्षयो, द्वितीयस्य क्रियात्मकस्य देवाः, तृतीयस्य च स्थूलपाञ्चभौतिकस्वरूपस्य पितरश्चालका भवन्ति । इत्थं कार्यब्रह्मरूपिण्याः सृष्टेस्त्रिभेदवत् तन्नियन्तुर्धर्मस्याप्युक्तप्रकारतस्त्रिभेदत्वमिति ॥ २६ ॥

तत्र प्रथमाङ्गं यज्ञमुदाहरति—

**अभ्युदयनिःश्रेयसकरो व्यापारविशेषो यज्ञः ॥ ३० ॥**

अभ्युदयापवर्गप्रदो वेदशास्त्रविहितो व्यापार एव यज्ञपदेनाभिधीयते । स च त्रिष्वपि मानवधर्माङ्गेषु श्रेष्ठतमोऽपेक्षणीयश्च । तस्यैव विभागत्रयानुरूपं भगवतो वेदस्यापि काण्डत्रयात्मकत्वं प्रसिद्धम् । ईदृग् हि यज्ञस्वरूपं विस्तीर्णं यत् क्वापि शास्त्रे धर्माणां समेषामपि यज्ञशब्दाभिधेयत्वम् । तथा हि गीतोपनिषदि—

"द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥"

एवं सत्यपि निखिलधर्माणामेव यज्ञशब्दवाच्यत्वे अत्र महर्षिसूत्रकारः साधारणधर्मस्य त्रिष्वङ्गेषु प्रथमं यज्ञरूपमेवाङ्गमभिप्रैति ॥ ३० ॥

तद्भेदं व्याचष्टे—

**स त्रिविधः काण्डत्रयबोध्यत्वात् ॥ ३१ ॥**

यज्ञोऽसौ काण्डत्रयप्रतिपाद्यत्वात् त्रिविधो भवति । यथा कर्मोपासनाज्ञानरूपास्त्रयो भेदास्तथैव यज्ञस्यापीति बोध्यम् । स्मर्य्यते चात्र—

तेषु यज्ञः प्रधानं स्यात्तस्य भेदास्त्रिधा मताः ।
ज्ञानोपासनकर्माणि यदुक्तानि मनीषिभिः ॥
यज्ञधर्मविभेदास्तु मुनीनां बहवो मताः ।
कर्मज्ञानोपासनाख्या भेदा मुख्यास्त्रयस्स्मृताः ॥ ३१ ॥

तत्र कस्य प्राधान्यमिति निर्दिशति—

**मानसो गरीयान् संस्कार-प्राधान्यात् ॥ ३२ ॥**

संस्कार-प्रधानतया मानसो यागः सर्वश्रेष्ठो भवति । जगतः सर्गस्थिति-प्रलयकारणं मन एव । "मन एव मनुष्याणां कारणम्बन्धमोक्षयो" रिति स्मरणात् । अन्यच्च "तदैक्षत बहुस्यां प्रजायेयेतिश्रुतेः । "सोऽभिध्याय शरीरात्स्वात् सिसृक्षुर्विविधाः प्रजाः" इत्यभिध्यानपूर्विकां सृष्टिं वदतो मनोश्चापि मनस एव सर्गनिदानत्वमभिप्रेतम् । अपरतश्च संस्कारस्यापि सर्वमुख्यत्वाद्बलीयस्त्वाच्च तत्र मनसोऽतिशयसम्बन्धः तदित्थमुभयोः सातिशयसम्बन्धयुक्तत्वात् "उत्तमो मानसो यागो मध्यमो बहिरर्चनमिति" स्मरणाच्च मानसो यागो गरीयान् इति ॥ ३२ ॥

सम्प्रति प्रसङ्गात् संकल्पप्राधान्यं दर्शयति—

**अतो धर्मे प्राधान्यं संकल्पस्य ॥ ३३ ॥**

उक्तकारणात् धर्मे संकल्पस्य प्राधान्यं विज्ञेयम् । पूर्वसूत्रे संस्कारजन्य-मानसयज्ञप्रधानतासिद्धौ धर्मे संकल्पस्यैव प्राधान्यं सिध्यति संस्कारजनक-त्वात् । कर्मोपासनाज्ञानयज्ञेषु दानाद्यनन्तधर्माङ्गेषु च कर्तुः यथासंकल्पं तमोरजःसत्त्वात्मकविविधफलोपलब्धिः । निष्कामं कर्म तु चरमपुरुषार्थाय निःश्रेयसायैव परिकल्पते । अत एव वैदिकतान्त्रिकादयः सर्वेऽपि यागाः संकल्प-पूर्वकमारभ्यन्त इति ॥ ३३ ॥

प्रसङ्गसङ्गत्या शपथादीन्निर्दिशति—

**शपथोपयोगित्वमतः ॥ ३४ ॥**

हेतुनाऽनेन शपथस्योपयोगिता प्रतीयते । यज्ञोपवीतधारणानन्तरं ब्रह्मचर्योद्वाहवानप्रस्थेषु कुटीचक-बहूदकादिसंन्यासभेदेषु विविधभेदगुरुदीक्षा-प्रभृतिषु च शपथपूर्वकमेव मानवोऽधिक्रियते । धर्मे तदङ्गेषु संकल्पस्य प्रधान-तया संस्कारोत्पादकशपथस्योपयोगित्वमपि स्वतः सिद्धम् । अनेनैवान्तःकर-णाङ्किताः सूक्ष्मबीजभावमापन्नाः संस्काराः साधकस्य धर्मोन्नतिरूपं फलमुत्पाद-यन्ति इति ॥ ३४ ॥

कर्मयज्ञस्य प्रथमभेदं निरूपयति—

**नित्यनैमित्तिककाम्यभेदात् त्रिविधं कर्म ॥ ३५ ॥**

नित्यनैमित्तिककाम्यभेदेन त्रिधा भिद्यते कर्म । यस्य च विहितस्य कर्मणोऽनुष्ठानेन न विशेषपुण्योपलब्धिरपित्वननुष्ठानेन पापं भवति तन्नित्यं, यथा सन्ध्योपासनादि । तद्धि नैमित्तिकं विहितस्य यस्याकरणे नास्ति पापं, अनुष्ठानेन विशेषपुण्योपलब्धि र्यथा देवमन्दिरप्रतिष्ठादि । यस्य च विहितस्य साधनेन साधकानां समीहितं सिध्यति तच्च काम्यं, यथा-पुत्रेष्टियज्ञादि । एतेषां हि नित्य-

नैमित्तिककाम्यकर्मणां सविस्तरवर्णनं वेद-स्मृति-पुराण-तन्त्रादिषु सर्वत्रैव दृश्यते। स्मृतौ तद् यथाः—

निरूपितास्त्रयो भेदाः शास्त्रेष्वेतस्य कर्मणः।
नित्यं नैमित्तिकं काम्यमिति वच्म्यथ लक्षणम्॥
विशिष्टं यदनुष्ठाने पुण्यं नाप्नोति मानवः।
तन्नित्यं प्रत्यवायश्चाकरणे यस्य निश्चितः॥
यथा सन्ध्योपासनादावकृते प्रत्यवायिता।
कृतेऽपि नियमेनैव पुण्यं किञ्चिन्न लभ्यते॥
कृते यस्मिन् फलप्राप्तिरकृते तु न पातकम्।
एतन्नैमित्तिकं प्रोक्तं यथा तीर्थादि-सेवनम्॥
काम्यं तत् कार्यसिध्यर्थं सकामो विदधाति यत्।
यथाऽनपत्यः पुत्रेष्टि यागादीननुतिष्ठति॥ इति॥ ३५॥

विभागं व्याकुरुते—

भावत्रयसम्बन्धाच्च॥ ३६॥

पूर्वोक्तं कर्माऽध्यात्माधिदैवाधिभूतभेदेनाऽपि त्रिविधं भवति। अखिला एव सृष्टिपदार्था उपर्युक्तभावत्रितयसम्बन्धेन त्रिधा विभज्यन्ते। तद्धि मध्य-मीमांसाऽपरनामक-दैवीमीमांसायां सविस्तरं वर्णितमास्ते। एवं कर्मयज्ञमपि भावत्रयानुकूलं त्रिधा विभक्तं विदन्ति। तद्यथा आत्म-ज्ञानजनकं पुस्तकप्रण-यनादि कर्म अध्यात्मयज्ञं, शास्त्राचार्यानुमोदितमरिष्टा देशान्त्यर्थमनुष्ठा-नादि दैवशक्ति-प्रकाशकमधिदैवयज्ञम्, भूतान्तर-तृप्तिजन्यापूर्वफलोत्पत्ति-साधकं विहितं ब्राह्मणभोजनादि चाधिभूतयज्ञमाहुरिति—

स्मृत्यन्तरेऽपि—

आध्यात्मिकं तथा चाधिदैविकञ्चाधिभौतिकम्।
कर्मयज्ञं त्रिधा प्राहुर्बुधास्तत्त्वविमर्शिनः॥
क्रियते यत् स्वधर्मस्य स्वदेशस्योपकारकम्।
ज्ञानानुशीलनं यत्र ज्ञेयमाध्यात्मिकं हि तत्।
देवानां कार्य्यमुद्दिश्य यत्र यागादिकं भवेत्।
तादृशं सकलं कर्म विज्ञेयं ह्याधिदैविकम्।
तच्चाधिभौतिकं कर्म सर्वभूतार्थमेव यत्।
दीयतेऽत्रातिथिभ्योऽन्नं भोज्यन्ते ब्राह्मणादयः॥ ३६॥

इदानीं यज्ञस्याङ्गान्तरं प्रतिपादयति—

बहुविधे ज्ञानोपासने ॥ ३७ ॥

उपासनायज्ञज्ञानयज्ञयोर्बहुविधा भेदाः। दर्शनेऽत्र कर्मणो विशेषसम्बन्धात् कर्मयज्ञं, तदङ्गानि चोपवर्ण्य सूत्रेणानेनोपासनाज्ञानभेदानां दिग्मात्रं निर्दिशति। मध्यमीमांसानुसारत उपासनायज्ञस्य सन्त्यनेके भेदाः। तथा हि-क्रियासिद्धांशानुरूपं मन्त्रहठ-लय-राजयोगाख्याश्चत्वारो भेदाः; उपास्यभेदानुसारम् आसुरशक्त्युपासना, ऋषिदेवतापित्रुपासना, लीलाविग्रहोपासना (अवतारोपासना), सगुणब्रह्मोपासना, निर्गुणब्रह्मोपासना चेति पञ्चभेदाः; उत्तरमीमांसाऽपरनामकब्रह्ममीमांसानुसारं ज्ञानयज्ञस्य च श्रवण-मनन-निदिध्यासनात्मकं भेदत्रयमवगन्तव्यमिति ॥ ३७ ॥

साधारणधर्मस्याङ्गान्तरं व्याहरति—

द्वन्द्वराहित्यहेतुर्व्यापारविशेषस्तपः ॥ ३८ ॥

द्वन्द्वविनाशनिदानं व्यापारविशेषो हि तपःशब्देन व्यवह्रियते। शीतोष्णादि सुखदुःखरूपद्वन्द्वसहिष्णुत्वजन्यविशेषशक्तिप्राप्तिस्तपः। शीतोष्णत्वादिशारीरिक-वाचालत्वतुष्णीम्भावादिवाचनिक सुखदुःखादिमानसिकद्वन्द्ववृत्तीः सहित्वा विशेषसंस्कारशक्ति-समुपार्जनं वा तपः। यथा हि मृगयाशक्तिशून्यः श्वा मृगयुना बद्धस्तच्छक्तिमासादयति। एवमेव निरुद्धतत्तद् द्वन्द्वभोगवेगः साधकः तत्तद्विषयिणीं प्रचुरशक्तिमधिगच्छति, तादृशशक्तिसंग्राहककर्मैव तपः।

स्मर्यते चाऽत्र—

शरीरश्चित्तवचसां सौख्यं त्यक्त्वा शनैः शनैः।
तेषाञ्चिद्वन्द्वधर्मित्वापादनं तप उच्यते ॥
यथैकत्र दृढैः पाशैः पशो र्बद्धस्य सन्ततम्।
प्रवर्द्धन्तेऽधिकं कायवेगविक्रमशक्तयः ॥
एवं कायमनोऽक्षाणां वर्द्धते नितरां बलम्।
तपसि स्थापनादेव सुखभोग विवर्जनात् ॥ इति ॥ ३८ ॥

तद्भेदानाह—

त्रिविधं तत् ॥ ३९ ॥

प्राग्धर्माङ्गस्य यज्ञस्याङ्गप्रत्यङ्गानि निरूप्य तपसश्च लक्षणमभिधाय महर्षिर्भरद्वाजोऽधुना जगत्पावनस्य तपोधर्मस्य भेदानाह—

तत् पूर्वोक्तं तपः शारीरिकवाचनिकमानसिकभेदेन त्रिधा भिद्यते।

# सूर्योदयः ।

( विविधविषयविभूषितं संस्कृतमासिकपत्रम् )

षष्ठे वर्षे } भाद्री पूर्णिमा, सं० १९८७ । { तृतीया संख्या


## सम्पादकीया अभिप्रायाः ।

### तपोमहत्त्वम् ।

यज्ञधर्मो यद्यपि विराड्रूपं धारयति कर्मोपासनाज्ञानाद्यनेकाङ्गविभक्तः । दानधर्मश्च यद्यपि परमसुलभत्वात् कलियुगे नितरां हिताधायकः । परन्तु तपोधर्मः सर्वेष्वपि देशकालपात्रेषु स्वीयामलौकिकशक्तिं विस्तारयतीति नास्ति संशयितिलवोऽपि । तपोबलेनैव सृष्टिस्थितिलयानां सर्वविधानि विधेयानि विधीयन्ते । तपःप्रभावाद् एव ब्रह्मविष्णुरुद्रादयो दिवौकसः स्वस्वकर्त्तव्याणि यथोचितं वितन्वते । तपःशक्त्यैवाऽसुराः शक्तिशालिनः सन्तो देवेन्द्रं विजित्यामरावतीमात्मसात् कुर्वते । तपोमहिम्नैव मर्त्या अपि अमरत्वं प्रपद्यन्ते । क्षत्रियस्यापि भगवतो विश्वामित्रस्य ब्राह्मणत्वाधिगमः, मनुष्यभूतानामपि नन्द्यादीनां देवत्वप्राप्तिः, वेश्याया अपि गण्डक्या देवीत्वलाभ इति सर्वं तपोमाहात्म्यविजृम्भितमेव ।

"द्वन्द्वराहित्यहेतु र्व्यापारविशेषस्तपः" इति शास्त्रानुशासनम् । मनुष्यादिसमुन्नतजीवेषु स्वकीयप्रकृताद्याधिपत्यं विधाय येयं सुखभोगस्य स्वाभाविकी असाधारणशक्तिस्तस्या अनुपभोगेन संयमनमेव तपः । शारीरिक-मानसिक-वाचनिकभेदेन तपसो भेदत्रयम् । स्वाभाविकीं स्वीयां सुखभोगसमीहां संनियम्य निरतिशयालौकिकशक्तिसमुद्भावनमेव तप इति निर्गलितोऽर्थः । यथा हि संयता अश्वा अतिशयां धावनशक्तिमासादयन्ति न तथाऽसंयताः, यथा च संयमिताः श्वानो मृगयोपयोगिनो न तथाऽसंयमिता; एवमेव शरीरमनोवचःशक्तयस्तपसा संयमिता विविधप्रकाराम् अणिम-महिमादिसिद्धिं समुद्भावयन्ति । तामेतां तपःप्रभावजनितामलौकिकीं शक्तिं समा-

साद्यैव भारतीयाः प्राचीना महर्षयो जगद्गुरुत्वं प्रतिपेदिरे। इदानीमपि आध्यात्मिकमहत्त्वेषु, दार्शनिकतत्त्वाविष्कारेषु, धर्माधर्मगम्भीररहस्यपर्यालोचनेषु, गूढतरसामाजिकशृङ्खलाविज्ञानपरिज्ञानेषु, उद्भिज्जादिचतुर्विधभूतसंघसृष्टिसमुदयरहस्यविज्ञानेषु, संस्कृतभाषायाः सर्वाङ्गपूर्णतासम्पादनेषु, वर्ण-लेखन-प्रणालीपूर्णपरिष्कारेषु, अङ्कशास्त्राविष्कारेषु, ज्यामिति-रेखा-गणित-फलित-गणित-ज्योतिषायुर्वेद-स्थापत्यादिशास्त्राणामादिमाविष्कारेषु, देवलोकदुर्लभ संगीतस्यालोचनपूर्वकतदीयमधुरिमास्वादप्रकाशनेषु, किं बहुना— मानवसभ्यतापूर्णतापरिचायकेषु शिल्पललितनृत्यकलादीनां पूर्णतासम्पादनादिषु, हिन्दुजातिरेव जगद्गुरुरिति सर्वेऽपि सांसारिकाः सचेतसः सुधियः समाम्नन्ति। सर्वस्यैतस्य निदानभूता हिन्दुजातितपःशक्तिरेव।

अद्यत्वे धार्मिक-सामाजिक-राजनीतिकादिक्रान्तिकोलाहलेन भारतीयं गगनमण्डलं सर्वतः परिपूर्णमिव वर्त्तते। अत्रावसरे राज्ञा प्रजावर्गेण च स्वीयतपोऽनुरूपमेव फलमधिगमिष्यते। वर्णाश्रमधर्मप्रजासु चापि तदीयप्राणरूपधर्मध्वंसनाय परित आक्रमणं चरीक्रियमाणं निभाल्यते। इदानीं समये समाक्रमणादेतस्मादात्मरक्षा-सनातनधर्मवीजरक्षा-वर्णाश्रमशृङ्खलापरिपाटी-सुरक्षादिकृते तपसो नितान्तमावश्यकत्वमास्ते। लोकशक्तिसमधिगमपुरस्सरधर्मानुकूलप्रजाधिकारप्राप्तिनिमित्तं प्रजावर्गस्य विशिष्टतपोवलावश्यकता। राज्ञश्चापि स्वीयराजशक्तेः स्थायित्वसम्पादनार्थं धर्मानुकूलतपःसंचयप्रयोजनीयत्वम्। त्रयाणामप्येतेषां यदीयं तपः क्षीणतां प्राप्नुयात्, तदीयः पराभवो दुर्निवारः। धर्मस्य तपसश्च विजयोऽवश्यम्भावीति त्रिभिरेव सावधानेन चेतसाऽवधेयमिति।

---

## जयकरोपद्रवः।

भारतीयव्यवस्थापकसभायां महदनिष्टकरं हिन्दुविद्यार्जितलाभविधानं बहुसम्मत्या स्वीकृतमिति चेखिद्यते चेतः। अस्य सृष्टिकर्त्ता जयकरमहाशयो वर्त्तते, यथा शारदाविधानस्य हिन्दुधर्मे हस्तक्षेप उद्देश्यं, तथैव जयकरविधानस्य तस्य पारिवारिकैक्यशान्तिमूलोच्छेदनमेव प्रधानमुद्देश्यम्। एकस्मिन् परिवारे पञ्चसु भ्रातृषु यद्येकोऽपि सुशिक्षितोऽधिकद्रव्योपार्जनं करोति तदा तदंशभागिनः सन्तः सर्वेऽपि तेन जीवनयापनं विदधते। किन्तु जयकरविधानानुसारं नैतत् सम्भवति। योऽधिकमुपार्जयति स एव तदधिकारी नापर इति जय-

करविधानस्य तात्पर्य्यम् ! श्रीमन्तः एम्० के० आचार्यप्रभृतयो विज्ञातहिन्दूधर्म-मर्माणो महानुभावा विधानमिदं व्यरुन्धन्। तैरुक्तम्—अस्य विधानस्य स्वीकारेण हैन्दवसंयुक्तपारिवारिकप्रथाया महत्या हानेः सम्भावना ! बहुषु यद्येकोऽपि उच्चशिक्षामधिगम्य समीचीनमायं विदध्यात् तेन सर्वेषामेवोपकारः सम्भवेदिति मनसि निधाय संयुक्ताः सर्वेऽपि पारिवारिकास्तदर्थमर्थव्ययं विदधते ! किन्तु विधानेनैतेनाऽधिकोपार्जनकर्त्ता स्वयमेव निजोपार्जितसम्पत्तेरधिकारवान् स्यात्! कारणेनैतेन संयुक्तः परिवारो न कस्यापि शिक्षाविषये द्रव्यव्ययं विदध्यात् ! विधानेऽत्र इदमपि वर्त्तते यत् संयुक्तपरिवारस्य यदि कोऽपि मानवो विदेशादधीतविद्यः स्वदेशं परावर्त्तमानो धनोपार्जनेऽसमर्थः स्यात् तदा तत्-प्रतिपालनं परिवारेणैव कर्तव्यम् ! परन्तु यद्यसौ धनमुपार्जयेत् तदा न तत्परिवारस्तदधिकारीति महदाश्चर्य्यम् ! सर्वमिदमालोच्य कः सचेता विधानेनैतेन संयुक्तपारिवारिकप्रथासमूलोन्मूलने सन्दिहानः स्यात् ? विदेशात् प्रत्यागता एव न केवलं विधानस्यास्य लक्ष्यभूताः, परं हि ये स्वदेशे निवसन्तो धनोपार्जनं कुर्वते तत्सम्बन्धेऽपि विधानमिदं चरितार्थं भवेत् । हन्त भोः ! मुष्टिमेयाः केचन स्वीयस्वार्थसाधनार्थं हिन्दुसदाचारविघातकानि विविधानि विधानानि वितन्वाना यमिमं विषवृक्षमारोपयन्ति, तत्फलानि समयान्तरे खादमानाः सर्वेऽपि संकटग्रहग्रस्ता विपत्स्यन्त इति नूनमिदं महदनुचितम् । राजप्रजा-परस्परविरोधविधायकानि विधानान्येतादृशानि विरुध्य राजकीया अधिकारिणः स्वीयां दूरदर्शितां प्रदर्शयिष्यन्तीति बलवान् मे विश्वासः ।

---

## सभ्यताया आदर्शः ।

यस्या मानवजातेः सामाजिकी व्यवस्था सर्वतः साधीयसी, सैव सभ्येति कथ्यते । भारतीयप्राचीनविचारमनुसृत्य गौरवान्विताया आर्यजातेः सभ्यता सर्वप्रकारतः पूर्णाऽवगम्यते । विद्या, ऐश्वर्य्यं, बुद्धिः, संघटितं लोकबलं चेति यत्र निभाल्यते, सैव जातिः सभ्या बलवती चेति नाऽत्र कश्चन संशयः । विद्यायाः प्रभावेण, ऐश्वर्यस्य साहाय्येन सुबुद्धिजनितविचारशक्तेरुपयोगेन, समवेतेन मनुष्यबलेन च सभ्या मानवजाति र्यदिच्छेत् तदेव विधातुं शक्नुयात् । अन्यच्च-यत्र मानवजातौ धर्मनीतिः, राजनीतिः, अर्थनीतिः, समाजनीतिश्च पूर्णतामधिगच्छन्ति, तामेव बुधाः सभ्यां मन्यन्ते । धर्मनीतिं द्वारीकृत्य मानवजातिर्नियमत आध्यात्मिकीमुन्नतिमनुष्ठातुं प्रभवति । अस्योदाहरणं प्राचीनभारते समुपलभ्यते ।

यया राजनीत्या राज्ञः प्रजायाश्च स्वतन्त्रता मर्यादा च सुरक्षिता स्यात्, उभयोः सहानुभूत्या सहायतया च राज्यशासनं विधीयेत सैव राजनीतिरुत्तमा । अस्या-दर्शो रामराज्ये लभ्यते । व्यापारनीतिः स्वदेशस्य स्वजातेश्च वर्द्धयत्यैश्वर्य्यम् । यद्यपि पाश्चात्यः प्रदेश इदानीमर्थनीतावतीवप्रवीणः, परन्तु प्राची-नस्य भारतस्यापि प्राविण्यं नास्ति न्यूनम् । अधःपततोऽपि भारतस्य व्यापारिकं महत्त्वं विलोक्यैव भारते यूरोपीयाः पदं निदधे। सर्वप्रथमं वास्कोडी-गामानामको जलमार्गमाविष्कृत्य यूरोपं भारताभिमुखं चकार । प्राचीनाया आर्यजातेः समाजनीतिस्तु समस्तेऽपि भूमण्डलेऽतुलनीया विद्यते । भारतीयां वर्णाश्रमव्यवस्थां द्वारीकृत्यैवानादिकालत इयमार्यजातिर्जीवति, अनन्तकालपर्यन्तं जीविष्यति च । धर्ममूलिकाया वर्णाश्रमशृङ्खलापरिगृहीताया भारतीयसमाज-नीतेः प्रशंसनं तु सम्प्रति यूरोपवासिनो विपश्चितोऽपि प्रकुर्वते । अस्मिन् एका-कारमूलकसभ्यताप्राबल्ययुगेऽपि केचन दूरदर्शिनः पाश्चात्याः सुधियो मुक्त-कण्ठमामनन्ति यत् प्रथेयमेकाकारसाधयित्री कदाचन सर्वामपि तत्पक्षपातिनीं जातिं समूलमुन्मूलयिष्यतीति । तदानीमेकाकाररोधिका भारतस्य वर्णाश्रम व्यवस्था मानवसभ्यतायाः संरक्षणे समर्था स्यादिति ।

---

## वर्णाश्रमधर्मः पदार्थविद्या च ।

फ्रान्सदेशनिवासी डाक्टरलियनमोरमेट्नामधेयो महाशयस्तुलनात्म-करक्तपरीक्षणविद्यायामतीव प्रसिद्धो यूरोपे विख्यातश्च । स च रक्त-कीटाणून् परीक्ष्य निश्चितवान् यत् मनुष्यजातौ स्वाभाविकरूपेण चतुःप्रकाराणि रक्तानि चतुःश्रेणीकाः कीटाणवश्च लभ्यन्ते । यदि कदाचन रुधि-रादानप्रदानावसरः समागच्छेत् तदा सजातीयान्येव रक्तानि प्रदेयानि ग्राह्याणि वा, अन्यथा सफलता नाऽवाप्यते, चिकित्स्या मानवा विपद्यन्ते च । पदार्थ-विद्ययाऽऽविष्कृता रक्तपरीक्षा-प्रणाली भारतीयां चातुर्वर्ण्यव्यवस्थां द्रढयति । इममेव वैज्ञानिकं सिद्धान्तमनुसृत्य आर्यजातेश्चतुर्वर्णव्यवस्था निर्द्धारिता । अत एवेयमार्यजातिः साम्प्रतमपि, सहस्रशोऽप्यनार्याक्रमणं सोढं सोढमपि प्राणान् धारयति । अन्यथा इयमपि अनेकाऽसभ्यजातय इव कालेन कवलिता भवेत् । वर्णाश्रमव्यवस्थाविघातकैरदूरदर्शिभिः समाजसुधारकै र्विषयेऽत्र ध्यानं देयम् ।

---

## काशीश्वरश्लेषः।

—:❀:—

गङ्गोत्तुङ्गतरङ्गसङ्गमवशाद्धौतोत्तमाङ्गं रसा—
देवत्राणकरीश्वरी त्रिजगतस्त्वां वष्टि पूर्णान्धसा ॥
सेवन्ते विधुकोटिरश्मिरुचिरं त्वां दैन्यभीता नरः।
शक्त्योग्रोऽपि शिवः स राजतवपुस्त्वं पाहि काशीश्वर ! ॥

—श्रीकन्हाईलालशर्मा
( काव्यव्याकरणसांख्यतर्कपुराणतीर्थः )

---

## भट्टनारायणः।

—:❀:—

वीररसप्रधानवेणीसंहारनाटककर्ता श्रीमान् भट्टनारायणः कस्मिन् काले भूमण्डलमलञ्चकारेत्यमुं विषयं यथामति विमृशामः—

विषयेऽस्मिन् विमृश्यमाने, वङ्गदेशीया गाथैका श्रूयते। यथा—अयं कविवरः कान्यकुब्जेषु कृतवसतिरासीत्। तत्रस्थितानां पञ्चब्राह्मणकुटुम्बानाम् अयमग्रणीः। एते पञ्चकुटुम्बाधिपतयो विद्वद्वराभिलाषिणा वङ्गदेशाधिपेन समाहूताः। समागतेभ्यो ब्राह्मणेभ्य उपभोगार्थं पञ्च ग्रामान् ददौ वङ्गाधिप आदिशूरः। एते ब्राह्मणा गौड़जातीयाः। प्रकृतस्य भट्टनारायणस्य "मृगराज" इतिबिरुदमभूत्।

क्षितीशवंशावलिनामकग्रन्थे कोपि भट्टनारायणकविः प्रतिपादितः। स एव वेणीसंहारकर्तेति केचिद्विमर्शका मन्यन्ते। अयं कविश्रेष्ठो विष्णूपासकः अद्वैतवेदान्ती चाभूत्। एवंक्षितीशवंशावलिप्रतिपाद्यस्य भट्टनारायणस्य, वेणीसंहारकर्तुश्चाभेदे निश्चिते कविरयं क्रैस्तवाब्दात्परं सप्तमशतकस्यापरभागे ( Later Half of 7th Century ) वा अष्टमशतकस्य पूर्वभागे वा महीमलञ्चकारेति प्रतीयते। विषयेस्मिन् "कन्निगहाम्" नामकः पाश्चात्यविमर्शकवर एवं मन्यते—वङ्गेषु सेनवंशीया भूपाः 650. A. D. 1108 वर्षपर्यन्तं राज्यमकुर्वन्। तस्य वंशस्य मूलपुरुष आदिशूरः सप्तमशतकीयः स्यादिति सम्भावितो निर्णयः। किंच नेपालदेशीयः अंशुवर्मा-637. A D. to 649. A. D. वर्ष-

पर्यन्तं न्यवसत्। सचादिशूरसमकालीन इति विमर्शकानामाशयः। एवं चादिशूरः सप्तमशतके न्यवसदितिनिश्चिते, तदात्वे एव गौडब्राह्मणानामाह्वानमिति पूर्वोक्तदिशा सिद्धे आहूतेष्वन्यतमो भट्टनारायणः क्रैस्तवाब्दात्परं सप्तमशतकीयो वा अष्टमशतकीयो वेति साधु संगच्छते।

अयमेव विषयो बहूदाहरणैर्दृढीक्रीयते—

( १ ) 1150 A. D. वर्षादारभ्य, 1250-A-D. वर्षपर्यन्तं विद्यमानस्य भागस्य मध्ये क्वचित्समये निर्णीतावस्थितयः काव्यप्रकाशकाराः "मम्मटाचार्याः" वेणीसंहाराद्बहून् विषयान् उद्धृत्य स्वग्रन्थे उदाहरन्तिस्म।

( २ ) सरस्वतीकण्ठाभरणकर्ता भोजदेवोपि वेणीतो विषयान् स्वीकृतवान्।

( ३ ) एवमेव ध्वन्यालोककर्ता काश्मीरदेशीयावन्तिवर्माङ्कित आनन्दवर्धनो वेणीसंहाराद्विषयसंग्रहं कृतवान्।

( ४ ) तथा अष्टमशतके ( 8th A. D. ) भूमण्डलमण्डनो वामनाचार्यः अलङ्कारसूत्रवृत्तिकारो वेणीतस्संजग्राह विषयान्।

एवंनिपुणतरं विमृश्यमाने भट्टनारायणः सप्तमशतकीयो वा अष्टमशतकीयो वा स्यादिति सर्वमनवद्यम्।

—रा० सुदर्शनशर्मा
( कुंभघोणम् )

—*—

# संस्कृतस्य महत्त्वमनादित्वञ्च।

इह खलु चराचरात्मके जगति सर्वोऽपि देही "सुखम्मे भूयाद्दुःखम्माभूदिति" कामयते। नात्र वैमत्यङ्केषाञ्चिदपि सुमेधसाम्। एवं विमृश्य सुखलिप्सया कोऽपि जनो व्यापारसरणिमवलम्ब्य वस्तुक्रयविक्रये ऽहर्निशं संलग्नो-वित्तङ्काङ्क्षते। इतरः सन्ततौ सुखं विज्ञाय तदासौ नानाचेष्टाचेष्टितो दरीदृश्यते-अपरः सति पुष्टे शरीरे समस्तमपि सुखम्, सर्वकार्यसम्पादनहेतुभूते तस्मिन् दुर्बले न हि किञ्चिदपि समुपस्थितं सुखम्-एवमनुभूय प्रत्यहन्नानाभक्ष्याभक्ष्यवस्तुसेवनं प्रकुरुते। अन्यश्चेन्द्रादिलोकमेव सुखम्मन्यते। एवम् सुखलिप्सया विविधकर्मणि निरताः सततमुद्योगशीला लक्ष्यन्ते, तन्मध्ये केचित्

समानप्रयत्ना अपि विफलायासास्तत्तत्कामनामलभमानाः कठिनतरमेव दुःख-मनुभवन्ति, न सुखं कदापि। एवमेत्रयोत्तिकामा अपि ते दैवदौर्बल्यात् फलन्नहि लभन्ते तथा च दैवमेव सर्वकार्यसम्पादनहेतुकं सर्वसिद्धिप्रदन्नि-श्चिन्वन्ति। यथाह भगवान् गीतायाम् "इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञ-भाविताः।" इति। एवं देवाराधनहेतुभूतयज्ञोऽपि संस्कृतविद्यामपेक्षते। सा च परापरभेदेन द्विधा, द्वे विद्ये वेदितव्ये, इति हस्म यद् ब्रह्मविदो वदन्ति पराचै-वापरा चेति श्रुतौ विद्याशब्देन संस्कृतसरस्वती एव निर्दिष्टा। इयमेव यज्ञस्य हेतु र्ज्ञानस्य हेतुर्ज्ञानरूपा च, अपौरुषेयत्वादनादिश्चापि।—"अस्य महतो भूतस्य निःश्वसितमेतत् य ऋग्वेद" इति बृहदारण्यश्रुतेः। यो वै ब्रह्माणं विदधाति पूर्वं यो वै वेदाँश्च प्रहिणोति–इतिश्वेताश्वतरोपनिषच्छ्रुतेः—"शास्त्रयोनित्वात्" इति वेदान्तसूत्रात्—"अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा। आदौ वेदमयी-दिव्या यतः सर्वाः प्रवृत्तयः" मनुस्मृतेः। "युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः। लेभिरे तपसा पूर्वम्"-इति महाभारताच्चेति सकलशास्त्रप्रामाण्याद् वेदा-नामपौरुषेयत्वम्, तद्घटितसंस्कृतविद्यायाश्चाप्यनादित्वम्। अस्या अध्ययनाध्यापनं धर्मवृद्धिकरञ्च केवलम्, प्रत्युत मोक्षदञ्चापि। तथाह मनुः–"वेदवेदार्थतत्त्वज्ञो यत्र तत्राश्रमे वसन्। कुर्यादन्यन्नवा कुर्य्यात् ब्रह्मभूयाय कल्पते।" "ब्रह्मभूतः प्रस-न्नात्मा न शोचति नकाङ्क्षति"॥ तपस्विनः सनकादिसिद्धानुद्धर्तुकामो भगवान् शंकरोऽपि "अइउण" इत्यादिचतुर्दशसूत्राणि तन्मोक्षार्थमुपदिदेशेति संस्कृतवि-द्याया महत्त्वे अनादित्वे च कोटिशः प्रमाणानि समुपलभ्यन्ते। किम्बहुना प्रपञ्चितेनेति।

श्रीगुरुप्रसादशर्म्मा

---

# शाकुन्तलश्लोकचतुष्टयविमर्शः।

—०❀०—

स्फुरत्कृष्णप्रेमामृतरसभरेणाति भरिता<br>
विहारान् कुर्वाणा व्रजपतिविहाराब्धिषु सदा।<br>
प्रिया गोपी भर्तुः स्फुरतु सततं वल्लभ इति<br>
प्रथावत्यस्माकं हृदि सुभगमूर्तिः सकरुणा॥

(इति कस्यचिद्वल्लभसम्प्रदायिनः)

अयि गैर्वाणवाणीविवेकविचक्षणाः ! पण्डितप्रवराः !! विदितचरमेव तत्र-भवतां भवतां, यत्कविकुलपुङ्गवमहाकविश्रीकालिदासप्रणीताभिज्ञानशाकुन्तल-नाटकाभिशंसनविषयको लेख एकोऽस्याः सूर्योदयपत्रिकायास्तुरीयाङ्कतुरीय-संख्यायान्तदखिलत्वेनादायि मया, परन्नहि तत्र विविधसांसारिकोपदेशभरि-तस्य हृद्यस्य सहृदयहृदयतोषकस्य स्त्रीशिक्षोपदेष्टृधर्मप्रतिपादकस्य चतुर्थाङ्क स्याभिशंसनविषये किञ्चिदलेखि । सच शाकुन्तलचतुर्थाङ्कोऽनल्पैरेव पण्डितप्रका-ण्डैः प्राशंसि किल मुक्तकण्ठेन । तत्रापि विशेषतया पद्यचतुष्टयमेव सातिशयं स्तुत्यमस्ति इति । अतोऽहमप्येतद्विषये किञ्चिदङ्कयाम्यधस्तनघटितलेखेन । यथा—साध्वीयमधस्तना कस्यचित्कविवरिष्ठस्य मनोमोहिनी सूक्तिर्नरीनृत्यते—

"काव्येषु नाटकं रम्यं नाटकेषु शकुन्तला ।
तत्रापि च चतुर्थोऽङ्कस्तत्र श्लोकचतुष्टयम् ॥"

इत्युपर्युक्तयुक्तपद्यरचनेन तद्रचयितुरिदमाकूतं प्रतीयते—यदहं शकुन्तला-नाटकस्थश्लोकचतुष्टयसमुत्तमत्वं कलयेयम्, इति स्वाभिसन्धिं स्वस्वान्तपटले निधाय सारालङ्कृतं पद्यं जग्रन्थ सः । यद्यपि सुन्दराणि सन्ति खलुकाव्यानि, परन्तेष्वपि रम्यं दृश्यं काव्यम् । नाटकान्यपि भवन्ति खलु रमणीयानि, परं भाव-भासकं प्रकरणललितं, तत्रापि शकुन्तलानाटकमेव सुवरीयस्तमम् । यद्यपि सर्वं-श्चित् शकुन्तलानाटकं रम्यं, तथापि तच्चतुर्थेऽङ्के ललनाधुरीणाया महिषीमङ्गल-मयगुणगणप्रवीणायाः सुन्दरीसकललावण्यसमन्वितायाः स्वीयसौन्दर्यसमस्त-भुवनव्यामोहिकायाः प्रियदर्शनायाः शकुन्तलायाः प्रस्थानानेहसि सर्वत्र भारती-कोष-भगवतीतोषोपलब्धिविकासेन उपमाविलासेन अकृतबह्वायासेन श्रीमता कविकालिदासेन काश्यपमुखाद्यत् पद्यचतुष्कं प्रतिपादितम्; तत्रखलु भावस्य-प्रस्फोटनं, सांसारिकव्यवहारस्य प्रदर्शनम्, अचेतनाज्ञानिसत्त्वैः सह प्रेमप्रकटनं, यन्न्यधायि पद्यचतुष्कमध्ये तदेव सर्वस्वान्तद्रावकं प्रशमितचित्तदुःखपावकं वरी-वर्त्ति । अतएव तेनापि कविना कालिदासकवितया वशवर्तिमेत्याभाणि किल-तच्छ्लोकचतुष्टयसमुत्तमत्वम् ।

यथा—यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठास्तम्भितवाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।
वैक्लव्यं मम तावदीदृशमिदं स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं न तनयाविश्लेषदुःखैर्नवैः ॥ १ ॥

अत्र श्लोके—यास्यतीत्यनेन न तु याता, न तु याति, इति पदम्। अन्यच्च-अरण्यौकसो मम खलु काश्यपस्य तनयाविश्लेषेणैतादृक्षं वैक्लव्यं वर्तते, न जाने गार्हस्थाः कथमिव विक्लिष्टिमेष्यन्ति, इति भावोऽपि समुत्तमतां जनयति।

अपि च—पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम्।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम्॥ २॥

अत्र खलु द्वैतीये पद्ये—चैतन्यशून्यान् विटपिनोऽज्ञानिनो मृगान् प्रति शकुन्तलानुरागं समाख्याय तत्प्रस्थिति-विज्ञप्तिपुरस्सरं तेभ्योऽनुज्ञाग्रहणभावस्यादर्शरूपत्वात् समासोक्त्यलङ्कृत्यलङ्कृतत्वाच्चोत्तमत्वं प्रतीयते।

तथा हि—अस्मान्साधु विचिन्त्य संयमधनानुच्चैः कुलञ्चात्मनः
त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिञ्च ताम्।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्यायत्तमतः परं न खलु तद्वाच्यं वधूबन्धुभिः॥ ३॥

श्लोके चात्र तृतीये खलु वसुन्धरेशं प्रति सन्देशप्रदाने तस्मादधिकस्यापि स्वस्य च्चोदीयस्त्वं संवर्ण्य शकुन्तलाजनितविवादमपोह्य सुस्त्रीत्वभावनयनमित्येकविध उपदेशोऽपि जनमनोरञ्जनो राजतेतराम्।

अन्यच्च-शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः॥ ४॥

तुरीयेऽस्मिन् पद्ये-उद्वाहदिष्टोचितोपदेशप्रदानं स्त्रीत्वपदमिलनयोग्यं कथनं सुयोग्यमिति संलक्ष्यते, तदपि करुणापूरितं सदतितरां राजते। अत एव केनचिदीदृशं पद्यं स्वमनसि संलक्ष्यैकच्छन्दस्त्वेनैकरसत्वेन चास्य सर्वोत्तमता सूचिता।

प्रेष्ठाः पण्डितवरिष्ठाः! दर्शने तु पद्यचतुष्टयस्यास्य नास्ति खलु वैशिष्ट्यम्, परं मुग्धायाः शकुन्तलायाश्चितिशक्तिशून्यान् पादपान् प्रति स्नेहप्रवृत्तिप्रदर्शनं, यथा—"नादत्ते प्रियमण्डनापि भवतः स्नेहेन या पल्लवम्" तथा च स्वामिसदनगमनसमये तेभ्योऽनुज्ञानाय कथनम्। एवमेव तस्याः किला-

ज्ञानिनो मृगान् प्रति प्रणयव्यवहारः, तथा तेभ्योऽपि अनुज्ञाग्रहणायाख्यानम्। यथा, प्रथमांशे तु—"पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या" इति। अपरांशे तु—"सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम्" मिति। तथा मुनेश्च काश्यपस्य वनवासित्वेऽपि शकुन्तला-पतिनिकेतनप्रेषणसमये तद्विश्लेषजविक्लवे गलनिरोधः परिदेवनञ्च। तथाऽऽत्मनः सर्वविषयेऽधिकत्वे सत्यपि शकुन्तला-दाननिमित्तमधिश्रित्य दुष्मन्ताय स्वीयतोदीयस्त्वप्रतिपादनम्। इमे खल्व द्वितीया भावा एवास्य श्लोकचतुष्टयस्यानुत्तमत्वं सूचयन्ति, जनमनो रञ्जयन्ति च नितराम्। अत एव तस्य कवेर्मतमनुसरामः समर्थयामश्च, यत्सत्यमेव तेनोपर्युक्त-पद्येन योग्यैव योग्यता व्यक्तीकृतेति साह्लादं साभिमानं महाकविकालिदासमहा-महत्त्वं मन्यावहे वयम् इति कियति पल्लवितेनेत्यलम्।

श्रीकृष्णदत्तशर्मा काश्यपः।

---

# रसेऽपि पञ्चीकरणप्रक्रियायाः समावेशः।

—— :*: ——

विभावादीनां संयोगादेव रसनिष्पत्तिरिति तावत्प्रसिद्धम्। यथा च भरतसूत्रे "विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः" इत्युक्तम्। यथा वा काव्यप्रकाशे "व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसः स्मृतः"। काव्य-प्रकाशवृत्तौ च "न खलु विभावानुभावव्यभिचारिण एव रसः अपि तु रसस्तै— रित्यस्ति क्रमः स च लाघवान्न लक्ष्यते" इत्यत्रापि "तै" रिति बहुवचननिर्देशेन संयुक्तानामेव कारणत्वमुपादिश्यते। रसगङ्गाधरे पण्डितराजेनापि 'शकुन्तला-दिभिरालम्बनकारणैश्चन्द्रिकादिभिरुद्दीपनकारणैरश्रुपातादिभिः कार्यैश्चिन्तादिभिः सहकारिभिश्च संभूय प्रादुर्भावितेन" इत्यादिसन्दर्भेण मिलितानामेव कारणत्वमुक्तम्। एवं च विभावादीनां दण्डचक्रादिन्यायेन संभूयैव कारण-त्वम्, न त्वेकैकस्य विभावादेस्तृणारणिमणिन्यायेनेति स्पष्टम्।

नन्वत्र प्रष्टव्यम्—तृणारणिमणिन्यायवद्विभावाद्यन्यतमेनापि रसोऽनुभूयते यथालम्बनविभावेन मालविकाग्निमित्रे—

"दीर्घाक्षं शरदिन्दुकान्तिवदनं बाहू नतावंसयोः।
संक्षिप्तं निविडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव॥
मध्यः पाणिमितो नितम्बि जघनं, पादावुदग्राङ्गुली।
छन्दो नर्तयितुर्यथैव मनसः सृष्टं तथास्या वपुः॥"

अत्र मालविकामभिलषतोऽग्निमित्रस्य मालविकाख्यालम्बनविभाव-मात्रवर्णनेऽपि तेनैव रसोऽनुभूयते। यथोद्दीपनविभावेन—

"वियदलिमलिनाम्बुगर्भमेघम् ।
मधुकरकोकिलकूजितैर्दिशां श्रीः ॥
धरणिरभिनवाङ्कुराङ्कटङ्का ।
प्रणतिपरे दयिते प्रसीद मुग्धे ॥"

इत्यादौ रसोऽनुभूयते। यथानुभावेन मालतीमाधवे रसोऽनुभूयते—

'परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः ।
कथमपि परिवारप्रार्थनाभिः क्रियासु ॥
कलयति च हिमांशो र्निष्कलङ्कस्य लक्ष्मी—
मभिनवकरिदन्तच्छेदकान्तः कपोलः' ॥

यथा च संचारिणा अमरुशतके रस आस्वाद्यते—

"दूरादुत्सुकमागते विवलितं संभाषिणि स्फारितम् ।
संश्लिष्यत्यरुणं गृहीतवसने किञ्चाञ्चितभ्रूलतम् ॥
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणम् ।
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥"

एवं कथं दण्डचक्रादिन्यायेन कारणत्वमुक्तं प्रत्नाचार्यैः। तत्रेदमुच्यते-यथा वेदान्ते पञ्चमहाभूतानां पञ्चीकरणम्। तत्र च कापि अर्धमात्रामिता भूः; शेषार्धमात्रायां च प्रति चतुर्थांशं जलतेजोवाय्वाकाशाः। एवं चात्र भूमिमात्राया अधिकांशत्वात् भूमिकृतो व्यवहारः। यथोक्तं वेदान्तसारे—"वैशेष्यात्तद्वादस्तद्वादः" इति न्यायेनाकाशादिव्यपदेशः पञ्चानां पञ्चात्मकत्वे समानेऽपि संभवति। इत्थमेव जलवायुतेज-आकाशादिकृतोऽपि व्यवहारो विज्ञेयः। यथा च भूतपञ्चीकरणप्रक्रिया—आकाशादिषु पञ्चसु भूतेषु प्रत्येकं भूतं द्विधा विभज्य प्राथमिकार्धा एकत्र निधेयाः। द्वितीयार्धानां तु पुनश्चतुर्धा विभागं कृत्वा अवशिष्टेषु स्वान्यतरेषु अर्धभागेषु प्राथमिकेषु संयोजनं नाम पञ्चीकरणम्। यथोक्तं पञ्चदश्याम्—

"द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः ।
स्वस्वेतरद्वितीयांशै र्योजनात् पञ्च पञ्च ते ॥"

पञ्चीकरणे प्रमाणं तु त्रिवृत्करणश्रुतिरेवोपलक्षिका—यथा च श्रुतिः—
"सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य

नामरूपे व्याकरवाणीति तासां त्रिवृतत्रिवृतमेकैकां करवाणि, इतीक्षित्वा सा सदाख्या देवता परमात्मा देवता सृष्टानां तिसृणां देवतानां तेजोबन्नात्मिकानां मध्ये एकैकां देवतां त्रिवृतं २ त्रिरूपां त्रिरूपां मकरोत्कृतवतीति त्रिवृत्करणश्रुतिः। इयमेव पञ्चीकरणमप्युपलक्षयति। एवमेवात्र रसेऽपि पञ्चानां भावानां प्राचीनैः समूहालम्बनतया व्यवहृतं पञ्चीकरणम्। तथा हि–यत्र क्वापि अर्धमात्रामित आलम्बनविभावः शेषार्धमात्रायां प्रतिचतुर्थांशमुद्दीपनानुभावसंचारिभावाः। एवं चात्रालम्बनमात्राया अधिकांशत्वादालम्बनजन्यो रसव्यवहारः। यथा–लम्बनविभावेन "दीर्घाक्षं शरदिन्दुकान्ति वदनं, बाहू नतावंशयो" रित्यादौ मालविकारूपालम्बनवर्णने संचारिणामौत्सुक्यादीनामनुभावानां, च नयनविस्फारादीनां चौचित्यादेवाक्षेपः। एवं चात्र सर्वेषां, विभावादीनां सत्वेऽपि आलम्बनवर्णनात्तदाधिक्यम्। एवमन्यत्रापि संचारिस्थाय्यनुभावोद्दीपनेषु। उक्तश्लोके तु आलम्बनविभावकृतवैशिष्ट्या त्तदालम्बनजन्यरसव्यवहारः। ननु संचारिणाम् अनुभावादीनां चात्र श्लोके समाक्षेप इत्यत्र किं मानम्। उच्यते तद् विश्वनाथेन—

"सद्भावश्चेद्विभावादेर्द्वयोरेकस्य वा भवेत्।
झटित्यन्यसमाक्षेपे तथा दोषो न विद्यते"॥

यथा च भावपञ्चीकरणप्रक्रिया—

आलम्बनोद्दीपनस्थाय्यनुभावसंचारिभावेषु पञ्चसु भावेषु प्रत्येकं भावं द्विधा विभज्य प्राथमिका अर्धभागा एकत्र निधेयाः। द्वितीयार्धभागानां पुनश्चतुर्धा २ विभागं कृत्वा स्वान्यतरेषु अवशिष्टेषु प्राथमिकेषु अर्धभागेषु संयोजनं नाम भावसमूहालम्बनापरपर्यायं भावपञ्चीकरणम्। नन्वियं विप्रतिपत्तिः कथं निरस्यते यदत्रश्लोके अर्धभागमित आलम्बनविभावोन्ये च भावाः। अष्टमभागमिताः। तत्रेयं व्यवस्था। यथा "दीर्घाक्षम्" इति पद्ये आलम्बनविभावमात्रवर्णनम्। यस्मिन् पद्ये यस्य वर्णनं तस्यार्धभागमिततयाऽस्वीकरणं समुचितमेव। तत्रैव श्लोके ये च चत्वारो भावाः समाक्षिप्यन्ते ते समाक्षिप्ता भावाः समानभागयुताः सन्तः स्वस्वाष्टमभागमिताः स्वीकर्तव्याः। एवं च न क्वापि विप्रतिपत्तिः। किं, च भावानां समूहे सति रसः इत्यत्र किं मानम्। यथा पञ्चीकरणे त्रिवृत्करणश्रुतिर्मानम्, तथात्रापि। यदाहस्म—

"यस्मादेव विभावादिसमूहालम्बनात्मकः। तस्मान्न कार्यः"।

अत एव काव्यप्रकाशे ऽपि 'व्याघ्रादयो विभावा भयानकस्येव वीराद्भुत-

रौद्राणामित्यारभ्य, इति पृथगनैकान्तिकत्वात् सूत्रे मिलिता निर्दिष्टाः।" इत्युक्तम् ।

"संभूय प्रादुर्भावितेन" इति पण्डितराजेनापि प्रतिपादितमेव ।

उद्दीपनभावानुभावस्थायिसंचारिभावानामुदाहरणानि पूर्वपक्ष एव दत्तानीत्यत्रापि विज्ञेयानि तान्येव । यद्यपि सर्वत्र पद्येषु समूहालम्बनात्मकेन भावपञ्चीकरणेन सर्वेषां भावानामवस्थितिस्तथापि क्वापि कस्याप्याधिक्यात् तद्वादः । एवं यथा वेदान्ते पञ्चीकणप्रक्रिया, तथैव रसेऽपि भावपञ्चीकरणप्रक्रियायाः समावेशः । एतेन तृणारणिमणिन्यायेन हेतवो विभावादयो हीति न साधु । किन्तु विभावादयो दण्डचक्रादिन्यायवत्, "जात्याकृतिव्यक्तयः पदार्थाः" इतिवच्च रसं प्रति हेतुरित्येव समुचितमिति सर्वमवदातम् ।

श्रीनन्दकिशोरशर्मा साहित्याचार्यः ।

( सरस्वतीभवनम्, काशी )

---

# ग्रहणम् ।

—:*:—

भूकेन्द्राद्भूव्यासार्धेन यो गोलः स भूगोलः । ततश्चन्द्रबुधशुक्ररविभौमगुरुशनिनक्षत्राणां गोलाः क्रमेण वर्त्तन्ते । सूर्यगोलादुपरिवर्तमानानां ग्रहाणां ग्रहणं न विलोकयन्ति जनाः । रवेः प्रकाशत्वादुपरिदृष्टेर्गमनाभावाच्च । अधश्चन्द्रबुधशुक्राः सन्ति, तत्र बुधशुक्रयोर्ग्रहणं यन्त्रेण विना प्रायो नावलोकयन्ति प्राणिनः । स्थाल्यां जलाद्युपायैर्यवनाचार्याः पूर्वं ग्रहणमेतयोरवलोकयामासुः । सम्प्रति पाश्चात्या एतयोर्ग्रहणं यन्त्रेण विलोकयन्ति । भारते बहुषु महाविद्यालयेषु यन्त्राणि सन्ति, यैश्च भारतीया अपि विद्वांस एतयोर्ग्रहणं प्रत्यक्षतः पश्यन्ति ।

चन्द्रगोले क्रान्तिवृत्तं परिणतं भवति । तच्च महद्वृत्तमित्यत्र सन्देहो नास्ति । चन्द्रविमण्डलं च महद्वृत्तम्, एतयोः सम्पातद्वयं षड्भान्तरं भवत्येव । इमावेव पातौ क्रमेण राहुकेतू प्रतिपाद्येते । अत एव पञ्चाङ्गे राहोः केतुः सदा षड्भान्तरे तिष्ठति, विलोमागतिरपि तयोर्दृश्यते ।

अमा सह वसतः सूर्याचन्द्रमसौ यस्यां तिथौ सा अमा, इत्युच्यते । ततो गच्छतोः सूर्य्यचन्द्रयोः सूर्यादग्रे चन्द्र आशु गच्छति, चन्द्रस्य शीघ्रगतित्वात् ।

यथा यथा चन्द्रोऽग्रे गच्छति तथा तथा चन्द्रबिम्बे शुक्लिमा वर्धते । सूर्यचन्द्रयोरन्तरं द्वादशांशसमं यदा तदैका तिथिर्दृश्यतेऽतः— $\frac{१ \text{ ति} \times १८०^\circ}{१२^\circ} = १५ \text{ ति}$

पूर्णिमायां रवेश्चन्द्रः षड्भान्तरे तिष्ठतीति सिध्यति । सूर्य्यबिम्बान्निस्सरन्तः प्रकाशकिरणाः पृथिव्या बिम्बं स्पृशन्त एकस्मिन्नेव बिन्दौ पृथिव्यभिमुखं योगं कुर्वन्ति । तेषामन्तोऽन्धकारमयी सूची जाता, यस्या नाम भूभा कथ्यते । यतो भूता या भा सा भूभेति । सूचीशीर्षबिन्दुश्चन्द्रकक्षात उपरि तिष्ठतीति गणितज्ञा जानन्ति । चन्द्रकक्षयाच्छेदितेयं समासूची वृत्तमेवोत्पादयतीति प्रतिभाविदां सुस्पष्टम् । एतस्य केन्द्रं सूच्या मध्यरेखा यत्र लगति । स बिन्दुः क्रान्तिवृत्तधरातले सूर्यात्षड्भान्तरे च सदा तिष्ठति । सूचीमध्यरेखायाः सदा क्रान्तिवृत्तधरातलस्थित्वात् । सूर्यात्षड्भान्तरे चन्द्रः केवलं पूर्णिमायामेव भवतीति प्राक् साधितम् । अतः पूर्णिमायां भूभाचन्द्रावेकस्मिन् कदम्बप्रोते सिध्यतः । द्वयोर्मानैक्यार्धेन समं केन्द्रान्तरं तदा स्पर्शः । न्यून्ये ग्रासः, अधिके स्पर्शोऽपि न वाच्यः । आचार्येण भुजांशाः १४ साधिताः । एतेभ्यो न्यूने भुजांशेऽवश्यं ग्रहणं वाच्यम् । भूभाव्यासार्धं चन्द्रव्यासार्धाद्बहु वर्त्तते तेन चन्द्रग्रहणं खग्रासतां कदाचिद्गच्छेदिति सिध्यति । अतश्चन्द्रग्रहणे छाद्यश्चन्द्रः, छादिका भूभा भवति ।

सूर्यग्रहणे छाद्यः सूर्यः, छादकश्चन्द्रो भवति । चन्द्रव्यासार्धात् सदा रविव्यासार्धं महदतः सूर्यग्रहणं खग्रासतां कदाचिदपि न गच्छेत् । कदाचिज्जातमित्यत्र बहु प्रमाणं मिलति । तत्र कमलदलवद्ग्रहणमतीव सुन्दरं सूर्यग्रहणमाकाशे प्रतिभाति । इति सूर्यस्यातीवतैक्ष्ण्यात् वर्णविभेदे लोका इति पश्यन्ति । तत्र वैज्ञानिका बहुविधं मतं प्रदर्शयन्ति, तच्च कालान्तरे लिखिष्यते ।

चन्द्रग्रहणे स्वल्पेच्छन्ने धूमवर्णश्चन्द्रस्य तिष्ठति । अर्धे कृष्णः, अधिकेऽर्धात् कृष्णरक्तः सर्वच्छन्ने पिशङ्गः । सूर्यग्रहणे सदा कृष्ण एव । चन्द्रस्य षोडशांशे, रवेर्द्वादशांशे, ग्रहणे तेजस्तैक्ष्ण्यादेतादृशं ग्रहणं न लक्ष्यम् । अत एतादृशं ग्रहणं पञ्चाङ्गे न कदापि लेख्यम् । केचन ज्योतिर्विद उल्लिखन्ति येन जनताया महत्यश्रद्धोत्पद्यते प्रत्यक्षे शास्त्रे, तेन नोल्लिखन्तु ग्रहणमित्थम् ।

पर्वविरामकाले मध्यग्रहणं श्रीमन्तो भास्कराचार्य्या ऊचुः । तत्र पर्वविरामकालादन्यत्रैव मध्यग्रहणं भवतीति सर्वे जानन्ति । तत्र चलितभूभाचन्द्र-

योरन्तरं यदेव तदेव स्थिरभूभाकल्पितचन्द्रयोरिति । एकस्यां घटिकायां चन्द्रोऽधिकं चलेत् भूभा च न्यूनं चलेत् । इत्थं चलनादिकं मत्वा विमण्डलकदम्बप्रोतयोरन्तरे कल्पितविमण्डलस्य रचना जायते । स्थिरभूभाकल्पितचन्द्रयोरन्तरस्य परमाल्पत्वं यत्र तत्रैव चलितचन्द्रचलितभूभयोरपि । स्थिरभूभातोलम्बो यत्र कल्पितविमण्डले लगेत् तत्र चन्द्रः कल्पितो ज्ञेयः । तत्रैव चलितयोरपि भूभाचन्द्रयोः परमाल्पान्तरं स्यात् । पर्वविरामकालात् कियति दूरे मध्यग्रहणं स्यात् तद्दूरं संशोधकेन "सिद्धान्तशिरोमणे" टिप्पण्यां साधितम् ।

सूर्य्यग्रहणम्—अमायामेव, चन्द्रग्रहणं पौर्णिमायामेव भवतीतिप्राक् प्रतिपादितम् । सर्वस्याममायां पूर्णिमायां च रविग्रहणं चन्द्रग्रहणं च क्रमेण न भवतीत्यर्थत एव निस्सरति ।

सर्वे ग्रहाः पातादयश्च भगणान् पूरयन्त एकस्मिन् बिन्दौ यदा मिलन्ति तदा सृष्ट्यन्तः प्रलयकालो वा । अतो ग्रहणादियोगेनापि प्रलयकालभयाद्धर्ममतिमारोप्य जपयज्ञहोमपुरश्चरणदानादिकार्यं समाचरन्ति भूम्यामस्याम् । अतो धर्मशास्त्रकारा निज निज धर्मशास्त्रे ग्रहणकाले धर्माचरणं कर्त्तुम् बहूनि वचनानि लिलिखुरितिशम् ।

श्रीश्रीनाथ झा, ज्यौतिषाचार्य्यः ।
[ धर्मसमाजसंस्कृतकौलेज, मुजफ्फरपुरम् ]

---

## संगृहीताः समाचाराः ।

लण्डननगरे राजशासकैर्नवीनं किमपि भारतभवनं निर्मीयतेस्म । अस्मिन् भवने भारतीयस्य हाईकमिश्नर अधिकारिकार्यालयः स्थापितो भवेत् । अस्य भवनस्य निर्माणाय ३२४००० स्वर्णदीनाराणां व्ययो जातः । गत जुलाईमासस्याष्टमे दिने श्रीमान् भारतचक्रवर्ती भवनस्यास्योद्घाटनं कृतवान् । तस्मिन् समये भारतसचिवोऽप्युपस्थितोऽभवदिति ।

जयप्राणदेशसेनापतिष्वन्यतमः लेफ्टिनण्ट् कमाण्डर-कुङ्गारिनामा आत्महत्यामकरोत् मईमासे । नौसेनाह्राससन्धिपत्रं मित्रत्रय्या यत्कृतम्, तदनुसारेण जयप्राणदेशनौसेनाया ह्रासो भविष्यतीति । स च देशस्यानिष्टावह इति च मत्वाऽनेन दुःखितेन देशभक्तेनात्महत्या कृता ।

ब्रिटिशराज्यशासकानां पजिप्टराज्यशासकानां च नवीनसन्धिपत्रनिर्माणार्थं मन्त्रिणां संलापो लण्डने यः प्रचलितोऽभूत्, तस्य भङ्गो जातः । बहवस्स-

न्धिनियमा उभयपक्षावलम्बिभिरङ्गीकृता अभूवन्। एकस्मिन्नेव विषये उभयपक्षावलम्बिनामभिप्रायभेदो जातः। स्वीडन्प्रदेशोऽद्य ब्रिटिशराज्यशासकानां वशे वर्तते, स पूर्वम् एजिप्टशासनान्तर्गतोऽभूत्। ब्रिटिशराज्यशासकास्तं प्रदेशं त्यक्तुं नेच्छन्ति। एजिप्टराज्यशासकाश्च स्वीयं स्वत्वं सर्वथा त्यक्तुं नेच्छन्ति। अत्रैवाभिप्रायभेदो जातः। तेन सन्धिसंलापस्य भङ्गो जातः। एजिप्टदेशीयसचिवा लण्डनं गतास्स्वदेशं प्रति निवृत्ता अभूवन्। ब्रिटिशराजशासकानां सर्वोऽपि प्रयत्नो व्यर्थो जातः।

अमेरिकादेशस्य दक्षिणभागे किमप्यस्ति विशालं काननम्। तत्र विविधजातीयास्तरवो विद्यन्ते। तेष्वेकजातीयात्तरोः क्षीरं स्रवति। तस्य तरोरायामः पञ्चषष्टिहस्तपरिमितो विद्यते। विशालशालस्य तस्य स्कन्धादुद्गताः शाखा दूरं दूरं विस्तृताः परितः शोभन्ते सुतराम्। तत्र वर्तिष्णुभिर्जनै 'र्दुग्धवृक्षः' इति सञ्ज्ञायते। तस्य मूलाच्छिखरं यावद्यत्र कुत्राऽपि कृतात्क्षतात्क्षीरधारा स्रवतीति केचनानुभविनो वदन्ति। माधुर्यं च तस्य दुग्धस्य पयस्विनीपयसा साम्यं भजते। अग्नावुष्णीकृतमपि नो विकृतिमायाति। नवनीतं ततो निस्सरति। नाऽपि तस्य दुग्धाद्विलक्षणो गन्धः।' गोः क्षीरमिव तज्जना व्यवहरन्ति। कतिपये डाक्टरमहोदयाः 'समस्तगुणा गोदुग्धतुल्या एव सन्ती' ति निर्णयन्ति। फलान्यपि तस्य तरोः परममधुराणि सन्ति। नयनमात्रैकाऽवगम्या च तदीया शोभा नहि वाग्वर्णनेनाऽनुमातुमपि शक्येत।

तादृशपरमरामणीयकशोभे सुविशालकानने सुमहानेको विषतरुरप्युपलभ्यते। तस्य विशालता पञ्चाशद्धस्तमिता विद्यते। शाखाश्च परितो विस्तृतास्तिर्यग्दूरङ्गताः परिशोभन्ते। वल्कलानि पाण्डराणि भवन्ति। तस्माद् दुग्धवर्णो रसोऽभिनवक्षतावस्थायां च्यवते। तमेव रसं रसमर्मज्ञा हालाहलरसं कथयन्ति। महामहान्तोऽपि गजादयो जन्तवः स्वल्पेनाऽपि तेन रसेन तत्कालं म्रियन्ते। तद्द्वीपनिवासिनो योद्धारः पुरुषा रणकाले तस्मिन्नेव रसे बाणाग्रभागानाप्लाव्य रिपुसमाजं प्रति प्रहिण्वन्ति। तत्र दिग्धैर्विशिखैः क्षतगात्राणां युद्धयमानानां पुरुषाणां नहि कथमपि सम्भाव्यते जीवनम्। तस्मात्तरोरेकयोजनान्तरे न खलु प्ररोढुमपि प्रभवन्त्युद्भिदः। न वा तत्र याता जीवा जीवन्ति। किं बहुना तावदन्तरे तडागसरिदादिसलिलान्तर्गता जलजन्तवोऽपि मीनमकरादयो न जीवितं धारयन्तीति जन्तुशून्यजलाशयैरवगम्यते।

---

व्याकरोति श्रुतिरपि महत्त्वमेतस्य। तद्द्वारैव ब्रह्मविष्णुमहेश्वरा देवर्षिपितृगणाश्च स्वस्वकार्यमर्हन्ति साधितुम्। जागतिकालौकिककर्त्तव्यकारणं तदेव। तद्भेदत्रयलक्षणं दिङ्मात्रं प्रदर्शितं गीतोपनिषदि यथा—

देवद्विज-गुरुप्राज्ञ-पूजनं शौचमार्जवम्।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते॥
अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्च यत्।
स्वाध्यायाभ्यसनञ्चैव वाङ्मयं तप उच्यते॥
मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते॥ इति॥ ३९॥

अथ किं स्वरूपं साधारणधर्मस्य चरमाङ्गं दानमित्युच्यते—

**परस्वत्वजनको व्यापारविशेषो दानम्॥ ४०॥**

स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पादको व्यापारो हि दानमित्युच्यते। साधारणधर्म-तृतीयाङ्गस्यैतस्याङ्गान्तरापेक्षया सुसाध्यत्वं बाह्यवृत्तिसाध्यत्वात् यज्ञतपोवत् साधनकाठिन्याभावाच्च। अत्र स्मृतिर्यथा—

स्वसम्बन्धमपाकृत्य यदन्यस्मै प्रदीयते।
तद्दानमिति सामान्यलक्षणं मुनयो विदुः॥
तत्रापि दत्तवस्तुभ्यः सम्बन्धं मानसं स्वतः।
सर्वथा क्षपयेद्यस्तु स वदान्यशिरोमणिः॥
अतीवदुष्करन्त्वेतत्कर्म प्रोक्तं मनीषिभिः।
यदपाक्रियते चित्त-सम्बन्धश्चिरसम्भृतः॥ इति॥ ४०॥

ननु कतिविधं दानमित्याह—

**तत् त्रिविधम्॥ ४१॥**

तद् दानं त्रिविधं तिस्रो विधा यस्य तत् त्रिप्रकारं भवति। अभयदान-ब्रह्मदानार्थदानभेदात्। तत्रेष्टोपासनापद्धतिं तत्त्वज्ञानं वा द्वारीकृत्य गुर्वाचार्याणां शिष्यजिज्ञासुभ्यो निर्भयमुक्तिपथप्रदर्शनोपदेश एवाभयदानम्, विद्यादानमेव ब्रह्मदानम्, अन्नवस्त्रभूमिकन्या-धनैश्वर्यादिदानञ्चार्थदानमिति। स्मर्यते चात्र—

दानमर्थस्य विद्याया अभयस्येति च द्विजाः।
इत्येवं त्रिविधं दानं मया पूर्वमुदीरितम्॥
भवत्यभयदानं तद् गुरुणा करुणावशात्।

संसारभयनाशाय सम्यग् यदुपदिश्यते ॥
संसारभयसंत्रस्त-जीवा गाम्प्रविभीषताम् ।
शक्ताः सद्गुरवस्तत्र भयं मुख्यं व्यपोहितुम् ॥
यस्मात् सर्वेऽभयं दातुं नैव शक्ताः क्षितौ जनाः ।
तस्मादनुपयोगित्वाद् दानमेतदुपेक्ष्यते ॥
विद्यादानञ्चार्थदानमालोच्येते ततोऽधुना ।
तत्र पूर्वं ब्रह्मदानापरपर्यायमुच्यते ॥
कायेन मनसाऽर्थेन विद्यावृद्धिमिहेच्छता ।
यद् दानं दीयते सम्यग् ब्रह्मदानं तदीर्य्यते ॥
स्थापनं पाठशालानां महाविद्यालयस्य च ।
दुर्लभप्राक्तनानर्घ्यपुस्तकानां प्रकाशनम् ॥
तथा विरचनं तेषां ग्रन्थानामुपयोगिनाम् ।
दानञ्च पुस्तकादीनां विद्यार्थिभ्योऽथ पाठनम् ॥
एवं लेखनशैलीनां हितबुद्ध्या प्रवर्त्तनम् ।
ज्ञेयान्येतान्यपि ब्रह्म-दानान्तर्भावितानि वै ॥
हस्त्यश्वरथवस्त्रान्नकन्यारत्नावनीगृहम् ।
दीयते श्रद्धया यत्र चेतनाचेतनात्मकम् ॥
धनैश्वर्यादिकं सर्वं दीयमानमथार्थिने ।
ऋषिभिः प्रोच्यते सम्यगर्थदानमिति स्फुटम् ॥ इति ४१ ॥

ननु स च धर्मः समग्रतया कतिविध इत्याह—

**स चतुर्विंशतिविधः प्रकृतितत्त्ववत् ॥ ४२ ॥**

प्रकृतेश्चतुर्विंशतितत्त्ववत् धर्मस्यापि चतुर्विंशतिभेदा भवन्ति, तस्य ब्रह्मशक्तिमहामायास्वरूपत्वात् । स्मर्यते चात्र—

साधारणस्य धर्मस्य वर्णयेऽङ्गानि साम्प्रतम् ।
आकर्ण्यतां भवद्भिश्च सावधानेन चेतसा ॥
चतुर्विंशतितत्त्वानां नूनं सन्त्यनुरूपतः ।
अङ्गानि पूर्णधर्मस्य चतुर्विंशतिरेव भोः ॥

तत्र अर्थदानं, ब्रह्मदानम्, अभयदानमिति दानत्रयम्, कायिकं तपः, वाचनिकं तपः, मानसिकं तप इति तपस्त्रयम्, नित्यं कर्म, नैमित्तिकं कर्म, काम्यं कर्म, आधिभौतिकं कर्म, आधिदैविकं कर्म, आध्यात्मिकं कर्मेति षड्

कर्माणि, असुरोपासना, देवर्षिपितृउपासना, अवतारोपासना, सगुणपञ्चोपासना, निर्गुणोपासना ( ब्रह्मोपासना ) मन्त्रयोगोपासना, हठयोगोपासना, लययोगोपासना, राजयोगोपासनेत्युपासनानवकम्, श्रवणं, मननं, निदिध्यासनमिति ज्ञानयज्ञत्रयम्, एवं सर्वसम्मेलनेन धर्मश्चतुर्विंशतिप्रकार इति ॥ ४२ ॥

अपि च—

प्रत्येकं त्रिविधं त्रिगुणात्मकत्वात् ॥ ४३ ॥

तमोरजःसत्त्वरूपत्रिगुणात्मकत्वात् प्रत्येकं धर्माङ्गं त्रिविधं भवति । अशेषद्वैतप्रपञ्चकारणभूताया मूलप्रकृतेस्त्रैगुण्यात्मकत्वात् सृष्टिधारकधर्मस्यापि तथात्वं स्वभावसिद्धम् । पूर्वोक्तचतुर्विंशतिविधानां धर्माङ्गानां प्रत्येकं सात्त्विकराजसिकतामसिकभेदतस्त्रिविधत्वेन साधारणधर्मस्य द्विसप्ततिविधत्वमवगन्तव्यम् । सुस्पष्टमिदं प्रत्येतव्यं यदत्रैव धर्मस्य द्वासप्तत्यङ्गेषु विश्वस्या अपि पृथिव्या धर्मोपधर्म-सम्प्रदायपन्थमतानि सर्वाण्यन्तर्भवन्ति । स्मर्यते चाप्यत्र—

सर्वत्र व्यापकादस्मात् सर्वजीवहितैषिणः ।<br>
धर्मात् सनातनादेव सर्वे धर्माः समुत्थिताः ॥<br>
अङ्गानि त्रीणि धर्मस्य दानं यज्ञस्तपस्तथा ।<br>
स्कन्धरूपाणि धर्मस्य शाखिनः पावनानि वै ॥<br>
दानञ्चापि त्रिधा प्रोक्तं विद्यार्थाऽभयदानतः ।<br>
तत्रापि गुणभेदेन नवधा दानमीर्य्यते ॥<br>
एवं तपस्त्रिधा ज्ञेयं कायिकं वाचिकं तथा ।<br>
मानसञ्चाथ गुणतः प्रत्येकं त्रिविधं पुनः ॥<br>
यज्ञधर्मविभेदास्तु मुनीनां बहवो मताः ।<br>
कर्मज्ञानोपासनाख्या भेदा मुख्यास्त्रयः स्मृताः ॥<br>
कर्मयज्ञस्य षड्भेदा नित्यं नैमित्तिकन्तथा ।<br>
काम्यमाध्यात्मिकञ्चैवाधिदैवञ्चाधिभौतिकम् ॥<br>
सत्त्वादिगुणयोगेन भेदास्तत्रापि पूर्ववत् ।<br>
अतोऽष्टादशधा कर्म प्रत्येकं गुणयोगतः ॥<br>
तथैवोपासनायज्ञो बहुधा मुनिभिर्मतः ।<br>
परं मुख्यप्रभेदास्तूपासनापद्धतेरिमे ॥<br>
उपास्तिर्ब्रह्मणस्त्वाद्या द्वितीया सगुणस्य च ।<br>
तृतीया स्मर्य्यते लीलाविग्रहोपासना बुधैः ॥<br>
चतुर्थी पितृदेवर्षिगणानामस्त्युपासना ।

अन्तिमा क्षुद्रदेवानां प्रेतादीनां विधीयते ॥
अन्येऽपि तस्याश्चत्वारो भेदाः साधनपद्धतेः ।
तत्रादिमो मन्त्रयोगः स्थूलध्यानैकसाधनः ॥
द्वितीयो हठयोगः स्याज्ज्योतिर्ध्यानैकसाधनः ।
लययोगस्तृतीयोऽसौ बिन्दुध्यानविधानकः ॥
राजयोगोऽन्तिमस्तत्र ब्रह्मध्यानं विधीयते ।
भेदा नवानामप्येषां गुणतः सप्तविंशतिः ॥
श्रवणं मननञ्चैव निदिध्यासनमेव च ।
त्रिधैवं ज्ञानयज्ञोऽपि नवधा स्याद्गुणाश्रयात् ॥
इत्यन्वशासु धर्मस्य मुख्यान् भेदानशेषतः ।
चतुर्विंशतिसंख्याकान् मुनयस्तत्त्वदर्शिनः ॥
एतेषामपि धर्माङ्गभेदानां गुणभेदतः ।
भेदा द्विसप्ततिर्भूयो भवन्तीति विभाव्यताम् ॥

अन्यच्च—

अहमेवास्मि भो देवाः ! धर्मकल्पद्रुमस्य च ।
बीजं मूलं तथाऽऽधारो नात्र कश्चन संशयः ॥
स्कन्धस्तस्य द्रुमस्याऽऽस्ते धर्मो वै विश्वधारकः
मुख्यं शाखात्रयश्चास्य यज्ञो दानं तपस्तथा ॥
ब्रह्मार्थाभयदानानि देवास्त्रैगुण्ययोगतः ।
दानस्य चोपशाखाः स्युर्नवधा नात्र संशयः ॥
तपोऽपि त्रिविधं ज्ञेयं कायवाणीमनोभवम् ।
त्रैगुण्ययोगेनास्यापि लघुशाखा नवासते ॥
उपशाखा अनेकाः स्यु र्यज्ञशाखासमुद्भवाः ।
काम्याध्यात्माधिदैवाधिभूत–नैमित्यनित्यकाः ॥
कर्मयज्ञप्रशाखाया भेदास्त्रैगुण्ययोगतः ।
त एवाष्टादशास्या हि प्रशाखाः सुमनोहराः ॥
पितृदेवर्षिवृन्दानामवतारगणस्य च ।
पञ्चानां सगुणब्रह्मरूपाणां निर्गुणस्य वै ॥
ब्रह्मणोऽपि सुरौघाणामुपास्तेः पञ्च भक्तितः ।
मन्त्रो हठो लयो राजाभिधानो योगतो ध्रुवम् ॥
अस्या भेदाश्च चत्वारो भेदा एवं नवासते ।

एते भेदा नवैवाहो देवास्त्रैगुण्ययोगतः ॥
उपास्तेरुपशाखाः स्युः संख्यया सप्तविंशतिः ।
श्रवणं मननं चैव निदिध्यासनमेव च ॥
त्रयोऽमी ज्ञानयज्ञस्य भेदास्त्रैगुण्ययोगतः ।
नवधा सम्विभक्तास्ताः प्रशाखा हि नवासते ॥
द्विसप्तत्या प्रशाखाभिः शाखाभिश्चैवमेव भोः ।
निजानां ज्ञानिभक्तानां धर्मकल्पद्रुमात्मना ।
विराजे स्वान्तदेशेऽहं निर्ज्जरा ! नात्र संशयः ॥ इति ॥ ४३ ॥

ननु धर्मस्य कियन्ति उपाङ्गानि तत्राह—

**उपाङ्गानन्त्यं प्रकृतिपरिणामानन्तभावात् ॥ ४४ ॥**

साधारण-धर्मस्य द्वासप्तत्युपाङ्गान्युपवर्ण्य तेषां विस्तृतस्वरूपमभिधातुं सूत्रयति महर्षिः सूत्रकारः । त्रिगुणात्मिकायाः प्रकृते र्गुणत्रयवैषम्यात् परिणामानामसंख्यत्वात् धर्मोपाङ्गानामप्यपरिमेयत्वं सम्भवति । स्मृतिरप्यत्र—

धर्मकल्पद्रुमस्यास्य पत्रपुष्पात्मकान्यहो ।
उपाङ्गानि न संख्यातुमर्हाणि कैरपि क्वचित् ॥
विचित्राणि मनोज्ञानि सन्ति तानि ध्रुवं सुराः ।

धर्माङ्गानां तप आदीनामङ्गभूतानि असंख्यानि अहिंसाधृतिक्षमादीनि धर्मोपाङ्गानि ज्ञेयानीति ॥ ४४ ॥

ननूपाङ्गानि किमात्मकानीत्याह—

**त्रिगुणात्मकान्येतानि ॥ ४५ ॥**

विश्वव्यापकस्य साधारणधर्म्मस्यासंख्येयत्वं संसाधितं पुनरपि तस्यैवालौकिको विस्तारोऽपि विविच्यते, एतानि उपाङ्गानि त्रिगुणस्वरूपाणि भवन्ति । प्रकृतिविकारजन्यनिखिलदृश्यप्रपञ्चस्य त्रिगुणात्मकत्वात् साधारणधर्मस्यानन्तोपाङ्गानां मध्ये सर्वेषामेव त्रिगुणभेदभिन्नत्वेन त्रिविधत्वं सुस्पष्टं विज्ञेयमिति॥४५॥

उपाङ्गे विशेषमाह—

**उपाङ्गमेकमङ्गस्याङ्गानां वा भावानन्त्यात् ॥ ४६ ॥**

भावस्यानन्त्यात् एकं धर्मोपाङ्गं अन्यस्य धर्माङ्गस्य धर्माङ्गानां वा उपाङ्गं भवितुमर्हति । त्रिगुणभेदत उपाङ्गानामानन्त्यं पूर्वसूत्रे प्रदर्श्य प्रकृतसूत्रे भावमवलम्ब्य पुनरपि तदनन्ततां प्रतिपादयति । सर्वगसकलजीवहितकर-साधारण-

धर्मस्यैकमुपाङ्गमपि भावानामानन्त्यमवलम्ब्य अन्यस्याऽप्युपाङ्गं सम्भवति एवमेकमप्युपाङ्गं बहूनामप्यङ्गानामुपाङ्गं भवति । पूर्वं विस्तरशो वर्णितस्य भावविज्ञानस्यावलम्बनेन उपाङ्गानाम् एवं विस्तारः स्वभावसिद्धः । स्मर्यतेऽत्र—

> उपाङ्गान्यपि धर्मस्य वर्त्तन्ते भूरिशो ध्रुवम् ।
> देशकालादिवैचित्र्यादुपाङ्गं ह्येकमेव च ॥
> अङ्गानां त्वनेकेषामुपाङ्गं स्यादसंशयम् ।
> अत्यन्तं वर्त्तते विज्ञाः ! धर्मस्य गहना गतिः ॥ ४६ ॥

प्रसङ्गोपात्तां तेषां शक्तिं विविनक्ति ।

## शक्तिमन्त्यग्निस्फुलिङ्गवत् ॥ ४७ ॥

साधारणधर्मस्याङ्गोपाङ्गादिना भेदेऽनेकत्वं समाश्रिते तत्र भेदे शक्तितारतम्यमस्ति न वेति शङ्कां समाधातुमेवास्य सूत्रस्यावतारो महर्षिणा विहितः।

अग्निकणवदङ्गोपाङ्गानि शक्तिमन्ति भवन्ति । अतिशयिता शक्तिरस्ति येषामिति विग्रहे अतिशायने मतुप् तानि विलक्षणपूर्णशक्तिविशिष्टानीत्यर्थः । यथा हि पावकस्फुलिङ्गा अनुकूलपवनतृणकाष्ठादियोगतः सर्वं भस्मसात् कर्तुमर्हन्ति, तथैव धर्माङ्गोपाङ्गान्यपि समुचितदेशकालपात्रसेवितानि अभ्युदयस्य तु का कथा निःश्रेयसकराणि अपि भवन्ति । एवं धर्मस्य प्रत्येकमप्यङ्गमुपाङ्गञ्च पूर्णशक्तिमदिति निःसन्दिग्धम् ॥ ४७ ॥

प्रसङ्गोपात्तां द्वितीयां शङ्कां समाधत्ते ।

## विशेषशक्यमशक्यं साधारणेन ॥ ४८ ॥

ननु विशेषसाधारणयोर्धर्मयोः पृथक्त्वे धर्म्माङ्गोपाङ्गानां शक्तिसाम्ये च सिद्धे तयोः कार्य्यमपि समानमेव भवितुमर्हतीत्यादिशङ्कामपनुदति सूत्रेणानेन महर्षिर्भगवान् सूत्रकारः । विशेषधर्मेण यत् कर्त्तुं शक्यं साधारणेन न तदिति । तत्र दृष्टान्तः । ब्राह्मणत्वं, संन्यासित्वं, वर्णधर्मरजोवीर्यशुद्धिरित्यादिकं मानवो विशेषधर्मेणैवाधिगन्तुं शक्नोति न साधारणेन कथमपीति । साधारणधर्मानुष्ठानेन पूर्णोन्नतिमुपेतोऽपि पुमान् विशेषधर्मजन्याधिकारं न कदाचिदपि लब्धुं शक्नोति, इति सुनिश्चितम् । अपि च विशेष-धर्मपालिनी सती स्त्री पञ्चमलोकं प्राप्नुवती पापिनमपि निजपतिं तत्र नयति । किन्तु असती योगिनी तपस्विनी ज्ञानवती निःश्रेयसमधिगच्छन्त्यपि सतीत्वसुलभविशेषशक्तिं नैव लभते इति स्फुटं विशेषसाधारणधर्मयोरन्तरम् । इत्येवं वर्णधर्माश्रमधर्म-सतीधर्मादिविशेषधर्माणां किमप्यनिर्वचनीयमेव माहात्म्यम् ॥ ४८ ॥

प्रसङ्गतो विशेषधर्मस्य गौरवमुपसंहरति—

**गरीयस्त्वमतो विशेषधर्मस्य ॥ ४९ ॥**

अतो विशेषेण शक्यस्य साधारणेनाशक्यत्वाद्धेतोर्विशेषधर्मस्य गरीयस्त्वं बोध्यम्। अतिशयेन गुरुः गरीयान् तस्य भावः। अतिशयेन गुरुत्वमित्यर्थः। असाधारणधर्माऽपद्धर्म-साधारणधर्म-विशेषधर्मरूपेण चतुर्धा विभक्ते मानवधर्मे प्रथमद्वितीययोः क्रमशो विशेषाधिकारसम्पन्नालौकिकमहिमभि विंपद्ग्रस्तैश्चानुष्ठेयत्वान्न तत्र सर्वजनीनसार्वभौमोपयोगिता। किन्तु तृतीयचतुर्थयोः समानतया सर्वजनीनसार्वभौमोपयोगिता सर्वथाऽस्तीति निःसन्दिग्धम्। तत्र परस्परं महदन्तरमिदमस्ति यद् साधारणधर्मेण सम्पादनीयं सर्वमेव कार्य्यं विशेषधर्मेणापि स्वाधिकारिणे सम्पाद्यते। परन्तु विशेषधर्मानुष्ठानेन यादृशं यावन्तं वाऽधिकारं तदधिकारी पुरुषः समश्नुते, न तावन्तं तादृशं वाऽधिकारं साधारणधर्मानुष्ठानेन कदापि कोऽपि प्राप्तुमर्हति। इत्येवं तृतीयचतुर्थयोः सत्यपि सार्वजनिकहिताधायकत्वे पूर्वोक्तसूत्रप्रतिपादनेन चतुर्थस्यैव सर्वप्राधान्यं सिध्यति। वेदे शास्त्रे चास्यैव वर्णनबाहुल्यमवलोक्यत इति ॥ ४९ ॥

तर्हि विशिष्टसाधारणयोः शक्तेः पूर्णतायामपि भेदः स्यादिति शङ्कां समाधत्ते—

**पूर्णशक्तिमत्त्वं तूभयोः ॥ ५० ॥**

उभयो र्विशेषसाधारणधर्मयोः पूर्णशक्तिमत्वं भवत्येव। पूर्णा शक्तिरस्ति ययोस्तयोर्भावस्तत्त्वं, पूर्णशक्तियुक्तत्वमित्यर्थः। ननु विशेषधर्मस्य प्राधान्ये वेदशास्त्रबहुवर्णनीयत्वे च सति साधारणधर्मस्याल्पशक्तिमत्वमिति चेन्न, द्वयोरेवाभ्युदयनिःश्रेयसप्रदाने शक्तितारतम्यविरहात् पूर्णशक्तिविशिष्टत्वम्।

तथा हि—कोऽप्यधिकारी साधारणधर्मानुष्ठानप्रभावतोऽभ्युदयमधिगच्छन्निःश्रेयसमधिगन्तुमधिकारितां गच्छति। एवं विशेषधर्म्मोऽपि स्वाधिकारिणं यथावत्स्वानुष्ठातारम् ऐहलौकिकपारलौकिकाभ्युदयमुपप्रयच्छन् क्रमशोऽवश्यं निःश्रेयसमप्यर्पयति। अत उभयोरेव सार्वजनिकोपकारिता समानशक्तिमत्ता च बोद्धव्येति ॥ ५० ॥

मानवधर्मनिरूपणानन्तरं विशेषधर्मप्रसङ्गतः पुरुषधर्मं लक्षयति—

**यागप्रधानो धर्मः पुरुषस्य कैवल्योपयोगित्वात् ॥ ५१ ॥**

पुरुषस्य धर्मो यागप्रधानो भवति। यागः प्रधानं यत्र स यज्ञमुख्य इत्यर्थः। कुतः कैवल्योपयोगित्वात्। केवलस्यभावः कैवल्यम् एकाकिता मोक्ष इति यावत्।

तस्योपयोगी तस्य भावस्तत्वं, तस्मात्। पुरुषधर्मस्य अपवर्गोपकारित्वात्, ज्ञान-साक्षात्सम्बन्धित्वात्, मोक्षसन्निधानाद्वा, विशेषधर्मत्वम्। मानवसृष्टौ स्त्रीपुरुष-विभागद्वयसत्वात् तत्र येन विशेषधर्मेण पुरुषोऽभ्युदयनिःश्रेयसावधिगच्छति तमेव विशेषधर्मं वर्णयति। स्त्रीपुरुषविभागद्वयसम्बलितायां मानवसृष्टौ स्त्रीणां कैवल्याधिगमे यथा पुरुषत्वप्राप्त्यपेक्षा न तथा पुरुषाणां तेषान्तु स्वा-तन्त्र्येण कैवल्योपयोगित्वात् तद्धर्मस्य यज्ञप्रधानत्वम्। साधारणधर्मस्याङ्गत्रये यज्ञमात्रमाश्रित्याचार्य्यैः पुरुषधर्मस्य विहितत्वम्। पुरुषत्वजातेः कैवल्येन सह सम्बन्धाधिक्यम्, अपरतश्च साधारणधर्मस्य त्रिषु भेदेषु दानतपसो र्ज्ञानेन साक्षा-त्सम्बन्धराहित्यं। यज्ञस्य तु कैवल्यप्रदात्रा ज्ञानेन स्वाभाविकः सम्बन्धोऽभि मतः। यज्ञधर्मो हि कर्मोपासनाज्ञानात्मक-काण्डत्रयविभक्त इत्युदीरितं प्रागेव। सुतरां ज्ञानस्य यज्ञेन पुरुषेण च कैवल्यस्य नैकट्यसम्बन्धात् तत्प्रदायकयज्ञस्यापि पुरुषधर्मेण साक्षात् सम्बन्धभागित्वात् "यज्ञप्रधानतामेवं नृणां धर्म इति श्रुति" रितिस्मरणाच्च मोक्षोपयोगि-यागमुख्यः पुरुषधर्मः ॥ ५१ ॥

विशेषधर्मप्रसंगतो नारीधर्मस्वरूपमाह

**तपःप्रधानो नार्याः कैवल्यानुपयोगित्वात् ॥ ५२ ॥**

नारीधर्मस्यापि विशेषधर्मान्तर्गतत्वात्—तस्याः धर्मः तपःप्रधानः, तप एव प्रधानं मुख्यं यत्र सः तपोमुख्यं भवति। कुतः कैवल्यानुपयोगित्वात्। उपयोगोऽस्यास्तीति उपयोगी तस्य भाव उपयोगित्वं कैवल्यस्य नोपयो-गित्वं तस्मात् साक्षान्मोक्षानुपयोगित्वादित्यर्थः। नारीधर्मो विशेषधर्मा-न्तर्गतः। सृष्टिस्वाभाविकप्रवाहे स्वतन्त्ररूपतो वक्ष्यमाणलक्षणरूपा द्विविधा धारोपलक्ष्यते स्त्रीधारा पुरुषधारा चेति। स्त्रीधारा हि प्रकृतिप्रधाना भवति, पुरुषधारा पुरुषप्रधाना। उभे अपि ते जड़प्रधानायामुद्भिज्जयोना-वन्योन्याभिन्ने प्रथमसृष्टिविकाशं प्राप्नुतः। यतो हि आदिसृष्टेरादिपुरुषस्य परमात्मनो महामायायाः प्रकृतेश्च सम्बन्धतः प्रारभ्यमानत्वात् जीवानां प्रथमो-त्पत्तौ तयोर्द्वयोः सत्ताया विद्यमानत्वस्यावश्यकत्वम्। उद्भिज्जीवेषु प्रायः पुष्पेष्वेव स्त्रीपुरुषयोः स्वतन्त्रशक्तेः प्रत्यक्षत एव विद्यमानतोपलब्धेः, अनयोस्त-त्रैक्येऽपि पार्थक्यमस्त्येव, पुष्पेषु स्त्रीपुरुषयोः शक्तेः, बीजेषु च स्त्रीपुरुषरूपस्य दलद्वयस्य प्रत्यक्षतो विद्यमानत्वात्। क्वचन वृक्षेष्वपि विभागद्वयमुपलभ्यते। यतस्तयोः सत्वे एवोद्भिज्जसृष्टिप्रवाहस्य प्रवाहितत्वम्। स्वतन्त्ररूपावेतौ स्त्रीपुरुषात्मकसृष्टिप्रवाहौ क्रमशः उद्भिज्जतः स्वेदजामण्डजां साधारण-जरायुजां च योनिमासादयन्तो मनुष्ययोनिमधिगत्य नवनवं संस्कारमर्ज-

यन्तौ निजस्वरूपपार्थक्यप्रदर्शनपुरःसरं निजसहजसंस्कारानुसारमभ्युदयार्थं प्रवर्त्तेते। संस्कारविरुद्धं कर्म न सम्भवति। मानवयोनिप्राप्तिं विना जीवोऽस्वतन्त्रो न नवीनं संस्कारमर्जयति। अतः साहजिकस्य कर्मणोऽपरिवर्तनीयत्वात् पुरुषः पुंस्त्वधारायां स्त्रियश्च नारीधारायां विवर्द्धमानौ शश्वत्संसारचक्रं चालयतः। अपरतश्च अद्वैतसिद्धिं विना न कैवल्याधिगतिः। अद्वैतसिद्धिश्च परमपुरुषस्य स्वरूपस्थितिरूपैव। अत एव कैवल्यप्राप्तये पुरुषधाराश्रितो जीव आत्मज्ञानेन स्वस्वरूपोपलब्धिमेवावलम्बते। स्त्रीधारामाश्रितश्च जीवः प्रथमं पुरुषतन्मयतामधिगत्य पुरुषधारामेत्यात्मज्ञानेनाद्वैतभावमयं स्वस्वरूपमवलम्बते। एतेनैतत् स्फुटं प्रतीयते यद् इमे स्वतन्त्रे पृथग् विभिन्ने स्त्रीपुरुषधारेऽनादिप्रवाहे प्रवहतः। स्त्रीजातेश्च स्वस्वरूपोपलब्ध्यै पुरुषधाराश्रयणस्यावश्यकत्वात् न साक्षान्मोक्षाधिकारः। अतो हि स्त्रीधारायां प्रवहतो जीवस्यान्यधाराश्रयणं यदावश्यकं तदा तस्य कृते तपोधर्माश्रयणमप्यावश्यकमेव। तपोधर्मश्च नारीजातिकृतेऽसाधारणकार्य्यसम्पादक इत्यभिहितं प्राग्। अतः सुतरां नारीधर्मो न साक्षान्मोक्षोपयोगी तस्मादसौ तपःप्रधानः। स्मर्यते चात्र "तपःप्रधानतामेति नारीधर्मो यतो मुने!" इति ॥ ५२ ॥

ननु ततः किमायातमित्याह—

ततः स्त्रीपारतन्त्र्यम् ॥ ५३ ॥

सृष्टेरादित आरभ्य स्वाभाविकसंस्कार-सहजकर्मानुसारं स्त्रीपुंसधारे पृथक् प्रवहत इत्येवं सृष्टेः प्रकृतिपुरुषात्मकतया उभयत्रोभयोः सम्बन्धसत्वेऽपि स्वभावत एव पुरुषधारायां पुंसः स्त्रीधारायाश्च प्रकृतेः प्राधान्यं सिद्धम्। अपरतश्च नार्य्या धर्मस्य तपःप्रधानत्वात् तस्याः शरीरमनसोः पतिपरायणत्वमपि धर्मसिद्धम्। अतो नार्य्याः स्वातन्त्र्यं धर्मविरुद्धम्। सृष्टेः कारणगवेषणयेदमायाति यत् परमपुमान् स्वाधीनो निःसङ्गस्तथा चेतनस्वरूपः। मूलप्रकृतिश्च जडा संसर्गवती पराधीना। तत्कार्य्यरूपे सृष्टिप्रवाहेऽपि 'कारणगुणाः कार्य्यगुणानारभन्ते' इति नियमात् नार्य्या अपि पुरुषाधीनत्वं पारतन्त्र्यञ्च सिध्यति। यथाह स्मृतिः—

> अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वै र्दिवानिशम्।
> विषयेषु च सज्जन्त्यः संस्थाप्या आत्मनो वशे॥
> पिता रक्षति कौमारे भर्त्ता रक्षति यौवने।
> पुत्रश्च स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति॥

'बाल्ये पितुर्वशे तिष्ठेत् पाणिग्राहस्य यौवने ।
पुत्राणां भर्त्तरि प्रेते न भजेत् स्त्री स्वतन्त्रताम् ॥ इति ॥ ५३ ॥

इदानीं पुरुषसम्बन्धतः सिद्धान्तमाह ।

स्त्रैणस्य पापसम्बन्धित्वमतः ॥५४॥

अतो हेतोः स्त्रैणस्य स्त्रीजितस्य स्त्रीतन्त्रस्येति यावत् पापसम्बन्धित्वं भवति। पापस्य सम्बन्धोऽस्यास्तीति पापसम्बन्धी तस्य भावः। पापयुक्तत्वमित्यर्थः। प्रकृतिनियमतः पुरुषस्य स्वाधीनत्वे नार्य्याश्च पराधीनत्वे सिद्धे, पुरुषस्य साहजिकोऽयं धर्मो यत् स्वाधीनः स स्त्रियं स्ववशे विदध्यात्। इतो वैपरीत्ये पुरुषस्य स्त्रैणयेऽधार्मिकत्वम्। यतो हि स्वस्याभ्युदयसम्पादकतायां स्वयमेव स तेनान्तरायं समुपार्जयति। पुरुषस्य स्त्रैणं स्मृतिष्वपि बहुशो विगर्हितम्। पराधीनत्वधर्मविशिष्टायाः स्त्रियः स्ववशे स्थापनमेव पुरुषस्योचितम्। तस्य स्वाधीनधर्मत्वात्। अन्यथा स्वयं स्वधर्मस्य बाधकत्वात् स्त्रैणोऽधार्मिको भवति। स्मर्यते च—

अवीरस्त्रीस्वर्णकारस्त्रीजितग्रामयाजिनाम् ।
एषामन्नं भोक्तव्यं सोमविक्रयिणस्तथा ॥

पुरुषस्य स्वातन्त्र्यमार्य्याश्च पराधीनत्वं दाम्पत्यधर्मपालने हेतु र्न तूच्छृङ्खलत्वे ॥ ५४ ॥

ननु मनुष्यत्वेनैकरूपयोः स्त्रीपुरुषयोः कथं धर्मभेद इत्याह—

द्वे धारे स्वतन्त्ररूपत्वात् ॥ ५५ ॥

नारीधर्मस्य वैलक्षण्यविज्ञानं भगवान् महर्षिः सूत्रकारो ब्रूते—तत्सृष्टिकालादेव स्त्रीधारा पुरुषधारा चेति द्वे धारे, द्वौ प्रवाहौ, स्तः स्वतन्त्ररूपत्वात्। स्वतन्त्रं रूपं, यस्य तस्य भावः स्वतन्त्ररूपत्वं तस्मात्। सर्गनिदानभूतयोः प्रकृतिपुरुषयोः सत्ताद्वयात्मकत्वात् तत्कार्यरूपायाः सृष्टेर्धाराद्वयात्मकता विज्ञानसिद्धा। धाराद्वयमारुह्य जीवानां क्रमोन्नतिरभ्युदयोऽपवर्गप्रकारश्च पूर्वमेवादीरितः। स्त्रीपुरुषयो राध्यात्मिकाधिदैवाधिभौतिक-पार्थक्यं वेदसम्मतम्। स्मर्यते च—

द्विधा कृत्वाऽऽत्मनो देहमर्द्धेन पुरुषोऽभवत् ।
अर्द्धेन नारी तस्यां स विराजमसृजत् प्रभुः ॥ ५५ ॥

ननु स्त्रीधर्मस्य कैवल्यानुपयोगित्वे स्त्रीधारा कदाचिदपि कैवल्याधिकारिणी न स्यादित्याह—

स्त्रीधारा पुंधारामयी कैवल्याधिकारिणी ॥ ५६ ॥

स्त्रीपुंसधारयोः पार्थक्ये मूलप्रकृतिधर्मसमूहस्य स्त्रीधारायामेव विद्यमानत्वात् स्त्रीजातेः पूर्णोऽभ्युदयो निःश्रेयसञ्च कथं सम्भवतः ? पराधीनायाश्च तस्या मोक्षोऽसम्भव एवेत्यादि शङ्कामपनुदति । स्त्रीधारा नारीशरीरधारणात्मकप्रवाहमयी पुंधारामयी पुरुषशरीरधारणात्मकप्रवाहमयी सती कैवल्याधिकारिणी भवति । केवलस्य भावः कैवल्यं मोक्षः, अधिकारः सामर्थ्यं सोऽस्यास्तीति अधिकारिणी, कैवल्यस्याधिकारिणी मोक्षाधिकारिणीति यावत् । स्त्रीशरीरविशिष्टो जीवः पुरुषतन्मयताविधायकेन सतीत्वधर्मबलेन उन्नतपुंशरीरमेव प्राप्य अद्वैतभूमावारुह्यात्मज्ञानबलेन कैवल्यमधिगच्छतीति भावः । अयमेव नारीधर्मे विशेषो यत् कमप्यधिकारमाश्रिता नारी प्रबलसतीत्वधर्मप्रभावतो द्रुतमेवोन्नतपुरुषयोनिमासादयितुमर्हति । इत्येवं तस्याः पराधीनत्वेऽपि सर्वाभ्युदयनिःश्रेयसोपलब्धौ पुरुषापेक्षया महत्सौकर्य्यम् । वर्णाश्रमधर्मानुष्ठानजनितक्रमोन्नतिः पुरुषाणामेव न नारीणां, तासां केवलं सतीत्वेनैव मोक्षाधिगमत्वात् । सतीत्वस्य च नीचवर्णयाऽपि स्त्रिया पालनीयत्वात् । पुरुषाणां क्रमोन्नत्यपेक्षया स्त्रीणां मोक्षे सौकर्य्यात् नारीजातेः पारतन्त्र्यधर्माश्रयणमवलोक्य स्त्रैणा एव पुरुषाः स्वादूरदर्शितया शङ्किता भवन्ति । वस्तुतस्तु नारीजातेरिदं शास्त्रोक्तास्वातन्त्र्यतपोधर्मानुष्ठानात्मकं सतीत्वं भूषणमेव न तु दूषणमिति ॥ ५६ ॥

प्रसङ्गतः शक्तिः कतिधेत्याह—

शक्तिर्द्विविधाऽऽकर्षणविकर्षणभेदात् ॥ ५७ ॥

आकर्षणमाकृष्टिः स्वसमीपवर्त्तिकरणं, विकर्षणं विकृष्टिः । आकर्षणं च विकर्षणं च तयोर्भेदात् शक्तिर्द्विधा । द्वे विधे यस्याः सा द्विप्रकारा भवति । पूर्वविज्ञानदार्ढ्याय विज्ञानं वर्णयति । जगतोऽस्य स्थूलसूक्ष्म-प्रपञ्चानां सर्वेष्वेवाङ्गेषु आकर्षणविकर्षणात्मिका द्विविधा शक्तिरुपलभ्यते । स्थूलप्रपञ्चे च परमाणुत आरभ्य ग्रहोपग्रहान्तेषु अनयोरेव शक्त्योः कार्यं स्फुटं प्रतीयते । परमाणुमारभ्य ब्रह्माण्डं यावत् सर्वत्रैवाकर्षणविकर्षणे विलसतः । एकेन सृष्टिदशायां रजोगुणसाहाय्येन परमाणव आकृष्यन्तेऽन्येन लयकाले तमःसाहाय्येन विकृष्यन्त इत्येताभ्यामेव सर्वपदार्थानामाविर्भावतिरोभावौ सम्पाद्येते । एकस्यैवाश्मनः काष्ठस्य वा परमाणुपुञ्जाः तदुत्पत्तौ परस्परं संगत्य दृढाः सम्पद्यन्ते, सैव तस्याश्मनः काष्ठस्य वा राजसिकावस्था अस्यामेवावस्थायां तत् वर्द्धते । यदा तयोस्तामसिकः परिणामो भवति तदा तयोर्मिलिताः परमाणवः

परस्परं विभिद्यन्ते । ते चाश्मकाष्ठे स्वस्वरूपतश्च्युते विनश्यतश्च । एकब्रह्माण्डस्यापि ग्रहोपग्रहाणामीदृश्येवावस्थोहनीया । ग्रहोपग्रहाणां सृष्टिदशायां परमाणवः परस्परं वियुज्य ब्रह्माण्डस्यैव प्रलयं संसाधयतः । स्थूलस्येदमुदाहरणम् सूक्ष्मस्येतदाह-अन्तःकरणेऽपि तद्वृत्तिरूपौ रागद्वेषावाकर्षणविकर्षणरूपौ भवत इति । स्मर्य्यते चात्र—

सम्बध्येतेऽथ शक्ती द्वे आकर्षणविकर्षणे ।
दिवौकसो रागमूला शक्तिराकर्षणात्मिका ॥
भवद्भिरवगन्तव्या समुद्भूता रजोगुणात् ॥
विकर्षणाख्या या शक्तिरपरा द्वेषमूलिका ।
अवधार्य्या भवद्भिः सा समुत्पन्ना तमोगुणात् ॥
आभ्यां द्वाभ्यां हि शक्तिभ्यां ब्रह्माण्डं निखिलं तथा ।
पिण्डं समस्तमाच्छन्नं सत्यमेतद्वदामि वः ।
एतच्छक्तिद्वयं ह्यास्ते मयि नैवास्म्यहं तयोः ॥
वलाच्छक्तिद्वयस्यास्य कर्मजातमथाखिलम् ।
सम्विभक्तं द्विधा देवाः ! उत्तरोत्तरवर्द्धकम् ॥
सृष्टे द्वन्द्वात्मिकाया मे ऽवाहं वाहयत्यहो ॥ ५७ ॥

शक्तिद्वयविज्ञानं विवरीतुकामो सूत्रयति—

## तत्राकर्षणं नार्य्या विकर्षणं पुंसः ॥ ५८ ॥

आकर्षणविकर्षणात्मकशक्तिद्वयव्याप्तमेवेदं चराचरं जगत् । तत्र नारीशरीरे आकर्षणस्य पुरुषकाये च विकर्षणस्य विद्यमानत्वान्नार्य्या आकर्षणशक्तिस्वरूपत्वम्, पुरुषस्य च विकर्षणशक्तिस्वरूपत्वम् । एवञ्च तयोरधिकारस्य स्वधर्मस्य च पार्थक्ये नाणीयानपि सन्देहावसरः । स्त्रियाश्चाकर्षणशक्तिरूपत्वात्सृष्टिप्रपञ्चे प्राधान्यम् । आकर्षणशक्तितः सर्गक्रिया विकर्षणशक्तितो विलयनक्रियेति पूर्वमेव स्फुटं प्रतिपादितम् । पुरुषश्चैकतो मिथुनीभावमुपेत्य सन्तानात्मना नारीशरीरे प्रविश्य स्वविलयननिदानतामाश्रयति । तत्रैवापरतो नारी पुरुषशक्तिमाकृष्य सृष्टिनिमित्तत्वमधिगच्छतीत्यादि बहुशः स्मृतिशास्त्रेष्वप्युदीरितम् ।

आकर्षणस्वरूपं हि शरीरंयोषितामिह।तथा विकर्षणं नृणां शरीरं स्यात् स्वरूपतः ।

श्रुतिश्च—"आत्मा वै जायते पुत्रः अङ्गादङ्गात् सम्भवसि हृदयादधिजायसे आत्मा वै पुत्रनामासि त्वं जीव शरदां शतम्" ॥ ५८ ॥

प्रसङ्गोपात्तां शङ्कामपनुदति—

**निःश्रेयसं तत्समन्वये ॥ ५६ ॥**

तयोः समन्वयो यस्मिन् तत्, तस्मिन् सति निःश्रेयसं भवतीत्यर्थः। अर्थात्-तमोरजोरूपयोराकर्षणविकर्षणयोः समन्वयस्थानीये सत्त्वगुणसमुद्रेके मोक्षोऽधिगम्यत इति।

ननु सृष्टिप्रलयकर्त्र्योरेव शक्त्योः स्त्रीपुंसयो विद्यमानत्वात् स्थित्यभ्युदयनिःश्रेयसादीनामवसराभावे सिद्धे दाम्पत्यसम्बन्धादितः कथं मोक्षाधिगतिसम्भवः ? उच्यते-यथा रजस्तमःपरिणतमनो रागद्वेषयोः सम्प्रलीनयोः सत्त्वसमुद्रेकेण योगिराजो द्वन्द्वातीतो भूत्वा कैवल्यपदमश्नुते, तथैव सोऽत्रापि बाह्य-विषयात्मके जगति योगिराड् ऊर्ध्वरेता दाम्पत्यसम्बन्धसम्बलितयोराकर्षणविकर्षणयो र्जयेन द्वन्द्वातीतो भूत्वा मुक्तावुत्तिष्ठते। इत्यत एव वानप्रस्थाश्रमे सपत्नीकानामपि पुंसां कामादिजयेन मोक्षमार्गाग्रणीत्वविधानं शास्त्रादिषूपलभ्यते।

"अन्योन्यस्याऽव्यभिचारो भवेदामरणान्तिकः।

एष धर्मः समासेन ज्ञेयः स्त्रीपुंसयोः परः" इति मनूक्तेः।

पतिभक्त्या सतीत्वसाहाय्येन च नारी मुक्तिमार्गाभिमुखी भवति। पुरुषश्च गृहस्थः स्त्रीदुर्गसुरक्षित एकपत्नीव्रतेन मोक्षाध्वनो विजेता भवितुमर्हति। स्मृतिषु बहुशो विस्तारोऽस्य प्रामाण्ये। तथा हि—

समता च द्वयोर्यत्र शक्त्योः संजायते शुभा।
तत्रैव सत्त्वसंजुष्ट-ज्ञानानन्दस्थिति र्भवेत्॥
अहं तस्यामवस्थायां सत्त्वमय्यां सदा सुराः।
नन्वाविर्भावमापन्ना सन्तिष्ठे नात्र संशयः॥
काऽप्यवस्था बन्धहेतुः शक्तिद्वयसमन्विता।
जीवानां सर्वथा देवाः! जीवत्वस्यैव पोषिका।
सत्त्वावस्था तृतीया या सैव मुक्तिप्रदायिका।
एतच्छ्रौतरहस्यं हि ज्ञायतां विबुधर्षभाः॥
भिन्ना त्रिगुणवैचित्र्याच्छक्तिद्वैविध्यमात्मना।
दृष्टिगोचरतामेति श्यामात्र जगतीतले॥
शक्ती ते एव कथ्येते आकर्षणविकर्षणे।
रागद्वेषौ च पितरौ नात्र कश्चन संशयः॥
आद्ये स्थूलेऽपरौ सूक्ष्मौ विद्येते पितरौ ध्रुवम्।

एतयो गुणसम्बन्धः प्रोच्यते साम्प्रतं मया ॥
अस्ति रागो रजोमूलस्तथाकर्षणमेव च ।
विकर्षणं तथा द्वेषस्तमोमूलश्च विद्यते ॥
समन्वये द्वयोः सत्वगुणो नूनं विकाशते ।
अतः समन्वयादेव तयोर्विश्वस्य धारिका ॥
विश्वं रक्षति मच्छक्तिः सात्विकी धर्मरूपिणी ।
नित्या सा वर्तते नित्यं विश्वकल्याणकारिणी ॥
आरभ्य पितरोऽनेकग्रहोपग्रहतोऽखिलम् ।
अणवन्तं स्थितिमादत्ते तस्मादेव समन्वयात् ॥
तथा समन्वयस्यैव दशायां रागद्वेषयोः ।
जीवान्तःकरणे सत्वगुणस्यैव प्रकाशतः ॥
ज्ञानं विकाशते सम्यग् धर्मभाव उदेति च ।
पुण्यापुण्यप्रवाहो हि वहते नात्र संशयः ॥
द्वे एव भवतः शक्ती आकर्षणविकर्षणे ।
नारीधारासु जीवानां नृधारास्वपि सर्वतः ॥
ब्रह्मानन्दानुभूतेः स्याल्लोभात् स्पर्शेन्द्रियेण वै ।
दम्पतीसंगमः साक्षात् पवित्रः सात्विकः शुभः ॥
सत्त्वभावमयः पुण्यो वर्तते संगमक्षणः ।
आधिदैविकपीठस्योत्पादको नाऽत्र संशयः ॥
विष्णुस्वरूपमादाय ब्रह्माण्डस्य स्थितिक्षणे ।
ब्रह्माण्डेऽस्मिन् यथाकृष्टो विष्णुपाठस्वरूपिणि ॥
सन्तिष्ठे पितरो नूनं दम्पतीसंगमे तथा ।
आकृष्यन्ते त्रिधा देवाः पीठस्योत्पादके स्वतः ॥
यथाकालं यथादेशं यथापात्रं तथाऽनघाः ।
भवन्तः पितरस्तत्र रजोवीर्याश्रयेण हि ॥
आकृष्यन्ते वपुर्दातुं जीवाय स्थूलमद्भुतम् ।
अन्ये देवगणा नेतुं शरीरैरातिवाहिकैः ॥
युक्ताञ्जीवगणांस्तत्र सूक्ष्मदेहावलम्बिनः ।
पूर्वेभ्यो भोगलोकेभ्य आकृष्यन्ते न संशयः ॥
रजःशक्त्या ततस्तत्र तमःशक्तिः पराजयते ।
तेन पीठे विनष्टे वै रजोजातबलाश्रयात् ॥

पतितस्यैव वीर्यस्य सहयोगेन सर्वथा ।
नारीदेहे भवेन्नूनं गर्भाधानं न संशयः ॥
यथायोग्यं तथा यूयं जीवानां सूक्ष्मदेहिनाम् ।
सन्निवासोपयुक्तानि स्थूलदेहगृहाण्यहो ।।
रचयध्वं नयन्ते च जीवांस्तत्रैव निर्जराः !
पराजितं तमो नैव स्यात् तत्र रजसा यदि ॥
रजस्तमोभ्यां पितरो ! भावशुद्धिपुरस्सरम् ।
अग्रेसरद्भ्यां सततं सत्त्वं ज्ञानमयं प्रति ।।
नृनारीभेदरूपाश्च द्वन्द्वधर्मप्रभावतः ।
लब्ध्वा बहिर्गताभ्यां हि पराभक्तिं ममोत्तमाम् ॥
यदि सत्त्वे विलीयेत तर्ह्याकृष्टा महर्षयः !
रहितं सृष्टिधर्मेण कैवल्यं शाश्वतं पदम् ।।
अनेनैवाध्वना गम्यमिति संसूचयत्यलम् ।
नैवात्र संशयः कोऽपि विद्यते पितृपुङ्गवाः ! ५९ ।।

प्रसङ्गसङ्गतिसम्प्राप्तं नारीमहिमानमाख्याति ।

**प्रकृतित्वान्नार्य्या अर्चनमभ्युदयाय ॥ ६० ॥**

सृष्टौ प्रकृतेरेव प्राधान्यमित्यत्र सर्वाण्यपि दर्शनशास्त्राण्यैकमत्यं जुषन्ते। तामेव केचन दर्शनशास्त्रकारा मूलप्रकृतिं कथयन्ति । केऽपि महामायामभिदधति । अन्ये ब्रह्मशक्तिमाहुः । परन्तु सर्गक्रियायां प्रकृतेः प्राधान्ये नास्ति केषाञ्चनापि विमतिः । अतोऽत्र सर्वतन्त्रसिद्धान्तसिद्धेऽस्मिन् विषये नास्ति विमर्शावसरः । यथा धर्मपथमनुसरन् पुरुषः प्रकृतिसेवयाऽभ्युदयं समश्नुते । यथा च स जगज्जननीं महामायां समभ्यर्च्य तत्सेवया चाभ्युदयनिःश्रेयसावधिगच्छति । तथैव सूक्ष्मधर्मगतिविदाचार्य्यः सूत्रकृत् विज्ञानसिद्धं सिद्धान्तमिममतिदिशति । स्त्रीणामर्चनयाऽवश्यं पुरुषोऽभ्युदयमधिगच्छतीति । स्मृतिषु शतशोऽतिदिश्यते

यत्र नार्यस्तु पूज्यन्ते, रमन्ते तत्र देवताः
यत्रैतास्तु न पूज्यन्ते, सर्वास्तत्राफलाः क्रियाः ।
पितृभिर्भ्रातृभिश्चैताः, पतिभिर्देवरैस्तथा
पूज्या भूषयितव्याश्च, बहुकल्याणमीप्सुभिः ।
शोचन्ति जामयो यत्र, विनश्यत्याशु तत्कुलम्
न शोचन्ति तु यत्रैता वर्द्धते तद्धि सर्वदा
जामयो यानि गेहानि, शपन्त्यप्रतिपूजिताः

तानि कृत्या-हतानीव, विनश्यन्ति समन्ततः ॥
तस्मादेताः सदा पूज्या भूषणाच्छादनाशनैः ।
भूतिकामै र्नरैर्नित्यं सत्कारेषूत्सवेषु च ॥

मूलप्रकृत्या स्त्रीधारायाः सन्निहितः सम्बन्ध इत्यभिहितं प्राग् । अतः सर्वा अपि स्त्रियः प्रकृतिस्वरूपा इति विज्ञानाविरुद्धम् । सप्तशतीगीतायां देवीभागवते चैवमेवाभिहितम् ।

"विद्याः समस्तास्तव देवि भेदाः ।
स्त्रियः समस्ताः सकला जगत्सु ॥"
या याश्च ग्रामदेव्यः स्युस्ताः सर्वाः प्रकृतेः कलाः ।
कलांशांशसमुद्भूताः प्रतिविश्वेषु योषितः ॥

आर्यजातौ महिलानामर्हणं प्रशस्तमित्यत एव शास्त्रैरपि 'न स्त्री स्वातन्त्र्यमर्हतीत्याद्याज्ञप्तम् । नार्य्यः पावित्र्यपराङ्मुखा न स्युः, सदैवार्य्यमहिलासु सतीत्वबीजमन्तर्निहितं स्यात्, द्विजातिषु विधवापुनरुद्वहनस्याशालेशोऽपि नाङ्कुरितः स्याद्, आर्य्यनार्य्यश्च परपुरुषस्मरणेऽपि स्वात्मानं विगर्हितं मन्येरन् इत्यादयः सदाचारा आर्यजातिषु नारीणां सत्काराभ्यर्चनातिशयविधानादेव प्रचलिताः । यथा पर्वतीयप्रदेशेषु विशीर्णा महार्घाः प्रस्तरखण्डा न केनापि महर्घत्वेनाद्रियन्ते । त एव वज्रमणि-नीलमणिप्रभृतयः प्रस्तरजातयोऽपि तदर्घवेदिभिः पुंभिरादरातिशयात्सुरक्ष्यन्ते । तथैवार्य्यजातिसंस्कारेष्वेव नारीसत्कृतिः परमकर्तव्यतया निहिता विरूढमूला च सञ्जाता विद्यतेऽत एव सर्वाण्यपि शास्त्राणि ऐकमत्येनैवात्र नारीणां सत्कारसम्मानपावनत्वाद्यभिवृद्ध्यर्थमेव पूर्वोक्तान् सदाचारान् विहितवन्ति ।

ननु नारीजातेरेव प्रकृतिस्वरूपत्वात् सदाचारभ्रष्टाया अपवित्राया निरंकुशत्वमुपेताया अपि नार्य्याः कथन्नार्हणीयत्वम् ? कथञ्चार्य्यशास्त्रेषु कदाचाराया आर्य्यनार्य्याः परित्यागविधानम्, इति शङ्कायाम् उत्तरयति । ब्रह्मशक्तिर्हि ब्रह्मोन्मुखी सती प्रकृतिरुच्यते सैव तत्पराङ्मुखी विकृतिरुच्यते । तथैव प्रकृतिस्वरूपा सदाचारादिसम्पन्नैव नारी समादरणीया भवति, न तु विकृतिभावापन्नाऽनेकपुरुषाश्रया स्वस्वरूपतश्च्युता । शास्त्राण्यप्यत एव प्रकृतेरेवाभ्यर्चनं समामनन्ति न तु विकृतेरपि । अपरञ्च विकृतेरनादरं विना प्रकृतेः सत्कृतिरेव न सम्भवतीति विकृतेस्तिरस्कृतिरेव प्रकृतेः समर्चनम् । वेदशास्त्रादिष्वपि नारीजातिकृते ये ये सदाचारा उपदिष्टास्ते सर्वेऽपि तत्सम्बन्धतः प्रकृतिपूजाभिप्रायका एवोहनीयाः । ६० ॥

# सूर्योदयः ।

( विविधविषयविभूषितं संस्कृतमासिकपत्रम् )

षष्ठे वर्षे } आश्विनस्य पूर्णिमा, सं० १९८७ । { चतुर्थ संख्या

## मङ्गलाचरणम् ।

—०:*:०—

यो ब्रह्माच्युतधूर्जटीन्द्रवरुणैरादौ सदा पूज्यते
देही मुक्तिपथं प्रयाति परमं यत्सेवया कामदम् ।
सोऽयं चन्द्रनिभः करीन्द्रवदनो बुद्धिप्रदः सर्वदः
सर्वेषां शिवमातनोतु सततं श्रीपार्वती-नन्दनः ॥ १ ॥

शान्ता वान्तु समीरणाः क्षितिरसावापन्नसस्या मुहुः
सद्बुद्धिप्रियवाग्दयासुजनतालङ्कारधारी जनः ।
आयुर्लाभयशोधनानि नितरां सर्वे लभन्तां जना
मासेऽस्मिन्निति वाञ्छना सफलतामीशेन नो नीयताम् ॥ २ ॥

चेतस्तमोघनविनाशपटुः प्रसन्नो
रक्ताम्बरोऽरुणपुरःसर उष्णरश्मिः ।
कुर्वञ्जगत्स्वकिरणैर्द्युतिमत्प्रफुल्लं
सूर्योदयो भवति भावितभव्यभावः ॥ ३ ॥

सुधीयशोवित्तसुवाक्प्रदं शुभं विकासयन्मानसपद्ममर्कवत् ।
तनोत्विदं भारतवासिनां ध्रुवं सुसंस्कृतं मासिकपत्रमत्र शम् ॥ ४ ॥

—श्रीजगदीशचन्द्रः ।

———

# सम्पादकीया अभिप्रायाः ।

## जागतिकी प्रगतिर्भारतं च ।

पाश्चात्या जागतिकी प्रवाहपरम्परा बहिर्मुखमिन्द्रियसुखमनुधावन्ती यथापूर्वं परिदृश्यते । यूरोपीया आमरिकयश्च पदार्थविद्या-शिल्पादिसमुन्नतयोऽपि ऐन्द्रियमैहलौकिकं च सुखमेवाभिप्रवर्त्तन्ते । यूरोपीयगतमहायुद्धात्परं प्रगतिपरम्परेयं पाश्चात्या नितरां नैरङ्कुश्यमापद्यत इति निश्चप्रचम् । नारीणां निर्लज्जतापरिचायकं परिच्छदं, शिथिलप्रायं समाजबन्धनं, धार्मिकसामाजिक-राजनैतिकसमुच्छृङ्खलत्वादिकं च सीमानमतिक्रम्य प्रवर्तमानं निभाल्य चेखिद्यन्ते सचेतसां चेतांसि । अमेरिका-यूरोपादिषु परमात्मनोऽस्तित्वे तत्रत्यनिरङ्कुश-नरनारीणां मताधिक्यं परमप्रमाणकोटौ परिगण्यते । तत्रत्यैः प्राणप्रियोऽपि खृस्त-धर्मो दैनन्दिनं निःशङ्कं परिहीयते । यस्य नास्ति कोऽपि धर्मः स नास्तिकोऽपि सभ्यशिरोमणित्वेन प्रख्याप्यते । समितिविशेषेषु तत्रत्याः स्त्रियः पुरुषाश्च नग्नाः सम्मिलन्ति । सर्वमिदं धार्मिक्याः सामाजिक्याश्च क्रान्तेः प्रत्यक्षमुदाहरणम् ! राजनैतिकी क्रान्तिर्नग्ना नृत्यति रूसदेशेषु । यूरोपीये राजनैतिके राष्ट्रसंघेऽपि सार्वजनिकसाम्यवादस्त्रीपुरुषसमानाधिकारादिविषयमुद्दिश्य निखिलैराष्ट्रैः पारस्परिकं सन्धिं समनुष्ठातुमैकमत्येन प्रयत्नः परिचाल्यते । सर्वमिदमवलोक्य नेदं तिरोहितमन्तर्दृष्टिसम्पन्नानां विपश्चितां यत् पाश्चात्यं जगत् सभ्यतां तिरस्कुर्वत् साम्प्रतमसभ्यताभिमुखमग्रेसरतीति । यदि चायं प्रवाहो-न निरुध्येत तर्हि, ऐतिह्यप्रसिद्धा प्राचीना बहुविधा जातय इव, साम्प्रतिकी पाश्चात्याऽपि जातिरेकाकार-साम्यवादादिमिषतोऽसभ्यतां प्राप्य पतिष्यतीति निर्विवादम् ।

पाश्चात्यो झञ्झावात एष जगद्व्यापकत्वाद् भारतवर्षमप्यवास्कन्दति । तत्प्रभावत एवात्रापि धार्मिकः सामाजिको राजनैतिकश्च विप्लवः परितः परिदृश्यते । वर्णाश्रमबन्धसुरक्षिता संयमशालिनीयमार्यजातिः सदैव स्वभावत एव निरङ्कुशताप्रतिरोधिनी वर्तते । एकाकारसाम्यवादादिना मानवसमाजोऽयं पशुत्वमापत्स्यत इति पूज्यचरणमहर्षय आमनन्ति । अदूरदर्शिनो निरङ्कुशाः प्रजातन्त्रवादिनो राजशक्तिमात्मसात् सम्पाद्य पार्थिवस्थूलसम्पत्तीनामधिकारं ब्राह्मणेभ्यस्तदितरेभ्यश्च समानं प्रदातुं प्रभविष्यन्तीति सत्यं,परन्तु तपः—स्वाध्याय-शम—दम-तत्त्वज्ञान-प्रतिभासम्पन्नतादिसम्पत्तीनामाध्यात्मिकीनां यथेच्छं सम-

विभागः किं केनापि कर्त्तुं शक्यते ? अतो हि महनीयतमा महर्षयः कर्मोपासना-ज्ञानराज्येषु, सामाजिकेष्वधिकारनिर्णयेषु च • अधिकारपार्थक्यं निर्णीतवन्तः। वर्ण-आश्रम-पुरुष-नारी-प्रवृत्ति-निवृत्ति-गार्हस्थ्य-संन्यासादि—धर्माधिकारो विभिन्न एव स्वाभाविकः प्रकृतिसिद्धो वा। या च मानवजातिरधिकारभेदं प्राकृतिकमुल्लङ्घ्य स्वभावधर्मं तिरस्करोति नूनं सा तेनैव स्वकृतदुष्कृतेन पतन्ती कालान्तरे कालकवलितेति जागतिक इतिहास ऊर्ध्वबाहुर्विरौति। इदानीं सर्वत्रैव भारते दूरदर्शिताप्रतिरोधकं निरङ्कुशताप्रतिपोषकं च सर्वतः समुच्छृङ्खलत्वं दर्शं दर्शं तथा प्रयतितुं क्रान्तिप्रिया नेतारो निवेद्यन्ते, येन पाश्चात्य-जगदिव भारतमपि बहुविधदुर्दशाग्रहग्रस्तं न भवेत्।

जागतिकीमाध्यात्मिकावनतिपरम्परां निरोद्धुं संस्थापितस्याखिल-भारतवर्षीयसंस्कृतविश्वविद्यालयस्य सर्वधर्मसदननामा विभागो यश्च स्वीयं तुलनात्मकगवेषणादि कार्यं विधातुं स्थिरी कृतवान् तत्र जगन्मङ्गलकरे शुभेऽनुष्ठाने यथाशक्ति साहाय्यं प्रदाय सर्वैरेव परिपतन् मानवसमाजः संरक्षणीयः—

अयं निजः परो वेति गणना लघुचेतसाम्।
उदारचरितानां तु वसुधैव कुटुम्बकम्॥

इति।

---

## उन्नतिमनुतिष्ठतु।

श्रीभारतधर्ममहामण्डलस्य विविधधार्मिकविषयेषु, निखिलभारतवर्षीय-संस्कृतविश्वविद्यालये,तदीयगवेषणा-तुलनात्मक-कार्यकलापेषु च स्थायि साहाय्यप्रदानमभिप्रेत्य स्वर्गीयमहाराजाधिराज-दरभंगाधिपतिसंस्थापित-"भारत-सम्राट् न्यास" नामके यत्र निधौ स्वर्गीयहिन्दुसूर्य-महाराणा-उदयपुराधीशेन गतवर्षे सार्धलक्षरूप्यकाणि प्रदत्तानि तत्रैव वर्तमानदरभङ्गाधीश्वर-महाराजाधिराज-श्रीमत्कामेश्वरसिंहशर्ममहोदयेन सार्द्धलक्षं समर्पितमिति परमं प्रमोद-स्थानम्। भगवान् श्रीकाशीश्वरो दीर्घायुःप्रदानपूर्वकमस्य महानुभावस्याध्यात्मिकीमुन्नतिमनुतिष्ठतु। संस्थापितन्यासनिधेस्तस्य आर्थिकसमुन्नत्यैव संस्कृत-विश्वविद्यालयस्य सर्वतः समुन्नतिः स्यादिति।

---

## नेतृभिः प्रयतेतिमम्।

कुत्रचिदपि धर्मे स्वयं हस्तक्षेपो राज्ञा न कर्त्तव्यो न वाऽन्येन कारयितव्यः, परमात्मविज्ञानविहीनशिक्षणप्रगतिप्रतिरोधिनी धर्मशिक्षा विस्तारणीयेति,

आपञ्चविंशतिर्वर्षेभ्यः सर्वेभ्य एव समागतेभ्यो भारतसम्राट्प्रतिनिधिमहोदयेभ्यो यथासमयं निवेदनपत्रादिना श्रीभारतधर्ममहामण्डलः सूचयन्नस्ति इति नापरोक्षं तद्भिज्ञानां विज्ञानाम् । श्रीमहामण्डलो बहुवारं विद्यमानक्रान्तिमभिलक्ष्य भविष्यद्वाणीमप्यश्रावयद् । हर्षास्पदमिदं यत् वर्तमानेन सम्राट्प्रतिनिधिना मण्डलीयावेदनेषु ध्यानप्रदानपुरः सरमुत्तरं प्रदत्तं यत् सर्वमिदं महामण्डलनिवेदनं लक्ष्यीकृत्यैव भविष्यति भविष्यति भारतशासनव्यवस्था व्यवस्थापितेति । सम्राट्प्रतिनिधिप्रतिज्ञामिमां सफलयितुं सर्वैरपि धर्मनेतृभिः प्रयतेलिममिति ।

---

## विजयैषणा ।

—:※:—

श्रीदिव्यशक्तेः कृपया महत्या
ब्रह्माण्डनेत्र्या निखिलार्थदात्र्याः ॥
सनातनं धर्मपथं वितन्वन्
"सूर्योदयो" भारत-बोधदः स्यात् ॥१॥

दुःखातुरा भारतमातृभूमि-
रधार्मिकाक्रान्ततनुस्वभावा ॥
मान्या सुरेन्द्रैरपि मातृरूपा
रोरुद्यते चेति न कोऽत्र वेद ॥ २ ॥

तत् क्रन्दनं कर्णपुटेन पीत्वा
विलोक्य चार्तिं निजमातुरद्य ॥
तपस्विभिस्त्यागयुतैः प्रयुक्तैः
शुभप्रयत्नैः क्रियतेऽनुकम्पा ॥ ३ ॥

एकत्र भागे ऽमितशक्तियुक्ता
अधार्मिका दर्शितनग्नरूपाः ॥
परत्र शान्तिव्रतमादधाना
अहिंसया सूचितसौम्यभावाः ॥ ४ ॥

स्वधर्मरक्षार्थकृतप्रयासाः
समादृता भारतमण्डलेन ॥

सद्भारतीया विहितेऽत्र युद्धे
नूनं लभन्तां विजयन्त्वपूर्वम् ॥ ५ ॥
देवी चतुःशक्तियुता विनाशं
साङ्गस्य चक्रे महिषासुरस्य ॥
तथैव नेत्रादियुता प्रजेयम्
अधार्मिकीं शक्तिमपाकरोतु ॥ ६ ॥
देशे पुनः सात्विकशास्त्रचर्चा
प्रवर्द्धताञ्चेश्वरभक्तिभावः ॥
श्रीकृष्णचन्द्रोऽपि सुदृष्टिपातं
करोतु सौराज्यविवर्द्धनाय ॥ ७ ॥

—श्रीघनश्यामचन्द्रशास्त्री।

---

# कीरकथा

—:०*०:—

अथैकदैकः शुकः स्वगत्या वैनतेयमपि लज्जयन्, समीरमपि तर्जयन्, मनोऽपि न्यक्कुर्वन्, गगनं ग्रसन्निव, सूर्यं लिलङ्घयिषन्निव प्रयाति स्म। तावत्पुरतो नातिदूरे फलच्छायासमन्वितैर्लोकान्वृथा तापयतीति भास्करमार्गनिरोधायेवाकाशं व्याप्नुवानैर्महाद्रुमैरलङ्कृतं मध्ये त्रैलोक्यसारमाहृत्य रचितेनेव विविधमणिगणालोकचाकचक्यचमत्कृतलोकलोचनेन बहुशालेनापि विशालेन प्रासादेन द्विगुणितशोभं जनितजननयनलोभं परितो राजोद्यानं विलोक्य जातविश्रमाभिलाषः क्षणादवततार विहायसः। रसामृतभृतानि चारेभे फलानि भोक्तुम्। परिपूर्णजठरपिठर इतस्ततश्चक्षुषी चालयन् रूपेण रतिमपि हसन्तीभिश्चिरपरिचिततया शैशवेनापरित्यक्ताभी रम्यतया यौवनेन बलादात्मसात्क्रियमाणाभी राजकुमारीभिः कमलकोमलैः करैरुपभोज्यमानं स्वर्णपञ्जरगतं स्वभावगभीरं कीरं ददर्श। अथ तासु तं देशं विरहय्य गतासु स्वजातिप्रेमपूरपूरितान्तःकरणः समुपसृत्य शनकैरलपत्सादरमागन्तुकः।

आगन्तुकः—प्रियबन्धो! नमोनमः। कच्चिदानन्देन वर्तसे?

राजशुकः—भ्रातः! भवतेऽपि नमः। यथाकथञ्चिज्जीवनं याप्यते।

आगं०—(सहासम्) सरसैर्दाडिमबीजै विविधेन मिष्टान्नेन च पुष्टकलेवरोऽपि किमित्युदाहृते भवान्?

राज०—परतन्त्रता कं सचेतसं नोद्वेजयति । अस्तु, ननु परिभ्रमणावगत-लोकरहस्यः कथयतु भवान् का दशा देशस्य ?

आगं०—भारतस्य प्रतिखर्वटं प्रतिग्रामं प्रतिनगरं प्रत्यापणं प्रतिरथ्यं प्रतिगृहं किं बहुना प्रतिजनं स्वराज्यकलकलः श्रूयते ।

राज०—स्त्रियो मद्यनिरोधाय मदिरालयेषु, वैदेशिकवस्त्रबहिष्काराय चापणेषु, भ्राम्यन्तीति श्रूयते । अप्येतत्सत्यम् ?

आगं०—सत्यम् , परन्तु नेदं कर्म तासामधिकारोचितम् । नहि गृहदेवीनां साधारणस्त्रीवदापणेषु भ्रमणं शोभते । ताभिस्तु स्वगेहेषु सूत्रस्य कर्त्तनं तद्वस्त्र-निर्माणं स्वयं स्वबालेभ्यः पतिभ्यश्च तेषां परिधापनम्, देशसेवायै स्वीयानां प्रोत्साहनम् , स्वयं वैदेशिकाखिलवस्तुपरित्यागश्च कार्यः ।

राज०—अस्मिन्कर्मणि साफल्यमपि सम्भाव्यते न वा ?

आगं०—अवश्यम् , परं यदि सर्वे हिन्दवः सिंहा यवनाश्च प्रातिस्विकं स्वार्थमपहाय नीरक्षीरन्यायेनैक्यं भजेरन्। परस्योत्कर्षापकर्षौ स्वकीयौ जानीयुः। गेहे नर्दितां वाचिशूरतां च परिहृत्य कर्तव्यपरायणो भवेयुः । नैव च कोऽप्यस्मिञ्शुभकर्मणि भजेदौदासीन्यम् । नेतारोऽपीश्वरे धर्मे च रूढविश्वासा धर्मविरुद्धप्रस्तावेषु सोपेक्षा देशहितकार्येषु सापेक्षाः सन्तः पारस्परिकं मतभेदं परिहरन्तो गोहिंसान्नबहिर्गमनमद्यपानापवित्रवैदेशिकाखिलवस्तुजातप्रचार-निरोधं दृढतया प्रबलेन वेगेन च कुर्युः । देशस्य मान्या राजानो धनपतयश्च देशधर्मरक्षणकृते विविधानि कष्टानि सहमानानां सर्वप्रियान् प्राणानपि जहतां स्वदेशबन्धूनां धार्मिकाणां दीनतां च केवलं कृपादृष्ट्या निरीक्षेरन्। समस्ताः स्त्रियः पुरुषाश्च सशपथं हृदयेन अपवित्राणि बाह्यदेशवस्तूनि दूरीकृत्य भारतीयेन साधारणेन वेषेण वर्तेरन् । आबालवृद्धं सत्यं स्वदेशप्रेम जागृयात् सर्वे च हृदा स्वतन्त्रतादेवीमाद्रियेरन् । एवं स्वाराजमपि लब्धुमीशीरन्; किं पुनश्चेदमत्य-ल्पीयः स्वराज्यम् ।

राजगु०—सत्यं सत्यम्, परं भारतदुर्नियत्या नेयं सुमतिसम्पत्तिः सम्भाव्यते ।

आगं०—ईशकृपया सर्वं सेत्स्यति । अलमलमाशङ्कया । स्थिरीक्रियतां चेतः । भ्रातः ! स्वातन्त्र्ययुगमिदम् । तद्भवतापि बन्धनं छित्वा स्वातन्त्र्य-सुखमुपभुज्यताम् । ( इत्युड्डीनः )

श्रीयुतोजगद्रामशर्मा ।

---

# विहारोत्कलसंस्कृतसमितेः परीक्षापाठ्यपुस्तकानां दुर्व्यवस्थितिः

—०:※:०—

यद्यपि विहारोत्कलसंस्कृतसमितेः परीक्षापाठ्यपुस्तकानां निर्वाचनाय महामहिमशालिनां बहूनां विदुषां समवायोः समवेता भवन्ति, तथापि तत्समितेः परीक्षापाठ्यपुस्तकानां दुर्व्यवस्थितिं समवेक्ष्य सर्वेषां संस्कृतसाहित्यस्य हितमभिलषतां सहृदयानां चेतांसि सत्यं खेदमावहन्तीति युक्तमेवेति। अथवा समुचितमेव समस्तशास्त्रप्रशान्तमहासागरमलौकिकया धीरधिषणया गोवत्सपदसम्मितमभिजानतां प्रकाण्डपण्डितमहानुभावानां परुषेष्वलङ्कारसर्वस्वध्वन्यालोकप्रभृतिषु मृदुषु चन्द्रालोकसाहित्यदर्पणप्रभृतिषु समदर्शिता। परन्तु विपुलसंख्यया समुपलभ्यमानेषु कुल्यानिभेषु पण्डितेषु शास्त्राऽपटुष्वन्तेवसत्सु दयैकतानमानसा न भवन्ति महानुभावा इति महान् खेदस्य विषयः। यदि साहित्यग्रन्थानामुद्धाराय करुणा प्रकटिता विदुषामग्रगण्यै स्तदा व्याकरणस्य शब्दकौस्तुभ-बृहच्छब्देन्दुशेखर-वाक्यप्रदीपप्रभृतीनां समुद्धरणसमीहा किन्न तेषां हृदि समुल्लसिता। यदि व्याकरणग्रन्थानां निर्वाचनमन्यैः सम्पाद्यते तथापि संस्कृतसमितेः कार्य्यसम्पादकानां दर्शनसम्पातो न जात इति महदाश्चर्यकरम्। न ह्येतानि पुस्तकान्यधीत्य न कस्यचिदपि विदुषोऽन्तेवसति कस्मिंश्चिदधिकं वैदुष्यं विस्फुरति। शास्त्रसमवायसाहाय्येन कदाचित्कस्मिंश्चिद्विचित्रप्रतिभावत्यधिकचमत्कारतो द्योतसद्भावेनोपयोगिता सामान्यतः सर्वजगत इति विदितमेव सर्वेषाम्। विस्फुरितविद्युतः प्रबलद्योतो न तथा लोकस्योपयोगितामावहति यथा स्थिरा प्रदीपस्य प्रतिभा। यदि साहित्यविषये काठिन्यसम्पादनमभिमतमेव तदा साहित्यस्य प्रथमखण्डे चन्द्रालोकं द्वितीयखण्डे साहित्यदर्पणमभिमतञ्चेदलङ्कारसर्वस्वसहितमलङ्कारसूत्रमपि पाठ्यत्वेनोपकल्प्य तृतीयखण्डे ध्वन्यालोकस्योपकल्पनेन किमपि सौलभ्यमुपयास्यति। यतः साहित्यदर्पणेन सामान्यतो ध्वनिज्ञाने सम्पन्ने ध्वन्यालोकेन विशेषध्वनिज्ञानं सुलभमिव प्रतिभाति। नहि कौमुद्याः पूर्वं महाभाष्यज्ञानस्य सौलभ्यं श्रोत्रेणेक्षणेन वा कुत्रापि परमेशपरिसृष्ट्यामुपलभ्यते। नहि सूक्तिसहस्रद्योतितात्मभिर्महात्मभिराचरिते दोषोद्घोषणं मेऽभिमतमपि तु सामान्याध्यापकानां तथाऽन्तेवसतां च हिताय प्रार्थनैव मदीयेयमिति। यथा प्रबन्ध एक एव रसः स्थायिभावतामापन्नोऽन्ये च रसा व्यभिचारतामावहन्तः स्थायिरसानां

पोषकत्वमेवावहन्ति, एवं प्रार्थनासम्पोषणायैव विषयान्तरसमुल्लेखमव-धार्य्याऽऽर्याः क्षमाप्रदानेनानुगृह्य कृतार्थयन्तु समान्याध्यापकाँश्छात्रवृन्दांश्चेति भूयो भूयः सम्प्रार्थयते—

विदुषामनुचरो—
गिरिजानन्दमिश्रः साहित्याध्यापकः
( ब्रजभूषणसंस्कृतविद्यालयस्य गयामण्डलान्तर्गतखरखुरास्थस्य )

---

## संगृहीताः समाचाराः ।

आमस्टर्डाम्नगरे तन्नगरीयाकाशयानतत्वज्ञेन वीरट्नाम्ना विदुषा ८५५० पादोन्नते नभोभागे स्वीयाकाशयानेन सञ्चरता १२००० पौण्ड्भारमिता हीमानीखण्डाः प्रक्षिप्ता अभूवन् । तत्फलरूपेण न चिरान्महती वृष्टिस्तत्र जाता ।

'पेटन्' देशसम्बन्धिनि "पाकिङ्गन्" नामके प्रदेशे तिस्रस्सोदर्यो वसन्ति । तास्तिस्रश्च एकस्मिन्नेव दिने प्रसूताः, समाने च दिवसे परिणीताश्चाभूवन् । इदानीमेकैकस्याः द्रढिष्ठा बलिष्ठाश्चाष्टसंख्याकास्सन्तानास्सन्ति ।

अमेरिकाजनपदस्थे शिकागो नगरे द्वे स्त्रियौ सन्ध्याकाले विलासार्थम् लघीयसा वायुविमानेन बहिराकाशे विजह्रतुः । तदानींच दैवगत्या काचनाशनिः तद्विमानमुपरि निपपात । तेनैतेनाशनिपातेन शिथिलीभूतं तद्यानं कस्यचन वायुकार्यालयस्य लोहपत्रमये पटले निपत्य तदपि भित्वाऽन्तः पपात । सारथिः, स्त्रियौ च कथामात्रावशिष्टा अभूवन् । हंहो देवस्य कोपस्तेषु ।

लण्डन्नगरे एकोनत्रिंशद्वर्षदेशीया 'ईवरमेटी' नाम्नी दास्यजीविनी काचनावला स्वाभाविकेन प्रकृतिपरिणामेन पुमानजायत । तदनन्तरञ्च 'ईवान्माण्टेकुपर्ड' नाम्नाऽऽह्वतस्स पुमान् "चारामाटिल्टा" नाम्नीं वनितां काञ्चन कतिभ्यश्चन मासेभ्यः पूर्वमेव "लण्डन् वेल्सियन्" मातृमन्दिरे (चर्च) पर्यणैषीत् । विवाहसमये च वरः पुमानपि सन् भृशं लज्जितो दरीदृश्यते । इतीमं वृत्तान्तं श्रुत्वा बहु विस्मिता भवामः ।

महीशूरनगरस्य पञ्चचत्वारिंशत्क्रोशमिते दूरे प्रकाशमाने 'सेवन्कोडा' नामके प्रदेशे अशोकचक्रवर्तिना प्रतिष्ठापितः, औन्नत्ये सप्तषष्ठि (६७) हस्तपरिमितश्च कश्चन बुद्धविग्रहोऽलभ्यत । अयमेवात्र भारतखण्डे पुराणतमो महत्तमश्च

( अवशिष्टः ८३ पृष्ठे द्रष्टव्यः )

# वर्तमानभारतपरिस्थितौ शास्त्रोक्ता सम्मतिः ।

अथेदानीं सर्वतः प्रवृत्तेऽस्मिन् धार्मिक-सामाजिक-राजनीतिक-विप्लवप्राये जनक्षोभे सर्वतः प्रवर्त्यमाना वर्णाश्रमसदाचारमर्यादा, दिव्यदृष्टिमहर्षिप्रवर्त्तितधर्मशास्त्रीयनियमोल्लङ्घन-पूज्यपूजाव्यतिक्रम—राजाज्ञाभङ्गादयो महोपद्रवास्तन्मूलकं च शान्तानां नागरिकानामाकुलत्वं, ज्ञानवयोवृद्धगुरुजन-राजाऽवमाननं, नेतृभिः क्रियमाणा जनतास्वतन्त्रप्रवृत्तिप्रतिबन्धादयो, विद्याध्ययन-निषेधमरणासन्नगोवधप्रचारव्यवस्था, शास्त्रनिषिद्धवृक्षच्छेदनादि—करदान-प्रतिबन्धादयो व्यापाराः, पाश्चात्यप्रथानुसारिस्वराज्यप्राप्तिमुपक्रम्य सर्वेषामेव भारतीयानामेकासनपानाशनादिप्रचारप्रवर्त्तनादिभिर्वर्णजातिकुलसमाजधर्म-विप्लावनं, जन्ममूलाया वर्णव्यवस्थाया ऐहिकजीवनोपयोगिकर्मानुसारित्वख्यापनं, स्पृश्यास्पृश्यताभक्ष्याभक्ष्यतादिविभेदविलोपनं, विधवाविवाहनारीस्वातन्त्र्यप्रावर्त्तनं, चण्डालादीनां देवमन्दिरप्रवेशप्रोत्साहनं चेत्येतानि धार्मिक-सामाजिक-राजनीतिक-विप्लवमूलकानीति निर्विवादम् । तेषां निवारणार्थं राजपक्षप्रवर्तिता उपाया उचिता अनुचिता वेति निर्णयार्थं धर्मशास्त्रानुमोदितराजप्रजयोः कर्त्तव्य-ख्यापनार्थं च सनातनधर्मावलम्बिभि धार्मिकै र्बुधजनैः सामाजिकैश्च नेतृभिः साम्प्रतं निम्ननिर्दिष्टरूपायाः शास्त्रीयव्यवस्थायाः प्रकाशनमावश्यकं सामयिकं श्चानुमन्यते ।

सनातनधर्मावलम्बिनां सर्वाण्येवैहिकामुष्मिकाणि कर्माणि शास्त्रानुसारेणैव प्रचलन्ति । आपाततो जनताहितकारितयाभासमानं धर्माधर्म-पारलौ-लौकिक-देवर्षि-पितृसंबद्धनविचारविरहितं दृष्टमात्रफलं कार्यं शास्त्रविरुद्धं चेत् दुरदृष्टसम्पादकमिति तदननुष्ठेयमेवेति शास्त्रविश्वासजुषामविप्रतिपन्नः सिद्धान्तः ।

धर्म एव अभ्युदयानां निःश्रेयसानां च हेतुः । धर्म एव अर्थकामयोरपि कारणम् । अध्यात्मलक्ष्यवर्णाश्रमबन्धमूलको हि सनातनो धर्मः । स च विश्वधारकः । तथा हि—

धर्मो विश्वस्य जगतः प्रतिष्ठा, लोके धर्मिष्ठं प्रजा उपसर्पन्ति,<br>
धर्मेण पापमपनुदति तस्मात् धर्मं परमं वदन्ति ।

—इतिश्रुतौ ।

धारणाद्धर्ममित्याहु र्धर्मो धारयते प्रजाः।
यः स्याद् धारणसंयुक्तः स धर्म इति निश्चयः॥

—इति महाभारते।

साधारणो धर्मो विश्वधारकः, विशेषधर्मो विशेषत्वरक्षकः। यथा महाभारते—

यं पृथग्धर्मचरणाः पृथग्धर्मफलैषिणः।
पृथग्धर्मैः समर्चन्ति तस्मै धर्मात्मने नमः॥

सनातनधर्मावलम्बिनां विशिष्टो धर्म आर्यजातिसंरक्षकः। अतोहि भूमण्डलेऽस्मिन् विविधासु मानवजातिषु कालकवलितासु चापि सनातनधर्मावलम्बिनीयमार्यजातिः सततमात्मानं रक्षयन्ती स्वकीयं सनातनगौरवं रक्षत्येव।

वर्णाश्रमसदाचारेषु नारीणां पातिव्रत्येषु च सनातनो धर्मः प्रतिष्ठित आस्ते। तत्परिपोषणार्थं त्रिकालज्ञमहर्षिविहितोपयुक्ताज्ञानामनादरणं सर्वथा धर्मविरुद्धम्।

तस्मात् राजानः सर्वाश्च प्रजाः स्व-स्वधर्माचरणे तत्परा भवेयुः, यदा तौ प्रजाराजानौ धर्मतत्परौ भवेतां तदैव राजशक्तीनां प्रजाशक्तीनां च परस्परसहायतासमन्वयात् राज्ञः सर्वथा मङ्गलं सम्पद्येत।

प्रवर्तमानेनैतेन विप्लवेन सनातनधर्मस्य व्यवस्था शैथिल्यमापद्येत इत्याशङ्क्यते। इदानीमेतादृशमेवाशास्त्रीयमधार्मिकं कार्यमनुष्ठातुम् भारतवासिनां प्रवृतिः परिदृश्यते। अत्रेश्वरज्ञानविहीनाया धर्मभावविरहितायाः शिक्षायाः प्रदानमेव प्रधानो हेतुः। एतेनैव कारणेन अत्रत्या प्रजा पूज्यपूजाव्यतिक्रमराजापमानादिषु प्रवर्त्तते।

राज्ञश्चाष्टदिक्पालांशसम्भूतत्वात् तत्तेजोमयत्वात् 'नराणाञ्च नराधिप' इतिगीतोक्त्या विष्णुरूपत्वाच्च सर्वैः समाराध्यत्वं दुर्धर्षत्वं च निर्विवादमेव। तदवमाननं च निषिद्धं धर्मशास्त्रेषु।

बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः
महती देवता ह्येषा नररूपेण तिष्ठति।

मनुस्मृता (७ अ. ८ श्लोक)

इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च।
चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः॥
यस्मादेव सुरेन्द्राणां मात्राभ्यो निर्मितो नृपः।

तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥

मनुस्मृतौ (७-अ)

इत्यादि वचनैः राज्ञोऽष्ट-दिक्पालांशत्वञ्च सुस्पष्टमेवोद्घोषितम्।

नारायणांशजो राजा मनुष्यो न कदाचन।

अतस्तु दुर्नयं त्यक्त्वा सर्वां नीतिं समाचरेत् ॥

राजानः पितरः प्रोक्ताः प्रजा जानपदास्तथा।

अतो भूपाः पालयन्ति प्रजाः पुत्रानिवौरसान् ॥

इति पद्मपुराणीयवचनै राजप्रजयोर्मिथः पितृ-पुत्र-भाव-मूलकस्नेह-सम्बन्धसत्ता च प्रतिपादिता।

ननु राजपदेन क्षत्रिय एव ग्राह्य इति तत्पराणि इमानि शास्त्रवचनानि, क्षत्रियेतरे शासके सति नायं शास्त्रार्थ इति चेन्न। अत्रैवाध्यधिकरणे—

"राज्यस्य कर्ता राजेति सर्वलोकेषु गीयते" इति दृश्यते।

मनुस्मृतिटीकायां—राजशब्दो नात्र क्षत्रियजातिवचनः। किन्तु अभिषिक्त-जनपदपरिपालनकर्तृवचन इति कुल्लूकभट्टोक्तिश्च। यत्किञ्चिज् जातीये राज्य-कर्तृमात्रे राजशब्दव्यवहारस्य सिद्धत्वात् क्षत्रियेतरेऽपि शासके पूर्वोक्त एव शास्त्रार्थ इति सिद्धम्।

अपरञ्च यो धर्मशास्त्रानुसारं स्वप्रजावर्गं शास्ति स कस्मिन्नपि वर्णे कस्यामपि जातौ गृहीतजनुरपि क्षत्रियकर्मप्रजापालनरूपकर्त्तव्यकरणात् उपचारतः सोऽपि राजशब्दभाग् भवितुमर्हति। अष्टलोकपालपीठसम्बन्धतो रक्षणसत्कर्मप्रवर्तनादितदधिकारविहितकर्मसम्पादनात् जगदवनरूपविष्णुकृत्या-नुष्ठानात् तत्प्रातिनिध्येन 'नराणां च नराधिपः' इति भगवद्वचनाच्च राज्ञ ईश्वरांशत्वं सुसिद्धमेव। परन्तु—अष्टदिक्पालाधिकारलक्षणानां तत्र विद्यमा-नस्यावश्यकत्वम्। यथा हि—

पुत्रवत् प्रजानां प्रतिपालनं, निःस्वार्थबुद्ध्या न्याय्यकरणम्, प्रजानां विभिन्नजातीयानामपि स्वस्वधर्मानुष्ठाने तत्तदनुरूपसहायतासम्पादनम्, स्वधनबुद्ध्या लोभविरहेण प्रजानां समृद्धिवृद्धौ विशेषेण यतनम्, पुत्राणामिव सर्वप्रजानां शिक्षया साम्राज्यरक्षणोपयोगिशक्तिसम्पादनेन तेजस्विनीनां तासां साम्राज्यरक्षणे प्रावर्त्तनम्, पुत्राणामिव प्रार्थयमानानां सर्वप्रजानामपि सतीं मनोवासनां सम्पादयतां पितॄणामिव समीहनम्, प्रजाशक्तीनां राजशक्तीनाञ्च सामञ्जस्येन धर्मधनविद्याबलैश्चतुर्भिः साम्राज्येषु शक्तिवर्द्धनञ्च एतानि राज्ञः पूर्णपुण्यमयानि शुभलक्षणानि।

एतैः प्रजापालनादिदिक्पालगुणैरुपेतस्य राज्ञोऽनुशासनोल्लङ्घनं धर्मविरुद्धमेव ।

तथा च मनुस्मृतौ—

तस्माद्धर्मं यमिष्टेषु संव्यवस्येन्नराधिपः ।
अनिष्टं चाप्यनिष्टेषु तं धर्मं न विचालयेत् ॥

किञ्च धर्माविरुद्धानां प्रजाहितार्थं विहितानां व्यवस्थानामुल्लङ्घनेन प्रजनामाकुलीकरणं शास्त्रविरुद्धमेव। तथा च-याज्ञवल्क्य स्मृतौ व्यवहाराध्याये—

निजधर्माविरोधेन यस्तु सामयिको भवेत् ।
सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः ॥
दुःखमुत्पादयेद्यस्तु समुत्थानधनव्ययम् ।
दाप्यो दण्डश्च यो यस्मिन् कलहे समुदाहृतः ॥ इति ॥

किञ्च सम्प्रति विद्यार्थिनोऽपि गुरूणां पालकानां चादेशम् उल्लङ्घ्य विहाय विद्याभ्यासम् उत्पथे प्रवर्तन्ते तदपि न धर्मसंमतम् ।

प्राचीनकाले न राज्ञां प्रत्युताचार्याणामधीनमेव शिक्षासूत्रमासीत् । विद्यार्थिनां समुचितं दण्डविधानमपि अध्यापका एव विदधतेस्म । विद्यार्थिनाम् अध्यापकानाञ्च धर्मोऽत्युत्तमः शास्त्रेषु निर्दिष्टः ।

तथा च मनुः—

अहिंसयैव भूतानां कार्यं श्रेयोऽनुशासनम् ।
वाक्चैव मधुरा श्लक्ष्णा प्रयोज्या धर्ममिच्छता ॥

शिष्यकर्तव्यमाह—

नोदितो गुरुणा नित्यमप्रणोदित एव वा ।
कुर्यादध्ययने यत्नमाचार्यस्य हितेषु च ॥
विद्या गुरुष्वेतदेव नित्या वृत्तिः स्वयोनिषु ॥
प्रतिषेधत्सु चाधर्मान् हितं चोपदिशत्स्वपि ॥

अन्यच्च राजकृतव्यवस्थाभङ्गाय प्रवृत्ताः केचिद्वृक्षच्छेदादीन् प्रकुर्वते, तदपि तेषां कर्म राजाज्ञाभङ्गरूपमिति सामान्यतो निषिद्धमपि निर्हेतुवृक्षच्छेदनस्य शास्त्रनिषिद्धत्वाद् विशेषतोऽपि निषिद्धम् ।

तथाहि—याज्ञवल्क्य स्मृतौ व्यवहाराध्याये—

प्ररोहिशाखिनां शाखास्कन्धसर्वविदारणे ।
उपजीव्यद्रुमाणाञ्च विंशतेर्द्विगुणा दमाः ।

गुल्मगुच्छक्षुपलताप्रतानौषधिवीरुधाम् ॥

पूर्वं स्मृतादर्धदण्डः स्थानेषूक्तेषु कर्त्तने ।

वसिष्ठ-वचनं च—

'पुष्पफलोद्गमान् पादपान् न हिंस्यादिति' ।

यमवचनं च—

"वृक्षलतागुल्मतृणच्छेदने वृक्षकृच्छ्रकः, फलवतां प्राजापत्यमिति" ।

अन्यच्च—राजा कररूपेण कोशं सञ्चिनोति, तं च भूयोऽपि प्रजाहितायैव प्रयुङ्क्ते । करश्च धर्मशास्त्रानुसारेणैव राज्ञा ग्राह्यः ।

समुचितकरप्रदानादौ कथमपि प्रजानां प्रतिरोधनमपि धर्मबाह्यमेव । राज्ञा च प्रजाभ्यः करादिग्रहणे शास्त्रनिष्ठेनैव भाव्यम् । तथा च—

'धर्म्यं शुल्कमवहारयेत्'( आप. ध. सू. २-११-२६-८ )

सांवत्सरिकमाप्तैश्च राष्ट्रादाहारयेद् बलिम् ।
स्याच्चाम्नायपरो लोके वर्त्तेत पितृवन्नृषु ॥

मनुः ७-८० ।

अत्र कुल्लूकः—लोके च करादिग्रहणे शास्त्रनिष्ठः स्यात् ॥

नोच्छिन्द्यादात्मनो मूलं परेषां चाति तृष्णया ।
उच्छिन्दन् ह्यात्मनो मूलमात्मानं तांश्च पातयेत् ।

इति मनुः ७-१३६ ।

यच्च वर्णव्यवस्थायाः ऐहिकजीवनोपयोगिकर्मानुसारित्वप्रतिपादनं तदपि शास्त्रानवबोधविजृम्भितम् । शास्त्रेषु हि शतशः प्रमाणजाते जन्ममूलत्वमस्याः प्रतिपादितम् । शास्त्रीयेणापि कर्मणा तत्र गुणाधानमात्रं सम्पाद्यते, न तु परिवर्त्तनम् ।

प्रारब्धं कर्म मरणकालेऽभिव्यक्तं सत् मरणं प्रसाध्य स्वानुरूपं देहमारभते इति शास्त्रसिद्धान्तः । देहारम्भात् प्राक् तदभिव्यङ्ग्याया जातेरनुदयात् तस्याः कर्ममूलकत्वमिति शास्त्रनिर्णयः प्रागभवीयकर्मपरः । इत्येवं मृत्युलोकेऽस्मिन् पूर्वजन्मार्जितकर्मजन्या जीवानां जन्मतो जातिरिति कर्म-जन्मान्तर-विज्ञानगुणत्रयाधिकारभेदाङ्गीकर्तॄणां सिद्धान्तसिद्धं जातिभेदविज्ञानं सर्वैरपि दार्शनिकैरखण्डनीयमेव ।

यच्च विश्वामित्रादिदृष्टान्तेन कर्मणाऽस्मिन्नेव जन्मनि जातिपरिवर्तन-कथनं तत्तु पूर्वजन्मार्जितासाधारणकर्मशक्तिजन्यं तदीयवर्त्तमानजन्मासाधारण-तपसः फलम्। तस्य साधारणनियमेन न साम्यम्। यतः साधारणविशेषासाधारणादिधर्मकर्मणां पृथगधिकारा मीमांसकैः प्रतिपादिताः । तादृशधर्मकर्मणां वर्त्तमानकालेऽसम्भवात्तदविचारणीयमेव । जन्म-जाति-शब्दावप्येकधातुनिष्पन्नावित्यपि जन्ममूलकत्वमेव जातेर्व्यवस्थापयति ।

अस्पृश्यानां प्रतिलोमसंकरोत्पन्नतया तादृशसंकरस्य शास्त्रानुसारेण परिहरणीयत्वात् स्पृश्यास्पृश्यविभेदविलोपनं न शास्त्रसम्मतम्। अतस्त्रिगुणजन्य-स्थूल-सूक्ष्म-परिणामं तयोश्च शरीरयो र्बाह्याभ्यन्तरसम्बन्धं सत्त्वतमसोश्च पुण्यपापजनकताधिकारं स्वीकुर्वद्भिः स्पृश्यास्पृश्यविवेकोऽपरिहरणीय एव। आहारशुद्धेः सत्त्वशुद्धिनिमित्तत्वात् चित्तशुद्धिमभीप्सुभि र्भक्ष्याभक्ष्यविवेकोऽपि स्वीकरणीय एव ।

स्त्रियोऽपि स्वकुलाचारं पुरन्ध्रीव्रतं च परित्यज्य प्रकाशे स्थिताः करप्रतिरोधनादिकार्यसाहाय्यकारिण्यो भवन्ति, तत्तु सर्वथा धर्मनीति-लोकविगर्हितमित्यकरणीयम् । परपुरुषस्पर्शसंघर्षादिना कुल-स्त्रीशीलपरि-भ्रंशकरमिति दूषितम् , स्त्री-पुरुषयोः समानाधिकारख्यापनं वर्णाश्रमाविरुद्धम्, या जातिस्तादृशं नियमं प्रचारयति, सा कालान्तरेऽसभ्यतां बर्बरतां च समुपेत्य विनश्यति । स्त्रीणां हि क्वचिदपि न स्वातन्त्र्यमुपदिष्टं शास्त्रेषु । नारीधर्मस्य तपोमूलकत्वात् सतीनां धर्मस्य तद्बाह्याभ्यन्तरशुद्धिमूलकत्वाच्च मनुयाज्ञवल्क्यादिभिस्तासां पितृभर्तृसुताधीनत्वं व्यवस्थापितम् ।

साम्प्रतं नवशिक्षितैः समाजे विधवाविवाहोऽपि प्रचार्य्यते, तदपि धर्मशास्त्रनिषिद्धमेव

"न विवाह-विधावुक्तं विधवावेदनं पुनः" ( मनुः )

"न द्वितीयश्च साध्वीनां क्वचिद् भर्तोपदिश्यते" ( मनुः )

"मृते भर्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता ।
स्वर्गं गच्छत्यपुत्राऽपि यथा ते ब्रह्मचारिणः" ॥ ( विष्णुस्मृतिः )

"अज्ञानाच्च द्विजो मोहाद् विधवामुद्वहेद् यदि ।
परित्यज्य तु तां चैव प्रायश्चित्तं समाचरेत् ॥" ( आश्वलायनः )

यच्चान्त्यजादयोऽपि नेत्राभासैः प्रोत्साहिताः सन्तो देवमन्दिराण्यपवित्रीकर्तुं प्रोत्सहन्ते तदप्यन्याय्यं शास्त्रविरुद्धञ्च । विशेषतो देवमन्दिरेषु देवताविर्भावस्य पीठविज्ञानमूलकत्वात् यस्य दैवपीठस्य यादृशी पवित्रतासंरक्षण-

मूलिका पूजापद्धतिस्तत्र बाधासद्भावेन पीठशक्तिह्रासो विज्ञानानुमोदित इत्यतस्तद् मर्यादापरिपालने राज्ञा नूनं प्रयतेलिमम्।

यतः—

यस्मिन् देशे य आचारः पारम्पर्यक्रमागतः।
तथैव प्रतिपाल्योऽसौ यदा वशमुपागतः॥

इति याज्ञवल्क्योक्तेः प्रजानां स्वस्वधर्मे प्रतिष्ठापनं तद्धर्मसंरक्षणं तदीयधार्मिकसामाजिकशास्त्रीयसंस्कारधारणासु स्वतः परतो वा यथा कथमपि जायमानस्य हस्तक्षेपस्य सर्वथा परिहरणं, प्रजारक्षणं तद् धर्मानुकूल-शिक्षाव्यवस्थापनमिति राज्ञः प्रधानं कर्म।

इदानीं मादकपदार्थानां विरोधनं क्रियते। तदुचितमेव। तथाहि प्रायश्चित्तविवेके यमवचनम्—

एका माध्वी च पैष्टी च गौडी च त्रिविधा सुरा
द्विजातिभि र्न पातव्या कदाचिदपि कर्हिचित्।
सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिवेत्।

इति मादकद्रव्याणाम् अपवित्रभोज्यपदार्थानाम् अशुचिवस्तूनां च व्यवहारः सर्वथा प्रतिषेद्धव्यः। एतादृशविषये तु प्रजासाहाय्यविधानं राज्ञोऽत्यावश्यकं कर्तव्यम्। उपर्युक्तापवित्रवस्तूनां निरोधे राज्ञा प्रजाभिश्च प्रयत्नो विधेयः। येन देशस्यास्य साधीयान् उपकारो भवेत्। शास्त्र-विहिते कर्मणि प्रजाप्रोत्साहनं शास्त्रनिषिद्धे च प्रतिबन्धनं राज्ञः कर्तव्यम्। यतो हि स एव तिरस्कारपुरस्कारयोः समर्थः। यस्य यावान् अपराधः तस्य तथैव दण्डो-विधेयः पक्षपातरहितेन। स्वस्वधर्मावलम्बिनः सर्वतोभावेन संमानितव्याः। एतदननुष्ठानेनाविवेकपूर्णदण्डविधानेन च प्रजावर्गो नितरां प्रक्षुब्धो भवति। प्रजाक्षोभो हि न कदापि हिताधायक इति निर्विवादम्।

यथाहि—

वीरमित्रोदये राजनीति प्रकाशे मनुः—

यथा शास्त्रं प्रयुक्तः सन् सदेवासुरमानुषम्।
जगदानन्दयेत् सर्वमन्यथा तु प्रकोपयेत्॥
अधर्मदण्डनं स्वर्ग-कीर्तिलोक-विनाशनम्।
सम्यक् तु दण्डनं राज्ञः सर्वकीर्तिजयावहम्॥

पिताचार्यः सुहृन्माता भार्या पुत्रः पुरोहितः ।
नादण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्मे न तिष्ठति ॥ इति ॥

राज्ञः कोपप्रादुर्भावनमपि नास्त्येव प्रजाधर्मः । यथा च महाभारते—

यस्य कोपो महाबाधः प्रसादश्च महाफलः ।
कस्तस्य मनसापीच्छेदनर्थं प्राज्ञसम्मत इति ॥

निरङ्कुशायाः प्रजायाः समुचितानुचितदण्डविधानशक्तिः राजाधीनैव । किन्तु सति राज्ञि निरङ्कुशे संघशक्तिमाविर्भाव्य तं सत्पथमानेतुं प्रजाप्रयत्नं समाद्रियन्ते धर्मशास्त्राणि "सङ्घे शक्तिः कलौयुगे" इति स्मरणात् । परं हि तस्याः सङ्घशक्ते धर्मभावः सर्वथा संरक्षणीयः, अन्यथा अराजकत्वमाविर्भूय निखिलमपि राष्ट्रं भस्मसात् सम्पादयति । पाश्चात्यप्रदर्शितप्रजातन्त्रशासनशृङ्खलायां प्रतिष्ठितायां तत्रापि प्राचीनशास्त्रमर्यादायाः क्रमविकासपद्धतेश्चानुसरणमत्यावश्यकम् । भारतीयप्रकृतिप्रतिकूलत्वात् न चात्र क्रान्तिः साफल्यमासादयिष्यति । राजविरहिता प्रजातन्त्रशासनपद्धतिरपि नात्र धर्मभूमौ मङ्गलावहा ।

पूर्वोक्ता विप्लवपरम्परा शास्त्रविरुद्धत्वात् उभयोरपि राजप्रजयोः पीडाजनकत्वाच्च पारस्परिकविश्वासं सहयोगं च द्वारीकृत्य उभाभ्यामपि सप्रयत्नं निरोद्धव्या । स्नेहमयो विज्ञः पितेव राजा पुत्रवत् प्रजां पालयेत्, तस्याः संरक्षणे सर्वविधोन्नतिसाधने च विशुद्धेन मनसा प्रयत्नमातिष्ठेत् । प्रजापि राजाज्ञां शिरसि संधार्य धर्महीनचेष्टां विहाय अभ्युदयं निःश्रेयसं च प्राप्नुयादित्येवात्र वर्त्तमान-भारत-परिस्थितौ शास्त्रोक्ता सम्मतिरिति ।

[ अद्यत्वे निखिले भारते प्रादुर्भूतायां धार्मिकसामाजिकराजनैतिकक्रान्तौ भारतीयानां धर्माचार्याणां विदुषां ब्राह्मणानां च शास्त्रीया सम्मतिरवश्यं प्रकाशनीयेति विचार्य श्रीभारतधर्ममहामण्डलप्रधानकार्यालयसंचालकै विद्वन्मण्डलीतः परामर्शं विधाय शास्त्रीयमिदं व्यवथापत्रं निर्माय धर्माचार्याणां वाराणसेयानां भारतस्य तत्तत्प्रान्तनिवासिनामन्येषां च विदुषां सम्मति ग्रहणार्थं प्रकाश्यते । सम्मतिग्रहणात् परं तत्तद्विदुषां नामावलींसंवलितं यथा यथारीति पुनः प्रकाशयिष्यते । ]

इदानीं धर्मनिरूपणप्रस्तावे प्रथमं धर्ममाचारं प्रतिपिपादयिषुः सूत्रयति—

**आचारः स्थूलसम्बद्धः ॥ ६१ ॥**

स्थूलेन सह सम्बद्धः सम्बन्धमापन्नो हि व्यापारविशेष आचार इत्युच्यते। स्थूलशरीरेण यावत्यो धर्मानुरूपा धर्मप्रसविन्यश्चेष्टापरम्पराः समुत्पद्यन्ते ता एव आचारशब्दवाच्या अभिधीयन्ते। यथा हि—

पादव्यापारः, स्थितिः, मृदम्बुभिश्च शरीरशुद्धिः, वृद्धोपसेवनम्, गुरुजन-प्रणमनादि, सर्वेऽपि स्थूलपूजोपचरणादयोऽत्रोदाहर्तव्याः। एवमेव नारीधर्मे, पुरुषधर्मे, वर्णधर्मे, आश्रमधर्मादिषु च विभिन्ना आचारा विहिता विद्यन्ते। स्मृतिष्वप्येवमेव गीयते—

> यतो धर्मानुकूलो यो व्यापारो वपुषोऽखिलः।
> सद्भिः प्रोक्तः सदाचारो नन्वसौ पुण्यवर्द्धनः ॥ ६१ ॥

तत्र वैशेष्यं प्रतिपादयति—

**अत एवाद्यः ॥ ६२ ॥**

स्थूल-सम्बन्धादेव आचारः प्रथमो धर्मो भवतीति नात्राणीयसी अपि विचिकित्सा। स्थूलसाधनयोग्यतामधिगम्यैव साधकः सूक्ष्मसाधनयोग्यतामाश्रयति, क्रमशः स्थूलत्वमार्गतः सूक्ष्मतानुसारित्वात्साधनगतेः। इतोऽपि सदाचारस्य धर्मे प्राथम्यम्। सर्वेष्वपि विशेषधर्मेषु सदाचारस्यैव अग्र.सन-सम्बन्धभागित्वात्प्राथम्यं धर्मे। स्मृतिष्वप्येवमेवाभिहितम् तथा हि—

> सर्वप्रधान आद्यश्च गरीयान् व्यापकस्तथा।
> सदाचारो विशेषेषु धर्मेषु विद्यते द्विजाः ॥
> आचारः प्रथमो धर्मः श्रुत्युक्तो स्मार्त एव च।
> तस्मादेतत्समायुक्तो नित्यं स्यादात्मवान् द्विजः ॥ ६२ ॥

तन्महिमानमाख्याति—

**आचार-प्रधानौ वर्णाश्रमावाधिभौतिक-प्राधान्यात् ॥ ६३ ॥**

आधिभौतिकस्य प्राधान्यं, तस्मात्, वर्णाश्रमधर्मौ, आचारः प्रधानं यत्र तौ, तथोक्तौ ज्ञेयौ। आधिभौतिक-प्राधान्यमूलतया वर्णाश्रमधर्मयो राचारस्य सर्वाभ्यर्हितत्वमूहनीयम् इति सूत्रार्थः।

वर्णाश्रमधर्मयोराधिभौतिकशुद्धिः सर्वाग्रणीः। तत्र च ज्ञानेनाध्यात्मशुद्धिः कर्मणाधिदैविकशुद्धिः रजोवीर्य्यशुद्धयाधिभौतिकी शुद्धिरित्येवं वर्णाश्रम-

धर्मयोराधिभौतिकशुद्धेः प्राधान्यमिति निश्चयचम् । यतो हि—ज्ञानकर्मणी साध्ये सम्भवतः । रजोवीर्य्यशुद्धिस्तु न साध्यतामर्हति । वर्णाश्रमधर्मयोश्चाधिभौतिक-शुद्धेः प्राधान्यम् सदाचारेऽपि तस्या एव प्राधान्यम् । अतश्च वर्णाश्रमधर्मयोराचारस्य प्राधान्यं सुतरां सिद्धम् । स्पष्टप्रतिपत्तये उदाहरति यथा—यस्य पुंसः कायो ब्राह्मणरजोवीर्य्यजन्यो न विद्यते तेन च यदि शिक्षयाऽध्यात्माधिदैव-शुद्धिरूपे ज्ञानकर्मणी समुपार्जिते अपि स्यातां, तथापि ते ब्राह्मणतां तस्य न सम्पादयिष्यतः । नापि च तस्य निवृत्तिदशायां सन्यासाधिकारं साधयिष्यतः । यतो हि ब्राह्मणत्वे प्राधान्यमाश्रिताया ब्राह्मण-मातृपितृ-रजोवीर्य-जन्यकायत आधिभौतिक-शुद्धेरपेक्षिताया अनुदयात् न कोऽप्यन्य-वर्णभवोऽनार्यो वा एकस्मिन्नेव जन्मनि ब्राह्मणतां लब्धुमर्हति । अत्रेदं स्वारस्यं यत् वर्णाश्रमधर्मयो रजोवीर्य्यशुद्धि-रूपाधिभौतिकी शुद्धिर्नाभ्यासजन्याऽपि तु जन्मसिद्धैव भवतीति सा स्वाभाविकी इत्येतदेव सर्वतोऽपि वैशिष्ट्यं तस्याः । अतो वर्णाश्रमधर्मयोराधिभौतिकशुद्ध्याः प्राधान्येन सदाचारस्यापि प्राधान्यं सुनिश्चितमिति निर्विवादसिद्धम् ॥ ६३ ॥

अन्यच्च—

यागे बाधनमनाचारात् ॥ ६४ ॥

अत एव अनाचारेण यागे यज्ञे बाधनम् विघ्नबाहुल्यं भवति । आचार-विज्ञानदृढतायै अन्यथाऽप्युदाहरति । वेदशास्त्रविहिता यावन्तो यागा दैव जगत्सम्बद्ध यितारोऽनुष्ठीयेरन् ते च यदि शास्त्रविधिमुत्सृज्याचारसंबन्धं विहायानाचारत एव सम्पादितास्युस्तर्हि तत्रावश्यमसुरप्रेतादिबाधोपस्थिता स्यात् ।

सूक्ष्मदैवराज्येन यथा देवर्षि-पितॄणां सम्बन्धस्तथैवासुराणामपि तेन सम्बन्धः । प्रेतादयोऽपि सूक्ष्मदैवजगत एव जीवाः । यदि क्वापि यज्ञानुष्ठान-वेलायां स्थान-दिग्बन्धन-सदाचारादिशुद्धिभि र्यागशुद्धि स्तथर्त्विजां शरीरशुद्धिश्चानादृते स्यातां तदा असुरादयः प्रेतादयश्च प्रविश्यावश्यं तं यज्ञं विनाशयेयुः, यज्ञभागश्च न देवादिभिर्गृहीतः स्यात्; किन्तु एभिरेव तामसिक-राजसिक-प्राणिभिस्तदीयो भागो भुक्तः स्यात् । अत एव वैदिकेष्टौ तत्सम्मतान्य-शास्त्रीययागादौ च आचारमूलाधिभौतिकी शुद्धिश्चावश्यमपेक्ष्यते तद्भिज्ञैर्महर्षिभिः । आचारस्येदमपि विलक्षणमेकं महत्त्वन्न विस्मरणीयम् ॥ ६४ ॥

इदानीं शारीरिकं धर्म्मं निरूप्य मानसं तमाह—

नियमो मानस-धर्मः ॥ ६५ ॥

यथा धर्मानुकूलः शारीरिको व्यापार आचारशब्दभाग्भवति तथैव

धर्मप्रसविता मानसो व्यापारसङ्घो नियम इति शब्देनाभिधीयते। अनन्ता-श्चान्तःकरणवृत्तयो द्विधा हि क्लिष्टाक्लिष्टभेदेन विभक्ता उपलभ्यन्ते । महर्षिणा पतञ्जलिनापि योगदर्शने—

"वृत्तयः पञ्चतय्यः क्लिष्टा अक्लिष्टाः"

इत्युदीरितम् । पञ्चविधा अपि वृत्तयः क्लिष्टाक्लिष्टभेदेन द्वैविध्यं भजन्त इति । या हि वृत्तयस्तामसं भावं तत्परिणाममधर्मं वर्द्धयन्ति ताः क्लिष्टाः । याश्च सत्त्वगुणं तत्परिणामं धर्मं समेधयन्ति ता अक्लिष्टा निगद्यन्ते । तत्र ताः सर्वा अपि मानसीः क्लिष्टवृत्तीर्निरुध्य अक्लिष्टवृत्तिसमुद्भावनेन ये ये सत्त्वपरिणा-मिनो व्यापारा उत्पद्यन्ते ते सर्वेऽपि महर्षिभि र्नियमशब्देनाभिधीयन्ते। यथा—धृतिः, मानसिकं तपः, परोपकार-प्रवृत्तिः, सद्विचारः, सत्य-सङ्कल्पश्चै-तादृशाः सर्वेऽपि मानसिकाः सद्भावा नियमान्तर्गता एव ।। ६५ ॥

तत्र यद्वैशिष्ट्यन्तदाह—

त्रिगुणमयान्यङ्गोपाङ्गानि ॥ ६६ ॥

तस्य नियमस्य अङ्गोपाङ्गानि त्रिगुणमयानि सत्त्वरजस्तमोमयानि ज्ञेयानि ।

आचारस्य स्थूलधर्मतया तद्विभागस्य त्रिगुणभेदेन विभाजितुमशक्यत्वात् सूक्ष्मजगद्विषयत्वेन नियमस्य त्रिगुणविभागभिन्नत्वात्तद्विभागं निर्वक्ति । यथा साधारणधर्मस्य सर्वेषामप्यङ्गोपाङ्गानां त्रिगुणभेदतस्त्रैविध्यम् । तथैव नियमस्याङ्गोपाङ्गानामपि गुणत्रयविभागात् त्रैविध्यमव्याहतम् ।

ननु धर्मप्रसूनामक्लिष्टवृत्तीनां सत्त्वगुणपरिणामस्वरूपाणामेव नियम-शब्दवाच्यत्वे कथं पुनस्तस्य तामसराजससात्त्विकादि गुणत्रयभेदेन त्रैविध्यम् इति शङ्केत चेत्तत्रोच्यते—यथा सत्त्वपरिणामस्य ब्राह्मणत्वम् सत्त्वरजसोः परि-णामस्य क्षत्रियत्वमित्यादिप्रतिनियतगुणविभागसम्बन्धसत्त्वेऽपि सत्त्वपरि-णामस्य ब्राह्मणस्यैव सात्त्विक-राजसिक-तामसिकादि-विभागा भवितुमर्हन्ति । तथैवात्रापि सत्त्वगुणपरिणामस्वरूपस्यापि मानसव्यापारस्य नियमस्य सात्त्वि-कादिभेदभिन्नत्वे न काप्यनुपपत्तिः ।। ६६ ॥

प्रसङ्गतः प्राप्तां शङ्कां समाधत्ते ।

सर्व-धर्मत्रैविध्यं गुणत्रयभेदात् ॥ ६७ ॥

गुणानां त्रयम्, तस्य भेदात्, सर्वे च ते धर्मास्तथोक्तास्तेषां त्रैविध्यम् । नियमस्यैव केवलस्य कथं त्रैगुण्यम् किमन्ये धर्मसमुदाया न त्रैविध्यभाज-

इतिशङ्कां समाधातुमेवाविर्भावितमिदं सूत्रम् महर्षिणा सूत्रकारेण। सर्वेऽपि प्राकृतिका भावास्त्रैगुण्यभाजो नेह कोऽपि पदार्थस्त्रिगुणातीतो भवितुमर्हति। क्वाऽपि पदार्थे तस्य विवेचने क्लेशाधिक्यं स्यादित्यन्यदेतत् । परन्तु कस्यापि सूक्ष्मातिसूक्ष्मतः स्थूलातिस्थूलं यावत् सर्वेषामेव पदार्थानां त्रिगुणतत्रनियमात् सर्वेऽपि धर्म-भेदास्त्रिगुणभेदभिन्ना इति विज्ञानसिद्धम् ।। ६७ ।।

तत्र त्रयाणां तारतम्यतोऽभ्यर्हिततत्त्वं विविनक्ति—

उत्तरोत्तरस्य गरीयस्त्वम् ।। ६८ ।।

तेषु तामसिकादि-त्रिविधेष्वपि धर्मेषु उत्तरोत्तरस्य तामसिकाद्राजसस्य-ततोऽपि सात्त्विकस्य श्रेष्ठत्वम् । तथा हि तामसिको धर्मोऽभ्युदयमैहलौकिकं दातुमर्हति । क्वापि तेन हानिरपि तदनुष्ठातुः सम्भवति । राजसिकेन तु ऐह-लौकिकपारलौकिकोभयाभ्युदयो ध्रुवं सम्पाद्यते। सात्त्विकस्तु क्रमशोऽभ्युदय-द्वयं वितरन्नन्ते निःश्रेयसमप्यर्पयतीति तस्य स्वभावसिद्धम् ।। ६८ ।।

भावभेदेनापि सर्वेषां त्रैविध्यं प्रतिपिपादयिषुराह—

सर्वं भावत्रयात्मकम् ।। ६९ ।।

धर्मस्य सर्वाण्यप्यङ्गोपाङ्गानि त्रिगुणभेदतो यथा श्रेणित्रये विभक्तानि तथैवाधिभूतादिभावभेदतोऽपि तानि त्रैविध्यं जुषन्ते । तच्च स्मृतावीदृक्—

ममैव सच्चिदानन्दभावत्रय-समाश्रयात्
नन्वाध्यात्माधिदैवाधिभूतरूपं महर्षयः।
भावत्रयं हि सर्वस्मिन् कार्य्य-ब्रह्मणि भासते ।
दृश्यं नातो भवेत् किञ्चिच्छून्यं भावत्रयेण वै ।
एतास्तिस्त्रस्त्रिभावानां विश्वं व्याश्नुवते कलाः
आधिदैविकमाध्यात्म्यं रूपं धृत्वाधिभौतिकम् ।।

इत्येवं विज्ञानक्रमतः सिद्धमिदं यत् प्रत्येकं धर्माङ्गमुपाङ्गं वा साधारण-धर्मगतं विशेषधर्माश्रितं वा स्यात् सर्वत्रैव भावत्रयानुकूलं शुद्धित्रयमप्यपेक्षत एवेति ।। ६९ ।।

तत्परिणाममाख्याति—

पूर्णं त्रिभावोपगमात् ।। ७० ।।

त्रयश्च ते भावास्तथोक्तास्तेषामुपगमात् स्वीकारात् सर्वमेव पूर्णं सर्वाङ्गसम्पन्नं स्यात् ।

साधारण-विशेषादिसर्वेषामेव धर्माणामङ्गमुपाङ्गं वा त्रिविधशुद्ध्यैव पूर्णतामासादयति नान्यथा।

उदाहरणस्वरूपतो यथा–विशेषधर्मान्तर्गतस्य वर्णधर्मस्य प्रस्तावे ब्राह्मणोऽप्येकस्तदैव स्वपूर्णस्वरूपं विन्दते यदा स स्वोपयोगिना पूर्णज्ञानेनाध्यात्मिकीं कर्मणा चाधिदैविकीं ब्राह्मण्या मातु र्ब्राह्मणस्य च पितू रजोवीर्य्याभ्यां स्थूलशरीरसम्बन्धिनीम् आधिभौतिकीं शुद्धिमासादयन् त्रिविधशुद्धिसम्पन्नः स्यात्। साधारणधर्मान्तर्गतश्चैवमेको यज्ञोऽपि तदैव पूर्णाङ्गः स्याद्यदा तस्य आध्यात्मिकशुद्धिरूपः सङ्कल्प उत्तमः स्याद् आधिदैविकात्मिका च शास्त्रोक्ता क्रिया यथाविधि सुसम्पन्ना स्याद् आधिभौतिकशुद्धिस्थानीया च घृतादि-पदार्थशुद्धिः समीचीना भवेत्, इत्येवमादिषु सर्वेष्वपि धर्मेषु सर्वाङ्गतः सर्वथा पूर्णशुद्ध्यैव तेषां पूर्णशक्तिमत्ता सिध्यति नेतरथेति ध्रुवमूहनीयम्॥ ७०॥

गुणानां किं निदानमित्याह—

**गुणाः शक्तिमूलाः॥ ७१॥**

धर्मनिर्णये शक्तिमूलक एव त्रिगुणविचारो भवति। सत्त्वं रजस्तम इति त्रयो गुणा मूलप्रकृते र्महामायापरनामिकाया ब्रह्मशक्तेरेवेति त्रयोऽपि आदिशक्तिसम्बन्धित्वात् शक्तिमूलका एव ज्ञेया इति मूलसिद्धान्तानुसारेण धर्माचार्य्या महर्षयो धर्मनिर्णये कर्तव्ये शक्तिसम्बन्धाश्रयेणैव सर्वत्र त्रिगुणविचारं विहितवन्तः॥ ७१॥

इदानीं गुणमूलं विविच्य भावमूलं निर्वक्ति।

**शुद्धिमूलाश्चान्ये॥ ७२॥**

अन्ये भावाः शुद्धिमूला भवन्ति। यथा गुणविचारः शक्तिमूलकस्तथैव भावविचारोऽपि शुद्धिहेतुको ज्ञेयः। त्रिधा अपि शुद्धिप्रकाराः पूर्वमेवाभिहिताः। त्रयोऽपीमे भावा ब्रह्मणः सच्चिदानन्दरूपादेव त्रिभावादधिरोहन्ते। यथा दैवीमीमांसादर्शने ब्रह्मेशविराजां सम्बन्धो ब्रह्मणः सच्चिदानन्दरूपाद्भावत्रयात्परिलक्षितस्तथैवेहापि तेनैव भावत्रयेण आध्यात्माधिदैवाधिभूतात्मकभावत्रयस्य सम्बन्धो विहितो विद्यते—अत एव तत्र दर्शनेऽभिहितम्।

"गुणैः सृष्टिस्थित्यन्ता भावै स्तदनुभवः।"

चित्स्वरूपस्य ब्रह्मणो भावा अपि त्रयो ज्ञानमूलका एवेति निःसन्दिग्धम्। ज्ञानमेव मलविक्षेपावरणान्यपाकृत्य जीवन्मुक्तिपथभाजः करोत्यतो ज्ञानमूलकं भावत्रयमपि शुद्धिमूलकमिति सर्वतन्त्रसिद्धान्तः॥ ७२॥

उभयसम्बन्धतो धर्माधर्मनिर्णयविज्ञानमाह—

भावव्युत्क्रमः शक्तिप्राधान्यात् ॥ ७३ ॥

शक्तेः प्राधान्यं तस्मात्, शक्तिप्राधान्यापेक्षया भावानामाधिभूताधिदैवाध्यात्मादीनां व्युत्क्रमः वैपरीत्यं ज्ञेयम् । तथा हि—यत्र शक्तीनां विवेकः कर्तव्यस्तत्र भावेषु वैपरीत्येन व्यवहर्तव्यम् । यत्र धर्मनिर्णये शक्त्यपेक्षा विद्यते, तत्र भावव्युत्क्रममपेक्ष्यैव विचारनिर्णयो विधेय इत्यर्थः । यतो हि गुणेषु शक्तिमूलकत्वं भावेषु शुद्धिमूलकत्वमित्यभिहितं प्रागेव । शक्तिविकाशश्च स्थूलसाहाय्येन सूक्ष्मेषु आधिक्येनानुभवनीय इत्येतदेवास्मिन् विज्ञाने हृद्यम् । उदाहरणतो यथा—वर्णाश्रमधर्मयोः शक्तिप्राप्तेरेव प्रधानोद्देश्यतया तत्राचारनिर्णये कर्तव्ये आध्यात्माधिदैवाधिभूतशुद्धिषु क्रमश उत्तरोत्तरं प्राबल्यम् । तथा हि यदि कस्मिंश्चित् पुंसि शुद्धे ब्राह्मणमातृपितृजन्ये रजोवीर्य्ये विद्येते चेत्तर्हि ब्राह्मणत्वसाधिकाया आधिभौतिकशुद्धेस्तत्र सत्वाद् अन्ययोर्द्वयोराधिदैवाध्यात्मशुद्धयोरभावेऽपि तस्य ब्राह्मणत्वमक्षुण्णं स्वीकरणीयमेव । यदि तत्र ब्राह्मणकर्माधिदैवशुद्धिरपि स्यात्तर्हि स श्रेष्ठो ब्राह्मणः । ततोऽध्यात्मज्ञानादिनाऽध्यात्मशुद्धिसत्वे तु किं वाच्यं तस्य । स तु सर्वश्रेष्ठः पूर्णो ब्राह्मणपदभाजामग्रणीरेवेत्याद्यन्यत् ।

आश्रमधर्मनिर्णयेऽप्ययमेव न्यायोऽनुसरणीयः । यथा कश्चन ब्राह्मणजातिगोऽविद्वानपि सन्यास-संस्कारेण यथाविधि संस्कृतः स्यात्तर्हि स सन्यासिपदभाग् भविष्यति । पूर्ववद् यदि तत्र कुटीचकबहूदक-हंस-परमहंसादिधर्माणां कस्यापि योग्यता पूर्णतयोपलभ्येत चेदुत्तमः संन्यासी स गण्येत । तत्रैव यदि जीवन्मुक्तस्यात्मज्ञानिनोऽपि लक्षणान्युपलभ्येरंस्तर्हि तु स सर्वोत्तमः सन्यासिनामग्रग एव भवेत् । किं वाच्यं तस्य माहात्म्यं स तु एकोऽपि लक्षाणां कल्याणकारी दीनानां बहूपकर्ता सर्वमान्यः सर्वस्तुत्यो नारायणस्वरूप एव । अत एवोक्तम् यद् वर्णाश्रमधर्मनिर्णये सर्वाभ्यर्हिता रजोवीर्य्यशुद्धिस्तदनन्तरं कर्मशुद्धिस्ततोऽन्तिमा ज्ञानजन्या शुद्धिरिति । यतः शक्तिविचारेण भावस्य व्युत्क्रमो भवतीति बहुशोऽभिहितमेव । यथा सृष्टौ मूलप्रकृतेः प्राधान्यं परमपुरुषस्य चाप्राधान्यं तद्वदेवात्रापि प्रकृतिसम्बन्धिनां गुणानां शाक्तविचारे पुरुषसम्बन्धिनोऽध्यात्मभावस्य गौणता प्रकृतिसम्बन्धिनश्चाधिभौतिकभावस्य प्राधान्यं समुचितमेव ॥ ७३ ।

प्रसङ्गतो धर्ममाहात्म्यमाख्याति ।

सर्वशक्त्याश्रयो धर्मः कार्य्यकारणभावात् ॥ ७४ ॥

त्रिगुणात्मिकया प्रकृत्या सृष्टिस्थितिलयात्मिकायाः क्रियाया अभ्यु-

दयनिःश्रेयसप्रदाभ्यां क्रियया धर्मस्य च कार्य्यकारणभावात्मक-सम्बन्धसत्त्वात् धर्मस्य सर्वशक्तिशालित्वम्। धर्मेण जीवा अभ्युदयनिःश्रेयसभाजो भवन्तीति धर्मः क्रियाविशेषसम्बन्धवान्, त्रिगुणात्मिका प्रकृतिस्तु परिणामित्वात् कर्मणां जनयित्री। इत्येवं धर्मः सर्वासामेव स्थितिमतीनामुन्नतिशीलानाञ्च शक्तीनामाश्रयः। यतो हि धर्मेण जगतां स्थितिः, तेनैव च जीवानामभ्युदयनिःश्रेयसावपि सिध्यत इति ॥ ७४ ॥

एतस्य वैज्ञानिकं रहस्यमुपवर्णयति—

**प्रकृतेः सर्वशक्तिमत्तात् ॥ ७५ ॥**

ब्रह्मशक्तिरूपिण्या मूलप्रकृतेः सर्वशक्तिमत्त्वे सर्वेषामेव शास्त्रकाराणामैकमत्यम्। अनन्तकोटिब्रह्माण्डप्रसूः ब्रह्माण्डपिण्डात्मिका जगद्धात्री जगज्जननी सृष्टिस्थिति-प्रलयकारिणी ब्रह्मशक्तिः सर्वासामेव शक्तीनामाश्रयभूतेत्यत्र नास्ति प्रमाणविज्ञानयोरपेक्षा। एवञ्च धर्मस्यापि तस्या एव ब्रह्मशक्तेः प्रकृते नियमरूपत्वात् तया सह कार्य्यकारणभावात्मक-सम्बन्धाश्रयत्वाच्च तस्यास्तत् सर्वशक्तिमत्त्वं तत्र विश्वधारके धर्मेऽपि सुस्पष्टमेव ॥ ७५ ॥

विशेषधर्मप्रसङ्गेन जातिधर्मं निर्णयति—

**प्रकृतिमूलो जातिधर्मः ॥ ७६ ॥**

प्रकृतिर्मूलं यस्य प्रकृतिहेतुक इति यावत् एवम्भूतो जातिधर्मो ज्ञेयः। वर्णधर्मेण साक्षात् सम्बन्धवानयं विशेष-धर्मरूपो जातिधर्मः प्रकृतिगतो विज्ञेयः। प्रथम एव परिणामे त्रिगुणात्मिकायाः प्रकृते र्गुणपरिणामक्रमतो जातिवर्गः परिणमते। तत्र चत्वारो विभागाः स्वभावसिद्धाः। यथा ऊर्ध्वगाः सत्त्वप्रधाना अधोगास्तमःप्रधाना मध्यस्था हि सत्त्वरजःप्रधाना रजस्तमःप्रधानाश्चेति। रजोगुणस्योभयसहायकत्वात् प्रकृतिसाम्राज्यीयचेतनवर्गे चतुर्णामेषां विभागानां स्थितिः स्वाभाविकी। एवमेव सर्वत्रैव स्वेदजाण्डज-जरायुजादिचतुर्विधभूतसंघेषु चतसृणां श्रेणीनामुपलब्धि र्दृश्यते-श्रुतिस्मृतिषु बहुधा प्रपञ्चितोऽयं विषयः—

प्रजापतिरकामयत प्रजायेयेति स मुखतस्त्रिवृतं निरमिमीत तमग्निर्देवता अन्वसृजत ब्राह्मणो मनुष्याणामजः पशूनां तस्मात्ते मुख्याः……बाहुभ्यां पञ्चदशं निरमिमीत तमिन्द्रो देवता अन्वसृजत राजन्यो मनुष्याणामाविः पशूनां तस्मात्ते वीर्यवन्तो………मध्यतः सप्तदशं निरमिमीत तं विश्वेदेवा देवता अन्वसृज्यन्त वैश्यो मनुष्याणां गावः पशूनां ……सोऽन्येभ्यो भूयिष्ठा हि देवता अन्वसृज्यन्त ………शूद्रो मनुष्याणामश्वः पशूनाम्।

लघु यत् कोमलं काष्ठं सुघटं ब्रह्मजाति तत् ।
दृढङ्गं लघु यत् काष्ठमघटं क्षत्रजाति तत् ॥
कोमलं गुरु यत् काष्ठं वैश्य-जाति तदुच्यते ।
दृढाङ्गं गुरु यत् काष्ठं शूद्रजाति निगद्यते ॥
लक्षणद्वययोगेन द्विजातिः काष्ठसंग्रहः ॥७६॥

एतद्विज्ञानं स्पष्टयति—

**तस्माद्वर्णधर्मस्तथा ॥ ७७ ॥**

सत्त्वादिगुणत्रयस्य पूर्वोक्तस्वाभाविकचतुःश्रेण्यनुसारं मनुष्येषु ब्राह्मण-क्षत्रिय-वैश्य-शूद्रभेदेन चत्वारो वर्णाः प्राकृतिकाः स्वभावसिद्धा इत्यर्थः ।

ननु यदि वर्णधर्मविभागो नैसर्गिकस्तदा सर्वत्रैव देशेषु मनुष्याणां सामाजिकव्यवस्थायां कथन्न वर्णधर्मस्य सामञ्जस्यं विकाशश्चावलोक्यते ? अत्रोच्यते मानवानां पूर्णावयवजीवत्वेन स्वधर्मभ्रंशनशक्तिमत्त्वस्यापि सत्वात् तत्रैव धर्माधर्माधिकारनियमनमुपलभ्यते नान्ययोनिगेषु जीवेषु । स्मृतिशास्त्रेऽप्येवमेवोक्तम् ।

मनुष्येषु महाराज ! धर्माधर्मौ प्रवर्ततः ।
न तथाऽन्येषु भूतेषु मनुष्यरहितेष्विह ॥

अत एवादिसर्गे सर्वे ब्राह्मणा एवोद्भवन्ति । पुनश्च ये तत्र स्वब्राह्मभावेन पतितसमाजसङ्घं वर्णधर्मदुर्गेण सुगोपायन्ति त आर्य्या एवेह तिष्ठन्ति । ये च सर्वथा त्यक्तवर्णाश्रमाचाराः स्वच्छन्दतो भ्रष्टाचारा भूत्वा कामचारा भवन्ति त एवानार्य्या गण्यन्ते । स्मृतिषु यथा—

असृजद्ब्राह्मणानेव पूर्वं ब्रह्मा प्रजापतीन्
आत्मतेजोभिनिर्वृत्तान् भास्कराग्निसमप्रभान्
न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत्
ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम्
कामभोगप्रियास्तीक्ष्णाः क्रोधनाः प्रियसाहसाः ।
त्यक्तस्वधर्मा रक्ताङ्गास्ते द्विजाः क्षत्रतां गताः ॥
गोभ्यो वृत्तिं समास्थाय पीताः कृष्युपजीविनः ।
स्वधर्मान्नानुतिष्ठन्ति ते द्विजा वैश्यतां गताः ॥
हिंसाऽनृतप्रिया लुब्धाः सर्वकर्मोपजीविनः ।
कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां गताः ॥ इति ७७ ॥

एतदेव पुनर्द्रढयति—

**सङ्करोऽश्वतरवत् ॥ ७८ ॥**

आदिसर्गे मानवानां यो वर्णधर्मो निर्णीत स्तत्र यदि साङ्कर्य्यदोष आपतेत्तदा अश्वतरवंशोच्छेद इव मनुष्याणां मनुष्यत्वविनाश एव सम्पद्येत । वर्णधर्मस्य प्राकृतिकत्वात् सृष्टेरादित एव तस्य सत्तेति दार्शनिकविज्ञानतो वेदशास्त्रादितोऽपि सिध्यति । अनन्तरञ्च यो हि मनुष्यसमाजो रजोवीर्य्यशुद्ध्या स्ववर्णधर्मं सुगोपायति स तु कल्पान्तं स्वसत्तां मानवमर्य्यादाञ्च स्थापयति। यो हि स्वस्वातन्त्र्यं स्वाधिकारञ्चापालयन् वर्णधर्मं भ्रंशयन् रजोवीर्य्यशुद्धिं विनाशयति सोऽश्वतरवत् भाविनीं सृष्टिमेवोन्मूलयति । यथा अश्वतरस्याग्रे वंशवृद्धि र्न जायते तद्वदेव वर्णधर्मविरहितो मानवसमाजोऽनार्य्यो भूत्वा कालान्तरे च धर्मविमुखोऽसभ्यो भवन् महाकालगर्भे विलीनः स्ववंशोच्छेदमेवाश्रयति ॥ ७८॥

शङ्कासमाधानाभ्यामेतदीयं विज्ञानं द्रढयति—

**तदुन्नतिर्विशिष्टसंयोगिवृक्षवत् ॥ ७९ ॥**

तस्य सङ्करस्य उन्नतिरभ्युदयो विशिष्टाश्च ते संयोगिनो वृक्षास्तद्वत् । ननु वर्णाश्रमधर्ममर्य्यादाविरहितेष्वप्यनार्य्येषु धनबुद्धिविद्याबलादिभिरभ्युदयो दृश्यते तत्र को हेतुरिति शङ्कां समाधातुमेवास्य सूत्रस्योद्भवः । तथा हि — आम्रादि वृक्षेषु संयोगि-वृक्षाणामाम्रादीनि फलानि बृहन्ति सुस्वादूनि च भवन्ति, परन्तु ते तरवो न चिरस्थायिनो नापि तेषां बीजेनाग्रे वृक्षसृष्टिपरम्पराः सम्पद्यन्ते । यतो हि संयोगिवृक्षाणां बीजवापेन जायमाने वृक्षे न तादृशानि पीवराणि महान्ति वा फलान्युद्भवन्ति । प्रत्युत क्रमश स्तेषां सृष्टिपरम्परोत्तरोत्तरं क्षीयमाणा विलीयत एव । तथैवानार्य्यजातीनां साङ्करी सृष्टिः कियत्कालं यावत् स्वीयं विशेषचमत्काराभ्युदयं दर्शयन्त्यपि अवसानेऽधोगतिमुपगता प्रकृतिगर्भे विलीना नष्ट-भ्रष्टैव भाविनीति निश्चप्रचम् ॥ ७९ ॥

प्रत्यक्षत एवेदं विज्ञानं प्रमाणयति—

**तथा सर्वत्र दर्शनात् ॥ ८० ॥**

भौगोलिकेतिहासनिरीक्षणतोऽपि पुष्यतितरामिदं विज्ञानम् । यस्मिन् वंशे साङ्करी प्रजा जायते तस्योच्छित्तिरावश्यकी । यतो हि नित्यपितृगणा नैतादृशं वंशं संरक्षितुं कृतयत्ना भवन्ति । अत एव पृथिव्या अनादिकालत एव वर्णाश्रमधर्मव्यवस्थाविरहिता असंख्याता जातयः समुत्पन्नाः, परन्तु ताः सर्वा अपि वर्णाश्रममर्य्यादा-विरहिताः सङ्कर्य्यो भूत्वा महाकालसमुद्रे निमग्ना नामशेषा न

श्रूयन्ते । निश्चितमिदं यत् वर्णाश्रमधर्मविहीना कापि मनुष्यजाति र्नेह पृथिवीतले चिरस्थायिनी नापि नियमतोऽभ्युदयं विन्दमाना निःश्रेयसाधिकारिणीति ॥ ८० ॥

वर्णधर्मप्रयोजनं प्रतिपाद्य वर्णशुद्धेरुपायमाह—

त्रिभावतो वर्णशुद्धिः ॥ ८१ ॥

अध्यात्माधिदैवाधिभौतात्मकभावत्रयावलम्बनतो वर्णधर्मस्य शुद्धि र्भवतीत्यर्थः । तत्र ज्ञानेनाऽध्यात्मभावस्य कर्मणाऽधिदैवभावस्य मातृपितृरजोवीर्य्यसाहाय्येन चाधिभौतभावस्य सुरक्षेति । विना ज्ञानेनात्मनो नावरणोच्छेद इति ज्ञानमाध्यात्मिकशुद्धेर्हेतुः । सर्वस्या एव जातेस्तदीयं साहजिकं कर्म तज्जीवनाय भगवदुपासनारूपमेव भवति । तेनैव तु प्रकृते र्महामातृरूपाया यथार्हमर्हणं भवति । अत एव स्ववर्णोचितेन कर्मणाऽधिदैवशुद्धिरपि स्वाभाविकी स्थूलकायस्य च मूलमुपादानं मातृपितृरजोवीर्य्यमेवेति तेनैवाधिभौतिकी शुद्धिरपि साधीयसीति त्रिविधामपि वर्णधर्मस्य शुद्धिमिमान्येव ज्ञानादीनि त्रीणि सम्पादयन्तीति स्मृतयोऽपि जगुः—

रजोवीर्यविशुद्ध्यैव भवत्यत्र सुरक्षितम् ।
आधिभौतिक-संशुद्धेर्बीजं नु पितरो ध्रुवम् ॥
विदित्वा पीठमर्यादां संस्कारशुद्धिपूर्विकाम् ।
भवताञ्च कृपापुञ्जैः पितरो रक्षितं भवेत् ॥
आधिदैविकसंशुद्धे र्बीजं नूनं चिरन्तनम् ।
सत्त्वलक्षणसङ्गो वै स्वस्मिन्कुश्चद्विकाशितः ॥
क्रियमाणैः प्रयत्नैश्चेद्भवेद्बीजं सुरक्षितम् ।
नूनमाध्यात्मसंशुद्धेर्नात्र कार्य्या विचारणा ॥
त्रिविधानां हि बीजानां रक्षयैवंविधैः क्रमैः ।
वर्णाश्रमाख्यधर्मस्य बीजं स्याद्रक्षितं ध्रुवम् ॥ ८१ ॥

शुद्धेरभावादसम्पूर्णत्वं वर्णधर्मस्येति संसाधयति—

अङ्गवैकल्यादपूर्णता ॥ ८२ ॥

अङ्गानां वैकल्यात् भङ्गतोऽपूर्णत्वं वर्णधर्मस्येति सूत्रार्थः । पूर्वविज्ञानतो निश्चीयते यदत्र त्रिविधास्वपि शुद्धिषु यस्या ययोर्वा यावदल्पत्वं तावदेव वर्णधर्मोऽपूर्णतेति निर्विवादम् । उदाहरणतो यथा—कश्चिद् ब्राह्मणोऽध्यात्मशुद्धिविकलश्चेत्तर्हि स ब्राह्मणत्वस्य तृतीयांशद्वयेनोपेतः, यदि स एवाध्यात्माधिदैवशुद्धिद्वयेन विकलस्तर्हि स जातिब्राह्मणः, तृतीयांशत एव ब्राह्मणत्वं तस्मिन् । रजो-

वीर्य्यशुद्धिस्त्वावश्यकी तस्याः साध्यत्वाभावात् । एवमेवान्येष्वपि वर्णेषु अङ्ग-वैकल्यमूहनीयम् । स्मृतावप्युक्तम् ।

"तपःश्रुतश्च योनिश्चेत्येतद्ब्राह्मणकारणम् ।
तपः-श्रुताभ्यां यो हीनो जातिब्राह्मण एव सः" ॥ ८२ ॥

प्रसङ्गसङ्गतिप्राप्तं ब्राह्मणभेदविज्ञानं ब्रूते—

अतो ब्राह्मणानेकविधत्वम् ॥ ८३ ॥

अतोऽस्मात्पूर्वकथितविज्ञानादेव स्मृतिशास्त्रादिषु देवादि-संज्ञकानां ब्राह्मणानां कल्पना कृता बहुशोऽवलोक्यते। यतो हि यत्र ब्राह्मणेषु रजो-वीर्य्यशुद्धिरूपाऽधिभौतशुद्धिस्तु विद्यते, परन्तु ते अध्यात्माधिदैवात्मिके द्विविधे अपि शुद्धी न विद्येते प्रत्युतानेकास्त्रुटयो बहुविधाश्च दोषा स्तत्र ब्राह्मणेषु व्याप्तास्तदनुकूलत एव तैस्तै र्लक्षणै स्तेषां ब्राह्मणानां विविधाः श्रेण्यो विभक्ताः । तथा हि—

देवो मुनिर्द्विजो राजा वैश्यः शूद्रो निषादकः ।
पशुर्म्लेच्छश्च चाण्डालो विप्रा दशविधाः स्मृताः ॥
सन्ध्यां स्नानं जपं होमं देवतातिथिपूजनम् ।
वैश्वदेवञ्च कुर्वाणो विप्रो देवः प्रकीर्त्यते ॥
शाके पत्रे फले मूले वनवासे सदा रतः ।
निरतोऽहरहः श्राद्धे स विप्रो मुनिरुच्यते ॥
वेदान्तं यः पठेन्नित्यं सर्वसङ्गं परित्यजेत् ।
सांख्ययोगविचारस्थः स विप्रो द्विज उच्यते ।
अस्त्राहताः सुधन्वानः संग्रामे सर्वसम्मुखे ।
आक्रम्य निर्जिता येन स विप्रः क्षत्र उच्यते ॥
कृषिकर्मरतो यश्च गवाञ्च प्रतिपालकः ।
वाणिज्य-व्यवसायी च स विप्रो वैश्य उच्यते ॥
लवणस्याथ लाक्षायाः कुसुम्भ-क्षीर-सर्पिषाम् ।
विक्रेता मधुमांसानां स विप्रः शूद्र उच्यते ॥
तस्करश्चैव पापी च सूचको दंशकस्तथा ।
मत्स्यमांसे सदा लुब्धः प्रोच्यते स निषादकः ॥
ब्रह्मतत्त्वं न जानाति ब्रह्मसूत्रेण गर्वितः !
तेनैव स च पापेन विप्रः पशुरुदाहृतः ॥
वापी-कूप-तडागानामारामसरसां तथा ।

निःशङ्कं रोधको यस्तु स विप्रो म्लेच्छ उच्यते ॥
क्रियाहीनश्च मूर्खश्च सर्व-धर्म--विवर्जितः ।
निर्दयः सर्वभूतेषु विप्रश्चाण्डाल उच्यते॥॥८३॥

वर्णधर्मस्य प्रधानमाश्रयमभिधत्ते—

**बीजप्राधान्यं सर्वत्र ॥ ८४ ॥**

मानवेतरासु सर्वास्वपि चतुराशीतिलक्षयोनिषु यथा बीजस्यैव प्राधान्यं तद्वदेव वर्णधर्मेऽपि बीजस्यैवाभ्यर्हितत्वम्। अत एव रजोवीर्य्यशुद्धिरूपाया आधिभौतिकशुद्धेस्तत्र सर्वाभ्यर्हितत्वं परमावश्यकत्वञ्च। यतो हि ज्ञानकर्मणी साध्ये भवतोरजोवीर्यशुद्धिस्तु न साध्या, सा हि मातृपित्रधीनाऽपरिवर्तनीया च। तत्रापि बीजस्य प्राधान्यं सर्वत्रैव जगति दृश्यते यद्भूमिभेदेनोद्भिज्जसृष्टिषु तारतम्यमाश्रितास्वपि बीजप्राधान्यं न हीयते। यादृग्बीजं भवति तादृगेवाग्रे सर्गः प्रचलति, तस्मात्सर्वत्र बीजाभ्यर्हितत्वमेव स्वीकरणीयम् ॥ ८४ ॥

अवान्तर-सङ्गतिप्रसङ्गतः पितृ-माहात्म्यं वर्णयति—

**पितृकृपाऽभ्युदयहेतुश्चक्रसम्बन्धात् ॥ ८५ ॥**

पितॄणां कृपा गमनागमनचक्रसम्बन्धेनाभ्युदयानामैहलौकिकपारलौकिकानां हेतुर्भवति। स्मृतिष्वपि गमनागमनचक्रसम्बन्धे बहु प्रपञ्चितम्।

तथा हि—

अनुभूतमिदं त्वास्ते युष्माभिः पितरो ध्रुवम् ।
मर्त्य-योनिं समासाद्य जीवाः सर्वे समन्ततः ॥
गमागमनचक्रेषु प्रविशन्ति न संशयः ।
पश्यन्ति किन्तु वै चक्रं भाग्यवन्तो न केऽप्यदः ॥
परिधिस्तस्य चक्रस्य द्विधा भिन्नोऽस्त्यसंशयम् ।
तत्रैकः प्रेतलोकोऽस्ति मृत्युलोकोऽपरस्तथा ।
असौ चक्रस्य परिधिः पितृलोकावधिक्रमात् ॥
विस्तीर्य्य प्रथमं पश्चात् नरके स्वरपि ध्रुवम् ।
विस्तृणाति तपोलोकपर्यन्तं नात्र संशयः ॥
नैवात्र विस्मयः कार्य्यो भवद्भिर्विश्वभूतिदाः !
तमःप्रधानं प्रथमं चक्रमेतदनन्तरम् ॥
तमोरजःप्रधानञ्च रजःसत्वप्रधानकम् ।
शुद्धसत्त्वप्रधानं हि जायते तदनन्तरम् ॥

ऊर्ध्वलोकं ततो मृत्युलोकं व्याप्नोति केवलम् ।
परिधिस्तस्य चक्रस्य ततोऽन्ते मयि लीयते ॥

गमनागमनचक्रस्य केन्द्रस्वरूपोऽयं मृत्युलोकः । जीवा मृत्योरनन्तरं लोकान्तरे परिभ्रम्य पुनरत्रैवावर्तन्तेऽस्य कर्मभूमित्वात् । अस्मिन्नेव लोके जीवा मातृगर्भे प्रविशन्ति नान्यत्रेत्यस्य लोकस्य वैचित्र्यम् । गर्भाधानवेलायां मातापित्रो र्युग्मदेहे स्वत एव पीठस्थिति र्जायते । पीठरहस्यञ्च दैवीमीमांसादर्शने विस्तरशो वर्णितम् । मातुराकर्षणशक्त्या पराजितायां पितुर्विकर्षणशक्तौ पीठवेद्यामुपस्थिता देवा जीवान्मातृगर्भे प्रवेशयन्ति । नित्यपितृगणाश्च तेषां स्थूलशरीरनिर्माणे साहाय्यमाचरन्ति । जीवानां स्थूलशरीरमेव तेषां भविष्यत्कर्मसंग्रहे निमित्तम् । यादृगेवोत्तमं स्थूलशरीरं पुरुषः प्राप्नोति तादृगेवोत्तमं कर्म साधु सम्पादयितुं सोऽर्हति । नित्यपितरो हि यथाकर्म स्थूलदेहं निर्मान्ति । तत्प्रतिनिधिभूतो जनकश्च सृष्टौ वीजप्राधान्याज्जीवजन्मनिदानतामेति । इत्येवं सहजचक्रसम्बन्धित्वात् स्थूलदेहनिर्माणनिदानात् नित्यपितृप्रतिनिधित्वात् गर्भाधानसंस्कारसम्पादकत्वाच्च पितैवेह जगति परमपूज्यः । तस्य पितुरभ्यर्चनेन धर्मोपलब्ध्याऽभ्युदयाधिगतिरित्यत्र कः सन्देहः । स्मृतावप्युक्तम्--

"पिता धर्मः पिता स्वर्गः पिता हि परमं तपः" इति ॥ ८५ ॥

प्रसङ्ग-सङ्गत्या दायभागविज्ञानं वर्णयति ।

**अत एव दायभागो व्यवस्थितः ॥ ८६ ॥**

अत एव गमनागमनचक्रस्य पारलौकिकाध्वसहायकत्वादेव आर्य्याणां दायभागो व्यवस्थितः पारलौकिकाध्वसहायकत्वदृष्ट्या विभक्त इत्यर्थः । यथा मृत्युलोके स्थूलशरीरसम्बन्धतः परमसहायकत्वाद् गमनागमनचक्रोपयोगित्वाच्च पितृपूजा विहिता, तथैवागमनचक्रस्य पारलौकिकमार्गसाहाय्याधानात् पुत्रो ऽन्यश्च तदधिकारी स्वाधिकारं यथोचितं दायभागविभक्तं स्मृतिशास्त्रादिभिः प्रतिग्राह्यते । प्रेतश्राद्धादिना प्रेतलोकविमोचनात् नित्यनैमित्तिकादिश्राद्धकृत्य-दानादिधर्मानुष्ठानतश्च नरकलोकविमोचनादन्यान्यलोकेषु तृप्त्याधानात् पुत्रो गमनागमनचक्रे परमसहायकः । अतो दायभागाधिकारी स प्रधानतयेहाभिहितः । एतद्विज्ञानानुकूलमेवान्येऽपि दायभागाधिकारिणो भवन्ति, नान्ये । आर्य्यशास्त्रादिविहितो दायभागो धर्मविज्ञानसिद्धो न मोहजनित इति स्मृतिष्वप्युदीरितम्—

एष स्त्रीपुंसयोरुक्तो धर्मो वो रतिसंहितः ।
आपद्यपत्यप्राप्तिश्च दायभागं निबोधत ।
ज्येष्ठ एव तु गृह्णीयात् पित्र्यं धनमशेषतः ।
शेषास्तमुपजीवेयुर्यथैव पितरं तथा ।
ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम् ।
ततोऽर्द्धं मध्यमस्य स्यात्तुरीयन्तु यवीयसः ।
ज्येष्ठश्चैव कनिष्ठश्च संहरेतां यथोदितम्
येऽन्ये ज्येष्ठकनिष्ठाभ्यां तेषां स्यान्मध्यमं धनम् ।
एवं समुद्धृतोद्धारे समानांशान् प्रकल्पयेत्
उद्धारेऽनुद्धृते त्वेषामियं स्यादंशकल्पना ।
एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्द्धं ततोऽनुजः ।
अंशमंशं यवीयांस इति धर्मो व्यवस्थितः ॥ ८६ ॥

प्रसङ्गत आधिभौतिकशुद्धेः प्राधान्यमाह—

जन्मप्राधान्यं पार्थिवत्वात् ॥ ८७ ॥

पृथिव्या विकारः पार्थिवस्तस्य भावस्तस्मात् जन्मन एव प्राधान्यम् मुख्यता वर्णाश्रमधर्मे इति शेषः । इह मृत्युलोके जीवस्य मातापित्रो रजो-वीर्य्यसाहाय्येन मातृगर्भनिवासपूर्वकं स्थूलदेहोपलब्धिरिति स्थूलदेहस्यैव वैशिष्ट्यमङ्गीक्रियते । नान्यत्र सूक्ष्मलोकेष्वियं व्यवस्था । अपरञ्च आधिभौतिक-शुद्धेराध्यात्मादिशुद्धिवत्साध्यत्वाभावात् वर्णधर्मे तस्या एवाभ्यर्हितत्वमिति प्रागेव प्रमाणितम् । इदानीञ्च पुनरभ्यासेन वर्णाश्रमधर्मे जन्मनः प्राधान्यं प्रतिपादयति, पार्थिवतत्त्वप्रधानेऽस्मिन् मृत्युलोके जीवानां स्थूलदेहसम्भूतिः प्रधानतः पार्थिवादेव तत्त्वाद् भवतीति जन्मनः प्राधान्यमवश्यमापतति । पार्थि-वतत्त्वप्रधानेऽस्मिन् मृत्युलोके विना पार्थिवतत्त्वप्रधानं देहं न किमपि कार्य्यं सिध्यति । तच्च पार्थिवतत्त्वप्रधानं कार्यं जन्मनैवासाद्यत इति वर्णाश्रमधर्मे जन्मनः प्राधान्यं स्वतः सिद्धम् ॥ ८७ ॥

अन्यथाऽपि विज्ञानमिदं द्रढयति—

गुणाश्रयत्वाच्च ॥ ८८ ॥

स्थूलो देहस्त्रिगुणाश्रयो भवतीत्यतोऽपि वर्णाश्रमधर्मे जन्मनः प्राधान्यं ज्ञेयम् । श्रीमता भगवतापि श्रीमद्भगवद्गीतायां स्वयमभिहितम् ।

"चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः" इति

पूर्वजन्मार्जित-संस्कारानुकूलमेव जीवानां विशेषवर्णे, ब्राह्मणक्षत्रियादि-जातौ जन्मेति योगदर्शनेऽपि पतञ्जलिनोक्तम्—

"सति मूले तद्विपाको जात्यायुर्भोगः" इति ।

कर्माशयनिदानभूतेषु क्लेशेषु सत्सु तेषां कर्माशयानां विपाकः परिणति जात्यायुर्भोगरूपतो भवतीत्यर्थः । एतेन सिध्यतीदं पूर्वजन्मार्जितप्रधान-संस्काराश्रयेणैव जीवो जातिविशेषे जन्म गृह्णातीति । तदानीञ्च पूर्वसंस्कारानुसारेणैव तस्य प्रकृति र्भवति । तदनुकूल एव गुणपरिणामस्तस्य स्थूलदेहे सम्पद्यते तस्यैव प्रकृतिर्विलासक्रीडास्थलत्वात् । गुणानां विकासः स्थूलदेहे स च मातापितृजस्ततश्च वर्णाश्रमधर्मे जन्मनः प्राधान्यमिति 'च' शब्दसंसूचितेनानेन विज्ञानेन सुदृढं प्रतिपादितम् ॥ ८८ ॥

आधिभौतिकशुद्धेर्महिमानमभिदधाति--

अविद्योऽप्याचारवान् विप्रः प्रणम्योऽन्यैः ॥ ८९ ॥

नास्ति विद्या यस्याऽसावपि विप्र आचारवान् सदाचारी चेदन्यैः क्षत्रि-यादिभिः प्रणम्य एवेति सूत्रार्थः । पूर्वविज्ञाने वर्णाश्रमधर्मे जन्मनः प्राधान्यं गौरवञ्च समर्थितम् ॥ तत्र दृष्टान्तमाह-यदि कश्चन ब्राह्मणजातिगो विद्यया ज्ञानेन विरहितोऽपि कदाचारहीनः सदाचारसम्पन्नश्चेत् सोऽन्यैः क्षत्रियवैश्य-शूद्रानार्य्यादिभिरवश्यमेव प्रणम्यो भवति । 'अत्राचारवान्' इतिशब्दतः पतितस्य प्रण.मानर्हत्वं द्योतितम्, अपिशब्देन च जन्मप्राधान्यपोषकविज्ञानं दृढीकृतम्

ब्राह्मणमहत्त्वे चानेकशः स्मृतिवचनान्युपलभ्यन्ते । तथा हि--

भूतानां प्राणिनः श्रेष्ठाः प्राणिनां कृतबुद्धयः ।
बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः ॥
उत्तमाङ्गोद्भवाज्ज्यैष्ठ्याद्ब्रह्मणश्चैव धारणात् ।
सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मणः प्रभुः ॥ ८९ ॥

पुनश्च—

अतत्त्वज्ञोऽपि सन्यासी तथा ॥ ९० ॥

पूर्वसूत्रे वर्णधर्मोदाहृत्या जन्मप्राधान्यविज्ञानदृढतां संसाध्येदानी-माश्रमधर्मदृष्टान्तेनापि तदेव द्रढयति । आधिभौतिकशुद्ध्या जन्मप्राधान्यया यथा वर्णगुरु र्ब्राह्मणो विद्यातपोभ्यां विहीनोऽपि सर्वेषां नमस्यस्तथैव ब्राह्मणजातौ गृहीतजन्मतया सन्याससंस्कारसंस्कृतया च तत्त्वज्ञत्वाभावेऽपि सन्यासाश्रम-गतो विप्रोऽन्येषामाश्रमान्तरगानां मानवानां प्रणम्य एवेति नाणीयस्यप्यत्र संशयितिः ।

यद्यपि ब्राह्मणवर्णो गृहीतजन्मनः संन्यासदीक्षादीक्षितस्यापि सन्यासिनो यथायोग्यं कर्मित्वं ज्ञानित्वञ्चापेक्षितमेव तथापि जन्मप्राधान्याद् ब्राह्मणत्वेन सन्यासससंस्कारतस्तल्लिङ्गादिना चाऽधिभौतिकपरिवर्तनेन सहैव सर्वस्तुत्यः सर्वप्रणम्यः स भवतीति द्वितीयेन 'अपि'शब्देन संसूचितम् । स्मृतिष्वपि सन्यासिमाहात्म्यवर्णनं बहुधैवमुपलभ्यते ।

अतो विवेकसम्पन्नः सन्यासी विमलाशयः
ज्ञानाब्धिपारगो देवाः श्रद्धेयो भवतामपि ॥ ६० ॥

आधिभौतिकशुद्धिमुक्त्वेदानीमन्ये अप्याह—

यत्नादन्ये ॥ ६१ ॥

अन्ये आधिदैवाध्यात्मिकशुद्धी यत्नात् उपासनाज्ञानादिनाऽपि साधयितुं शक्ये भवत इत्यर्थः ।

आधिभौतिकी शुद्धिर्हि जन्मना सम्बध्यते न तु साधनेन, किन्तु, इतरे आधिदैवाध्यात्मिकशुद्धी सम्बध्येते साधनेनापि । यद्यपि पूर्वजन्मसंस्कारेणैव कर्मोपासनाज्ञानानि मानवेषूत्पद्यन्ते । तथापि तानि पुरुषार्थसाध्यान्यपि भवन्तीत्यसन्दिग्धम् । स्ववर्णाश्रमानुकूले कर्मोपासने अनुष्ठिते आधिदैवशुद्धिं शास्त्रादिज्ञानमात्मानात्मविचारादितत्त्वज्ञानञ्चाध्यात्मशुद्धिं दिशत इत्याधिभौतिकशुद्धिव्यतिरिक्ते उभे अपि शुद्धी यत्नसाध्ये स्तः ॥ ६१ ॥

वर्णाश्रमधर्मस्य निदानमाधिभौतिकीं शुद्धिमुक्त्वा तन्महिमानमाख्याति—

वर्णाश्रमाभ्यां स्थूलसूक्ष्मे रक्ष्ये ॥ ६२ ॥

वर्णधर्माश्रमधर्माभ्यां क्रमशः स्थूलसर्गरूपस्य मृत्युलोकस्य सूक्ष्मसर्गरूपस्य दैवलोकस्य च संरक्षणं क्रियते । मानवजातिश्च वर्णाश्रमधर्मेणैव स्वजातिं गोपायन्तीह पार्थिवेऽपि जगति चिरं जीवितुमर्हति । तद्विरहिता तु कालान्तरेण पशुवद् व्यवहरन्ती स्वात्मविनाशमेवासादयति । अतश्च मानवजातेः संरक्षकोऽयं वर्णाश्रमधर्मः स्थूलसृष्टेरपि संरक्षकस्तथाऽनेनैव पितरो देवगणा ऋषयोऽपि सम्वर्द्धिता भवन्तीति वर्णाश्रमधर्मोऽयं स्थूलसूक्ष्मसृष्टिसंरक्षकः । तस्याष्टौ प्रधानोपकाराः स्मृतिशास्त्रे प्रतिपादिताः । तथा हि—

आर्य्यजातेर्वीर्यरक्षाऽध्यात्मिकी च क्रमोन्नतिः ।
पितॄणां वर्द्धनाऽनल्पा तत्कृपा-प्राप्तिरेव च ॥
सहोच्चैर्देवलोकैश्च सम्बन्धस्थापनं भृशम् ।
विबुधानां प्रसादश्च विश्वमङ्गलसाधकः ॥

# सूर्योदयः ।

( विविधविषयविभूषितं संस्कृतमासिकपत्रम् )

षष्ठे वर्षे } कार्त्तिकस्य पूर्णिमा, सं० १९८७ । { पंचम संख्या

## गुरु-स्तोत्रम् ।

[ ले०—श्रीतारानन्दब्रह्मचारी, कविभूषणम् । ]

( वैद्यनाथधाम रामनिवास ब्रह्मचर्य्याश्रमस्थः )

—०:※:०—

जय शङ्करशान्तशशाङ्करुचे, रुचिरार्थद सर्वद सर्वशुचे ।

शुचिदत्तगृहीतमहोपहृते, हृतभक्तजनोद्धृततापतते ॥ १ ॥

ततसर्वहृदम्बरदानकृते, नतपापमहद्वनदाहकृते ।

नियमासनधूतविमोहतते, तनुवाणविशोषणधैर्यनिधे ॥ २ ॥

निधनादिविवर्जितबुद्धिकृते, कृतिदत्तमनोरथभस्मभृते ।

नगभर्तृसुतार्पितचित्तधृते, धृतिरस्तु भवत्पदपद्मयुगे ॥ ३ ॥

त्रिजगन्मयरूपविरूपदृक्, दृगुदञ्चनकुञ्चनसंचितदृक् ।

रिपुनाशनशासितकामरते, पतितेष्वपि दत्तकरप्रसृते ॥ ४ ॥

प्रसृताखिलभूतलसंवरण, प्रणवध्वनिभासितहृत्सदन ।

हृदयाप्रप्रदानप्रतृप्तजगत्, मतिरस्तु भवत्पदपद्मदले ॥ ५ ॥

गुरुदेव गिरीश महेश प्रभो, विभवप्रद नार्म्मदशर्म्मद हे ।

कृतयंत्रणभक्तिविघातकृताम्, कृतिरस्तुभवत्पदपद्मरता ॥ ६ ॥

न कृतान्तत एष विभेमि गुरो, प्रहराशुमहाघममोघमते ।

न मतान्तरमन्यदवैमि शिवम्, शिवपादनतेः प्रणतोऽस्मि ततः ॥ ७ ॥

विततेऽत्रजगत्यखिलेऽघहरम् । गुरुतोषणमेव परं गुणवत्,

गुणहीनजनस्य सदाशरण, मम देव गुरो प्रणतोऽस्मि ततः ॥ ८ ॥

# सम्पादकीया अभिप्रायाः।

——:※:——

## पीठविज्ञानम्।

सनातनधर्माणः प्रतिमाप्रभृतिषु षोडशदिव्यदेशेषु पीठस्थापनपूर्वकं सर्वव्यापकं भगवन्तमादिपुरुषं देवान् वा समर्चयन्ति, नहि प्रतिमां स्थूलां, पदार्थविशेषं वा स्थूलम्। निर्गुणं (पञ्चात्मकं), लीलाविग्रहः (अवतारः), देवर्षिपितरः, असुरप्रेतादयश्चेत्येतेषामुपासनया पञ्चविधा उपास्याः। तत्र निर्गुणोपासनायां न हि बाह्यपीठानामावश्यकत्वं, तदर्थमुपासकस्य चिन्मयमन्तःकरणमेव पीठरूपेण परिणमति, अन्येषां चतुर्णां कृते बाह्यपीठानां नितरामावश्यकत्वम्।

ब्रह्माण्डे पिण्डे च समष्टिव्यष्टिरूपेण पञ्चकोषा व्याप्नुवन्ति। कारणेनैतेनैव योगयुक्तमनो लोकान्तरमनायासेनैव समासादयति। येन श्राद्धोपासनादिक्रियाणां फलानि सूक्ष्मेषु देवलोकेष्वपि प्रादुर्भवन्ति। अन्नमय-प्राणमय-मनोमय-विज्ञानमय-आनन्दमयाश्च पञ्च कोषाः एते चतुर्विधभूतसङ्घे, देवलोके, सर्वोच्चेष्वात्मस्वपि सन्तिष्ठन्ते। मरणकाले अन्नमयकोषरूपं स्थूलमिदं शरीरं शवरूपेणात्रैव तिष्ठति, प्राणमयो हि कोषः कोषान्तरेण सह लोकान्तरं प्रतिष्ठते। तेनैव लोकाः प्राणप्रयाणमिति वदन्ति। अतः प्राणमयो हि कोषः स्थूल-सूक्ष्म-लोकान् पारस्परिक-सम्बन्धयुक्तान् विदधाति।

तत्रैव प्राणमये कोषे विकर्षणाकर्षणशक्तिसमन्वयेन प्रादुर्भूते पीठे देवता आविर्भवन्ति। आसने वयमिव, देवाः पीठमधितिष्ठन्ति। मन्त्रशक्तिं, क्रियाशक्तिं, मनोमयीं योगशक्तिं च द्वारीकृत्य पीठानि निर्मीयन्ते। पीठ-प्रतिष्ठातु यथासंकल्पमुच्चावचानि पीठानि समुत्पद्यन्ते। ऋषिभिर्महद्भिश्च प्रतिष्ठितेषु पीठेषु शक्तेराधिक्यं चिरस्थायित्वं च भवति। वेदपुराणतन्त्रप्रतिपादितः पीठसमूह एवास्य प्रमाणम्। शूद्रसंकल्पप्रादुर्भूतं पीठमुद्दिश्य ब्राह्मणानां कृते प्रणाम-निषेधः शास्त्रेषु दृश्यते। यतः प्रबलशक्तीनां ब्राह्मणानां नमस्कारेण दुर्बलशूद्रशक्तिजनितपीठं तेजोहतं जायते। न तेन ब्राह्मणानां प्रत्युत पीठस्यैव हानिरिति। सदा ब्रह्मणि संसक्तचेतसां परमहंसानां कृते दैवपीठ-प्रणाम-निषेधः। अत एव संन्यासिनो दैवपीठं दृष्ट्वा नतशिरसा न भवन्ति, दण्डेनैव स्पृष्ट्वा सम्मानयन्ति। नतशिरस्कतया न तेषां, प्रत्युत पीठ-

स्यैव हानिर्यदि तदल्पशक्तिविशिष्टं स्यात्। पीठविज्ञानस्य, स्थूल-सूक्ष्म-पीठशक्तेराविर्भाव-तिरोभावयोश्चैतदेव मौलिकरहस्यं शास्त्रसम्मतम्।

यदि कुत्रापि तीर्थस्थाने मन्दिरे वा पीठशक्ति-प्रादुर्भावकाले प्रतिष्ठातुरीदृशः संकल्पः स्यात् यत्—अत्र आम्लेच्छं मूर्त्तिपूजिका जनताप्रविशतु—तदा तत्र म्लेच्छचाण्डालादयोऽपि निःशङ्कं प्रवेष्टुमर्हन्ति, पीठस्पर्शे वा न दोषः। भारतेऽत्र तादृशानि बहूनि पीठानि, येषां स्पर्शे न जातिभेदः प्रत्यक्षीक्रियते। परन्तु यत् तीर्थं, मन्दिरं, पीठं वा वर्णाश्रमशृङ्खलां, शुद्धाशुद्धं, स्पर्शास्पर्शं वर्णाश्रमधर्ममूलकं संस्कारं च द्वारीकृत्य प्रतिष्ठितं—बहुकालेन तथैव समर्चितं भवति—तत्र म्लेच्छचाण्डलादीनां प्रवेशस्पर्शनेन पीठहानिः, पीठशक्तेः समूल-प्रणाशश्च भवितुमर्हति। अतः साम्प्रतमुपासना पद्धति-शास्त्रोक्तपीठविज्ञान-विरुद्धं तीर्थ—स्थानेषु देवमन्दिरेषु च विध्वस्य स्पर्शास्पर्शं केचन नेतृ मानिनोऽस्पृश्यान् प्रसह्य प्रवेशयन्ति, तदर्थमुत्साहयन्ति, तेन ध्रुवमुभयेषां महीयसी हानिः, दैवशक्तिप्रकोपश्चेति।

---

## संस्कृतविश्वविद्यालयस्यानुष्ठानपत्रम्।

—:o*o:—

महतस्तमसः पारे पुरुषं ह्यतितेजसम्।
यं ज्ञात्वा मृत्युमत्येति तस्मै ज्ञेयात्मने नमः॥
श्रेयो निःश्रेयसं दद्याद्द्याद्ध्वान्तं त्रिरूपतः।
साद्या विज्ञानदा वन्द्या विद्या विद्योततेतराम्॥

### ( १ ) इतिहासः।

निखिलभारतवर्षीयसनातनधर्ममहासभायाः श्रीभारतधर्ममहामण्डलस्य संस्थापनावसर एव संस्कृतविश्वविद्यालयसंस्थापनं तदुद्देश्येषु स्थिरीकृतम्। ततआरभ्यैव भारतवर्षीयानां प्राचीनविद्यापीठानां पुनरुद्धरणे बहुविधं साहाय्यं समनुष्ठितम्; उपदेशकमहाविद्यालयं, श्रीवाराणसी-विद्या-परिषदं च संस्थाप्य यथाशक्ति कार्यं प्रारब्धमास्ते स्म। अनन्तरं हि काशी-हिन्दुविश्वविद्यालयसंस्थापनावसरे श्रीमहामण्डलप्रधानसभापतिना स्वर्गीय-महाराजाधिराजदरभङ्गाधीश्वरेण चापि संस्कृतविश्वविद्यालयं संस्थापयितु-मुद्घोषितम्, स्वयं च नैजं प्रतिनिधिमण्डलं तद्विषये भारतप्रधान-

शासकेन परामर्शं विधातुं प्रहितश्च। ततो हि तीर्थराजे प्रयागे समितिरेका सम्मिलिता, यत्र स्वं स्वं विधेयं द्वारीकृत्य श्रीमान् महामना मदनमोहन-मालवीयः, श्रीयुक्त डाक्टर एनी बेसेण्ट प्रतिनिधिः, स्वर्गीयो महामण्डलस्य प्रधानसभापतिस्तत्प्रतिनिधयश्चान्ये समुपस्थिता अभूवन्। तदानीं च श्रीमत्या एनीबेसेन्ट महोदयायाः श्रीमतो मालवीय महोदयस्य च विद्यानोद्देश्यमेकमिव निभाल्य महामण्डलसंचालकप्रतिनिधिप्रस्तावत उभयोः सम्मेलनमभवत्, यस्य परिणामः काशी–हिन्दूविश्वविद्यालयः प्रत्यक्षमस्ति। स्वकीयोद्देश्य-पार्थक्यं निश्चित्य श्रीयुतमालवीयमहोदयद्वारा प्रारभ्यमाणहिन्दुविश्वविद्या-लयशुभानुष्ठाने सौविध्यं सौकर्य्यं च सुविधाय महामण्डलसभापतिप्रति-निधिभिः संस्कृतविश्वविद्यालयानुष्ठानं स्वतन्त्रमेवाक्रियत, तदीयधर्मकार्य-समूहश्च वाराणसी-विद्यापरिषद्म् उपदेशकमहाविद्यालयं च द्वारीकृत्य बहुकालं परिचालितः। ततश्च वाराणस्यां सम्पद्यमानब्राह्मणमहासम्मेल-नावसरे श्रीमहामण्डलप्रधानसभापतिना स्वर्गीयदरभङ्गाधीश्वरेण पूर्वप्रस्ता-वितं स्वीयं संस्कृतविश्वविद्यालयशुभानुष्ठानं सफलयितुं पुनरुत्साहः प्रदत्तः प्रदर्शितश्च। श्रीमता तेन स्वीयस्वर्गारोहणात् पूर्वमेव "भारतसम्राट्न्यास" (Emperor of India Trust) नामकमेकं निधिं संस्थाप्य तद्विषये ब्राह्मण-महासम्मेलनप्रस्तावसम्बन्धे चैकं पत्रं महामण्डलप्रधानकार्यालये प्रहित्य श्रीमहामण्डल-श्रीब्राह्मणमहासम्मेलनयोर्नेतृवर्गसहयोगितया स्वीयं शुभोद्देश्यं कार्यरूपेण परिणमयितुं प्रयतितमपि। तदानीमवसरे तत् शुभानुष्ठान-मुद्दिश्य स्वर्गीयहिन्दुसूर्यमहाराणउदयपुरनरेश्वराणाम् अन्येषां च महाम-हिमशालिनां राजन्यानां, गण्यमान्यानां सज्जनानां च सहायताप्रदानाय शुभाभिवचनमासादितम्। स्वर्गीयहिन्दुसूर्येण तु सार्द्धलक्षमुद्रास्तत्र निधौ प्रदत्ताः, चिरञ्जीविना विद्यमानदरभङ्गाधीश्वरेण महाराजाधिराज-श्रीकामेश्वरसिंहशर्ममहोदयेनाऽपि सार्द्धलक्षमर्पितमिति परमं प्रमोद-स्थानम्। विजयपुरनरेशेन स्वीये राज्ये विपुला भूमिस्तदर्थमर्पिता चेत्यपि महानानन्दविषयः।

## (२) आवश्यकत्वम्।

संस्कृतविश्वविद्यालयस्यावश्यकत्वसम्बन्धे न भवेदेव कस्यचनापि वैमत्यम्। भूमण्डलेऽत्र सर्वतः प्राचीने विद्यापीठे सनातनधर्मप्रधानकेन्द्रे श्रीवाराणसीनगरे स्वजातीयाद्वितीयविश्वविद्यालयस्य तस्य प्रधानकेन्द्रस्थापन-विषयेऽपि न स्यादेव कस्यापि मतभेदः। कठोर-ग्रीष्मकालानन्तरं सरसवर्ष-

त्तौरिव, प्रबलशीतात्परं मधुमयवसन्तस्येव, जागतिक्या नास्तिक्यमूलिकाया अध्यात्मदृष्टि-परमात्मज्ञान-विरहिताया: शिक्षणसरण्याः, भारतस्य हिन्दुजातेश्च वर्त्तमानाधःपतितदशाया आर्य्यजातिचिरजीवित्वसम्पादकवर्णाश्रमश्रृङ्खलायां सर्वतः समाक्रमणस्य चानन्तरम् अज्ञानविमोचयित्र्या विद्याया अद्वितीय-शक्तिशाली केन्द्रप्रादुर्भावः प्राकृतिकः सामयिकश्चेति नास्त्यत्राणीयानपि संशयः ।

## ( २ ) उद्देश्यम् ।

संस्थापितस्य तस्य विश्वविद्यालयस्य प्रधानोद्देश्येषु निम्नाङ्कितसदुद्देश्यानि नूनं निभालनीयानि—

( क ) वसुधामेव कुटुम्बकमवधार्य सर्वेभ्य एव ज्ञानमार्गमुपदेष्टुं पूज्यपादत्रिकालदर्शिमहर्षिप्रवर्त्तितशिक्षाप्रणाल्याः प्रसारस्ततस्थायित्वसम्पादनं च ।

( ख ) या च शिक्षापद्धतिः स्वीयप्राचीनमर्यादया आध्यात्मिक्याः समुन्नतेः साधिका, वर्त्तमानदेशकालपात्रोपयोगिनी, तस्याः संस्थापनपूर्वकं निखिलेऽपि भारते परीक्षाकेन्द्राणां संस्थापनम् ।

( ग ) भारतीयप्राचीनविद्यापीठानां पुनरुज्जीवनदृढीकरणपुरस्सरं वाराणसेयप्रधानकेन्द्रद्वारा साहाय्य-प्रोत्साह-प्रदानम् ।

( घ ) भारतस्य प्रतिप्रान्तं, प्रतिनगरं, प्रतिग्रामं वा ब्राह्मणविपश्चितां दातॄणां वा प्रयत्नेन प्रवर्त्तितविद्याकेन्द्र-शिक्षाप्रचारकार्याणां स्वकीयशुभोद्देश्यपूर्त्त्यै संग्रन्थनं, स्वीये सहायकत्वेऽनुकूलत्वे च प्रवर्त्तनम् ।

( ङ ) सनातनधर्मावलम्बि-नर-नारी-बालक-बालिकासु धार्मिकशिक्षा-प्रसारणम् ।

( च ) वर्णाश्रमसदाचारान् आध्यात्मिकसमुन्नतिशीलसम्प्रदायान् संरक्षितुं भारतवर्षीयाणां सदाचाराणां विदुषां ब्राह्मणानां विद्यादानकार्येषु साहाय्यप्रदानम् ।

( छ ) वाराणस्यां संस्थापितस्यास्याद्वितीयविद्यापीठस्य ज्ञानज्योतिषा निखिलभूमण्डलनिवासिनामुपकाराय प्रयतनम् ।

( ज ) काश्यामत्र स्वसिद्धान्तानुकूलविद्याप्रचारसंस्थाभिः स्वीयं सम्बन्धं स्थिरीकृत्य स्वोद्योगेन विविधान् महाविद्यालयान् संस्थाप्य विश्व-विद्यालयस्यैतस्य दृढ़तासम्पादनम् ।

(झ) राष्ट्रभाषां हिन्दीमाश्रित्य निखिलेऽपि भारते ज्ञानज्योतिर्विस्तारपूर्वकं राष्ट्रभाषामुन्नमय्य तत्प्रचारेण राष्ट्रियश्रृङ्खलायां साहाय्यप्रदानम् ।

(ञ) धर्मभावपूर्ण-स्त्रीशिक्षा-प्रचारे सहयोगिता वरणम् ।

(ट) भारतस्य तत्तत्प्रान्तराजकीयसम्बन्धयुक्तविविधभाषाविद्यालय-महाविद्यालयेषु सुकौशलपूर्णधार्मिकशिक्षाप्रचारोद्योगविधानम् ।

(४) श्रृङ्खला ।

(क) इदानीं स्वल्पेनैव साधनेन शुभकार्यमिदं प्रारब्धव्यमिति, अकृत्वा स्वतन्त्रभवननिर्माणं श्रीमहामण्डलप्रधानकार्यालये खलु तस्य प्रधानकार्यालयः सन्तिष्ठताम् । काशीक्षेत्रस्य मध्यभागे प्रसिद्धचतुष्पथोपरि लक्षत्रयाधिकमूल्या या विशालभूमिरधिगता, तत्रैव यथेष्टधनप्राप्तेरनन्तरं तदीयः प्रधानकार्यालयः, सुधियां निवासालयः, पुस्तकालयादयश्च निर्माणमेष्यन्ति ।

(ख) यत्र यत्र संस्कृतविद्यालयाः, प्रकारान्तरेण वा संस्कृतसंवर्द्धन-व्यवस्था, स्वजातीयकार्यसम्पादनदक्षाः सदुत्साहाश्च सज्जनाः समुपलभ्यन्ते, तत्र तत्र परीक्षाकेन्द्राणां संस्थापनेन विश्वविद्यालयोद्देश्यानां साफल्याय प्रयत्नोऽनुष्ठास्यते ।

(ग) वेदाः, तदङ्गानि, वैदिकदर्शनानि, साम्प्रदायिकदर्शनसिद्धान्ताः, धर्मशास्त्राणि, पुराणानि, आयुर्वेदः, ज्यौतिषम्, कर्मकाण्डम्, तुलनात्मकदर्शन-ज्ञानम्, देशकालोपयोगितापरिज्ञानम्, सनातनधर्ममहत्त्वम्, हिन्दीभाषां द्वारीकृत्य स्त्रीणां, विद्यालय-महाविद्यालय-(स्कूल-कालेज) च्छात्राणां च धार्मिक-शिक्षणम् इत्यादि लक्ष्यीकृत्य विभिन्नपरीक्षापद्धतीनां प्रबन्धः, आर्थिकपारितोषिक-मानद्रव्य-मानपत्रादि-प्रदानेन परीक्षार्थिनामुत्साहश्च समवर्द्धयिष्यते ।

(घ) पत्राचारान्, सुयोग्यप्रचारकान् वा द्वारीकृत्य भारतस्य प्रतिप्रान्त-नगरग्रामं परीक्षाकेन्द्रसंस्थापनं, निरीक्षकान् प्रेष्य तद्गतत्रुटीनामपाकरणं च विधास्यते ।

(ङ) सर्वत्र परीक्षाकेन्द्रसंस्थापनार्थं यथासम्भवमार्थिकं प्रकारान्तरेण वा साहाय्यं प्रदास्यते ।

(च) परीक्षार्थिभ्यो नाममात्रं शुल्कमादाय तदीयपरीक्षाकेन्द्रप्रबन्ध-सौविध्यसम्पादनार्थं प्रदास्यते ।

(छ) आङ्गलभाषाध्येतॄणां परीक्षाप्रदानप्रबन्धस्तदीयेषु विद्यामन्दिरेष्वेव सम्पत्स्यते, तेभ्यश्च समुचितवृत्तिप्रदानेन धार्मिकशिक्षा-समुत्साहो वर्द्धयिष्यते ।

( ज ) स्त्रीणां कृते तन्निलयेष्वेव धर्मशिक्षणविधानं स्थिरीकृत्य सर्वविधास्ताः स्वीयामुन्नतिं विधातुमुत्साहयिष्यन्ते ।

( झ ) धनागमसौविध्यमनुसृत्य वाराणसेयेभ्योऽन्येभ्यश्च प्राचीनविद्यापीठेभ्यः स्वीयशुभोद्देश्यपरिपूर्त्यै धनसाहाय्यं दास्यते ।

( ञ ) धर्मस्य दर्शनानां च तुलनात्मकपरिज्ञानम्, वर्णाश्रमबन्धमहत्त्वम्, धर्मोपदेशपौराणिककथाकीर्त्तनवैदिकस्मार्त्तकर्मकाण्डादीनि चयैः प्रसारमुपयास्यन्ति, हिन्दवोऽपि धर्मज्ञानं सम्पाद्य कर्त्तव्यनिष्ठाः स्युस्तादृशपुस्तक-पुस्तिकानां प्रकाशनम्, विना मूल्येन अल्पमूल्येन वा तद्वितरणं च करिष्यते ।

( ट ) यथाधनलाभम्, सदाचारपरायणानां विदुषां ब्राह्मणानाम् निवसतामेव स्वगृहेषु प्राचीनपद्धत्या विद्यार्थिभ्यो विद्यादान कार्येषुविधा सम्पादयिष्यते ।

## ( ५ ) आर्थिकी व्यवस्था ।

( क ) यथा बीजारोपणेन महतो द्रुमस्य प्रादुर्भावस्तथैव भारतवर्षीय-संस्कृतविश्वविद्यालयमहायज्ञोऽपि प्रथमतः स्वल्पव्ययेनैव प्रारप्स्यते । सम्प्रति पञ्चषलक्षमुद्रात्मकेन मूलधनेनैव विद्याप्रचारक-स्वधर्मविस्तारक-महामखोऽयं प्रारब्धस्स्यात् । तत्र उदयपुरस्य धर्मराज्यस्य साहाय्यं सनातनधर्म-शिक्षा-विस्तारकृते सार्द्धलक्षरूप्यकात्मकं समुपलब्धमेव । तस्य कुसीदस्तु लभ्यते । वर्तमानदरभङ्गाधीश्वरमहाराजाधिराजेनापि सार्द्धलक्षात्मकं साहाय्यं प्रदत्तम् । स्वराज्ये विपुला भूमिः ( तीन हजार बीघा जमीन ) विजयपुरनरेशेनाऽपि समर्पिता । अन्येच राजानो धनिकाश्च धनसाहाय्यं प्रदातुं प्रतिज्ञातवन्तः सन्ति ।

( ख ) मूलधनस्य कुसीदरूपेण आयेन प्रधानकार्यालय-परीक्षा-विश्वविद्यालयमुखपत्राणाम्, उपदेशक-निरीक्षकादीनां व्यवस्थापनं तत्सम्बन्धि कार्यान्तरं च सम्पत्स्यते ।

( ग ) अनन्तरं च छात्रवृत्तयः, परीक्षोत्तीर्णेभ्यो विद्वद्भ्यो मानद्रव्य-पारितोषिकादिप्रदानम्, अन्यपाठालयेभ्यः केन्द्रेभ्यश्च सहायतादि विविधं विधेयं यथासाहाय्यमग्रेसरिष्यति ।

( घ ) मूलधनातिरिक्तं निम्नाङ्कितरूपं चापि साहाय्यमधिगमिष्यत इत्याशास्यते । तद् यथा—राज-महाराजादिभ्यो भूमिप्राप्तिः, तदायेन तत्तन्नाम्नैव पारितोषिकं दास्यते । छात्रवृत्ति—परीक्षोत्तीर्णपण्डितपारितोषिक-मानद्रव्यादिकृते स्वतन्त्ररूपेण दातृभिर्मासिकं वार्षिकं वा धनसाहाय्यं प्रदातुं शक्यते । तत्तन्नाम्नैव तत्सद्धनानामुपयोगो विधास्यते, येन ते धर्मोयशश्च लभ्येत ।

श्रीभारतधर्ममहामण्डलप्रधानसभापतिमहाराजाधिराजदरभङ्गाधीश्वर-महोदयानां निदेशेन श्रीमान् आनरेबुल धर्मरत्नम् राजा सर मोतीचन्द सी० आई० ई० महोदयः कोषाध्यक्षपदे संस्थापितः । दातृभिर्धनसाहाय्यं कृपया तन्नाम्नैव प्रहेलिमम् ।

निवेदकः—
(कुँवर) कवीन्द्रनारायणसिंहः
(रायबहादुर)
प्रधानाध्यक्षः, श्रीमहामण्डलप्रधानकार्यालयः,
जगत्गञ्ज, बनारस कैण्ट ।

---

## भारत-सम्राट् ऋणग्रस्तः ।

पृथिव्यामिदानीं धनकुबेरस्य प्रजातन्त्रस्य संयुक्ताऽमेरिकाप्रदेशस्य निम्ननिर्दिष्टरूपेणाधो लिखितदेशा ऋणिनः सन्ति । अत्र प्रदर्शिता अङ्काः 'डालर' पदेनावगन्तव्याः । अनुमानतः सार्धरूप्यकत्रयस्यैको 'डालरः' कथ्यते—

आष्ट्रेलिया २४६१४८८१, बेलजियमः ४०८१८०००, जेकोस्लोवेकिया १७३०७१००३, फ्रांसः ४०२५०००००००, ग्रेटवृटेनः ४४५३०००००००, ग्रीसः ३२४३२०००, हंगरी १६३१५६०, इटली २७२२००००००, पालैण्डः ९०७७१६५२६, रूमानिया ६५१६०५६०, रूसः २६३९९९६३६, युगोस्लेविया ६२१५०००० इत्यादि ।

उपरिनिर्दिष्टेन ऋणेन ज्ञायते यद् ग्रेटवृटेनस्तु सर्वापेक्षया अधिकेन ऋणेन ग्रस्त इति । न केवलममेरिकाया एव प्रत्युत अन्येषामपि बहूनां देशानाम् ऋणमस्ति वृटेनस्य उपरि । एतेन ज्ञातुं शक्यते यद् भारतसम्राट् महोदयः कीदृगृणग्रस्त इति ।

# पण्डित-सभा ।

—:*:—

यानि जगति विश्रुतानि श्रुत्यर्थप्रतिपादकानि पुराणानि महता प्रयासेन प्रभूतेन च कालेन व्यासेन महर्षिणा विरचितानि तानि कलिकश्मलकलुषित-शेमुषीकैस्सर्वतस्तिरस्कारपदवीमारोहितानीति चिन्तयतां केषां सचेतसां चेतांसि न मुह्यन्ति ।

बहवस्तु धिया विरहिता गिरमुद्गिरन्ति नितान्तं निस्तत्वानि पुराणानीति । तथाहुरपरे—हं हो ! येन परमर्षिणा लघ्वक्षरेषु सूत्रेषु ते सिद्धान्ता गोपिता यान् चिन्तयन्तो वैदेशिका दार्शनिका अभिमन्यन्ते सबहुमानञ्च कथयन्ति—"यत्र योरोपीयदर्शनावसानस्तत्र भारतीयदर्शनस्य प्रादुर्भाव इति" ( मैक्समूलरनाम्नोक्तम् ) तेनैव प्रभूताक्षरेषु विरचितानि पुराणानि निस्तत्त्वानीति वाक्यं भवादृशामेव मुखकमले शोभते। को वा पुराणावलोककः पुराणेषु निस्तत्वतां व्यवस्थापयितुं प्रवृत्तो भवेद् । येषु समेषां न्यायवेदान्तसांख्ययोगवैशेषिकमीमांसाभिधदर्शनानां पदे पदे विचारः—धर्मस्य च तत्तत्स्थलेषु विवेकः, अग्निपुराणादिषु च सम्पूर्णव्याकरणविवेचनम् कृतमिति । अथैवं स्थिते वेदैनैवैतादृशज्ञानसिद्धौ किमर्थोऽसौ प्रयासराशिरस्य महर्षेरितिचेत् तेषामेव वचनेनास्योत्तरं ब्रूमः । यथाहुः—

> स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा
> इति पौराणमाख्यानं कृपया मुनिना कृतम् ॥ १ ॥

एतच्च विशेषरूपेण "पुराणमत-दीपिका" यां विवेचयिष्यामः ।

पराधीनताजालबद्धस्य पदे पदे दुःखमनुभवतः सकलराष्ट्रमौलिभूतस्य सर्वेषु राष्ट्रेषु सम्प्रति नीचत्वेन संख्यातस्य भारतस्य भाग्यविपर्ययाद् यान्येव प्राचीनगौरवज्ञापकानि पुराणानि, तान्यपि भारतीयैरेवाज्ञातपरिच्छेदतया विशेषेणाधिक्षिप्तानि इति चिन्तयतां बुद्धिपथमारोहतीयं लौकिकी गाथा "विवेकभ्रष्टानां भवति विनिपातः शतमुखः" इति ।

हन्त ! येषु यान्येव भगवत आनन्दकन्दस्य लीलागृहीतदेहस्य योगेश्वरत्वसूचकानि वचनानि, तान्येव बुद्धिमान्द्यादगृहीतयाथार्थ्यैस्तस्य व्यभिचारित्वसूचकत्वेन योजितानि । कोवाऽत्र दोषस्तेषामुक्तमेव हि भगवता शङ्कराचार्येण "नैषस्थाणोरपराधो भवति यदेनमन्धो न पश्यति नाम" इति ।

दूरे तिष्ठन्तु नाम पुराणेषु श्रद्धालवविहीनाः, दूरे च तिष्ठन्तु तेषां व्यासाति-

रिक्तकृतित्ववादिनः, ये तु सनातनधर्मस्तम्भेषु पुराणेषु श्रद्धालवः, ये च वेदविभागकर्तृवेदान्तप्रणेतृव्यासकृतित्वव्यवस्थापकास्ते कियदुपकृतवन्तः पुराणानाम्? के वा तैस्तेषु व्यवस्थापिता दोषाः परावर्त्तिताः? के वा जटिलजटिला अनन्विता इव भासमानाः समन्वयपदमारोपिताः? यद्यपि भारतप्रसिद्धैः सनातनधर्मप्रचारपरायणैः स्वामिदयानन्दप्रभृतिभिः पश्चात् धर्मविवेचनारूपेण बहुत्र समन्वयः कृतस्तथापि न पौराणशङ्कालेशोऽपि नावतिष्ठत इतिवक्तुं कस्यापि सचेतसो जिह्वा प्रसरति।

हं हो! करे कृतानि तु पुराणानि द्विजिह्वा इव विषावलीढदन्तैरिव वमन्ति शङ्काविषानि। इयन्तु दशा पुराणानाम्, येषां तु विषये पौरस्त्याः पाश्चात्याश्च विद्वान्सो निश्शङ्कमुररीकुर्वन्ति नैतेभ्यः परः प्राचीनो ज्ञानदाता भूवलये विशालतमेऽस्ति, तेषां नाम्नैव स्वविषयप्रतिपादकानां वेदानां का दशेत्यपि विचारणीयम्। साम्प्रतं यदि कोऽपि इहेत चतुरो वेदान् क्रीणीयामिति तर्हि तेन भारतजनुषा स मनोरथः शर्मण्यादिदेशैरेव पूरयितव्य इति श्रुत्वा कस्य न भारते गृहीतदेहस्य भारतीयप्राचीनगौरवरक्षकस्य चेतश्चेखिद्यते! दैवदुर्विलसिततया यवनानां यदा भारते राज्यमासीत् तदा बहूनां संस्कृतग्रन्थानां भस्मसाद्भवनं न तिरोहितं प्राचीनेतिहासवेदिनाम्। शङ्के, वेदराशेर्याः शाखा भस्मसादभूवन् ता एव साम्प्रतमनुपलभमाना वर्त्तन्ते इति।

एतेषां प्राचीनगौरवाणां रक्षणं सुरभारतीसमादरिचेतसामेव कर्त्तव्यमित्यालोक्य सिपाह (आजमगढ़) स्थाने "पण्डितसभा" नाम्नीसंस्था संस्थापिता विद्यते। एषा च त्रिभेदैर्भिन्ना पुराणप्रचारविभागः, पुस्तकप्रकाशनविभाग शास्त्रार्थविभागश्चेति नाम्ना विश्रुतैः॥

प्रथमविभाग-सदस्यैः स्वदेशे विदेशेषु च कथावाचनद्वारा व्याख्यानदानद्वारा च विवादास्पदीभूतानां कथानां कथांशानाञ्च समुचितोत्तरप्रदानम्, लोकस्य च तेषु श्रद्धाप्रवर्त्तनम्, स्वीयप्राचीनगौरवस्य पुराणानां च महत्तायाः तेभ्यः प्रतिपादनमनुष्ठेयम्। अत्र शताधिकानां सनातनधर्मे पुराणेषु च श्रद्धालूनां विदुषामावश्यकता वर्त्तते। किन्तु वित्ताभावादतिन्यूना तेषां संख्या वर्त्तते।

द्वितीयविभाग-सदस्यैश्च पुराणविषयकनिखिलशङ्कान्वेषणम्, तेषां च सदुत्तरप्रकाशनम्, जटिलानां पुराणानां तदवयवानां वा उपयुक्तटीकाविरहितानां टीकाप्रकाशनम्, वेदपुराणयोश्च समन्वयीकरणम् तस्य च "पुराणमतदीपिका" नाम्ना प्रकाशनमित्यादीनि कार्याणि विधेयानि।

तृतीयविभागश्च नाम्नैव स्वविषयप्रतिपादनसमर्थः। एतस्य च विभागस्य

प्रतिवर्षं सम्मेलनं विधेयम् इत्यध्यक्षैर्निर्धारितम् । तच्च प्रायशो ग्रीष्मे कार्यम् । तत्र च निखिलप्रान्तीयानां विदुषां, सकलसनातनधर्मीयसभाप्रतिनिधीनाम् इतरेषां सभाप्रतिनिधीनाम् समागमनमाकाङ्क्षितम् । एतद्विभागाध्यक्षश्च प्रतिवत्सरं नवीनो निखिलसदस्यमान्यः, तेषां वैमत्येऽधिकसदस्यमान्यः प्रायशः प्राप्तमहामहाध्यापकोपाधिको निखिलदर्शनवेदाङ्गादिषु पूर्णपाण्डित्यविभूषित एव भविष्यति । सम्मेलने च निर्णेया विषयाः सम्मेलनत एकमासपूर्वं कार्यकारिणीसदस्यै निर्धार्य सर्वेषामुपकृतये समाचारपत्रादिद्वारा सर्वेभ्यः सदस्येभ्यः सूचनीयाः । कः सभाध्यक्ष इति निर्णये सदस्यानां प्रतिनिधयो माननीयसदस्याः एव मतदानेऽधिकारवन्तः, सम्मेलने च विषयमालम्ब्य कथने । सदस्याश्च द्विविधाः कृतिद्वारोपकारका धनद्वारोपकारकाश्चेति । एतस्याश्च सभाया भाषा "सुरभारती" । सुरभारत्यैव सर्वं कार्यजातं भविष्यति सुरभारती च यथा प्राचीनगौरवं लभते प्रतिपत्तनं प्रतिनिद्वद्गृहम् प्रत्याभीरघोषं च यथा स्वच्छन्दं विहरेत् तथैव विधिर्विधेय इति परमोऽस्याः सभाया लक्ष्य इति ।

रामजीपाण्डेयशास्त्री
(व्याकरणशास्त्री साहित्याचार्यः ।)

---

## सुरभारती-गौरवम् ।

आविर्भूता विराड्वक्त्रात् स्वीकृता पूर्वतोऽमरैः ।
पूता च शेषजिह्वाभि र्भाषा जयति काऽपि सा ॥ १ ॥
सम्यक्तया प्रविज्ञातः प्रयुक्तः सौष्ठवेन च ।
यस्या एकोऽप्यहो ! शब्दः स्वर्गे भवति कामधुक् ॥ २ ॥
सिसृक्षतः प्रजावर्गमाविर्भोरीक्षणक्षणात् ।
प्रपञ्चाकुञ्चनं यावद् या च भाषा सनातनी ॥ ३ ॥
स्वतः प्रमाणतां यातश्चतुर्वर्गफलप्रदः ।
अनादिर्भगवान् वेदः साङ्गो यस्यां विराजते ॥ ४ ॥
एवं स्मृतिपुराणेतिहासाः सागमदर्शनाः ।
भासन्ते यत्र भाषायां वेदार्थानां समर्थकाः ॥ ५ ॥
स्वर्नारकौ पुनर्जन्म पुण्यपापेशदेवताः ।

ययाऽस्माभिरदृष्टानि दृष्टान्येतानि भाषया ॥ ६ ॥
यया हि भाषया दत्तं हव्यं गृह्णन्ति देवताः।
ययैव चाऽर्पितं कव्यं पितरो भुञ्जतेऽञ्जसा ॥ ७ ॥
मोक्षदाने बद्धकक्षा दक्षा ह्यात्मनिरूपणे।
सर्वोपनिषदो देव्यो यस्यां दीव्यन्ति शान्तिदाः ॥ ८ ॥
यस्यां मन्वादयो धर्ममर्थं कामन्दकादयः।
वात्स्यायनादयः कामं निकामं प्रत्यपादयन् ॥ ९ ॥
रत्नाकरसमानायां यस्यामिव न कासुचित्।
भाषासु पदरत्नानि प्रचुराणि लभामहे ॥ १० ॥
यस्यामेकस्य वाच्यस्य बहवो वाचकाः स्थिताः।
वाचकस्य तथैकस्याऽनेके वाच्याश्चमत्कराः ॥ ११ ॥
यस्यां गम्भीरभाषायां ग्रथिते ग्रन्थविस्तरे।
भावा नवनवा एव प्रस्फुरन्त्युत्तरोत्तरम् ॥ १२ ॥
गृहीतेऽपि यदीयेऽर्थेऽनुवादेनाऽन्यभाषया।
पर्याप्तं नैव तात्पर्यं स्वारस्यात्पर्यवस्यति ॥ १२ ॥
सत्यां माधुर्यधुर्यायां यदीयपदसंपदि।
मन्यन्ते मधु मृद्वीकां सुधामपि मुधा बुधाः ॥ १४ ॥
व्यासवाल्मीकिसत्कव्योर्यन्मये काव्यविस्तरे।
अस्मत्पूर्वजचारित्रं प्रत्यक्षमिव लक्ष्यते ॥ १५ ॥
यत्राऽन्येषां कवीनां च काव्यानि विविधान्यपि।
सद्यो मनोविनोदीनि शिक्षालक्ष्याणि जाग्रति ॥ १६ ॥
पाश्चात्यैरपि विद्वद्भिर्मुक्तकण्ठं प्रवर्णितम्।
नाटकं कालिदासीयं यस्यां शाकुन्तलं कृतम् ॥ १७ ॥
नामैव श्रैष्ठ्यमाचष्टे यस्याः 'संस्कृत' मित्यलम्।
स्वभिन्नाः प्रथयद्भाषा अशेषा अप्यसंस्कृताः ॥ १८ ॥
सदा चतुर्वर्गफला क भाषा संस्कृताकृतिः ?।
कियत्कालफलाभासा क भाषा हन्त ! चेतराः ? ॥ १९ ॥
भवन्तु भौतिका वादा भाषास्वन्यासु भूरिशः।
परमाध्यात्मिको लेशः स्वमूलो नैव लभ्यते ॥ २० ॥
न वयं भौतिकानन्दैः स्तुष्टा आयतिकष्टदैः।
स्वरूपानन्दसिद्धौ तु भाषा अन्यास्तुषोपमाः ॥ २१ ॥

पाश्चात्यविद्यामद्येन मत्ता विकृतचेतसः ।
मृतभाषां प्रभाषन्ते केचनाऽमरभारतीम् ॥ २२ ॥
विषाद एव यत्—'तेषां कर्णकोटरगोचरः ।
नाऽभूद् विद्वान् गुणग्राही निष्पक्षो मोक्षमूलरः' ॥ २३ ॥
निमग्न एव जानीते तस्यां तस्याः सतो गुणान् ।
मन्दरो विदुरोऽम्भोधेर्गाम्भीर्यस्य हि वस्तुतः ॥ २४ ॥
रागद्वेषौ समुत्सार्य ये के ऽप्यालोचयन्ति चेत् ।
पश्यन्ति सुरभारत्या बहून् विश्वहितान् गुणान् ॥ २५ ॥
वैज्ञानिकचमत्कारो योऽद्य स्फारोऽक्षिगोचरः ।
विदुस्तमपि वेदज्ञा आविष्कृतमथर्वतः ॥ २६ ॥
अहो ! संस्कृतभाषाया महोदार्यं विचार्यताम् ।
यस्यामविद्यमाना तु काऽपि विद्या न विद्यते ॥ २७ ॥
आर्यग्रन्थद्रु-लवनैर्यवनैर्हन्त ! भारते ।
भुक्तपूर्वं ऽप्यहो ! ग्रन्था आर्याणामेव भूरयः ॥ २८ ॥
तत्राऽपि मुद्रिता एव प्रायो लोचनगोचराः ।
अमुद्रिताः कियन्तः स्युरिति को वेद कोविदः ? ॥ २९ ॥
कथं संस्कृतभाषाख्यां मञ्जूषां न जुषेमहि ? ।
प्रत्नसद्ग्रन्थरत्नाढ्यां यस्यां सर्वस्वमस्ति नः ॥ ३० ॥
इयं विमानमस्माकमियं वार्त्ताहरा तडित् ।
दूरवीक्षणयन्त्रं च सर्वं सुरसरस्वती ॥ ३१ ॥
नूनं संस्कृतभाषाया अशेषानेव सद्गुणान् ।
वक्तुं शेषो ऽपि नेशीत मादृशानां तु का कथा ? ॥ ३२ ॥
एकैका मातृभाषाऽऽस्ते सर्वेषां देशभेदतः ।
परं विश्वजनीनाऽऽद्या भाषा वेद्याऽखिलैरपि ॥ ३३ ॥
दिवौकसां सुमनसां देवानाममृतान्धसाम् ।
कोऽन्धो नाऽऽराध्नुयाद् भाषां मनोवाक्कायशोधनीम् ? ॥ ३४ ॥
यत्किञ्चित् प्रलपन्त्वन्ये सिद्धान्तोऽस्माकमीदृशः—।
'गीर्वाणवाणी सेव्यैव श्रद्धया कामधेनुवत्' ॥ ३५ ॥

श्रीमाधवप्रसादशर्मणो देवकूटस्य ।

---

# व्यसनम् ।

प्रबन्द्धा—नर्मदाशंकरमनःसुखरामपण्ड्या ।
( श्रीराजकीयसंस्कृतमहाविद्यालयः बड़ोदा )

—०:॰:०—

इष्टाऽनिष्टवस्तुविषये चित्तसंलग्नं व्यसनं इति व्यसनशब्दस्य शब्दार्थः। व्यस्यते क्षिप्यतेऽनेनेति व्यसनम् । व्युपसर्गपूर्वकस्य "असु क्षेपणे" इति दिवादिगणपठितस्य धातोः "करणाऽधिकरणयोश्च" ।३।३।११७ इति पाणिनीयसूत्रेण ल्युट्प्रत्यये, तस्य च "युवोरनाकौ" इति सूत्रेणाऽनादेशे जाते व्यसनशब्दस्य सिद्धिर्भवति । येन शरीरस्य, मनसो वाचश्च पृथक्त्वं भवति तद्व्यसनमिति कथ्यते । तानि च व्यसनानि द्विविधानि—सुव्यसनानि, दुर्व्यसनानि चेति । तत्र सुव्यसनैः शरीरस्य मनसो वाचश्च प्रफुल्लता भवति । दुर्व्यसनैः शरीरे राजयक्ष्मादयो रोगाः प्रभवन्ति । अन्तःकरणञ्च मलिनं भवति । भगवता मनुना मनुस्मृतौ सप्तमेऽध्याये त्रिपञ्चाशत्तमे श्लोके कथितम् । "व्यसनस्य च मृत्योश्च व्यसनं कष्टमुच्यते । व्यसन्यधोऽधो व्रजति स्वर्यात्यव्यसनी मृतः" इति। मृत्युदुर्व्यसनयोर्मध्ये, मृत्युरेव वरम् । कुतः दुर्व्यसनस्य शास्त्रे निषिद्धत्वात्, नरकप्राप्तिहेतुत्वात्, शरीरेऽनेकविधानां रोगाणां प्रादुर्भावस्य निदानत्वाच्च । दुर्व्यसनिनो मनुष्या जन्मनि जन्मनि नरकं गच्छन्ति । यस्य यस्मिन्विषये शास्त्रविरुद्धाऽत्यन्ताऽऽसक्तिस्तत्तस्य दुर्व्यसनम् । तेन विषयासक्तिरहिता जनाः स्वर्गं गच्छन्ति । अतो दुर्व्यसनेष्वनासक्तत्वं श्रेयसे कल्पते । दुर्व्यसनानि बहूनि सन्ति तन्मध्ये कानिचिन्निदर्शयामि । यथा-धूमपानं, मद्यपानं, हुक्कापानं, परस्त्रीष्वासक्तिश्चेत्यादीनि।रोगाऽभावेन धूमपानात्कासक्षयादयो बहवो रोगाः प्रभवन्ति । केचित्पुरुषा रोगरहितत्वेनापि मोहाद्धूमपानं कुर्वन्ति । कश्चित् कविराह–"तमाखुपत्रं राजेन्द्र भज माज्ञानदायकमिति ।" हे नृपेन्द्र ! अज्ञानप्राप्तिहेतुकं, तमाखुपत्रमिश्रितं, धूमपानादिकं दुर्व्यसनं मा कुरु । यतस्तत्सेवनेन बुद्धेर्जाड्यं वर्द्धते । स्मरणशक्तिः क्षीणा भवति । सज्जनानां सन्निधौ दुर्गन्धित्वात्स्थातुं न शक्नुवन्ति । दन्ताश्च मलिना भवन्ति । नेत्राणां तेजोऽपि क्षीणं भवति । एतेषां दोषाणामायतनं धूमपानं न कर्त्तव्यम् । परञ्च तमाखुपत्रस्य श्लिष्टार्थमनुसृत्य तम्=तादृशम्, आखुपत्रम्=मूषकवाहनम् श्रीगणपतिं, माज्ञानदायकम्=लक्ष्मीज्ञानयोः—प्रदातारं भज । येनेहाऽमुत्र च सुखभाक् भवेः केचन मनुष्या दुर्व्यसनेष्वासक्तत्वाद्दारिद्र्यवन्तोऽपि तमाखुसेवनं नैव मुञ्चन्ति ।

"न स्वादु नौषधमिदं न च वा सुगन्धि, नाऽक्षिप्रियं किमपि शुष्कतमाखुचूर्णम्
किञ्चाऽक्षिरोगजनकं च तदस्य भोगे, बीजं नृणां नहि नहि व्यसनं विनाऽन्यत्"
शुष्कं तमाखुचूर्णं स्वाद्वौषधं नास्ति। नास्ति च सुगन्धि। नेत्रप्रियमपि नास्ति।
किञ्च नेत्ररोगाणामुत्पादकं तमाखुचूर्णं विनाऽन्यन्नास्ति॥

मद्यपानञ्च सर्वतोऽपि कष्टतमं वर्तते। मद्यपानाच्चित्तस्य व्याकुलता भवति। मद्यपोऽनुचितमपि जल्पति। यानि सन्निपातनामकव्याधौ चिह्नानि दृश्यन्ते, तानि च मद्यपे दृश्यन्ते। मद्यपा जना अयुक्तमपि वदन्ति। यत्र कुत्राऽपि मलिनायां भुवि शेरते। यथा बालका नग्ना भूत्वा क्रीडन्ति, तथैव तेऽपि रमन्ते। "चित्ते भ्रान्तिर्जायते मद्यपानाद्भ्रान्ते चित्ते पापचर्यामुपैति। पापं कृत्वा दुर्गतिं यान्ति मूढास्तस्मान्मद्यं नैव पेयं न पेयम्।" धर्मशास्त्रेष्वपि मद्यपानस्य कष्टतमं प्रायश्चित्तं दरीदृश्यते। यथा मनुस्मृतावेकादशेऽध्याये—"सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत्। तया स काये निर्दग्धे मुच्यते किल्बिषात्ततः" इति। ब्राह्मणक्षत्रियवैश्यादि र्मोहाद्यदि सुरापानं कुर्यात् तर्हि वह्निसदृशां रक्तवर्णां सुरां प्रायश्चित्तार्थमेव पिबेत्। तया यदि शरीरनाशो भवेत्तदा तस्मात्पापान्मुच्यते इति भगवता मनुनोक्तम्। अतः सुरापानस्य शास्त्रनिषिद्धत्वात्तन्न कर्तव्यम्।

परवनितास्वासक्तिरपि कष्टतमं व्यसनं गण्यते। कुतः परवनितायां सीतायामासक्तिं बद्ध्वा बलीयान्रावणोऽपि सपरिवारो नष्टो मृतश्च। तच्च विदितचरमेव सर्वेषाम्। परवनितास्वासक्तिरिह लोकेऽपि दुर्यशोजनिका, मरणाऽनन्तरञ्च नरकप्राप्तिहेतुत्वादतीव कष्टतमा। विषयेष्वतीवाऽऽसक्त्या शरीराणि कृशानि भवन्ति। नेत्राणि तेजोहीनानि भवन्ति। क्षयादयो रोगाः स्वल्पे वयसि दरीदृश्यन्ते। अधुना च मनुष्याणां क्षीणबलत्वम् अल्पायुष्ट्वञ्च भवति, तस्याऽपि कारणं सैव। "अतियोगाद्धि क्षयो भवति जन्मिनः" इति। एतावद्विदित्वा विषयेष्वासक्तिरूपं महाकष्टतमं व्यसनं त्याज्यमेव। "विपदि धैर्यमथाऽभ्युदये क्षमा, सदसि वाक्पटुता युधि विक्रमः। यशसि चाऽभिरुचिर्व्यसनं श्रुतौ, प्रकृतिसिद्धमिदं हि महात्मनामिति" हितोपदेशोक्तपद्यानुसारेण सर्वाणि दुर्व्यसनानि त्यक्त्वा शास्त्राणामभ्यास एव श्रमः ✕ करणीयः। तदेव सुखप्राप्तिसाधनम्। दुर्व्यसनैरेव मनुजा ✕ पराधीना भवन्ति। भगवता श्रीकृष्णचन्द्रेण श्रीमद्भगवद्गीतायामुक्तं-"यद्यत् परवशं दुःखं, सर्वमात्मवशं सुखम्" इति। केचिन्मनुष्या दुर्व्यसनैर्दरिद्रतां प्राप्य स्वीयं धनं नाशयन्ति। द्रव्याऽभावेन व्यसनवस्तूनामलाभेन च म्रियन्ते। "व्यसनानि सन्ति बहूनि व्यसनद्वयमेव केवलं व्यसनम्। विद्याव्यसनं व्यसनं यद्वा हरिपादसेवनं

व्यसनम्" । अस्मिञ्जगति बहूनि व्यसनानि सन्ति। तेषां मध्ये व्यसनद्वयमेव इहलोके परलोके च श्रेयस्करम्। प्रथमं ज्ञानदायकं विद्याव्यसनमेव विपठिषुभिश्छात्रै ✕ कर्त्तव्यम् । द्वितीयश्च श्रीपरमात्मनश्चरणसरसिजयोः स्थिरं चेतो विधाय तद्ध्यानं कार्यम् । "काव्यशास्त्रविनोदेन कालो गच्छति धीमताम् । व्यसनेन च मूर्खाणां निद्रया कलहेन वा ।" पण्डिताश्च स्वसमयं सहृदयहृदयाह्लादककाव्यानां विनोदेन, शास्त्राणाञ्च पठनेन सफलीकुर्वन्ति । मूर्खाश्च स्वकालं दुर्व्यसनै, निद्रया, क्लेशेन वा विफलीकुर्वन्ति । अतो विद्याभिलाषिभिश्छात्रैः स्वसमयो विद्याभ्यासेनैव नेयः। एतावल्लिखित्वा श्रीचन्द्रमौलीशचरणपाथोजयोः सादरं प्रणिपत्य विरम्यते । अन्ते च भगवन्तं पार्वतीजानिं प्रार्थये सर्वे जनाः सुखभाजो निरामयाश्च भवन्त्विति शिवम् ।

---

## संगृहीताः समाचाराः ।

मनमोहनसिंहनामा कश्चन भारतवासी लण्डनाद्भारतमाकाशयानेनागतोऽभूत्—। स सिखजातीय एव । तस्मै पटियाला-नरपतिना पञ्चदशसहस्ररूप्याणि पारितोषिकतया दत्तानि ।

अनन्तपुरराजे ( ट्रावनकोर ) शुचीन्द्र-नामनि दिव्याग्रहारे केचिदस्पृश्या देवालयसम्मुखवीथिकायां सञ्चरणस्याधिकारोऽस्माकमस्तीति कथयन्तस्सत्याग्रहमारभन्त । ते चैकादशसंख्याका अर्थदण्डेन दण्डिता अभूवन् ।

वङ्गेषु डमडम्नामकस्य नौकाश्रयस्य समीपे कस्यचित्तटाकस्य तीरे कश्चिदस्ति खर्जूरवृक्षः । नवपादोन्नतोऽयम् । सूर्योदयादारभ्य यथायथा घर्मोऽभिवर्द्धते तथा वृक्षोऽयं विनम्रो भूत्वा तटाकजले स्वात्मानं निमज्जयति सायं पुनश्शीतलवाते प्रवहति जलादुत्थाय तिष्ठति यथापूर्वम् । वृक्षाणामप्येतादृशी प्रवृत्तिः काचित्की भवति । जीवसद्भावं वृक्षेषु घटनेयं स्पष्टीकरोति ।

श्रीमती आमिजन्सन् नाम्नी आंग्लललना द्वाविंशतिवर्षदेशीया लण्डनादास्ट्रेलियाम् अल्पीयसा केनचिद्विमानेनाल्पेनैव कालेनागच्छत् । एकाकिनी सा विमानतो यात्रामकरोत् । लण्डनात् १३००० अर्धक्रोशान्तरे वर्तत आस्ट्रेलियादेशः । साहसमस्या निर्भीकता च प्रशस्यते सर्वैः । सम्मानिता चेयमास्ट्रेलियावासिभिस्सम्यक् ।

---

तथा स्वभावसंसिद्ध-संस्कारोदयसाधनम् ।
बीजरक्षाऽऽत्मबोधस्य कैवल्याधिगमोऽपि च ।
वर्णाश्रमाणां धर्माणामष्टावेतानि मुख्यतः ॥ ६२ ॥

अन्यच्च—

उपकारानन्त्यम् ॥ ६३ ॥

स्थूल-सूक्ष्म-राज्य-संरक्षणातिरिक्ता अन्येऽपि वर्णाश्रमधर्मतोऽनन्ता उपकाराःसमुद्भवन्ति । सृष्टिप्रपञ्चानां स्थूलदैवराज्यरूपविभागद्वयान्तर्गतत्वात् सर्वेषामेव विषयाणां तत्सम्बद्धत्वात्सर्वेऽप्युपकाराः पूर्वकथितोपकारद्वयान्तर्गता एव भवन्ति। तथापि मानवानां सर्वेऽप्यभ्युदया अपेक्षिताः पदार्था वर्णाश्रमधर्मतः सिध्यन्तीति सूत्रेणानेनानन्तशब्दतः संसूच्यते। तथा हि-दैवराज्ये ऋषीणां देवानां नित्यपितृगणानाञ्च सम्वर्द्धनम्, परलोकगतानामात्मीयानां जीवानामुद्धारः, असुराणां बलह्रासः, देवानां बलवृद्धौ साहाय्यसम्पादनम्, मनुष्यजातौ च यथाधिकारं यथाक्रमञ्च कामार्थधर्ममोक्षाणां सम्प्रदानम्, आत्मज्ञानपरम्परया मृत्युलोकतोऽनुच्छेदः, प्रवृत्तिनिवृत्तिधर्मशृङ्खलायाश्चिराय सङ्गोपनम् त्रिलोकीपावनस्य सतोधर्मस्य बीजानुच्छित्तिः, मानवसमाजे विद्या-बुद्धि-धन जन-सङ्घ-शक्तिबलसम्वर्द्धनम्, उन्नताभ्यश्चार्य्यजातिभ्यो रजोवीर्य्यशुद्धिमर्य्यादायाः स्थिरीकरणम् आर्य्यजातेश्चाकल्पं दृढ़ीकरणम् इत्यादीनि फलान्यसंख्येयानि वर्णाश्रमधर्मत एव प्राप्यन्ते । तदेवमग्रे यथावसरं विज्ञानस्यैतस्य मूलसिद्धान्तरहस्यं संक्षेपतो विवरिष्यते ॥ ६३ ॥

इदानीं तद्वैशिष्ट्यं प्रतिपादयति—

बीजरक्षणमार्य्यजातेः ॥ ६४ ॥

आदिसर्गे सनकसनन्दनादयश्चत्वारः परमहंसा आविर्भूताः, ततश्च प्रजापतिगणानां सृष्टिः, इत्येतद्द्वयमपि भगवतो ब्रह्मणः सृष्टिः । तदनन्तरम् प्रजापतिभिश्चालिता प्राथमिकी सृष्टिः ब्राह्मणानामेवाऽभूदित्युक्तं प्राक् । ततश्च ब्राह्मणतो बैजी सृष्टिः प्रारब्धा या क्रमशो ह्रसन्ती निम्नमार्गप्रसृता मनुष्यानवनमयन्ती अधोमुखी प्रावर्तत, यां निरोद्धुमेव परमकारुणिकोऽसौ सर्वज्ञो मुनिर्मनुः वर्णाश्रमर्य्यादासेतुञ्चकार । येनेयमार्य्यजातिरसभ्यतयाऽनार्य्यतामनासादयन्ती न विलीयते ।

जैवैशसहजभेदतः कर्मणां त्रैविध्यमित्यग्रे स्फुटी भविष्यति । येन मानवेतरे प्राणिनः सञ्चाल्यन्ते तदेव सहजं, येन दैवञ्जगत् तदैशं, येन तु मानव-

गणाः सञ्चाल्यन्ते, तद्धि जैवं कर्माभिधीयते। सुकृतदुष्कृतयोरधिकारात् स्वातन्त्र्येण समुद्दामप्रवृत्तिर्वंस्याश्रयणात् जैवकर्माधिकारी मानवसङ्घः स्वभावत एवाधोमुखीनो भवति। स च स्वपिण्डाधिपतिरित्यपि तस्य निरङ्कुशत्वे हेतुः।

इत्येवमनन्ता अनार्य्यजातयोऽत्र पृथिव्यां निरङ्कुशत्वमुपेताः कालगर्भे विलीनाः। कैवलेयमार्य्यजातिरेव सुदृढवर्णाश्रममर्य्यादासेतुसुगुप्ताऽविच्छिन्नोर्ध्वमुखीना पर्वतवदकम्पा तिष्ठति। वर्णाश्रमधर्म एवास्या बीजरक्षक इत्यनेन विज्ञानेन फलतः पर्य्यवसितम् ॥ ९४ ॥

अपरमपि विशेषमाह—

क्रमोन्नतिराध्यात्मिकी ॥ ९५ ॥

यदा जीवोऽन्यां योनिमतिक्रम्य मृत्युलोके मानवयोनौ प्रविशति तदैव स गमनागमनचक्रे पतित्वा तदधिकारवान् पौनःपुन्येन तत्रावर्तमानोऽत्र कर्मभूमावुन्नतेरवनते र्वा संस्काराणां संग्रहे प्रभवति, नान्यत्रोर्ध्वाधोलोकयोस्तयो र्भोगभूमित्वात्।

कर्मबीजात्संस्कारादेव जीवो वर्णाश्रममर्य्यादान्तर्गतः क्रमश उन्नतोन्नतं संस्कारमर्जयन् ज्ञानाधिकाराभिमुखो भवति। जन्मान्तरवादविज्ञाने पूर्णविश्वासभाजां वर्णाश्रमिणां चतुर्णां वर्णानामाश्रमाणाञ्चाधिकारे न परस्परमीर्ष्याद्वेषावसरः। प्रतिवर्णं रजोवीर्य्य-शुद्धिः, प्रतिवर्णञ्च धर्मसंस्कारः, प्रत्याश्रमञ्च धर्मसाधनाभ्यासो मानवान्नियमत आत्मज्ञानाभिमुखान् करोतीति वर्णाश्रमधर्मे एव सौलभ्यम्। चतुर्ष्वपि वर्णेषु चतस्रोऽपि साध्या वासना भोगेन क्षपयित्वा आश्रमाणां प्रथमे द्वित्वे प्रवृत्तिनिरोधेन चरमद्वये च निवृत्तिसंस्कारोद्गमनेनान्ततो जीव आत्मज्ञानमधिगत्य स्वस्वरूपानन्दाम्बुधिमुपेत्य चिरशान्तो भवति न स पुनरावर्तते। वर्णाश्रममर्य्यादाविरहितास्वनार्य्यजातिषु नेदृशी क्रमोन्नतिपरम्परा नापि नियमबद्धव्यवस्था सम्भाव्यते। चतुर्ष्वपि वर्णेषु कामार्थधर्ममोक्षाणां परस्परशृङ्खलया आश्रमेष्वपि प्रवृत्तिनिवृत्योः परस्परविभागात् वर्णाश्रमव्यवस्थावत्य एव जातयो नियमतो गमनागमनचक्रे परिभ्रम्य स्वक्रमिकोन्नतावुन्मुख्यः क्रमश आध्यात्मिकोन्नतिमासादयितुमर्हन्तीति विस्तरशोऽस्य विज्ञानमग्रे स्फुटतामेष्यति ॥ ९५ ॥

विशेषान्तरमाह—

पितृ-सम्वर्द्धना तत्कृपाप्राप्तिश्च ॥ ९६ ॥

सर्वतन्त्रसिद्धान्तसिद्धोऽयं विषयो यज्जीवो मानवयोनिमुपेत्य प्रथमं प्रेतलोकेष्वेव गतागतं लभते ततश्चानार्य्यमानवयोनावायाति तदनन्तरं नरक-पितृलोकगतो भूत्वा पितृगणानामनुकम्पामुपलभ्य रजोवीर्य्यात्मकं मातापितृजं यथोचितं स्थूलदेहमुपादत्ते। तत्रापि अर्य्यमादिनित्यपितृगणानाम्तु पूर्णानु-कम्पा तत्रैवार्य्यजातौ रजोवीर्य्यशुद्धिसंरक्षिकायाम्भवति नान्यत्र, यतस्ते रजो-वीर्य्यशुद्धिमत्या एव जातेरक्षणमीहन्ते पिण्डोदकप्राप्तिनिदानान्न सङ्करायास्तद-भावात्। अपि च तेषामनुकम्पा तदैव भवति यदा ते निश्चयतोऽवगच्छन्ति यदियं मनुष्यजातौ रजोवीर्य्यशुद्ध्यधिकारिणीति, इमां मनुष्यजातिं सुरक्षितुमस्माकं सौकर्य्यमस्तीति। पितृविज्ञानञ्च दैवीमीमांसादर्शने विस्तरशो वर्णितम्।

वर्णाश्रमव्यवस्थावतामेव मानवानामाध्यात्मिकक्रमोन्नतिः सुव्यवस्थिता, अत एव तैस्तैराचारैः पितॄणां कार्य्ये सौकर्य्यमापद्यते। वर्णाश्रमधर्मे च रजोवीर्य्यशुद्ध्या पितृगणाः प्रसीदन्ति, संवर्द्धन्ते। स्वानुग्रहेण च तत्कुलानि ताश्च जातीः संरक्षन्तः साहाय्यं सर्वथाऽऽचरन्तीत्यपरोऽयं वर्णाश्रमस्य धर्मस्य विशेषः ६६॥

अन्यच्च—

देवलोकसम्बन्धः ॥ ६७ ॥

दैवीमीमांसापराभिधाने मध्यमीमांसादर्शने देवराज्यस्य तत्सञ्चालका-नामपि विस्तृतं वर्णनं विद्यते, कर्मणः सूक्ष्मजगतश्च सञ्चालकौ देवासुरावुभा-वासाते। असुरा अपि देवविशेषा एव। तत्रासत्तमसोः सम्बन्धोऽसुरैः सत्त्वसत्त्वयोश्च देवैः सहेति विज्ञानसिद्धम्। वर्णाश्रमसदाचारैः सात्त्विकभावापन्ना मानवाः सात्त्विके दैवे घनिष्ठ-सम्बन्धभाजो भवन्तीति विशेषान्तरमिदं वर्णाश्रम-धर्मस्य॥ ६७॥

पुनश्च—

देवप्रसादः ॥ ६८ ॥

वर्णाश्रममर्यादायाः समुचितसमादरेण क्रमशः सत्त्वाभिवृद्ध्याऽविद्या-विनाशेन विद्यासाहाय्येन च कर्मोपासनाज्ञानसाम्यतयाऽध्यात्मिकोन्नतिर्जायते। इत्येवं यथाक्रमं सत्त्वस्य नियमतो वर्द्धनतः पूर्वसूत्रोक्तकारणकलापतश्च देवाः प्रसीदन्ति। पुनश्च वर्णाश्रमधर्मे यज्ञमहायज्ञादीनामनुष्ठानबाहुल्याद्देवप्रसादस्य सुलभोऽवसरः सततमेव विद्यते।

अन्यथापीमं विषयं विवृणुते तथाहि—वर्णाश्रमधर्मत इन्द्रियवश्यभावापन्ना

आसुरी वृत्तिरपक्षीयते, आत्माश्रिता च दैवी वृत्तिर्वर्द्धते । वर्णधर्मतः स्वत एव जीवाः कामार्थधर्ममोक्षेषु क्रमश उत्तरोत्तरमारोहन्ते । आश्रमधर्मतश्च प्रथमं सर्वतोमुखीनां प्रवृत्तिं निरुध्य निवृत्तिमार्गारूढास्तत्पूर्णतामधिगच्छन्ति । इत्यतो वर्णाश्रमधर्मतो मानवेषु दैवभावः समेधते इत्यलन्विग्रहम् । इत्येवं दैवभाव-समेधक आसुरभावापहारको वर्णाश्रमधर्मो यासु जातिषु विद्यते तासु विश्व-मङ्गलकरो देवप्रसादः स्वतः सिद्धः ॥ ९८ ॥

अपरञ्च—

स्वाभाविकः संस्कारोदयः ॥ ९९ ॥

स्वाभाविकः संस्कारो मुक्तिकारणम् अस्वाभाविकश्च स बन्धकारणम् इति । वर्णाश्रमधर्मानुकूला वैदिकसंस्कारसंघाः सर्वेऽपि स्वाभाविकसंस्कार-समेधका इत्यस्य दर्शनस्य संस्कारपादे निदर्शितम् । परमकारुणिकैर्महर्षिभि-रुत्तरोत्तरम् अस्वाभाविकसंस्कारापहारकाः स्वाभाविकसंस्कारसमेधका एव वर्णाश्रमाऽऽचारा निर्धारिता इत्यतो वर्णाश्रमधर्मतो मानवानां स्वाभाविका मुक्तिप्रदाः संस्कारा नियमतो नित्यमभिवर्द्धन्ते । तथा शूद्रतो वैश्येषु तमो-रजसोः, वैश्यतश्च क्षत्रियेषु रजःसत्त्वयो स्ततश्च क्रमशो ब्राह्मणे सत्त्वस्य प्रधान-तया संस्कार उत्पद्यते । संन्यासे च ते सर्वेऽपि संस्काराः स्वाभाविक-संस्काररूपेण परिणमन्ते । इत्येवं जीवा वर्णाश्रमधर्मेण प्रोन्नमन्तोऽन्ते जीव-न्मुक्तपदमधिरोहन्ति । वर्णाश्रमधर्मस्येदं माहात्म्यं यत्तेनोत्तरोत्तरमधिका स्वाभाविकाः संस्काराः परिस्फुटा भवन्ति ॥ ९९ ॥

पुनरप्याह—

बीजरक्षणमात्मबोधस्य ॥ १०० ॥

घोरेऽस्मिन् परिवर्तमाने मृत्युलोके शक्तिशालिन्याञ्च कर्मभूमौ मानवः सत्कर्मतो देवत्वमसत्कर्मतश्च पशुत्वमपि विन्दतीति सुनिश्चितम् । अतश्च मानवजातिरार्यभावादप्यनार्यतामधिगच्छन्ती पशुतामासादयितुमप्यर्हतीति भीतिः सम्भाव्यत एव । यतो हि मानवानां स्वपिण्डाधिष्ठातृत्वेन दुष्टेन्द्रिया-श्व-वशवर्त्तितयाधोगमनस्य स्वाभाविकं रहस्यमभिहितं प्राक् ।

परन्तु यस्यां मानवजातौ प्रवृत्तितो निवृत्तेरधिकः समादरः । तत्प्रधा-नतया ब्राह्मणो भूदेवत्वेन गण्यते, तदीयामाज्ञामादायैव राजानो राज्यसिंहा-सनमारोहन्ति तदनुशासनानुसरणञ्च स्वीयं धर्मं मन्यन्ते । तस्यां मानवजातौ सुतरामात्मज्ञानस्य बीजरक्षणं स्वभावसिद्धम् । यस्यां मनुष्यजातौ

महाराजाधिराजोऽपि चक्रवर्ती सम्राड् नारायणांशत्वेन परिगीयते, किन्तु तत्रैव भिक्षुः सन्यासी कौपीनभृदपि केवलमात्मज्ञानप्रधानतया साक्षान्मूर्तिमान् नारायण एव निगद्यते । तत्रात्मज्ञानस्य बीजरक्षणन्तु साहजिको धर्मः ।

यस्यां मनुष्यजातौ शारीरिकवाचनिकमानसिकादिषु सर्वेष्वपि कर्मसु प्रतिपदमाध्यात्मिकमेव लक्ष्यं सर्वाभ्यर्हितत्वेनानुस्यूतं दरिदृश्यते, तथा वर्णाश्रमनारीधर्मादिषु सर्वत्रैव सदाचारेष्वपि स्वात्मज्ञानोन्नतेरेवादर्शः स्फुटं परिलभ्यते तत्रानायासत एवात्मज्ञानस्य बीजरक्षणं सुसिद्धम् । अतः सुदृढव्यवस्थाविभूषितेन वर्णाश्रमधर्मेणात्मज्ञानबीजरक्षणमिह पृथिव्यामाकल्पं शाश्वतं सुदृढमेव ॥१००॥

पुनश्च वर्णाश्रममहिमानं द्रढयति—

निःश्रेयसाधिगमः ॥१०१॥

कर्मणः पूर्णाधिकारेण रजोवीर्य्यशुद्धया च याधिभूतशुद्धिः, उपासनायाः पूर्णाधिकारेण ईश्वरविषयकपूर्णज्ञानेन च याधिदैवशुद्धिः, पूर्वोक्तकारणकलापतश्च याध्यात्मशुद्धिः प्रजायते । तासु सर्वास्वपि सुसम्पन्नासु स्वत एव तत्त्वज्ञानोदयो न तत्र कारणान्तरापेक्षा । वर्णाश्रमधर्मे मुक्तिरेव चरमप्रयोजनमिति सर्वतन्त्रसिद्धान्तः । तत्र हि वर्णगुरो र्ब्राह्मणस्य सर्वाण्येव कर्माणि मुक्तिप्रयोजनकान्येव । आश्रमगुरोश्च संन्यासिनः साक्षान्मुक्तिस्वरूपत्वमेव वर्णितम् इत्येवं मुक्त्यैकलक्ष्यपरे वर्णाश्रमधर्मे कैवल्याधिगमस्तु सुतरां स्वतः सिद्धः ॥१०१॥

वर्णाश्रमधर्मोपकारमाहात्म्यं विस्तरशो विविच्येदानीमधोगमननिरोधिका स्तच्छक्तीर्विविनक्ति—

ब्राह्मौजस्तपसा ॥१०२॥

वर्णाश्रमधर्मः कीदृगनन्तोपकारकारी मानवसमूहस्येति दिग्मात्रं निर्दिश्य सूत्रकृन्महर्षि र्वर्णाश्रममर्य्यादावतामन्तर्निगूढाः शक्तीरभिधत्ते । तथा हि या शक्ति र्वर्णाश्रमाऽऽचारवतोऽधोगमनात् निवारयति सदोन्नतिपथं निनीषति सैव तेजः शब्देनोच्यते । स्मृतिष्वपि —

"या मे शक्तिः सदा जीवान् समाकर्षति माम्प्रति ।
तदेव तेजः सम्प्रोक्तं यतो वेदान्तपारगैः ॥"

का सा शक्तिः, यस्यास्तेज इत्यभिधानम् इत्युपरितनेन सूत्रेण निर्दिष्टम् । तस्य तेजसो भेदत्रयम् । एकं ब्राह्मं तेजो यद् ब्राह्मणेषु तिष्ठति । द्वितीयं

क्षात्रं तेजो यत् क्षत्रियेषु भवति । ब्राह्मणक्षत्रियावेव धर्मरक्षका-वित्यनयोरेव तेजसः सत्ता । नान्यवर्णेषु तस्य स्वाभाविकी सत्तास्तीति—

स्मृतावप्युदीरितम्—

"ब्राह्मणा धर्मवक्तारः क्षत्रिया धर्मपालकाः" ।

तत्र कथं ब्राह्मं तेजो ब्राह्मणेषु सम्भूतम्भवतीत्यनेन सूत्रेणोच्यते, तपसा ब्राह्मम् ओजस्तेजः सुरक्षितं भवति । तच्च मुक्तिप्रदम् । क्षात्रं तेजोऽभ्युदय-प्रदम् । तयोर्ब्राह्मं तेजोऽतिगरीय इति तपसैवाधिकशक्तिशालिना सुरक्ष्यते । तस्य च रूपमुक्तं प्राक् इह ब्राह्मणास्तपोबलेन यावत्तेजो-बलं संग्रहीष्यन्ति तावदेव वर्णाश्रमधर्मस्य तद्धर्मिणाञ्च सङ्कोपनम् अवनतेर्निरोधञ्च करिष्यन्ति ॥ १०२ ॥

द्वितीयमाह—

क्षात्रं दानेन ॥ १०३ ॥

ब्राह्मं तेजो यथा तपसा चीयते, तद्वदेव क्षात्रं तेजोऽपि दानेन वर्द्धते । ब्राह्मस्य तेजसो रक्षणे यावानायासो न तावान् प्रयासो द्वितीयस्य क्षात्रतेजसो गुप्त्यै । ब्राह्मणो हि सर्वमपि लौकिकमैश्वर्यमिन्द्रियसुखञ्च परित्यज्य तपसि प्रवर्तेत, तद्वदेव क्षत्रियेणापि भोगैश्वर्य्यादिलिप्सुनापि सता दानपरायणेनैव भवितव्यम् । अनुदारे कृपणे दानधर्मविरहिते राजनि न क्षात्र-तेजःस्थितिः सम्भाविनी ।

तपोविज्ञानालोचनं यथा तपःशक्त्या ब्रह्मतेजोऽभिवृद्धिर्विज्ञायते तथैवौदार्य्येण निर्लोभेन सात्त्विकदानसम्प्रसक्तया च क्षत्रियाः प्रोन्नताः समृद्धियुजो निजेन संरक्षितेन क्षात्रेण तेजसा वर्णाश्रमधर्मिणोऽपि संरक्षन्तीति ॥ १०३ ॥

उभयोर्निर्गमप्रकारमाह—

उभयोर्निर्गमो योगाहवाभ्याम् ॥१०४॥

योगश्च आहवश्च योगाहवौ ताभ्याम् उभयो ब्राह्मणक्षत्रिययोः क्रमशो निर्गमोऽभ्युदयो भवति ।

पूर्वसूत्रेण ब्राह्मणक्षत्रिययोः क्रमशस्तपस्यादानधर्माभ्याम्मुख्याभ्यां तत्तेजसोः संरक्षणेन सह वर्णाश्रमिणां कल्याणोन्नतिरपि सम्भवतीत्युक्त्वा इदानीं तयोश्चरमोन्नतिप्रकारमनेन सूत्रेण प्रतिपादयति—

तथा हि—ब्राह्मं तेजः प्रयाणकाले ब्राह्मणं योगशक्तिसम्पन्नमूर्ध्वलोकञ्चि-

नीषति । क्षात्रं तेजः क्षत्रियं युद्धमृत्युनोर्ध्वलोकं समुन्नयति । ब्राह्मणस्य कृते योगबलेन क्षत्रियस्य कृते धर्मयुद्धेन शरीरत्यागादन्यो न कोऽपि शुभावहो मार्गः ।

उक्तञ्च—

"द्वाविमौ पुरुषौ लोके सूर्य्यमण्डलभेदिनौ
परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ।
"अयन्तु परमो धर्मो यद्योगेनात्मदर्शनम् ।"
"धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत क्षत्रियस्य न विद्यते," इति ।

योगेनात्मानुसन्धानं युद्धेन च धर्मानुसन्धानमुभयोः संवर्द्धेत इति शुभावहो विधिः ब्राह्मणस्य शान्तित्वात्तपस्वित्वाद्योगित्वाच्च योगस्यावसरस्तूपलभ्यत एव । क्षत्रियस्य तु धर्मयुद्धावसरानुपलम्भात् शरीरत्यागासम्भवात् किं विधेयमिति प्रश्ने तस्य सत्येवं व्यतिकरे योगबलेन शरीरत्यागे यत्नविधानमेव प्रशस्यम्, यतो हि योगानुष्ठानम् न कस्यापि वर्णाश्रमस्य स्वाधिकारविरुद्धम् ॥ १०४ ॥

उभयोः साक्षात् फलं ब्रूते ।

ते निःश्रेयसाभ्युदयप्रदे ॥ १०५ ॥

ते ब्रह्मक्षात्रतेजसी क्रमशो निःश्रेयसश्चाभ्युदयश्च तौ तथोक्तौ तयोः प्रदे समर्पके स्तः । यथा सभामण्डपं यज्ञमण्डपं वा स्तम्भबलेन स्तम्भाश्रयमेव तिष्ठति । तथैव वर्णाश्रमधर्मौ ब्राह्मणक्षत्रियबलेन तदाधारावेव प्रतिष्ठेते आश्रमधर्मस्य वर्णधर्ममूलकत्वात् । विना वर्णधर्मं नाश्रमधर्मव्यवस्थितिः । तथा ब्रह्मक्षत्रयोरुभयोः सम्पृक्तत्वविरहाच्च वर्णाश्रमधर्मयोरपि कस्यचन साधीयसी स्थितिः । सर्वमप्याभ्युदयिकं कृत्यं क्षत्रियैः सम्पाद्यते, नैःश्रेयसिकश्च मार्गो ब्राह्मणैः संरक्ष्यत इत्युभाभ्यामपि परस्परं साहाय्यमाचरद्भ्यां जगद्रक्षणं गमनागमनचक्रसंरक्षणञ्च क्रियते । अन्यथाऽपीदं विज्ञानं विवरीतुं शक्यते । तथा हि, सर्वधर्मरक्षणं धार्मिकनृपानुशासनतः प्रवर्तते । मोक्षप्रदज्ञानमार्गरक्षणञ्च ब्राह्मणाध्यवसायेन संसाध्यते। इति ब्रह्मतेजसो निःश्रेयसप्रदत्वं क्षात्रस्य च तस्याभ्युदयप्रदत्वमवश्यमङ्गीकरणीयम् । स्मृतिष्वपि बहुशो ब्राह्मणक्षत्रियसंबन्धचर्चा श्रूयते तथाहि—

ब्राह्मण्यमुत्तमा दृष्टिः क्षात्रमप्रतिमं बलम् ।
ते यदा चरतः सार्धं तदा लोकः प्रसीदति ॥
नाब्रह्म क्षत्रमृध्नोति नाक्षत्रं ब्रह्म वर्द्धते ।
ब्रह्म क्षत्रं च सम्पृक्तमिह चामुत्र वर्द्धते ॥

ब्रह्म क्षत्रेण संसृष्टं क्षत्रञ्च ब्रह्मणा सह ।
उदीर्णौ दहतः शत्रून् वनानीवाग्निमारुतौ ॥ १०५ ॥

प्रसङ्गसंप्राप्तं चातुर्वर्ण्यस्य चतुर्वर्गसम्बन्धमभिधत्ते ।

**चातुर्वर्ण्ये चतुर्वर्गः ॥ १०६ ॥**

इह खलु प्रयोजनमुद्दिश्यैव जनानां प्रवृत्तिर्दृश्यते । तत्र चतुर्धा हि प्रयोजन-विभागो चतुर्वर्गशब्देन निर्दिश्यते । ते च यथा कामार्थधर्ममोक्षा इति क्रमशोऽभिधीयन्ते । तथैव क्रमशश्चतुर्वर्णाः शूद्रवैश्यक्षत्रियब्राह्मणानां धर्मतस्तैः सह सम्बन्धोऽपि प्रतीयते । प्रतिवर्णं धर्मपर्य्यालोचनयैवास्य विज्ञानस्य सार्थक्यभावमुदेति । स्मृतावपि निर्दिष्टम्—

स्वभावतो नियोज्येरन् प्राणिनां सम्प्रवृत्तयः ।
चतुर्धा नात्र सन्देहो विद्यन्ते विश्वभृतिदाः ॥ १०६ ॥

तत्र शूद्रधर्मं निर्वक्ति ।

**कामप्रधानः शूद्रः ॥ १०७ ॥**

चतुर्षु प्रयोजनेषु किमपि प्रयोजनमुद्दिश्यैव प्राणिनां प्रवृत्तयो नियुज्यन्ते। तत्र शूद्रप्रवृत्तयः कामरूपं प्रयोजनमुद्दिश्य परिणमन्ते कामस्याऽऽद्यप्रयोजनत्वात् । स्मृतावप्युक्तम् –

प्रकृतिः शूद्रवर्णस्य दासी कामस्य सत्यतम् ।
तमोधाराश्रिता शश्वज्जायते परिणामिनी ॥

अत एव गीतोपनिषद्यपि शूद्रस्य स्वभावजं कर्म तमःपरिणामरूपमेवोक्तम्—

"परिचर्य्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ १०७ ॥

वैश्यधर्ममिदानीम्ब्रूते—

**अर्थप्रधानो वैश्यः ॥ १०८ ॥**

पूर्वोक्तविज्ञानानुरूपतो वैश्यवर्णस्य प्रकृतिरर्थप्रयोजनाभिमुखी परिणमते उक्तञ्च गीतोपनिषदि—

"कृषिगोरक्ष्यवाणिज्यं वैश्यकर्मस्वभावजम्" ।

स्मृतावप्यस्यैव विज्ञानस्य परिपोषो दृश्यते—

प्रकृतिर्वैश्यवर्णस्य सत्यर्थानुचरी सदा ।
अस्मिन् प्रधानतो लोके जायते परिणामिनी ॥ १०८ ॥

अधुना क्षत्रियस्य धर्ममाह—

धर्मप्रधानः क्षत्रियः ॥ १०९ ॥

शूद्रवैश्यप्रकृतिर्हि क्रमशः कामार्थप्रयोजनमभिलक्ष्य परिणमतः। कामार्थयोरिन्द्रिय-सेवामूलकत्वात् तदनुसारिण्योः प्रकृत्योर्न कथमपि तेजोऽपराभिधस्यौजसोऽभिसम्बन्धः। अत एवौजसोऽभिक्रमः क्षत्रियब्राह्मणधर्मयोरेवास्तीति पूर्वमेवोदीरितम्। अनेनापि सूत्रेण तदेव विज्ञानं पुनर्द्रढयति–यद् धर्मात्मज्ञाने एव जीवान् भगवत्तेजःशक्त्याऽध्यात्मसन्निकर्षं प्रापयतः। तत्राद्यं धर्ममाश्रित्य क्षात्रतेजःसमाश्रिता क्षत्रियप्रकृतिरध्यात्मभावमभिलक्ष्य परिणमते। स्मृतिष्वेवमुपलभ्यते—

क्षत्रियप्रकृतिर्धर्मलक्ष्येणैव प्रधानतः
परिणामं किलाप्नोति पितरो नात्र संशयः ॥

गीतोपनिषदुक्तक्षत्रियस्वाभाविकधर्मतोऽप्यस्यैव विज्ञानस्य द्रढिमावमृश्यते। तथा हि—

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ १०९ ॥

सम्प्रति ब्राह्मणस्य तमभिधत्ते—

मोक्षप्रधानो ब्राह्मणः ॥ ११० ॥

आत्मज्ञानाश्रितं ब्रह्मतेजो मोक्षलक्ष्याश्रयणतोऽधिगम्यतेऽत्र नाणुरपि सन्देहावसरः। इत्यस्मादेव हेतो र्ब्राह्मी प्रकृति र्मुक्तिमभिलक्ष्य प्रवहन्ती स्वरूपपारावारे समुपेता विश्राम्यति। स्मृतावप्युक्तम्—

ब्राह्मणप्रकृतिर्मुख्यं मोक्षलक्ष्यं निरन्तरम्।
समाश्रित्य प्रयत्नेन नूनमग्रे सरेदिह ॥

भगवतापि ब्राह्मणस्य सहजकर्मनिर्णयवेलायां श्रीगीतोपनिषदुद्घोषितम्।

शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥

अत एव जगति केवलमात्मज्ञान-विस्तारहेतुं पुरुषार्थमवलम्बमानाः तपोव्रतञ्च स्वीयं मुख्यं सांसारिकं कर्तव्यं मन्यमानाः परोपकारपरायणा ब्राह्मणास्त्रिलोकपूज्या महीतले विचरन्ति। उक्तञ्च—

ब्राह्मणस्य तु कायोऽयं क्षुद्रकामाय नेष्यते
कृच्छ्राय तपसेऽत्यर्थं प्रेत्यानन्तसुखाय च ॥ ११० ॥

आर्य्यजातेर्वर्णधर्मं व्याख्याय नारीधर्मविज्ञानं विस्तरशो ब्रूते

नारीधर्मः पारतन्त्र्यप्रधानः ॥ १११ ॥

वर्णाश्रमधर्मे पुरुषधर्माश्रयेण वर्णधर्मस्य प्राधान्यात्तद्विज्ञानं पार्थक्येन विस्तरशो विविच्येदानीं नारीधर्मविज्ञानं विवेक्तुकामः सूत्रयति—नार्य्या धर्मः पारतन्त्र्यं पराधीनत्वं प्रधानं यत्र स परायत्त इत्यर्थः ।

वर्णधर्मशुद्ध्यैवाश्रमधर्मसंस्थितिः, नारीधर्मशुद्ध्या च वर्णधर्मशुद्धिरिति नारीधर्मशुद्धिरेव प्रधानं निदानं वर्णाश्रमधर्मे ।

सत्सु पुरुषेषु पावित्र्यपरेष्वपि क्षणमात्रमपि यदि काऽपि आर्य्यमहिला स्वपावित्र्यं विहाय परपुरुषाश्रयिणी भवेत् तदा वर्णाश्रमधर्मस्तु भ्रष्टः स्यादेव । तेनैव सह तस्या स्तत् कुलं सा जातिरपि नष्टभ्रष्टे भूत्वा नित्यपितॄणामनुकम्पा-तोऽपि विरहिते स्याताम् । यतो हि नित्यपितरः साङ्कर्यीः प्रजा नानुगृह्णन्ति । नारीजातेः पावित्र्याश्रय एव केवलं वर्णाश्रमधर्मोऽवलम्बते स्वस्वरूपमिति तस्याःपावित्र्यरक्षणार्थमेव पारतन्त्र्यपरत्वं तद्धर्मस्य महर्षिभिः प्रतिष्ठापितम् ।

कौमारावस्थायां तासां मातापितृवश्यत्वं तूक्तमेव । स्वपरिणयार्थमपि ताः पितृमात्रधीना एव तिष्ठन्ति । यतो हि बालिकानां परिणयो दानधर्मत्वे-नार्य्यशास्त्रेषु गीयते । दानपात्रान्वेषणं तस्मै देयत्वेन तस्याः समर्पणमपि पितुः प्रधानं कर्मेति स्वपरिणये नारीणां पितृपारवश्येन पारतन्त्र्यं शास्त्रसिद्धम् ।

यौवने च पत्युर्वशे संस्थितिस्तासां निगदितैव । सतीनां नारीणां कर्मणा वचसा मनसा स्वभर्तृपारतन्त्र्यमभिहितमेव । यदि च दुर्भाग्यतो वैधव्यदुःखेनाभिभूताः स्युस्तदाऽपि समाजाधीनत्वसम्बन्धेन स्वकुटुम्बपारतन्त्र्यं सिद्ध्यत्येवेत्यतो नारी-धर्मस्य पारतन्त्र्यमूलकत्वं सर्वथाऽपि न विनश्यतीति स्मृतिष्वप्युपलभ्यते ।

> बालया वा युवत्या वा वृद्धया वापि योषिता ।
> न स्वातन्त्र्येण कर्तव्यं किञ्चित्कार्य्यं गृहेष्वपि ॥
> बाल्ये पितुर्वशे तिष्ठेत् पाणिग्राहस्य यौवने ।
> पुत्राणां भर्तरि प्रेते न भजेत् स्त्री स्वतन्त्राम् ॥ १११ ॥

तन्निदानमाह—

प्रकृतिजन्यत्वात् ॥ ११२ ॥

सर्गविज्ञानपरिशीलनत इदमेव सिद्ध्यति यदादिपुरुषात् परमात्मन-स्तच्छक्तिरूपायाश्च मूलप्रकृतेः सम्बन्धतः प्रवहन्तीयं सृष्टिप्रवाहधारा । स्वनिदान-भूतयोस्तयोरेव प्रकृतिपुरुषयोरनुरूपं स्त्रीधारा पुरुषधारा चेति धाराद्वैविध्य-

माश्रयति । उक्तमेतत्प्रागेव । "कार्य्यगुणान् कारणगुणा आरभन्ते" इत्येष नैयायिकानां प्रवाद एतद्विज्ञानमूलक एव । सांख्यदर्शने च कथं प्रकृतेः पराधीनत्वं कथञ्च पुरुषादृते तस्याः सत्ताया एवाभावः । कथं हि पुरुषार्थ एव तस्याः सर्वोऽपि व्यापार इति साधु निर्णीतम् ।

नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः ।
गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकञ्चरति" इत्यादिभिः ।

अतो ये स्वभावाः मूलप्रकृतौ विद्यन्ते त एव पूर्णविकासवत्यां नार्य्यामपि स्युरिति विज्ञानसिद्धम् । यद्यप्युद्भिज्जादिस्त्रीधारायां प्रकृतेस्ते भावा न पूर्णतयोपलभ्यन्ते तथापि पूर्णावयवसम्पन्नायां मनुष्यत्वयोनौ पूर्णावयवाया नारीजातेः स्वभावः पुरुषपारतन्त्र्यरूपः पूर्णतया विकशितः स्यादिति स्वभावसिद्धम् ॥ ११२ ॥

विवाहसम्बन्धेनापीदं विज्ञानं द्रढयति—

तस्माद्दान-प्रधानो विवाहः ॥११३॥

यद्यपि विवाहस्य बहवो भेदा मानवजातौ शास्त्रादिषु चोपलभ्यन्ते तथापि कन्यादानप्रधान एव विवाहो धर्म्यो बहुसम्मतश्च । नारीजातेः पारतन्त्र्यप्रधानत्वात्स्वयम्वरणादिप्रथा न साधीयसी, नापि सा प्रथा तत्स्वभावानुकूला किन्तु कुमार्य्याः कन्यादानपद्धत्यनुरूपः कन्यादानप्रधान एव परिणय उत्तमः । यतो हि तस्यामवस्थायां कन्या पितुर्वशवर्तिनी पराधीनसर्वकृत्याऽत स्तदनुरूपमुत्तमं योग्यं वरमन्विष्य तेन तस्याः कन्यादानविधिना पाणिग्रहणं सर्वोत्तमः संस्कार इति सर्वत्रैव श्रुतिस्मृतिषूपलभ्यते—

आच्छाद्य चार्चयित्वा च, श्रुतिशीलवते स्वयम् ।
आहूय दानं कन्याया ब्राह्मो धर्म्मः प्रकीर्तितः ॥
दश पूर्वान् परान् वंश्यानात्मानं चैकविंशकम् ।
ब्राह्मी-पुत्रः सुकृतकृन्मोचयेदेनसः पितॄन् ॥ ११३ ॥

प्रसङ्गसङ्गतं सर्वानर्थमूलं विधवोद्वाहं निन्दति—

विधवोद्वाहो व्योम कुसुमवदतः ॥ ११४ ॥

अतो विवाहस्य दानमूलकत्वादत्र च दातुरभावाद् विधवाया उद्वाहो व्योमन-आकाशस्य कुसुमवत् पुष्पवद् असम्भव इति यावत् । प्रथमत आर्य्यजातौ विवाहपद्धतेः कन्यादानमूलकत्वात् मातापित्रोर्दत्तायाः कन्यायाः पुनर्दानेऽधिकार एव नास्ति । अन्योऽपि दाता न सम्भवति अधिकाराभावादेव । मृतस्य

पत्युरेव तत्राधिकारात् तस्य चाभावाद् अन्यस्य च तत्रानधिकाराद् विधवाया-उद्वाह आकाशकुसुमवदसम्भव एवेति पूर्वमुक्तस्य दानलक्षणस्य मर्माभिजानतां विदुषान्न तिरोहितम् ।

अपरतश्च नारीजातेः प्रकृतिधर्मशालिनीत्वात्, पराधीनधर्मायास्तस्याः पत्यन्तरग्रहणन्न तत्स्वभावसिद्धम्, प्रत्युत सर्वथा विपरीतमेव ।

अन्यतश्च नार्य्याः सतीत्वमेव प्रधानं धर्मस्ततश्च पत्यन्तरग्रहणस्य मानसिक्यपि कल्पना तस्या आदर्शस्वरूपस्य सतीत्वस्य विनाशक इत्यतो विधवायाः पत्यन्तरग्रहणकल्पनाऽपि खपुष्पायमाणैव भाति । यथा संन्यासविवाहः पापमूलम्, तज्जन्या सन्ततिरपि–

चाण्डाल-प्रत्यवसित–परिव्राजक–तापसाः ।

तेषां जातान्यपत्यानि चाण्डालैः सह वासयेदिति ॥ स्मृतेः—

चाण्डालश्रेणिगा भवति । तथैव द्विजातिषु विधवोद्वाहोऽधर्ममूलम् । सर्वस्वनाशनिदानं सर्वानर्थहेतुरपि गीयते । वर्णाश्रमधर्मे च यथा यादृक् संन्यासाश्रमगः पुमान् पूज्यः पुरुषसम्मानभाक् तथैव निवृत्तिधर्मिणी विधवाऽपि सम्मानार्हं पूज्यं पदं नारीषु विन्दति ।

इत्येवं निवृत्तिमार्गमारूढायाः सर्वपूज्यत्वमधिगतायाः विधवायाः पुनरुद्वाहादिना प्रवृत्तिमार्गपातनस्यासम्भवात्तद्भ्रंशनस्य महापापनिदानत्वाच्च विधवोद्वाह आकाशकुसुमवदसम्भव एवेति संक्षेपः ॥ ११४ ॥

प्रसङ्गतः कन्योद्वाहकालं निर्णयति—

कन्यावस्थायां प्राशस्त्यमुद्वाहस्य ॥ ११५ ॥

नार्य्या धर्मस्य पारतन्त्र्यमूलकत्वाद्विवाहसंस्कारो हि नारीजातेर्मुख्यः संस्कार इत्यतः सूत्रकृत्तत्कालनिर्णयं वक्ति । रजःप्रवृत्तितः पूर्वं नारी कन्याशब्दभाग् भवति । तस्यामेवावस्थायां तस्याः परिणयसंस्कारो धर्म्यः शास्त्रसम्मतश्च तथा हि—

त्रिंशद्वर्षो वहेत् कन्यां हृद्यां द्वादशवार्षिकीम् ।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ॥
ऊर्ध्वं दशाब्दाद्या कन्या प्राग्रजोदर्शनात्तु सा ।
गान्धारी स्यात्समुद्वाह्या चिरञ्जीवितुमिच्छता ॥
अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥

तस्माद्विवाहयेत्कन्यां यावन्नर्तुमती भवेत् ।
विवाहोऽष्टमवर्षायाः कन्यायास्तु प्रशस्यते ॥

इत्यादिभिः स्मृतिवाक्यैर्नार्य्या विवाहकालोऽष्टमवर्षत आरभ्य द्वादशवर्षं यावत् सिध्यति । तत ऊर्ध्वं रजस्वलात्वदोषदूषितत्वात्तदभ्यन्तरे कन्यायाः परिणयसंस्कारमनाचरतोऽधिकर्तुः पापसम्पर्कः । उपर्युक्तानां वचसां पर्य्यालोचनया कन्याविवाहकालस्याष्टमवर्षतो द्वादशवर्षावधित्वविधानेन ततः पूर्वं परतश्च तस्य दोषावहत्वं सिध्यति । ततः पूर्वन्तु अतिबालिकात्वेन संस्कारसिद्धावेव बाधोऽपरतश्च—

"सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः
तृतीयोऽग्निस्ते पतिस्तुरीयस्ते मनुष्यजः"
सोमो दददगन्धर्वाय गन्धर्वो ददग्नये ॥
रयींश्च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ।

इत्यादिप्रमाणैः सार्धसप्तमवर्षं यावद् देवानामेव कन्यास्वधिकारस्य विद्यमानत्वात् मनुष्याधिकाराभावात्तन्मध्ये कन्याया दानं ग्रहणञ्चोभयमपि पापाधायकम्, तथा "स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पादनरूपस्य दानलक्षणस्य तत्रासङ्गत्या दातुर्ग्रहीतुश्च व्यर्थः प्रयास इत्यत एव—

"षडब्दमध्ये नोद्वाह्या कन्या कापि विचक्षणै"रिति

निषेधः "गुरुशुद्धिवशेन कन्यकानां समवर्षेषु षडब्दकोपरिष्टादिति" विधिश्चोपलभ्यते, एवं द्वादशवर्षत ऊर्ध्वम्—

मासि मासि रजः स्त्रीणां रसजं स्रवति त्र्यहम् ।
वत्सराद्द्वादशादूर्ध्वं याति पञ्चाशतः क्षयम् ॥
द्वादशाब्दात्समारभ्य प्रतिमासं त्र्यहावधि ।
रजः स्रवति नारीणां याति पञ्चाशतः क्षयम् ॥

इति प्रमाणेन रजोदर्शनसम्भवात् पुरुषसम्बन्धेच्छोत्पत्त्या नारीजातेः प्रधानादर्शस्वरूपस्य सतीत्वधर्मस्य विघातशङ्काया अवश्यम्भावात् ततः पूर्वमेव कन्यावस्थायां परिणयसम्पादनेन नारीजातेः पारतन्त्र्यधर्मस्य सुगुप्तिः सतीत्वधर्मविकाशस्याऽपि पूर्णोऽवसर इत्युभयमपि साधु समर्थ्यते ।

ननु रजस्वलात्वदोषसम्भवभीत्या द्वादशाब्दतः पूर्वं दशवर्षत ऊर्ध्वं नार्य्याः परिणयविधानन्तु समुचितं, किन्तु न्यूनातिन्यूनतोऽष्टमवर्षस्य प्रारम्भावधित्वविधानं कथं संगच्छत इति प्रश्नं समाधत्ते—यदा कन्यायाः स्त्रीत्वचिन्हं लज्जा-संकोच-वस्त्रसम्वरणावगुण्ठनादिकं परिस्फुटं परिदृश्येत तदैव तदन्तः-

करणस्य पतिदुर्गगुप्त्याऽऽदर्शसतीत्वधर्मोदययोग्यत्वसम्पादनं समुचितमिति । प्रायोऽष्टमवर्ष एवैषां स्त्रीत्वाभिव्यञ्जकानां लक्षणानामुद्गमो दृश्यते । अपरत-श्चाधिदैविकदृष्ट्या सार्धसप्तवर्षावधि देवानामधिकारस्य विद्यमानत्वात्तावत्कालं कन्यायास्तदधीनत्वात् तैः सर्वथा गोप्यमानायाः सतीत्वमर्य्यादायाः तेषामधि-कारस्यापगत्या विघातशङ्कया तद्रक्षार्थं कस्यचनाधिकारिणो हस्ते तस्याः समर्पणं समुचिततममेव । अन्यतश्चाध्यात्मिकदृष्ट्याऽष्टमवर्ष एव कुमार्य्याः पूर्णता सम्पद्यते इत्यत एव तदवस्थायाः कुमार्य्याः पूजनं शास्त्रादौ विहितम् ।

न च तदवस्थायाः कुमार्य्याः पतिसङ्गमायोग्यत्वात्तदानीन्तनपरिणय-विधायकशास्त्रस्याप्रामाण्यम् । आर्य्याणां विवाहसंस्कारस्य धर्मसंग्राहकत्वान्न कामतृप्तिमूलत्वम्, सङ्गमकालस्य चान्यत्रान्यथापि विधानात् । सङ्गम-कालस्तु—

पूर्णषोडशवर्षा स्त्री पूर्णविंशेन सङ्गता ।
शुद्धे गर्भाशये मार्गे रक्ते शुद्धेऽनिले हृदि ॥
वीर्य्यवन्तं सुतं सूते ततोन्यूनाद्वयोः पुनः ।
रोग्यल्पायुरधन्यो वा गर्भो भवति नैव वा ॥
ऊनषोडशवर्षायामप्राप्तः पञ्चविंशतिम् ।
यद्याधत्ते पुमान् गर्भं कुक्षिस्थः स विपद्यते ॥
जातो वा न चिरं जीवेज्जीवेद्वा दुर्बलेन्द्रियः ।
तस्मादत्यन्तबालायां गर्भाधानं न कारयेदिति ॥

इत्याद्यायुर्वेद-स्मृति-देश-काल पात्राद्यनुचिन्तयैव निर्णयः ॥ ११५ ॥

प्रसङ्गतो नारी-प्राधान्यं कुत्रेति निर्णयति—

**सर्गे नार्य्याः प्राधान्यं कौशेयकीटवत् ॥ ११६ ॥**

यथा पुरुषजातीयकौशेयकीटः केवलं कौशेयतन्तुबीजमुत्पाद्य पृथग् भूत्वाऽवस्थान्तरे परिणमते स्त्रीजातीय एव कौशेयकीटः सर्वं कौशेयकृत्यं सम्पादयति तथैव सृष्टिक्रियायां स्त्रीजातेरेव प्राधान्यम् ।

तथा हि गर्भाधानक्षणाव्यवहितोत्तरक्षणेऽप्यकस्मात्पुरुषः पञ्चत्वमापद्येत चेन्न काऽपि हानिः भ्रूणस्य । परन्तु यदि स्त्री गर्भाधानावधितो दशमासाभ्य-न्तरमपि विनाशमापद्येत चेन्नैव स्याद्बालोत्पत्तिः सर्वथा सर्जनक्रियैव निरुद्धा स्यात् । अतो जनन्याः स्थितिस्तु दशमासावधिरावश्यकी मानवसर्गे । अतः सर्गक्रियायां नारीजातेः प्राधान्यमवश्यमङ्गीकरणीयम् ॥ ११६ ॥

प्रसङ्ग-सङ्गतिसम्प्राप्तं नारीधर्मविज्ञानं पुष्णाति—

तच्छुद्धिसंरक्षणं क्षेत्रवत् ॥ ११७ ॥

सृष्टौ नारीजातेः प्राधान्यात्तया सह तस्या एव गरीयान् सम्बन्धः। अतः प्राधान्यशुद्धावेव सृष्टेः शुद्धिरित्यत एव नारीजातेर्यावन्तो धर्माः कर्तव्याणि च निर्दिष्टानि तत्र सर्वत्रैव नारीजातेः शुद्धेरेवोद्देशः प्रधानतया प्रतिपादितः।

यथा क्षेत्राणि कर्षणैः निःशर्कराणि प्रस्तररहितानि विधाय यावत् शुद्धानि कृतानि स्युस्तावदेव तत्र बीजोप्तिः साधीयसी स्यात्, शस्यञ्च साधु सम्पन्नं स्यात्, तद्वदेव नारीजातिं यावत् सदाचारादिना पुरुषदुर्गरक्षया सतीत्वादिधर्मैश्च शुद्धा सुगुप्ता स्यात्, यावच्च तत्र नारीजातेरुपयोगिनः पारतन्त्र्यादिकाः तासां स्वाभाविका भावा वृद्धिं गताः स्युस्तावदेव मानवजातेर्मङ्गलं तत्सृष्टौ च सद्बुद्धि-प्रतिभा-सत्समृद्धिसमुदयः समेधितः स्यादिति विज्ञानाश्रयेणैव महर्षयो नारीधर्मान् प्रणीतवन्तः ॥ ११७ ॥

प्रसङ्गतो नारीधर्मनिदानं निर्वक्ति—

विफलं कामकलोत्तेजनम् ॥ ११८ ॥

शुद्धे क्षेत्रे प्रशस्तशस्यसमृद्धये यथा बीजोप्तेः कौशलमपेक्ष्यते तथैव शुद्धसन्तानाय गर्भाधानसंस्कारसमये शास्त्रविधिना केवलं वीर्य्यदानमेव पुरुषस्य प्रधानं कर्तव्यं नेतरदित्यतः स्त्रियं चञ्चलां कृत्वा कामोन्मत्तात्वकरणमनावश्यकं विफलञ्च।

विषयानन्दभोगलोभतः पुरुष एव स्त्रियं चञ्चलां करोति। स्त्री तु स्वभावत एव लज्जाधैर्य्यादिगुणावलीभिः पुरुषसन्निधौ धरावद्धीरैव तिष्ठति। पुरुषेण चाञ्चल्यादिविधानन्त्वस्वाभाविकम्, अतः कौमारावस्थायां सौभाग्यावस्थायां वा नारीसमीपे चाञ्चल्य-कामोन्मत्तात्वचेष्टादि-विधारणं सर्वथापि गर्हितमेव नार्य्यां धैर्य्यसंस्थापनमेव प्रधानं पौरुषं कर्म ॥ ११८ ॥

विज्ञानदार्ढ्याय तत्फलमभिधत्ते—

पापाय तत् ॥ ११९ ॥

स्त्रीषु कामकलोद्दीपनं पापजनकं स्त्रीणां क्षेत्रस्थानीयानां सुकुमारमतीनां चाञ्चल्यादिना कामकलोद्दीपनादिकार्यं तासां स्वभावविरुद्धत्वात् तपोधर्मप्रातिकूल्याच्चाधर्मनिदानम्। यद्धि सत्त्वगुणवर्द्धकं सदभ्युदयनिःश्रेयसप्रदं तद्धि पुण्यशब्देनोच्यते। यच्च तमोगुणवर्द्धकं सदधो नयति तत्पापमभिधीयते।

अतश्च चाञ्चल्यमधैर्य्यं निर्लज्जतामूलकञ्च कामकलोत्तेजनं सर्वमपि नारीणां कृते पापाधायकमेव ॥ ११९ ॥

वैज्ञानिकं कारणं ब्रूते—

**नैसर्गिकत्वविरहात् ॥ १२० ॥**

नार्य्यां चाञ्चल्योत्पादिकायाः तपोधर्मनाशिकाया धैर्य्यशीलविरोधिकायाः परमानन्दस्वरूपाया मुक्तेर्विरोधिन्याः कामकलायाः उत्तेजनम् तत्स्वभाव-विरुद्धत्वात् सुतरामधर्मजनकम् । नारीजातेर्धर्मस्य तपोमूलकत्वात् तस्यां धैर्य्यसंरक्षणस्य यावन्तो व्यापारास्त एव धर्मवर्द्धकास्तद्विरोधिनश्चाधर्मा-विका एव । कामप्रेम्णो रात्रिन्दिववत्परस्परविरोधात्, प्रेमविरोधिनां कामोद्दीपकानां व्यापाराणामेव नारीजातिधर्मे निषेधः । यतो हि पापजनिका एतादृश्यो वृत्तयो नारीणां सहजस्वभावविरुद्धा इति यत्नतो महर्षिभिर्निवारिताः ॥ १२० ॥

इदानीं पुण्यजनकहेतुमाह—

**पुण्याय तत्प्रसन्नता सर्गशुद्धिहेतुत्वात् ॥ १२१ ॥**

पूर्वसूत्रैः पापाधायककार्य्याणि निषिध्याधुना नारीसम्बन्धतः पुण्यजनक-कार्य्याण्याह अनेन सूत्रेण—क्षेत्राणां शुद्ध्या यथा शस्यसमृद्धिर्जायते तथैव यत्र नार्यः प्रसन्नचेतसस्तिष्ठन्ति तस्या जातेः तस्य कुलस्य वा ध्रुवमभ्युदयः संपद्यते । अभ्युदयहेतुश्चावश्यं पुण्याधायकः ।

सृष्टि-शुद्धिश्च नारीशुद्धिमपेक्षते । यतश्च नारीप्रसादस्य वृद्धिस्तद्धि कार्य्यजातं सृष्टिसम्बन्धतः पुण्यजनकमिति सुनिश्चितम् । सृष्टिशुद्धिश्च नारीशुद्धितः साध्यते । यतश्च सृष्टिशुद्धिस्तस्य पुण्यजनकत्वे नाणुरपि सन्देहा-वसरः । पुण्यञ्च धर्मस्यैव परिणामः । धर्मत एव सर्गरक्षणम्भवतीति प्रागे-वोक्तम् ।

अतश्च धर्मसमेधकानां कार्य्याणां सृष्टिपावनत्वविधाने प्राधान्यं सृष्टेः पवित्र्यं हि तस्या अभ्युदयनिदानमित्यपि न विस्मरणीयम् ।

नारीजातेः क्षेत्ररूपत्वात् सृष्टेर्निदानत्वाच्च तस्याः प्रसन्नतया सृष्टेः पावित्र्योत्तमतयोः कः सन्देहः ।

वैषयिकसम्बन्धतोऽपि नार्य्याः प्रसादस्योत्पत्तेः किन्तदेवैतस्य लक्ष्यमिति-शङ्काया उत्तरमिदम्—नहि वैषयिक-प्रसन्नतामात्रं वस्तुतः प्रसन्नताशब्दवाच्यं भवितुमर्हति । यतोहि वैषयिक-सुखप्रदा प्रसन्नता क्षणिका परिणामे दुःखदैव । प्रत्युत सा प्रसन्नतैव नोच्यते या दुःखोदर्का स्यात् ।

# सूर्योदयः ।

( विविधविषयविभूषितं संस्कृतमासिकपत्रम् )

षष्ठे वर्षे } मार्गशीर्षस्य पूर्णिमा, सं० १९८७ । { षष्ठ संख्या

## सम्पादकीया अभिप्रायाः ।

—o:*:o—

### प्राचीनशिक्षादर्शः ।

परमात्मनि तदीयशक्तौ चाहं ममेतिवत् न कोऽपि भेदः । यथा गायके तद्गानशक्तौ च परस्परमभेदः, तथैव ब्रह्मणि ब्रह्मशक्तौ चाभेदत्वमेव । एतस्याभेदस्य स्वानुभूतिरेवाद्वैतसिद्धये बीजमन्त्रः । ब्रह्मशक्तिर्हि स्वस्वरूपं द्विधा विभज्य बन्धं मोक्षं च विदधाति । जगत्यज्ञानजालं प्रसारयन्ती, सृष्टिकर्त्री, तमःप्रधाना अविद्या, द्वितीया सा विद्या, या जीवान् आत्मोन्मुखान् विधाय मुक्तिपदे प्रतिष्ठापयति । विद्याऽविद्ये ज्ञानाज्ञाने जनयतः । अविद्या ब्रह्मतः स्वतन्त्रा नृत्यन्ती सर्वान् मायापाशे पातयति । विद्या तु निजान् ज्ञानिभक्तान् स्वरूपप्रदर्शनपुरस्सरं ब्रह्मपारावारे निमज्जयति, निमज्जति च । अविद्यायाः क्रीडास्थली बहिर्जगत् संसारः, विद्याया अन्तर्जगत् ज्ञानराज्यम् । याथातथ्यमविद्यास्वरूपं परिचीय विद्यासेवनेन ब्रह्मानन्दाम्बुधावगाहनमेव शिक्षाया अद्वितीयमुद्देश्यम् ।

परमपूज्यपादास्त्रिकालद्रष्टारो जगद्गुरवो महर्षयः सर्वत्रैवैवमुक्तवन्तो यदन्तःकरणमेव जीवानां सुखदुःखयोः, धर्माधर्मयोः, मोक्षबन्धयोश्च कारणम् । तच्च मनोबुद्धि-चित्ताहङ्कारैश्चतुर्धा विभक्तम् । संकल्पविकल्पात्मकं मनः, निश्चयात्मिका बुद्धिः, मनोनर्तनकारि संस्कारधारकं चित्तम्, स्वतन्त्रास्तित्वनिदर्शकोऽज्ञानबीजरूपोऽहङ्कारः । सूक्ष्मपर्यालोचनेन तु मनसोऽन्तर्विभागश्चित्तम्, बुद्धेरहङ्कार इति सिध्यति । चित्तप्रेरणयैव मनः संकल्पं विकल्पं वा विदधाति । स्वीयस्वतन्त्राहङ्कारप्रयोजकतयेव स्वविचारानुरूपं बुद्धौ सदसद्विवेको जन्म लभते । अविद्यानिकेतनं मनः, विद्याश्रयीभूता बुद्धिः । अतिसूक्ष्मपर्यालोचनया किल मनस एवाऽशुद्धं शुद्धमिति भेदद्वयमवगन्त-

च्यम्। बुद्धिरपि द्विविधा—आत्मपरा इन्द्रियपरा च। अशुद्धेन मनसा, इन्द्रियपरया बुद्ध्या च क्रियमाणकार्यकलापस्य परिणामो विषयसुखम्, शुद्धेन मनसा आत्मपरया बुद्ध्या च विधीयमानव्यापारसमूहस्य फलम् आत्मानुसन्धानरूपं ब्रह्मानन्दनिमज्जनम्। अतो हि यत्र शिक्षाप्रणाल्यामशुद्ध-मनस इन्द्रियपरायां बुद्धेश्च लालनं पालनं च स्यात् सा नोपादेया। यत्र हि ज्ञानप्रदायिन्याः स्वस्वरूपप्रकाशिन्या महादेव्या विद्यायाः समुपासनया शुद्धमानसम्, आत्मपराया बुद्धेश्च क्रमविकासः, सैवोपादेया कल्याण-कारिणी च। अत्रैव प्राचीनभित्तौ जगदेकाश्रयः पुरातनोऽपि सनातनो महा-महिमशाली विशालः शिक्षादुर्गम् परमपावने सर्वतः प्राचीने भारतदेशे जगद्गुरुभि र्महर्षिभि र्निर्मितम्।

विषयविरक्ताः सांसारिकं सर्वविधमपि सुखं परित्यज्य तपःस्वाध्याय-यनिरता विषयसुखानुरक्तमानवसमाजं परित्यजन्तो महर्षयः पूर्वाचार्या स्तपोवने न्यवसन्। वैदिकैः कर्मकाण्डैः शारीरिकं मलं, भगवदुपासनया मानसिकं विक्षेपम्, आत्मानात्मविचारसंवलिततत्त्वज्ञानेन बौद्धिकमावरणं च विनाश्य जगत्कल्याणनिमित्तं विविधज्ञानविज्ञानपरिपाटीमाविष्कृत्य जगद्गुरवोऽभूवन्।

अग्रजन्मानः कर्मोपासनाज्ञानात्मकस्य वैदिककाण्डत्रयस्य साहाय्येन, योगसाधनेन युक्तमन्तःकरणमधिगच्छन्तस्तपस्विनो ज्ञाननिरताः शास्त्राणि प्रकाशितवन्तः। 'अन्धेन नीयमाना यथान्धाः' इतिवत् ते न खलु शिक्षासरणिं निर्दिष्टवन्तः, प्रत्युत स्वयमन्तर्दृष्टिसम्पन्ना लब्धदार्शनिकचक्षुषो जगत्सु ज्ञान-ज्योति र्महता प्रयासेन प्रचारितवन्तः। ज्ञानप्रकाशपरिपाट्याः प्रथमाविष्कार एव महत्काठिन्यम्। आविष्कृते सिद्धान्ते नौतन्योद्भावनं तु न तथा। कस्य-चिदान्तरस्य बाह्यस्य वा जगतो नवीन-विज्ञान प्रथमाविष्कारविधानं लोकोत्तरं कठिनं चेत्यत्र नाणीयानपि संशयः। पूर्वाचार्या महर्षयः सर्वप्रथमं स्वयमेव सिद्धिं लभमाना जगत्कल्याणसाधनार्थमलौकिकमीश्वरतत्त्वं, सर्वजीवहितकरं धर्मतत्त्वम्, अज्ञानविमोचनो वैदिकदर्शनसमूहः, मानवीयसभ्यताया मौलिक-सिद्धान्तः, विविधजीवतत्त्वम्, परलोकविज्ञानम्, सर्वतः पूर्णाया देवगिरो देव-नागरलिपेश्च महत्त्वम्, रेखागणितम्, बीजगणितम्, अङ्कगणितम्, ज्यौतिषम्, सङ्गीतम्, आयुर्वेदः, धनुर्वेदः, चित्रकला, स्थापत्यम्, वस्त्राणि, धातुनिर्मित-पदार्थाः, विविधानि अन्नानि, धर्मार्थकाममोक्षशास्त्रादीनि चाविष्कृत्य जग-द्गुरवोऽभूवन्। तैः प्रवर्त्तितं वर्णाश्रमापरनामकं समाजविज्ञानम् आर्यजाति-

चिरजीवित्वे प्रधानं हेतुः। अस्य साक्षी प्राचीनो नवीनो वा जागतिक इतिहास एव वर्तते। ब्राह्मणानां तपः, स्वाध्यायः, विषयवैराग्यं, ज्ञानगौरवं च क्षत्रियाणां लोकोत्तरं शौर्यम्, स्त्रीणां च त्रिलोकपावनं सतीत्वं चेत्यादि साम्प्रतमपि स्मारयति प्राचीनशिक्षाया आदर्शम्।

नवीन प्राचीन शिक्षा प्रणाल्यामिदमेव महत् पार्थक्यं यत् नूतना शिक्षापद्धतिः क्रान्तिपक्षपातिनी, प्राचीना तु क्रमाभिव्यक्तेरेव पक्षपातिनीति। पूज्यचरणमहर्षयो रजोवीर्यशुद्धिमूलिकया आत्मलक्ष्यप्राधान्यया वर्णाश्रमशृङ्खलया नियम्य आर्यजातिं केवलं चिरजीविनीमेव नाकार्षुः, प्रत्युत लोकशिक्षायाः क्रमाभिव्यक्तेः सिद्धान्तस्य कार्यक्षेत्रं नितरां दृढतामपि प्रापयन्। सूक्ष्म विचारेण सर्वैरेव बुद्धिमद्भिरिदमवश्यमेव स्वीकरणीयं यत् जीवमात्रस्य च शरीरे मनसि च या स्वाभाविकी शक्ति र्निहिता तस्या एव क्रमविकाशो भवितुमर्हति। क्रान्तिकारी भावो न कदापि तत्रोत्पद्येत। क्रान्तिं द्वारीकृत्य नारीषु पुरुषभावाविर्भावनपक्षपातिभिरिदमवधेयं यत् न कदापि कथमपि नार्यः निखिलपुरुषकार्यं कर्तुं प्रभविष्यन्ति। तथैव प्रयत्नशतेनापि पुरुषा नारीकार्यं समग्रं न विधातुं शक्ष्यन्ति। अपरं चेदं विचारणीयं यत् कस्य कीदृशमुत्तरदायित्वं प्राकृतिकम्। सर्गविधौ पुरुषैस्तु स्वीयं कार्यं पञ्चभिरेव पलैः समापनीयं स्यात्, नारीभिस्तु नवभिर्मासैरिति। एकः पुरुषः सृष्टिकार्येऽनेकासां नारीणां साहाय्यं विधातुं पारयेत्, न नार्यः। अतोऽधिकारभेदं लक्ष्यीकृत्य पुरुषाणां स्त्रीणां च शिक्षाविधाने पार्थक्यं स्वाभाविकमेव। एतदभावे द्वयोर्महती हानिरवश्यम्भाविनी। तथैव यत्र मानवे शिल्पस्य व्यापारद्वारा अर्थोपार्जनस्य शक्तिर्निहिता, तस्य विषयवैराग्यमूलिका ब्राह्मणोचितशिक्षा न कदापि हिताधायिका भवेत्। स्वभावो हि प्रकृतिजन्यः। प्रकृतिविरुद्धाचरणमीश्वराज्ञाऽवहेलनमेव। अतः सिध्यति यत् क्रान्तिं द्वारीकृत्य प्रवर्त्तिता शिक्षापद्धतिः समयान्तरे मनुष्यत्वमपि समूलमुन्मूलयितुमलं भवेत्।

### प्राचीनशिक्षादर्शस्य निम्ननिर्दिष्टा मौलिकसिद्धान्ताः—

(क) स्त्रीणां पुरुषाणां चाधिकारमनुसृत्य शिक्षाविधानम्।

(ख) मनुष्येभ्यस्तदीयवंशपरम्पराप्रकृतेरनुकूलं शिक्षाप्रदानम्।

(ग) मानवानां प्रकृतिप्रवृत्त्यो विशेषपर्यालोचनेन तदनुकूलं शिक्षाप्रवर्त्तनम्।

(घ) क्रान्तिवादं परित्यज्य क्रमाभिव्यक्तिं द्वारीकृत्यैव शिक्षाप्रचारणम्।

( ङ ) शिक्षाप्रणाल्यां गुरूणां सम्मानसम्वर्द्धनपूर्वकं पूज्यपूजातिक्रमनिरोधः।

( च ) विद्यार्थिनां पारिवारिकात् जनसमाजाच्च पृथक्निवासविधानं, गुरुसेवाव्रते दृढतासम्पादनं च।

( छ ) विद्यार्थिनां चित्तेषु ब्रह्मचर्यप्रतिष्ठापनपूर्वकं निरभिमानितायाः, स्त्रीषु मातृभावस्य, गुरुषु देवभावस्य चाविर्भावनम्।

( ज ) अर्थकामयो धर्ममोक्षयोः प्रवृत्तिनिवृत्त्योश्चाधिकारपार्थक्यं शिक्षयित्वा जीवनयापनोपयोगिनां शिल्पकलादिनानाशास्त्राणां शिक्षणम्।

( झ ) समावर्त्तनावसरे कृतविद्यानामधिकारिणां विदुषां स्वयमेव निजभविष्यन्मार्गनिर्द्धारणार्थं प्रोत्साहनमनुकूलावसरप्रदानं च।

( ञ ) मोक्षप्रधानेन ब्राह्मणत्वेन धर्मप्रधानेन क्षत्रियत्वेन सहैव अर्थकामप्रधानयो र्वैश्यत्व-शूद्रत्वयोरपि स्वस्वाधिकारशृङ्खलासुरक्षार्थं तादृशशिक्षाप्रबन्धनं, येन धर्म-समाज-राष्ट्राणां सुप्रबन्धे शान्तिविधाने च बाधा न स्यात्।

( ट ) तपःस्वाध्यायनिरत-जगत्कल्याणतत्परब्राह्मणत्वसंरक्षणेन ज्ञानप्रवाहक्षुण्णतासम्पादनम्, धार्मिककर्त्तव्यपरायण-निर्लोभ-समाज राष्ट्रसेवानिरत-क्षत्रियत्वप्रतिष्ठापनेन स्वधर्मस्वदेशरक्षोपयोगि शिक्षाविधानम्।

( ठ ) गुरुगृहनिवास एव न शिक्षासमयः, किन्तु आजीवनं चतुर्षु आश्रमेष्वपि शिक्षाप्रोत्साहनप्रबन्धः।

( ड ) आरम्भत एव कुमारीणां कुमाराणां च शिक्षाविधाने भेदस्थापनम्। राज्ञः पुत्रस्यापि पठनार्थं गुरुगृहप्रेषणमावश्यकम्, किन्तु कन्यानां तु पितृश्वसुर-गृहेषु एव शिक्षाविधानम्।

( ढ ) गुरुतरमपि शिक्षाभारं वहन्तीनां ब्राह्मणजातीनां तपः स्वाध्यायवित्तानुरूपं निवृत्तिपथप्रवर्तनेन प्रतिष्ठां विधाय ज्ञानप्रवाहसंरक्षणम्।

( ण ) मानवजीवनस्यावस्थान्तरेषु धर्ममेव सम्मुखीकृत्य सर्वविधशिक्षाप्रवर्तनम्।

( त ) यथाशक्ति यथाधिकारं यथादेशकालपात्रं च मानवमात्रेऽपि अध्यात्मलक्ष्यसंस्थापनम्।

इत्यादीनि प्राचीनशिक्षामौलिकलक्ष्याणि वेदशास्त्रनिर्दिष्टानि समुपलभ्यन्ते। अहं हि इन्द्रियसुखभोक्ता, जगदेव सर्वस्वं, ततोऽन्यत् किमपि नास्ति, इत्यादिलक्ष्यं प्राचीनशिक्षापद्धते र्नासीत्। किञ्च ऐहलौकिक-पारलौकिक-

सत्तास्वीकारपूर्वकम् अहमेव जगत्, जगदेवाहम्, अहं ब्रह्मास्मि, तत्त्वमसि, इत्यादि सदुद्देश्यानि स्थिरीकृत्य प्राचीना प्राच्या शिक्षापद्धतिरासीद् व्यवस्थापिता। सम्प्रति भारते, पाश्चात्यदेशेषु, अमेरिकाया विभिन्नस्थानेषु एशियायाः स्थानान्तरेषु, किम्बहुना सर्वत्रैव येयं क्रान्तिपक्षपातिनी परमात्मज्ञानविहीना, धर्मलक्ष्यशून्या शिक्षाप्रणाली प्रचलिता, सैव साम्प्रतिकसंसारस्य मौलिकं व्यापकदुःखनिदानम्। राष्ट्रनायकाः समाजपतयश्च यावत् प्राचीनशिक्षापद्धतौ यथासम्भवं दृष्टिनिक्षेपं न कुर्वन्ति, तावत् जगति जाज्वल्यमानस्य दुःखानलस्य निर्वाणमसम्भवमेव, तावच्च मानवसमाजस्याभ्युदयप्रदः पन्थाः कण्टकाकीर्ण एव। विश्वजननी विद्यारूपिणी ब्रह्मशक्तिरेव सर्वेषां विद्यानुरागिणां बुद्धिं तदर्थं प्रेरयत्विति बलवती मे वासना।

---

## श्रीजगदम्बिकाष्टकम्।

कृष्णब्रह्मसुरेश्वरादिविबुधैर्या वन्द्यते सुस्तवै
र्वेदज्ञा विमलान्नुवन्ति सततं विश्वेऽपि यस्या गुणान्॥
यस्या बुद्धिदपूजनेन मनुजो मोक्षं परं प्राप्नुया-
द्वन्देऽहं ननु भुक्तिमुक्तिवरदां तामम्बिकामीश्वरीम्॥ १॥

वन्द्यातुल्यबला शिवप्रभृतिभिर्देवेश्वरैर्या स्तुता
सुस्तोत्रैर्महिषासुरस्य कुधियो नेतुं वधं सत्वरम्॥
पापघ्नी जयदा स्मितान्वितमुखी माता त्रिलोकस्य या॥
ज्ञानं नो हृदये पिपर्तु परमं देवीश्वरी साम्बिका॥ २॥

या हेम्ना समकान्तिरूपनिकरे सिंहासने या स्थिता
भूतं शुम्भनिशुम्भयोश्च हननं क्षिप्रं यया रक्षसोः॥
चण्डोऽतुल्यपराक्रमोऽपि निहतो मुण्डश्च देव्या यया
घण्टाहस्तपुटाभिवर्षतु सुधामस्मासु सा योगिनी॥ ३॥

यस्याः शुभ्रगुणानुवर्णनचयान्शेषोऽप्यशक्तो भवे-
द्वक्तुं चापि सरस्वती भगवती माधुर्यभृज्जिह्वया॥
द्वीपिस्थासिभुजा सरोजनयना या रक्तसामन्तका
सा देवी जगदम्बिकास्मदुपरि श्लाघ्यामृतं सिञ्चतु॥ ४।

भक्तेभ्यस्त्रिदिवौकसामधिपतेर्यद्दुर्लभं विद्यते
पूजातः प्रददाति वस्तु वरदा तत्प्रत्यहं येप्सितम् ॥
भ्रूक्रोधानलदग्धराक्षसगणा चण्डांशुकोटिप्रभा
मोहादिज्वरनाशिनी प्रतिदिनं सा चण्डिका पातु नः ॥ ५ ॥
या देवी जगतः स्थितिप्रलययोः कर्त्री सदा कथ्यते
सेवन्ते नवरात्रिषूत्तमपदै-र्नानाविधैर्यां जनाः ॥
मोहाऽज्ञानतमोविनाशचपलं यत्कीर्तनं भानुवत्
तस्या मूर्धनि धारयामि सुरमं देव्या रजोऽङ्घ्र्यब्जयोः ॥ ६ ॥
यस्याः शुभ्रतमालयं जिगमिषोर्नुनैव विघ्नं भवेत्
मोदन्ते वनजेऽलिवच्च मनुजा यत्पूजनाम्भोरुहि ।
भीतिं भूतपिशाचराक्षसगणा गच्छन्ति यद्दर्शना-
द्देवीं तां प्रणमाम्यहं सविनयं दिव्योजसीमम्बिकाम् ॥ ७ ॥
जम्भारिस्तुतमिष्टदं विरचितं हन्तृप्रमादस्य यत्
गन्धर्वादिवियच्चरैरपि नुतं लक्ष्मीप्रियेणापि च ।
दीनानां परितापनाशि विमलं वन्द्यं तदम्बाष्टकं
शत्रुभ्यः परिरक्षदिष्टफलदं दत्तां सुरम्यं पदम् ॥ ८ ॥

— श्रीजगदीश चन्द्रः । ( जोधपुरस्थः )

---

## टिप्पणे टिप्पणम् ।

—:*:—

### निबन्धा—श्रीदीनानाथशर्म्मा सारस्वतशास्त्री ।

( 'मुलतान' स्थ-श्रीसनातनधर्म्मसंस्कृत-कालेजाऽध्यापकः )

*'ओरियण्टलकालेज मेगज़ीन' नामकपत्रस्य पाठकानां विदितम्भविष्यति; यत्-तदीयायां विंश्यां क्रमसङ्ख्यायाम् "अष्टाऽध्यायीसिद्धान्तकौमुद्योस्तारतम्य-विमर्श" इति मामकीनो निबन्धः प्राकाश्यमगात् । तत्र च श्रीमद्भट्टोजिदीक्षितं

* इदं पत्रं त्रैभाषिकं त्रैमासिकञ्च; 'ओरियण्टल कालेज-लाहौर' तः प्रकाश्यते । तत्र प्रकाशितस्य 'सम्पादकीयटिप्पणम्' इतिनिबन्धस्योत्तरमदः ।

लोष्टूयमानेन मया टिप्पण्याङ् कानिचित् तदीयस्खलनान्यप्यदर्शिषत; तत्र न मामिका तदीययशस्तिरश्चिकीर्षाऽविद्यत। तत्र तु मया 'स्खलनं हि मनुष्य-धर्म्म' इत्यनुसृत्यैव स्वतुच्छबुद्ध्याऽदसीयाः काश्चित्क्व उपेक्षा अदर्शयिषत। तत्र लवपुरीय-प्राच्यविद्यालयमुख्याऽध्यापकैः साहित्यमीमांसातीर्थैः पण्डितवर-श्रीमाधवशास्त्रिभिर्व्याकरणाचार्य्यैः समाधित्सितम्। तन्निध्यायाऽहं परमप्रसन्नताऽऽसन्नतामलप्सि; यतो नाऽहम्भट्टोजिदीक्षितं सर्व्वथा दोषदिग्धमेव दिदृक्षे। तत्र समाधिरावश्यक एव। तथाऽपि यदि तैरन्तिमपद्येनेदमेवोपोद्वलितम्भवेद्; यद्—दीक्षितः स्खलितुमेव नाऽर्हति; तत्स्खलनप्रदर्शनञ्च विवस्वतो हस्ततलेनाऽपिधानमस्ति इति; तत्तु खलु भ्रान्तिविलसितमेव, स्खलनानाम्मानुष-शेमुष्या ऽविनाभावत्वाद्। अत एव तु शेखरकारः प्रायो दीक्षितस्य मनोरमास्थाः काश्चित्कीस्वकीयोक्तीर्विस्पष्टम्प्रत्याचष्ट। श्रीभाण्डारिमहाभागैरपि मत्प्रदर्शिताया 'जात्याख्याया' मित्यादेस्तत्पुरुषेऽप्रयोजनीयसूत्रचतुष्टय्या दीक्षित-कर्त्तृकतत्रत्यनिवेशौचितीमप्रदर्श्य 'स नूनमाच्छादयितुं प्रवर्त्तते विवस्वतो हस्त-तलेन मण्डलम्' इत्यादिः स्वकीयोक्तिः प्रत्युक्तैव। अस्तु। अन्तर्गडुलमिदं हित्वा प्रकृतानुसरणमेव साम्प्रतं साम्प्रतम्।

(१) मुखसहितनासिकयेति।—"शाकपार्थिवादीनां सिद्धय उत्तरपद-लोपस्योपसङ्ख्यानम्" इति हि वार्त्तिकम्। तत्र शाकपार्थिवादिराकृतिगणः शाकपार्थिवाऽऽदीनान्तु पाठो गणे पठितः; परम् अदसीयोत्तरपदानां, गणे निश्चितरूपेण इदन्तया पाठो नाऽस्ति। अत एव हि काशिकायां 'शाकप्रधानः पार्थिव, इत्येव 'प्रधाने' त्युत्तरपदेन विगृह्य तल्लोपो विहितः, सिद्धान्तकौमुद्याञ्च 'शाकप्रियः पार्थिव, इति 'प्रिय' शब्द एव उत्तरपदत्वेन पठितः। भाष्ये च 'शाकभोजी पार्थिव, इत्यादिना 'भोजी' त्येव पदमुत्तरपदतान्नीतम्। एवं सति हि यदि भाष्यसम्मतमेव तद्घटितमेव वा पदमेव निश्चितरूपेण गणे पठ्येत मन्येत वा उत्तरपदत्वेन, तर्हि तु 'भोजी' ति भाष्याऽभिहित एवोत्तर-पदे सति, समास उत्तरपदलोपश्च भवेन्नान्यत्र। ततश्च दीक्षितोरीकृते 'शाक-प्रिय' इति विग्रहग्रहे 'प्रिये' त्युत्तरपदस्य, 'शाकप्रधान' इति काशिकाऽभीष्टे च 'प्रधाने' त्युत्तरपदस्य लोपेन न भाव्यम्; भाष्यकल्पिते शाकपार्थिवादिगणे प्रिय-प्रधान-घटितत्वपाठाऽभावात्। परम्नैवम्—। शाकपार्थिव इति तु गणे मतमेव; परं 'प्रिय-प्रधान-भोजिनामन्यतमस्य निश्चयो नाऽस्ति; तेनैतत्त्रयाऽति-रिक्तोत्तरपदान्तरकल्पनेऽपि 'शाकाशी पार्थिव' इत्यादौ 'शाकपार्थिव' इत्येव रूपम्भविष्यति, न तूत्तरपदान्तरसहितम्। एवम्प्रकृतम्मुखनासिके, ति पद-

मपि गृह्यताम्'। 'मुखनासिका' इति हि पदं शाकपार्थिवादेराकृतिगणत्वाऽभ्युपपत्त्या तत्र पठितम्। अधुनाऽस्य पदस्य 'मुखद्वितीया नासिका' 'मुखोपसंहिता वा नासिका, इति भाष्योक्तमुपसंहितादिपदमुपादीयेत, अथवा 'उपसंहितस्यैव, ('समो वा हिततत्तयो' रिति लुप्तमकारं) द्वितीयं (वैकल्पिकं) 'सहित' पदमुत्तरपदत्वेन कल्प्येत, नैतेन तदुत्तरपदस्य समासेऽलोपो भवितुमर्हति। यतो, 'मुखनासिका' शब्दस्य शाकपार्थिवाऽऽदित्वाद् * वार्तिकेन च इदमपि ज्ञायते, यच्च-'शाकपार्थिवा, दीनां सिद्धये उत्तरपदस्य लोपो विधेलिमः, परन्तत्र दीक्षितेन तु वृत्तौ 'मुखनासिके' तिशाकपार्थिवाद्यन्तर्गतपदस्य सिद्धय- उत्तरपदस्य लोप एव न कृतः। यदि तेन 'मुखनासिका' इत्येतदन्तर्गतोत्तरपदस्य (यस्मात् कस्मादपि कारणात्) प्रदिदर्शयिषालोभो न सँव्वरीतुम्पारितः, तर्हि तु असमास एव न्याय्य आसीद्। यदि तु भाण्डारिणामाग्रहेण एतदेव मन्येत, यद्—'मुखनासिका, इत्यत्र समासे भाष्यनिर्दिष्ट उपसंहितादिविग्रह एव प्रामाणिको न तु सहिताऽऽद्युत्तरपदग्रहः, तर्हि तु तेषामेव मतेन 'मुखसहितनासिकया' इति भट्टोजिदीक्षितस्य अपपाठ एव। यतोऽत्र भाष्यकृन्मतेन 'उपसंहिते' ति पदमेव प्रदर्शनीयमवित्त; नेतरद्। यतो हि सूत्रे 'मुखनासिका' शब्दश्शाकपार्थिवाऽन्तर्गत एव। तदाऽपि 'मुखोपसंहितया नासिकया, इति व्यसनीयमेवाऽऽसीन्न्याय्यन्दीक्षितस्य, न तु निरङ्कुशताऽवलम्बनम्। एवञ्च 'शाकप्रिय, इति दीक्षितविग्रहेऽपि समासे 'शाकप्रियपार्थिव, इति रूपेणैव भुवेलिमम्भाण्डारिमहाभागनयेन 'मुखसहितनासिकये' तिवद्, न तु तदुत्तरपदलोपेन भाव्यम्; 'सहिता' दिपदवत् 'शाकपार्थिव' विग्रहे 'प्रिय' शब्दस्याऽपि भाष्येणाऽकल्पितत्वाद् इत्यनुपदमेवोक्तम्। तदत्र भाण्डारिणां' सर्वथाऽकाण्डताण्डव' मिदं द्रष्टव्यम्। †

(क्रमशः)



* गणे शाकपार्थिवादय उत्तरपदविशिष्टा न पठिताः; न चोत्तरपदानां निश्चितो गणः क्वापि पठितः।

† तेषामेवेयमुक्तिरनुकृता, न मामिकेयमित्यवसेयम्।

# शिक्षाया आदर्शः ❀।

—:०❀०:—

नवीनं प्राचीनं चेति जगद् द्विधा विभज्यते। नवीनापेक्षया प्राचीनस्य जगतो गौरवं महत्त्वं वा सर्वाधिकं सर्ववादि सम्मतं च। मानवीया सभ्यता प्राचीनायामेव भुवि सर्वप्रथमं विकाशमाप्नोत्। तत्रापि एशियाऽभिधानो भूभागो धर्मस्य, सभ्यतायाः, मानवशिक्षायाश्च आदिविकासस्थानमिति सर्वेऽपि नवीन-प्राचीना ऐतिह्यविद ऐकमत्येन समामनन्ति। प्रधानेषु धार्मिकमतेषु त्रीणि मतानि एशियाया भुव आरबीये प्रदेश एव प्रादुरभूवन्। भारतं नाम प्रदेशोऽयं तु धर्मस्य सर्वविधाया विद्यायाः, शिक्षायाः, सभ्यताया वा आदिमो जनक इति बहवः पाश्चात्या विपश्चितोऽपि सानुसन्धानं स्वीकुर्वते। आध्यात्मिक-महत्त्वेषु, दार्शनिकतत्त्वाविष्कारेषु, धर्माधर्मगम्भीररहस्य-पर्यालोचनेषु, गूढ़-तरसामाजिकश्रृङ्खलाविज्ञानपरिज्ञानेषु, उद्भिज्जादिचतुर्विधभूतसंघ-तत्सृष्टि-रहस्यादीनां गवेषणेषु, देवभाषायाः सर्वाङ्गपूर्णतासम्पादनेषु, वर्णलेखनप्रणाली-पूर्णपरिष्कारेषु, अङ्कशास्त्राणामाविष्कारेषु ज्यामिति-रेखागणित-फलित-गणित ज्यौतिष-आयुर्वेद-स्थापत्यादिविद्यानां प्रथमविकासेषु, देवलोकदुर्लभसंगीत-स्यालोचनपूर्वकतदीयमधुरिमास्वादप्रकाशनेषु, किं बहुना मानवसभ्यता-पूर्णता-परिचायकेषु, काव्यकला-ललितकला-शिल्पकला-नृत्यकलादीनां पूर्णत्वसम्पाद-नादिषु च भारताख्यो देशो भूमण्डले प्राथमिको गुरुरिति सरविलियमजोन्स-विलसन-शोपेनहर-गाफ-कोलब्रुक-कीथ-डाविस-थोबो-बेलन्टाइन-डब्ल्यू० सी० लेटर-मैक्समूलर-प्रभृतयः प्रतीच्या मनीषिणोऽपि स्वेषु पुस्तकेष्वभिप्रयन्ति। एतद्देशप्रसूतैव सभ्यता यथाक्रमम् अरब-यूनान-रोमेषु प्रसरन्ती समस्तमपि भुवो मण्डलं व्याप्नोदिति नाप्रत्यक्षं विदितवेदितव्यानां विपश्चिताम्। भारतेऽपि काशीयं विद्याया धर्मस्य च साक्षात् प्रसविनी परमपावनतमा पुरी। अत्र सम्पद्यमानं निखिल-एशियाशिक्षामहासम्मेलनं भगवदनुकम्पा-प्रवर्त्तितमेव मन्यामहे।

व्यक्तेर्जातेर्वा स्वस्मिन् विद्यमानस्य मौलिकभावस्योद्भावनमेव शिक्षायो अन्तिमम् उद्देश्यम्। यथा च हयत्व-हस्तित्व-विकासयित्री किल हय-हस्तिनोः साधीयसी शिक्षा, तथैव या स्वगतमौलिकभावानां मनुष्यतादीनां पूर्णविकास-पूर्वकं मानवान् स्वरूपोपलब्ध्या पूर्णतापदे प्रतिष्ठापयति, सैव मानवशिक्षा शिक्षेति पौरस्त्यः सिद्धान्तः। येन शिक्षाविधानेन नारीणां स्वस्य मौलिक-

❀ काश्यां सम्पद्यमानम् एशियाशिक्षामहासम्मेलनमुद्दिश्य संकलितः।

धर्मस्य जगन्मातुरंशस्याविर्भावः स्यात्, स्त्रियो जगन्मातृत्वमधिगच्छेयुस्तदेव शिक्षाविधानं स्त्रीणां हिताधायकम्। जगत्पितु र्जगन्मातुश्चांशकलामाश्रित्य पुमांसः स्त्रियश्च समुत्पद्यन्त इति सांख्यविदः। अतो हि यया शिक्षणसरण्या पुरुषाणां जगत्पितृभावस्य स्त्रीणां च जगन्मातृभावस्य सम्पूर्णो विकासः स्यात् सैव समादरणीया समुपादेया च नेतरेति। न केवलं मानवीयस्य पञ्चभूतसंहतिरूपस्य स्थूलशरीरस्यैव, प्रत्युत तेन साकं सूक्ष्म-कारणयोरपि शरीरयोरात्मनश्च समुन्नयनं यया सम्पद्यते, सैव वास्तविकी शिक्षा।

विद्यायाः संक्षेपतो भेदद्वयमवगन्तव्यम् ※ अपरा, परा च। इहामुत्र वा सर्वविधानामपि सुखसमृद्धीनामुपलब्धिमूलिका समस्ताऽपि विद्याऽपरा, स्वरूपोपलब्धिप्रदा परा चेति। उभाभ्यामेव विद्याभ्यां पराऽपराभ्यां समेधितशरीरा शिक्षासरणि र्लोकहिताधायिका। केवलं कलाकौशल-शिल्पसम्पत्ति-पदार्थविद्यादीनामशेषपरिज्ञानमेव न शिक्षाया उद्देश्यम्; किन्त्व साद्धर्धमाधिभौतिक्या समुन्नत्या आधिदैविकी, अध्यात्मिकी च समुन्नतिः; शरीरस्य, मनसः, बुद्धेः, आत्मनश्च वा क्रमोन्नति र्यया सम्भवति, सैव शिक्षा सर्वाङ्गसम्पूर्णा सदादर्शरूपा च।

सर्वेऽपि जागतिकाः पुरुषार्थाः कामार्थधर्ममोक्षनाम्ना चतुर्धा विभक्ताः। तदनुसारेणैव समस्तोऽपि मानवसमाजः ब्राह्मण-क्षत्रिय-वैश्य-शूद्र-भेदेन चतुर्विधः। ‡ ब्राह्मण-क्षत्रिय-वैश्या द्विजातय उच्यन्ते। चतुर्थो वर्णः शूद्रः। पञ्चमो वर्णः कोऽपि नास्ति संसारे। अतस्तत्तद्वर्णबालकेभ्य आगर्भनिवासादेव तत्तत्पुरुषार्थशिक्षणं पुरा समनुष्ठीयतेस्म। मानवसमाजस्य सर्वतः समुन्नतिकृते चातुर्वर्ण्येन चतुःपुरुषार्थसाधनं हि प्राचीन शिक्षायाः सदुद्देश्यम्।

शिक्षां द्वारीकृत्य यस्या जातेः सामाजिकी व्यवस्था सर्वतः साधीयसी, सैव सभ्येति गीयते। शिक्षारीतिमहिम्नैव विद्या, ऐश्वर्यं, बुद्धिः, संहतं विनयनसंवलितं लोकबलं च सर्वमिदं मानवजातौ समेधते। विद्यायाः प्रभावेण,ऐश्वर्यस्य साहाय्येन, सुबुद्धिजनितविचारशक्ते रुपयोगेन समवेतेन विनीतेन मनुष्यबलेन च सभ्या मानवजाति र्यदिच्छति तदेव विधातुं शक्नोति। शिक्षामाहात्म्येनैव

※ द्वे विद्ये वेदितव्ये परा चैवापरा च। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणम्। निरुक्तं छन्दो ज्योतिषमिति। अथ परा यया तदक्षरमधिगम्यते।"

—मुण्डकोपनिषत्।

‡ ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजातयः।
चतुर्थ एकजातिस्तु शूद्रो नास्ति तु पञ्चमः॥—मनुस्मृतिः

धर्मनीतिः, राजनीतिः, अर्थनीतिः, समाजनीतिश्च पूर्णतामधिगच्छन्ति। धर्मनीतिं द्वारीकृत्य मानवजाति नियमत आध्यात्मिकीमुन्नतिमनुष्ठातुं प्रभवति। अस्योदाहरणं प्राचीनभारते समुपलभ्यते। यया राजनीत्या प्रजाया राज्ञश्च स्वतन्त्रता मर्यादा च सुरक्षिता स्यात्, उभयोः सहानुभूत्यो सहायतया च राज्यशासनं विधीयेत, सैव राजनीतिरुत्तमा। अस्यादर्शो रामराज्ये लभ्यते। व्यापारनीतिः देशस्य जातेश्च वर्द्धयति ऐश्वर्यम्। प्राचीने भारते सर्वविधा समर्घतैवास्य बलवदुदाहरणम्। यद्यपि पाश्चात्यः प्रदेश इदानीमर्थनीतावतीव प्रवीणः, परं हि प्राचीनं भारतमपि नास्ति न्यूनम्। अधःपततोऽपि भारतस्य व्यापारिकं महत्त्वं विलोक्यैव भारते यूरोपीयाः पदं निदधिरे। सर्वप्रथमं भास्कोडीगामा नामको जलमार्गमाविष्कृत्य यूरोपं भारताभिमुखं चकार। प्राचीना भारतस्य समाजनीतिस्तु समस्तेऽपि भूमण्डले न तुलां बिभर्त्ति। धर्ममूलिकाया वर्णाश्रमशृङ्खलापरिगृहीताया भारतीयसमाजनीतेः प्रशंसनं तु सम्प्रति यूरोपीया आमेरिकाश्च सुधियो मुक्तकण्ठं कुर्वते। सर्वमिदं भारतीयप्राचीनशिक्षापद्धतेः सदुदर्कविजृम्भितमेव।

आत्मज्ञानप्रकाशिनी ज्ञानजननी वा ब्रह्मशक्तिरेव विद्या। अज्ञानप्रसविनी बन्धनकारिणी या स्वस्वरूपमाच्छाद्य भ्रामयन्ती विपरीतं ज्ञानमुत्पादयति सैवाऽविद्या*। इमं हि विद्याऽविद्ययो र्दार्शनिकं सिद्धान्तं सम्मुखीकृत्य प्राचीने काले महर्षयः शिक्षापद्धतिं परिचालितवन्तः। ब्रह्मचर्य-गार्हस्थ्य-वानप्रस्थ-संन्यास-नामधेयेषु चतुर्षु आश्रमेषु, ब्राह्मण-क्षत्रिय-वैश्य-शूद्र-संज्ञकेषु चतुर्षु वर्णेषु, प्रवृत्ति-निवृत्ति-धर्मयोराचारनिर्णयादिषु च सर्वत्रैव सर्वजीवहितकाम्यया जनानामधिमानसं प्रकृत्यैव समुद्भूतस्याविद्याप्रवाहस्य प्रणाशपूर्वकमुत्तरोत्तरं ज्ञानप्रकाशकविद्याशक्तिप्रादुर्भावनमेव प्राचीने भारते शिक्षालक्ष्यं स्थिरीकृतम्। तेनैव ब्रह्मचर्यं चरद्भि र्गुरुगृहमधिवसद्भि र्ब्रह्मचारिभिराचार्यसेवातदाज्ञापरिपालनपूर्वकं विद्या अधीयतेस्म। सर्वशास्त्रपारदृश्वानो धर्मकामा अलुब्धा आचार्या अपि पुत्रनिर्विशेषान् स्वशिष्यान् यथाधिकारं स्वस्वकर्त्तव्यपालनरूपविद्याध्ययनमार्गे परिचालयन्तस्तान् समाजसेवनदक्षान् विहितवन्तः। गृहिणोऽपि निजोद्दामप्रवृत्तिवेगं संनिरुध्य प्रवृत्तिधर्मेऽपि निवृत्तिधर्मसञ्चयपुरस्सरं, वृद्धेष्वादरं, समानेषु प्रेम, लघुषु स्नेहं कारं कारं स्वकीयं गृहस्थधर्मं

---

* विद्याऽविद्येति तस्या द्वे रूपे जानीहि पार्थिव!
मुच्यते विद्यया जन्तुर्बध्यतेऽविद्यया पुनः॥ —महाभारतम्।

परिपालितवन्तः । वानप्रस्थाः संन्यासिनश्च स्वीयमलौकिकं तपस्त्यागादिकं धर्मं विदधाना निष्कामभावेन समाजसेवनमकुर्वन् । ब्राह्मणानां तपः स्वाध्यायः, धनाद्यैश्वर्यपरित्यागश्च, क्षत्रियाणां पुत्रवत् प्रजापालनं धर्मयुद्धे प्राणविसर्जनं च, वैश्यानां कृषिः, गोरक्षणं, वाणिज्यं, स्वधर्मवृद्ध्यै देशसमृद्ध्यै वा धनोपार्जनं च, शूद्राणामलौकिकः समाजसेवाधर्मः, कलाकौशलम्, नगरपरिष्कृतिप्रबन्धादयः सर्वेऽपि वर्णाश्रमसदाचाराः शिक्षणसुप्रबन्धपरिणामरूपा विद्यन्ते स्म । शरीर-मनो-बुद्धीनां क्रमशो मल-विक्षेपावरणानि प्रणाश्य विद्यासाहाय्येन स्वस्वरूपोपलब्धेरनुष्ठानम् , अविद्या प्रभाव-प्रणाशपूर्वकं विद्याशक्तिप्रवर्द्धनमेव भारतीयायाः प्राचीनशिक्षाया आसीत् लक्ष्यम् ।

अधुनातनी पाश्चात्यप्रवर्तिता शिक्षापद्धतिः सर्वथाऽध्यात्मिकलक्ष्यबहिर्मुखी परिदृश्यते । तदीयायां शिक्षणसरण्यामुपर्य्युक्तविद्याऽविद्याविचारलेशोऽपि न निभाल्यते । यथा च वास्तविकमानवत्वप्राप्तिः, अभ्युदयनिःश्रेयसाधिगमश्चेत्यादिकं प्राच्यायां प्राचीनशिक्षापद्धतौ सुरक्षितं न तथा पाश्चात्यशिक्षापरिपाट्यामिति निश्चप्रचम् । यूरोपदेशीया शिक्षापद्धतिरैहलौकिकसुखावाप्तिमूलिकैव । पाश्चात्यानामाश्चर्यकराः पदार्थविद्याऽविष्काराः, शिल्पोन्नतिः, युद्धरीतिः, तदर्थं च शस्त्रास्त्राणामाविर्भावः, धार्मिक्यः, सामाजिक्यः, राजनैतिक्यश्च नीतयः, संघटनम्, वायु-धूम्र-स्थल-जलयानादयो निखिला एवाविष्कारा ऐहलौकिकसुखावाप्तिमूलका एव परिदृश्यन्ते । यद्यपि शिक्षायां कामार्थावपि ध्रुवं प्रयोजनीयतामावहतः, परं हि लक्ष्यभूतौ धर्ममोक्षावेव । केवलमैहलौकिकं सुखसाधनं न भारतीयशिक्षाभिप्रेतम् । तद्धि नास्तिक्यमाविर्भावयति । ईश्वरीयविज्ञानविहीनायाः शिक्षणसरणेर्दुष्परिणामः सम्प्रति पाश्चात्यैरनुभूयते सन्तप्यते च ।

यूरोपीयगतमहायुद्धात् परं शिक्षाप्रगतिपरम्परेयं पाश्चात्या नितरां नैरङ्कुश्यमापद्यत । नारीणां निर्लज्जतापरिचायकं परिच्छदं, शिथिलप्रायं समाजबन्धनं, धार्मिकसामाजिकराजनैतिकसमुच्छृङ्खलत्वादिकं सीमानमतिक्रम्य प्रवर्त्तमानं निभाल्य चेखिद्यन्ते सचेतसां चेतांसि । अमेरिका—यूरोपादिषु परमात्मनोऽस्तित्वे तत्रत्यनिरङ्कुश-नर-नारीणां मताधिक्यं परमप्रमाणकोटौ परिगण्यते । तत्रत्यैः प्राणप्रियोऽपि स्वीयो धर्मो दैनन्दिनं निःशङ्कं परिह्रीयते । यस्य नास्ति कोऽपि धर्मः, स नास्तिकोऽपि सभ्यशिरोमणित्वेन प्रख्याप्यते । समितिविशेषेषु तत्रत्याः स्त्रियः पुरुषाश्च नग्नाः सम्मिलन्ति । सर्वमिदमालोक्य नेदं तिरोहितमन्तर्दृष्टिसम्पन्नानां विपश्चितां यत् सभ्यतां तिरस्कुर्वत् पाश्चात्यं

जगदिदानीमसभ्यताभिमुखमग्रेसरतीति। यदि चायं प्रवाहो न निरुध्येत, तर्हि ऐतिह्यप्रसिद्धाः प्राचीनाः पाश्चात्या बहुविधा जातय इव, सांप्रतिकीयं पाश्चात्यजातिरसभ्यतां प्राप्य नूनं पतिष्यतीति।

पाश्चात्यो वात्यावर्त्त एष व्यापकत्वात् एशियाखण्डं, भारतवर्षमप्यवास्कन्दति। तत्प्रभावत एवात्रापि धार्मिकाः सामाजिकाश्च विप्लवाः परितः प्रवर्द्धमानाः परिदृश्यन्ते। वर्णाश्रमबन्धसुरक्षिता, संयमशालिनीयमार्यजातिः सदैव स्वभावत एव निरङ्कुशता-प्रतिरोधिनी। महनीयाः प्राचीना महर्षयः कर्मोपासनाज्ञानराज्येषु सामाजिकेष्वधिकारनिर्णयेषु च पार्थक्यमधिकाराणां निर्दिष्टवन्तः। वर्ण-आश्रम-पुरुष-नारी-प्रवृत्ति-निवृत्त्यादीनामधिकारा विभिन्ना एव स्वाभाविकाः प्रकृतिसिद्धाश्च। या च मानवजातिरधिकारभेदं प्राकृतिकमुल्लङ्घ्य स्वभावधर्मं तिरस्करोति, नूनं सा तेनैव स्वकृतदुष्कृतेन निपतन्ती कालकवलिता भवतीति जागतिक इतिहास ऊर्ध्वबाहुर्विरौति।

एकदा कश्चन जापानदेशीयो विद्वान् यूरोपे वक्तृताप्रदानावसरे यूरोपीयान् सम्बोध्य प्रोवाच—*"द्विसहस्रवर्षेभ्यः पूर्वं यदा वयं जापानीयाः संसारेण सह शान्तिमूलकं व्यवहारमकुर्म, सूक्ष्मकलाविद्यायां प्रवीणा आस्म, तदानीमस्माकं गणनाऽसभ्यजातिष्वभूत्, यदा प्रभृति जात्यन्तरेणास्माभिः संग्रामः प्रारब्धो लक्षशो नरहत्या कृता, तदाप्रभृति यूरोपवासिभिर्भवद्भि र्वयं सभ्येषु परिगणिता" इति।

प्रोफेसर हक्सले महोदयः पाश्चात्यां पद्धतिमालोचयन् व्याजहार+—"सर्वोच्चकोटेराधुनिकसभ्यताया अभ्यन्तरे न मया चिरजीवनलक्ष्यम्, उचितायाः समुन्नतेरादर्शो वा निभाल्यते; यदि विद्यमानसभ्यताया ज्ञानलाभस्य वा प्रकृतौ बला-

---

* For two thousand years we kept peace with the rest of the world and were known to it by the marvels of our delicate ethereal art and the finely wrought productions of our ingenious handicrafts and we were accounted barbarians. But from the day on which we made war on other nations and killed many thousands of our adversaries, you at once admit our claim to rank among civilized nations.

+Even the best of modern civilization appears to me to exhibit a condition of mankind which neither embodies any worthy ideal nor even possesses the merit of stability. I do not hesitate to express the opinion that if there is no hope of a large improvement of the condition of the greater part of the human family; if it is true that the increase of knowledge, the winning of a greater dominion over nature which is its conse-

रकारः, अर्थकामवृद्धिद्वारा स्वकीयाभाव-लालसा-विलासिता-प्रवर्द्धनमेव लक्ष्यं, येन साधारणजनता शारीरिक्या नैतिक्याश्चावनतेः पराकाष्ठामासादयति, तर्हि मया निःसंकोचमुदीर्यते यत् तादृश एको धूमकेतुरुदेतु येन नूनमेवाधुनिक-सभ्यतायाः समूलनाशः स्यात्" इति ।

डाक्टर ए० आर० वालेसमहोदयो जगाद—* "गुड़क-बारूद-वृष्टिः, जीवहननम्, देशान्तरेषु जात्यन्तरेषु च निष्ठुरं निरङ्कुशमाधिपत्यम्, नैतिकावनतेः पराकाष्ठा, कष्टप्रदानपूर्वकमन्यासां जातीनां दासत्वशृङ्खलया बन्धनमित्यादि किल पाश्चात्यसभ्यताया उद्देश्यम्" इति ।

मेरी करेली महोदयोऽब्रवीत्—× "सभ्यतेत्यतिमहान् शब्दः । स्वीयमभिमानमहङ्कारं वा चरितार्थयितुम्, अन्येषां सन्निधाने दम्भं दर्शयितुं च शब्दोऽसावतीव मनोहरो मधुरश्च । वयं सभ्या इत्यभिमन्यामहे—यथाऽस्माकं खृस्तमतावलम्बिताया अहङ्कारः । परमेतत् सर्वं केवलं दम्भमात्रमेव । वस्तुतो वयमसभ्या एव । आस्माकीनं जीवनं पूर्णरूपेण असभ्यतामयमेव । जातीयः पक्षपातः, जात्यन्तरेण द्वेषद्रोहाचरणम्, धनलोभः, ईर्ष्या, पाशविकी विजाति-दलन-वृत्तिरित्यादयो भावा अस्माकमसभ्यत्वे बलवत् प्रमाणम् ।" इति ।

---

quence and the wealth which follows upon that dominion, are to make no difference in the extent and the intensity of want with its concomitant physical and moral degradation amongst the masses of the people, I should hail the advent of some kindly comet which would sweep the whole affair away as a desirable consummation.

"(Government: Anarchy or Regimentation" Collected Essays, Vol. I.)

*The result of the European mission in Africa so far has been the sale of vast quantities of rum and gun-powder, much bloodshed owing to the objection of the natives to the seizure of their lands and cattle; great demoralisation of black and white and the condemnation of the conquered tribes to a modified form of slavery.

(The Wonderful Century, p. 372.)

×Civilization is a great word. It reads well—it is used everywhere—it bears itself proudly in the language. It is a big mouthful of arrogance and self-sufficiency. The very sound of it flatters our vanity and testifies to the good opinion we have of ourselves. We boast of civilization as if we are really civilized, just as we are mere savages still; savages in "the lust of the eye and pride of life," savages in our national prejudices and animosities, our jealousies, our greed and malice and savages in our relentless efforts to over-reach or pull down each other in social and business relations.

(Nash's Magazine).

पूर्वं बहुवर्षतो माननीयो लार्ड मेकाले महोदयो—यो हि भारतस्य प्रधान-शासकः सम्राट्प्रतिनिधिरासीत्—उक्तवान् आसीत्—* "आङ्गलशिक्षाद्वारा तादृशो मानवसमाजः प्रकटितः स्यात् यो रुधिरेण वर्णेन च हिन्दुः, परन्तु आचारेण विचारेण अहिन्दुरेवेति"

विजयिनी जाति र्यदा कामप्यपरां जातिमात्मसात्सम्पादयति, तदा निज-शासनशिक्षाद्युपायै र्विजितजाते र्जातीयविशेषतां प्रणाशयितुं चेष्टते । नैतेन विना जितजातिः पूर्णरूपेण तदधीनतामङ्गीकरोति । इमामेव कूटनीतिमनुसृत्य विजयिनी जातिर्विजितजातेः सर्वप्रथमं शिक्षासूत्रमेव स्वहस्तगतं विदधाति क्रमतश्च परा-जिताया जातेरखिलं विशेषत्वं विनाशयति । भाषया साकं भावस्य महिष्ठः सम्बन्धः । जातीयस्य भावस्य समूलमुन्मूलनार्थं तदीयाया भाषाया प्रणाशनम्, मृतभाषात्व-ख्यापनं वा नितान्तमावश्यकं भवति । अत एव विजेत्री जातिः शिक्षाद्वारा पराजितजाते र्भाषां मृतां विधाय स्वीयभाषाप्रभावं विस्तारयति । यदा च रोमनजातिः सिलिसियादेशं निजाधीनमकार्षीत्, तदा तं पूर्णरूपेण पराधीनं कर्तुं सिलिसियनभाषां विनाश्य नवनवान् अनेकान् स्वभाषाविद्या-लयान् उद्घाट्य स्वीयां लैटिनीं गिरं प्रचारितवतीति नाप्रत्यक्षमितिवृत्तविदां विपश्चिताम् ।

जातेः प्राचीन इतिहासो जातीय-मौलिक-भाव-परिपोषकः । विजयिनी जातिः पराजितजाते रितिहासं विगुणय्य स्वकपोलकल्पितं शिक्षयित्वा च शिक्षा-र्थिनां नवयुवकानामभिमानसं स्वदेशीय-प्राचीन-महापुरुषान् प्रति अश्रद्धामुत्पा-दयति । स्थूलशरीरं हि सूक्ष्मस्यैव देहस्य विस्तारमात्रम् । स्थूलशरीरभाव-वेषादयः सूक्ष्मे कारणे च शरीरे भावान्तरमुत्पादयन्त्येव । वेषाचारादीनां स्थूल-शरीरेणैव सम्बन्धः । वेषाचारादौ समुत्पन्नेन भावान्तरेण, अर्थात् स्वीयं वेषाचारमपहाय विजातीयवेषाचारग्रहणेन, विजातीयो भावो ध्रुवमेव मनोदुर्ग-मधिकरोति । अतो हि शिक्षानुशासनेन विजयिनी जाति र्विजिताया भाववेषा-चारादीन्, जातिगतान् संस्कारान्, सामाजिकीं रीतिं, जीवनलक्ष्यं चेत्यादि प्रणाशयति । पथभ्रष्टा पराजिता च जाति र्विजयिन्यामात्मसमर्पणमेव स्वोन्नतिमभि-मन्यते ! कालान्तरे पराजितजातेः सत्तानाशो भवतीति बहुत्र विदितमेव तद्विदां सुधियाम् । तस्मात् जातीयजीवनध्वंसिकायामस्यां घोरदुर्गतौ स्वीयविशेषता–

* English education would train up a class of persons, Indian in blood and colour, put English in tastes in opinions, in morals and intellect.

संरक्षणं सर्वेषां कर्त्तव्यम् । अध्यापको मैक्समूलर महोदय एकत्र व्याजहार* — "या जातिः स्वकीयमतीतजीवनगौरवं विस्मरति, सा निजजातीयचरित्रावलम्बनं परित्यजति । यदा च जर्मनजातिरवनतिकूपे राजनैतिके निमज्जतिस्म तदा सा नावलोकयोपायान्तरं, स्वीयेऽतीत इतिहासे ध्यानमदात्, तेनैव च भविष्यन्त्या जातीयसमुन्नतेराशा तदन्तःकरणे प्रतिष्ठिताऽभवत्" ।

Put new wine in the old bottle the bottle will burst पुरातने पात्रे नवीनासवस्थापनेन पात्रमेव नश्यति । अतः प्राचीनसंस्कारश्रृङ्खलिताया जाते र्न नूतनसंस्कारसंयोगेन, प्रत्युत प्राचीनसंस्कारप्रवर्त्तनेनैव समुन्नतिः सम्भाव्यते । नहि नूतनशिक्षाप्रणाल्यां, विशेषतः पाश्चात्यायां दोषाविष्करणमेव मदीयमुद्देश्यम् । तत्र सन्ति संख्यातीता उपादेया गुणा विषयाश्च । किन्तु पराधीनेऽत्र भारते न ते विषया दासत्वश्रृङ्खलानिगडितहस्तपादानां भारतीयविद्यार्थिनां कर्णगोचरीक्रियन्तेऽधिकारवद्भिः । कारणमस्य सुस्पष्टमेव । भारतं यावत् पराधीनं, न तावत् शिक्षाविधानेऽनुकूलं परिवर्त्तनं भवितुमर्हतीति बलवान् मे विश्वासः । तथापि विविधभाषाशिक्षापारदृश्वानः श्रीमन्तः सर्वेऽपि भवन्तः प्रचालयिष्यमाणनूतनशिक्षापद्धतौ यथासाध्यं पाश्चात्यशिक्षागुणानवश्यं स्वीकुर्वन्तः शिक्षाप्रणालीं परिष्कुर्वन्तु । To grow is to evolve, every growth is from the inside आम्रबीजे भाविन आम्रवृक्षस्य निखिलमेवोपादानं निहितमास्ते । तदेव रसादिना परिपोष्य महदाम्रद्रुमरूपेण परिणमय्यते । तेन द्रुमान्तरोत्पत्तिर्न रसालस्य, परं हि द्रुमान्तरस्यैवोन्नतिर्लोकैरवधार्यते । अतः शिक्षा परिष्कृतिपरायणैः समवेतैः श्रीमद्भिस्तथा प्रयतनीयं येन प्राचीना जातीया भावा न विलुप्येरन् इति ।

—श्रीविन्ध्येश्वरीप्रसादशास्त्री ।

---

* A nation which forgets the glory of its past loses the mainstay of its national character. When Germany was in the depth of political degradation she turned back upon her ancient literature and drew hope for the future from the study of the past. Prof. Maxmuller.

"धर्माविरुद्धः कामोऽस्मि" इति गीतोक्तेः—धर्म-विरुद्धावर्थकामौ दुःखदौ नरकप्राप्कौ चेत्यतः धर्माऽविरुद्धावेव तौ समाश्रित्य धर्ममोक्षाव-भिलक्ष्य वा सुसञ्जाता प्रसन्नतैव तच्छुद्धवाच्या नान्या। धर्मसमेधकादि-सद्व्यापारजन्यैव नारीजातीया प्रसन्नता सृष्टेः कल्याणकरी पुण्यार्जयित्री चेति संक्षेपः ॥१२१॥

प्रसङ्गतः सृष्टि-प्रातिभाव्यम्ब्रूते ।

प्रातिभाव्याधिक्यम् ॥१२२॥

सृष्टिकार्य्ये दम्पत्योः समानेऽपि सम्बन्धे नार्य्या एव तत्र प्राधान्यमिति साधु साधितं प्राक्तनेन सन्दर्भसङ्घेन। अधिकारेण सहैव दायित्वापरपर्य्यायं प्रातिभाव्यमपि संसक्तमेवास्ते इत्यपि सर्वतन्त्रसिद्धान्तसिद्धम्। यथा कस्य-चन देशस्य यदि कश्चन शासकः स्यात्तर्हि तस्य देशस्योन्नत्यवनत्यादीनां सर्वेऽपि भारास्तस्यैव शिरसि संस्थिता भवेयुरिति। एवमेव नारीजातेः सृष्टौ प्राधान्यसत्वे तद्दायित्वमपि तस्यास्तथैव संसक्तम्।

उदाहरणतो यथा सृष्टिव्यापारे पुरुषस्य क्षणमात्रं प्रयोजनम् नार्य्यास्तु दश मासान् व्याप्य प्रयोजनमिति पूर्वमेवोक्तम्।

पुरुषः स्वव्यभिचारेण तु केवलं एकाकी एव पतति। नारी तु स्वैरिणी चेत् स्वात्मानं स्वकुलं स्वकुटुम्बं निजजातिमपि सर्वथा सर्वतः पातयेत्। नित्यपितृणां सम्बन्धोऽपि तत्कुलात् तस्या जातेर्विच्छिन्नः स्यात्।

इत्येवं सर्गकार्य्ये पुरुषापेक्षया नारीणामधिकारस्याधिक्यात् तासां तेन सह प्रातिभाव्यमपि समधिकमेव सिध्यति ॥ १२२ ॥

नार्य्या धर्मस्य मौलिकं विज्ञानं साधयति—

तपो रक्ष्यमतः ॥ १२३ ॥

नारीणां तपो-धर्म-रक्षयैव कायवाङ्मानसशुद्ध्युपहित-दायित्वप्रतिपा-लनम्भवितुमर्हतीति नारीधर्मस्य तपोमूलकत्वं प्राकृतिकनियमानुकूलमेव मह-र्षिभिः प्रतिष्ठापितम्। केवलस्य तपोधर्मस्यैव प्रतिपालनेन नारी पूर्वोक्तं सर्वमप्य-धिकारं प्राप्तुमर्हति। नारीजातेः सर्वेऽपि सदाचारास्तपोधर्मभित्तिमाश्रित्यैव वेदशास्त्रादिषु निर्णीताः ॥ १२३ ॥

प्रसङ्गतः सतीभेदानाह—

सती चतुर्विधा ॥ १२४ ॥

सृष्टेः स्वाभाविकभेदचतुष्टयं यथोद्भिज्जस्वेदजाण्डजजरायुजासु योनिषु, ब्राह्मणक्षत्रियवैश्यशूद्रेषु वर्णेषु, ब्रह्मचर्य्यगार्हस्थ्यवानप्रस्थसन्न्यासात्मकेषु

चाश्रमेषु विद्यते, तथैवेहाऽपि सतीषु नारीष्वपि महर्षिभि र्भेदाश्चत्वार उपदिष्टाः सर्वोत्तमोत्तममध्यमसाधारणभेदात् स्त्रियश्चतुर्विधा भवन्ति इति ॥ १२४ ॥

तत्र सर्वोत्तमसतीलक्षणमभिधत्ते—

**पतिमात्र-पुरुषं मन्यमाना ॥ १२५ ॥**

सा हि प्रथमा सर्वमान्या सर्वोत्तमाख्या सतीह गण्यते, यस्या बुद्धौ स्वपत्यतिरिक्तं सर्वमेव जगत् स्त्रीमयं भाति । तस्या हि योगिदुर्लभेयं स्वपतितत्परा धारणा प्रबलतरा सदैवोदिता तिष्ठति, यतः पतितन्मयतापन्न मन्तःकरणमन्यथा परिणामानर्हमेव भवतीत्यतो देवदुर्लभेयमवस्था सर्वैरपि वन्दनीया ॥ १२५ ॥

उत्तमसतीलक्षणमूचे—

**पुरुषान्तरं पित्रादिवज्जानती ॥ १२६ ॥**

द्वितीयेयमुत्तमोच्यते या स्वावस्थयाऽभ्यर्हितान् पुंसः पितृवत् स्वसमवयस्कान् भ्रातृवत् स्वतो न्यूनावस्थान् पुत्रवत् जानती अनुबुद्धमेव स्वमनोविकारं परिहरन्ती स्वपतिव्रतं संरक्षति । सत्या इयमप्यवस्था प्रशस्यैव । यतो हि धारणायामस्यां प्रकृतिजयः सर्वदैव तिष्ठति ।

प्रथमायां हि सर्वोत्तमावस्थायां सती स्त्री स्वात्मानं वशीकृत्य पत्या सहाद्वैतभावं समश्नुत इति सर्वात्मना तादात्म्यं तत्र । अत्रापि द्वितीयायामुत्तमश्रेण्यां नारी स्वप्रकृतेर्जयं कुर्वती स्वमनोविकारमनुद्गतमेव निगृह्णती पित्रादिस्वरूपेण जगन्निभालयन्ती सतीमहिमानमेव प्रख्यापयते ।

स्त्रियं निरीक्षमाणः पुरुषः स्वात्मानं पुरुषमभिमन्यमानः स्त्रीष्वासज्यते । नारी च पुरुषं निभालयन्ती स्वं नारीमभिमत्य पुमांसमाकर्षतीति प्राकृतिकः सांसारिको भावो द्वितीयश्रेणिस्थयाऽनया सत्या सर्वथा पराजीयत इत्यतः प्रकृतिजयरूपा निःश्रेयसप्रदेयमवस्थाऽपि संस्तुत्यैव ॥ १२६ ॥

मध्यमां तां निर्वक्ति—

**मनसा ॥ १२७ ॥**

तृतीयेयं मध्यमा सती निगद्यते या दूषितं मनोविकारमुद्बुद्धमपि स्वविवेकतो निगृह्णती सतीधर्मं प्रयत्नेन गोपायति । अस्यां हि श्रेण्यां नार्य्याः पुरुषान्तरभानमवश्यं तिष्ठति । आकर्षणविकर्षणात्मकः प्राकृतिको भावोऽपि वर्तत एव । किन्तु तस्या आत्मसंयम एतावत् दृढत्वमुपगतो भवति, यत्सा स्वापवित्रान् कामसंकल्पान् प्रतिक्षणमुद्वर्तमानान् प्रबलेन मनोनिग्रहबलेन विलापयन्ती तेभ्यो मूलितुमवसरमेव न ददातीत्यत इयमप्यवस्थाऽभ्युदयप्रदेति न शङ्कनीयम् ॥१२७॥

अन्तिमां साधारणीं लक्षयति—

वपुषा स्थूलेन ॥ १२८ ॥

चतुर्थीयमन्तिमा सती निरुच्यते या दूषितं स्वमनोविकारं निरोद्धुमसमर्था स्थूलेन शरीरेण तं निगृह्य कायं वाचं वा पवित्रे रक्षति इति । अस्यामप्यवस्थायां सती स्त्री स्वतपोधर्मप्रभावेण सहज-लज्जादिना स्वाधीतशास्त्रबलेन च सतीत्वरक्षार्थं सर्वथा यतमाना सतीत्वसदाचारान् शास्त्रानुमोदितान् प्रतिपालयत्येव ॥ १२८ ॥

प्रसङ्गतो नार्य्याः स्वधर्मत्यागस्य दुरुदर्कं प्रख्यापयति ।

पुरुषभावापन्नाया नार्य्यास्त्रिविधः पातोऽनधिकारिब्रह्मविद्यादानवत् ॥१२९

यथा अनधिकारिभ्योऽपात्रेभ्यो दत्तं ब्रह्मज्ञानं तस्य ग्रहीतुरेव कदाचारित्वादाधिभौतिकीमपवित्रतां नास्तिकत्वादाधिदैविकीमपवित्रतां यथार्थज्ञानधारणाक्षमत्वाच्चाध्यात्मिकीमवनतिं चेति त्रिविधामप्यवनतिं कृत्वा तमनधिकारिणं गर्तेनिपातयति । तथैव यदि नारी स्वीयं पारतन्त्र्यं सतीत्वं तपःशीलत्वं पावित्र्यं सन्ततिसम्वर्द्धनादिकं शास्त्रविहितं स्वाभाविकं धर्मं विहाय निरङ्कुशत्वं स्वाधीनत्वमपावनत्वं तपोराहित्यमितरच्च दोषजातं गृह्णती निर्लज्जा पुरुषभावापन्ना स्यात्तदा तस्या आधिभौतिकाधिदैविकाध्यात्मिक्यस्तिस्रोऽप्यवनतयोऽवश्यं भाविन्य इति नारीणां पुरुषायितं विगर्हिततरम् ।

यतो हि पुरुषभावापन्नतया सदाचारविलोपतः शारीरिकापवित्रताया अवश्यम्भावात् नार्य्या आधिभौतिक्यवनतिः स्यात् । पतितन्मयतामूलकस्य सतीत्वसंस्कारस्य च विलोपेन मनोदौर्बल्यस्यावश्यम्भावात् आधिदैविकी हानिर्भवेत् । सृष्टिक्रमं परित्यज्य प्राकृतिक-नियमविरुद्धं नारीधारायामेव पुरुषधारासाङ्कर्य्यकरणेन तत्र पुरुषभावमधिगताया नार्य्या आध्यात्मिक्यवनतिरपि सुनिश्चितैव । इत्येवं स्फुटं पुरुषायिताया नार्य्या अवनतित्रितयं परिदृश्यते ।

यदि कश्चन जिज्ञासुरिह शङ्केत यत् स्वधर्म-विनाश-काले राजविप्लवतश्च धर्मविध्वंसावस्थोपस्थितौ अन्यस्यामपीदृश्यां धर्मबाधोपस्थितायां तथातिशयगुरुतर-दुःखावस्थायां वा सुकुमारमतीनान्नारीणां वीरोचितानां पौरुषाचाराणां पुरुषवृत्तीनां चाश्रयणं किन्न समुचितमित्यस्योत्तरमाह—

असाधारणधर्माधिकारिणी आहोस्विदापद्धर्माधिकारवती वा सती स्वधर्मगुप्त्यै स्वदेशजातिधर्म-समभ्युदयपरिचायकानाचारानाचरन्ती ईदृशीनां सात्त्विकाहङ्कारमूलानां वृत्तीनां परिचयप्रदानेनापि न नारीधर्मव्यत्ययमः-

चरति । नापि तदीयमीदृगनुष्ठानं धर्म्मविरुद्धम् । प्रत्युत धर्म्मबाधाव्यतिकरे नारीणां पुरुषायितम् श्रुत्यादिभिरपि समर्थितम्—तथा हि

"आरोहेममश्मानमश्मेव त्वं स्थिरा भव ।
अभितिष्ठ पृतन्यतोऽववाधस्व पृतनायतः" इति ।

परन्तु अधिकारोऽयं तस्या असाधारण—धर्म्ममूलक आपद्धर्म्ममूलको वा गण्येत, न विशेष-धर्मान्तर्गतः स्यान्नारीजाते स्तादृशधर्म्मस्यास्वाभाविकत्वात् इति संक्षेपः ॥ १२९ ॥

दुरुदर्कभयं दर्शयित्वा निश्चितोन्नति-सम्पादकमादर्शत्रयं दर्शयति—

**तदादर्शो दुर्गा गौरी महामाया च ॥ १३० ॥**

तासां नारीणामादर्शः आदर्शस्वरूपा इमास्तिस्रो दुर्गा, गौरी, महामाया चेति क्रमश उत्तरोत्तरमभ्यर्हिता देव्यस्सन्ति इति सूत्रार्थः ।

सृष्टेः प्रसवित्र्याः पालयित्र्याश्च नारीजातेस्त्रयो देवीभावा आदर्शस्थानीयाः स्मृतिषूपपादिताः । श्रीमहामायोवाच—

नारीधर्मार्थमप्येवं मत्स्वरूपत्रयं सुराः ।
ग्राह्यमादर्शरूपेण विश्वकल्याणसम्पदे ॥
अहमेव महामाया प्रोच्ये भेदविवर्जिता ।
गौरी भेदप्रधानाऽहं दुर्गा शक्तिप्रधानतः ॥
एतद्रूपत्रयं नूनं सती नारी बिभर्त्यहो ।
पुण्ये भारतवर्षेऽस्मिन्नार्य्यजातौ प्रजायते ॥ इति ॥

संक्षेपतोऽस्य स्वारस्यमिदं यत्—
प्रेम्णः प्रथमावस्था 'स ममेति' तत्र यदि स मम तर्हि तदीया विभूतयोऽपि ममैवेति दुर्गा देवीत्यस्य भावस्यादर्शः । प्रेम्णो द्वितीयावस्था "अहं तदीयेति" तत्र पतिनिन्दाश्रवणमात्रेणैव स्वशरीरं जहती गौरी तदादर्शः । "अहं स चाभिन्नः" इति प्रेम्णोऽन्तिमः सीमा । तत्राद्वैतभावापन्ना महामाया सर्वोत्तमश्चरम आदर्शः ॥ १३० ॥

वर्णधर्म-नारीधर्मयोः स्वरूपं विस्तरशो निरूप्य सम्प्रति प्रसङ्गसङ्गतमाश्रमधर्मं निर्वक्ति—

**प्रवृत्तिनिवृत्तिभेदाद्द्विविधं वर्त्म ॥ १३१ ॥**

द्विविधेह सृतिर्जीवानाम् एका प्रवृत्तिरूपाऽन्या निवृत्तिरूपेति । बहिर्मुखः प्रवृत्तिमार्गोऽन्तर्मुखीनो निवृत्तिमार्गः ।

अथवा प्रवृत्तिमार्गो जीवान् वैषयिकसुखं प्रयच्छन्नग्रे नयति निवृत्तिपथश्च तदपनयन्नग्रेसरान्करोति।

एवमपि कथ्यते यत्प्रवृत्तिपथः परोक्षरूपेण निवृत्तिसृतिश्च साक्षाद्रूपेणोभावपि जीवानात्मज्ञानसम्मुखीनान् कुर्वाते इति ॥ १३१ ॥

तत्र प्रथममाश्रमं निर्वक्ति—

**प्रवृत्त्यर्हत्वं ब्रह्मचर्य्ये ॥ १३२ ॥**

ब्रह्मचर्य्ये प्रथममाश्रमे प्रवृत्तेः प्रवृत्तिमार्गस्य अर्हत्वं योग्यता सम्पाद्यत इति शेषः।

वर्णनारीधर्माभ्यां प्रवृत्तिमार्गस्य साक्षात्सम्बन्धः, निवृत्तिमार्गस्य परोक्षसम्बन्धः। एवमाश्रमधर्मो हि निवृत्तिप्रधानः या हि आद्ययोराश्रमयोः प्रवृत्तिप्राधान्यसृतिः, सापि निवृत्तिशिक्षार्थमेव। चतुर्ष्वाश्रमेषु ब्रह्मचर्य्यस्य प्राथम्यात्तत्र शास्त्रोक्त-प्रवृत्तिपथगमनस्यैवाभ्यासः शिक्ष्यते।

यतो हि श्रुतिस्मृतिषु ब्रह्मचर्य्यस्य ये ये नियमा नीरूपितास्तैः सर्वैरपि शास्त्रशः प्रवृत्तिपथशिक्षणात्मकमेव विज्ञानं समर्थ्यते। निष्कर्षतो विना ब्रह्मचर्य्याश्रमीयाम्पूर्णां शिक्षां न कोऽपि पुमान् गृहस्थाश्रमस्यादर्शं जीवनं यापयितुं समर्थः स्यादिति ॥ १३२ ॥

तस्य प्रधानं कर्तव्यमाह—

**तत्र प्राधान्यं विद्या-ब्रह्मचर्य्य-गुरुसेवानाम् ॥ १३३ ॥**

यद्यपि वेदशास्त्रादिषु ब्रह्मचर्य्याश्रमस्य धर्मा विस्तरशो निर्दिष्टाः तथापि पूर्वोक्तविज्ञानपुष्टयेऽत्र महर्षिणा तस्य मौलिकान् सिद्धान्तान् प्रधानकर्तव्याणि च निर्दिशता विद्या,ब्रह्मचर्य्यं, गुरुसेवेति सर्वप्रधानं कर्तव्यं तस्मिन्निति परामृश्यते।

तत्र विद्याभ्यासेन सदसद्विचारशक्तिनैपुण्यं, लोकयात्राकर्तव्यनिर्णयज्ञानं, धर्मार्थकाममोक्षाणां यथार्थस्वरूपावगतिः सम्पाद्यते। ब्रह्मचर्य्येण च शारीरिकमानसिकात्मिकबलोपलब्धिः, इन्द्रियसंयमाभ्यासपाटवञ्चासाद्यते। गुरुसेवया च भगवत्प्रसादोपलब्ध्याऽऽत्मोन्नतिमार्गः परिष्क्रियते। इत्येवं ब्रह्मचर्य्याश्रमेऽभ्यस्तप्रवृत्तिमार्गक्रमो मानवो गार्हस्थ्याश्रमे प्रवेश-योग्यतामासादयति ॥१३३॥

तत्र द्वितीयमाश्रममभिधत्ते—

**तच्चारितार्थ्यं द्वितीये ॥ १३४ ॥**

ब्रह्मचर्य्याश्रमे प्रवृत्तिमार्गोपयोगिनीं शिक्षामधिगत्य गार्हस्थ्ये तच्चारितार्थ्यमाचरद्भिरात्मोन्नतिरासाद्यत इति स्मृतावप्युक्तम्—

प्रवृत्तिं शास्त्रविहितां ब्रह्मचर्य्ये तु शिक्षते ।
समाचरति गार्हस्थ्ये तां प्रवृत्तिं पुमान् भुवि ॥ १३४ ॥

प्रसङ्गतस्तन्माहात्म्यमाख्याति—

**ज्यैष्ठ्यं द्वितीयस्य सर्वाश्रयत्वात् ॥ १३५ ॥**

गृहस्थाश्रमोऽयं सर्वेषामप्याश्रमाणामाश्रयास्पदमिति सर्वसम्मतम् स्वल्पधियामपि हृदयगम्यम् । यथा क्षेत्रस्वरूपत्वात् वर्णधर्म-शुद्धेर्निदानभूतत्वात् नारीधर्मस्तदाधारस्थलम्, तथैव त्रयाणामप्याश्रमाणां जीवनाधायकत्वात् स्व-सत्ताऽभावे तेषान्त्रयाणामप्युच्छित्तिप्रसञ्जकत्वाद् गृहस्थाश्रमस्तेषां त्रयाणामप्या-श्रयस्थलम् ।

तथा हि ब्रह्मचर्य्याश्रमस्य सर्वमप्याचारादिप्रतिपालननिदानं गृहस्थाश्रम एव । वानप्रस्थसन्यासाश्रमयोर्योगक्षेमनिर्वाहकः स एव । अत एवाऽयमाश्रमः सर्वाभ्यर्हितो ज्येष्ठश्चाभिधीयते ।

स्मृतिष्वप्युदीरितम्—

ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ।
एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः ॥
सर्वेषामपि चैतेषां वेदस्मृतिविधानतः ।
गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान् बिभर्ति हि ॥
यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम् ।
तथैवाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम् ॥
यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तवः ।
तथा गृहस्थमाश्रित्य वर्तन्ते सर्व आश्रमाः ॥
यस्मात् त्रयोऽप्याश्रमिणो ज्ञानेनान्नेन चान्वहम् ।
गृहस्थेनैव धार्य्यन्ते तस्माज्ज्येष्ठाश्रमो गृही ॥
स सन्धार्य्यः प्रयत्नेन स्वर्गमक्षयमिच्छता ।
सुखञ्चेहेच्छता नूनं यो ऽधार्यो दुर्बलेन्द्रियैः ॥ इति ॥ १३५ ॥

अन्यच्च—

**तत् सुलभं करवीरवत् ॥ १३६ ॥**

यथा करवीरवृक्षः पार्वत्यप्रदेशेऽनूपप्रदेशे मरुस्थले सर्वत्रैव शर्करावहु-लेऽपि प्रदेशे समुपलभ्यते तथैव गार्हस्थ्याश्रमोऽपि सर्वजातिषु आर्य्यानार्य्यादिषु सर्वत्रैव समानतया तिष्ठतीति द्वितीयमिदं माहात्म्यमस्य यथास्य ब्रह्मचर्य्या-

दिवदार्य्य-जातावेव वर्णाश्रमधर्मप्रधानायां स्थितिः, किन्तु सर्वत्रैव सर्वविधास्वपि जातिष्वेतस्य समाना स्थितिरिति । १३६ ॥

सम्प्रति तृतीयमाख्याति—

निवृत्तेरर्हत्वं तृतीये ॥ १३७ ॥

पूर्वयोराश्रमयोः प्रवृत्तिमुखीनामन्तःकरणवृत्तिमभ्यासभोगाभ्यां क्षपयित्वा निवृत्तिद्वारोद्घाटनञ्च विधायास्मिन् शान्तिद्वारात्मके तृतीये वानप्रस्थाश्रमे निवृत्त्यधिकारप्राप्तये पुमान् प्रविशति । तत्र कथं निवृत्तिमार्गनिर्वाहः स्यादित्यादिशिक्षणमभ्यस्यते ।

इह पत्नी सहचरी भूत्वा यदि स्थातुमीहते तर्ह्यपि दम्पत्योः कृतेऽत्र निवृत्तिप्रधानैव शिक्षोपदिश्यते । अस्मिन्नाश्रमे निवृत्तिमार्गोपयोगिनीं सम्पूर्णां शिक्षामभिगत्याग्रिमाश्रमे साधको निवृत्तिमार्गस्योत्तमोऽधिकारी भूत्वा कृतकृत्यतामाश्रित्य नन्दति । यथा गार्हस्थ्यस्याधारभूमिर्ब्रह्मचर्य्याश्रमस्तथैव सन्यासाश्रमस्य तुरीयस्यायमाश्रमो मूलभित्तिः ।

स्मृतिष्वप्येवमेवोक्तम्—

एवं गृहाश्रमे स्थित्वा विधिवत्स्नातको द्विजः ।
वने वसेत्तु नियतो यथावद्विजितेन्द्रियः ।
गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः ।
अपत्यस्यैव चापत्यं तदाऽरण्यं समाश्रयेत् ॥
सन्त्यज्य ग्राम्यमाहारं सर्वञ्चैव परिच्छदम् ।
पुत्रेषु भार्य्यां निक्षिप्य वनं गच्छेत्सहैव वा ॥

अन्यच्च—

उत्पाद्य पुत्राननृणांश्च कृत्वा वृत्तीश्च तेभ्यो विनिवेद्य काश्चित् ।
स्थाने कुमारीः प्रतिपाद्य सर्वा अरण्यसंस्थोऽथ मुनिर्बुभूषेत् ॥ १३७ ॥

साम्प्रतं तुरीयाश्रमं वर्णयति—

तत्सिद्धिस्तुरीये ॥ १३८ ॥

निःश्रेयसमूलस्य निवृत्तिमार्गस्य पूर्णोऽधिकारोऽस्मिंस्तुरीये सन्यासाश्रमे श्रद्धालुना साधकेनासाद्यते ।

स्मृतिष्वप्यभिहितम्—

वानप्रस्थे निवृत्तेस्तु शिक्षा पुंसु प्रजायते ।
निवृत्तिः पूर्णतां याति सन्यासाश्रममेत्य वै ॥

यथा ब्रह्मचर्य्याश्रमे सर्वास्वपि नारीषु मातृभावकल्पनया, विद्याप्राप्ति-

पूर्णविधानादिना स्वजीवनप्रधानलक्ष्यकल्पनया, सर्वफलप्रदाया गुरुसेवायाः साधुसम्पादनेन च गृहस्थाश्रमसञ्चालनयोग्यतामासादयति तथैव वानप्रस्थाश्रमतो निवृत्तिमार्गोपयोगिनीं सम्पूर्णां शक्तिमासाद्येह तुरीयाश्रमे साधकः पूर्णतया निवृत्तिपथगो भवति। ततश्च यथाक्रमं कुटीचर-बहूदक-हंस-परमहंसाधिकारं यथाकालमधिगत्य जीवन्मुक्तपदमाश्रित्य सायुज्यमुक्तिमुपगच्छतीत्ययमेव सर्वसंस्काराणां चरमः संस्कारः, सर्वसाधनानामन्तिमं साधनं सर्वाधिकाराणामन्त्योऽधिकारः ॥ १३८ ॥

पुनराश्रमधर्मं स्पष्टयितुं प्रथमाश्रमस्य मौलिकं सिद्धान्तं ब्रूते—

**नियमप्रधानं ब्रह्मचर्य्यम् ॥ १३९ ॥**

विस्तरशो नियमलक्षणमभिहितं प्राक् तमेव नियममभिलक्ष्य महर्षिभिर्ब्रह्मचर्य्याश्रमस्य सदाचारा निर्दिष्टाः। जगज्जननीनां नारीणां सकाशात् तासु मातृभावनया गुरुनिमित्तं भिक्षोपार्जनम्, तेन च कामाहङ्कारयोः प्रबलप्रतापयोरप्यर्य्योर्जयकरणं गुरुशुश्रूषया च स्वान्तःशुद्धिसम्पादनमिति नियमस्य जागरुकं साधनम्। नियमधर्माभ्यासतः प्रथमाश्रम एव द्विजेभ्योऽध्यात्मपथारोहणक्षमशक्तिप्रदानमिति वर्णाश्रमधर्मस्य मुख्यं लक्ष्यम्।

इत्येवं ब्रह्मचर्य्याश्रमाचारा यथा यथा सूक्ष्मदृष्ट्या पर्य्यालोचिता भवन्ति तथा तथा नियमधर्मभित्तिं समाश्रिता एव त उपलभ्यन्ते ॥ १३९ ॥

द्वितीयस्य मूलभित्तिं विविनक्ति

**संयम-प्रधानं गार्हस्थ्यम् ॥१४०॥**

नियमधर्मसंस्कारेण संस्कृता एव द्विजा अस्मिन्नाश्रमे प्रविशन्ति। तेन हि नियमधर्माभ्यासेन गृहस्थाश्रमे कामिनीकाञ्चनादिप्रलोभस्तान् एकपद एव विलोभितुन्नैव शक्नोति।

किन्तु तत्राश्रमे प्रविश्य तस्य च प्रवृत्तिमूलकैश्वर्य्यपूर्णतया तासु प्रवृत्तिष्वेवासक्तः तत्संस्कारानेवाधिकाधिकाञ्च समुपार्जयेदिति संयममूलकानां सदाचाराणामप्यभ्यासोऽस्मिन्नाश्रमे आवश्यक इत्यत एवेह संयमस्य प्राधान्यम्। संयमाभ्यासेन हि गृहाश्रमी प्रवृत्तिसंग्रामे विजयी भूत्वाऽध्यात्मिकोन्नतिद्वारमुद्घाटयितुं समर्थो भवति।

बहिरिन्द्रियान्तरिन्द्रिययोरुद्दामगतिनिरोध एवात्र संयमो न तु योगशास्त्रसंज्ञितः। अतोऽत्र संयमे नियमस्याऽप्यन्तर्भावः। गृहस्थाश्रमीयविस्तृताचाराणां पर्य्यालोचनेन संयमभित्तिस्थितिरेव तेषां सिध्यति॥ १४० ॥

# सूर्योदयः ।

( विविधविषयविभूषितं संस्कृतमासिकपत्रम् )

षष्ठे वर्षे } पौषस्य पूर्णिमा सं० १९८७ । { सप्तम संख्या

## सम्पादकीया अभिप्रायाः ।

—०:*:०—

### अन्यैरुद्भाव्यमाना आशङ्काः ।

बहुभिरेव संस्कृतविश्वविद्यालयहितचिन्तकै र्महानुभावैः संस्कृतविश्वविद्यालयपरीक्षासम्बन्धे जिज्ञासया आशङ्काः समुद्भाविताः । तत्तत्प्रान्तीयविदुषां सम्मतिग्रहणार्थमस्माभिस्ताः क्रमशोऽधो निर्दिश्यन्ते । आशास्यते यत् पण्डितप्रवराः स्वीयां सम्मतिं नूनमत्र प्रहेष्यन्तीति ।

( १ ) बहूनां सम्मति र्यत् संस्थाप्यमानस्य नूतनसंस्कृतविश्वविद्यालयस्य निर्द्धारितपरीक्षासु नवीना पद्धतिः प्रचारणीया । सा चेयम्—उपाधिपरीक्षाणां प्रश्नपत्राणि अनुमरूपाणि कृत्वा परीक्षार्थिसन्निधाने प्रेषणीयानि समुपस्थितेभ्यस्तेभ्यो वा देयानि । परीक्षास्थानमगत्वैव गृहत एव परीक्षार्थिनस्तदुत्तराणि लिखित्वा केन्द्राध्यक्षनिकटे प्रहिणुयुः । अन्यत्र प्रचलितपरीक्षापद्धतिवदत्रापि निर्दिष्टस्थानमुपवेश्य विद्यार्थिनां परीक्षाग्रहणं नोचितम् ।

( २ ) उपाधिव्यतिरिक्तासु, स्वीकृतच्छात्रवृत्तिषु स्कूलकालेजविद्यार्थिपरीक्षासु च सर्वत्र प्रचलितपरीक्षाग्रहणरीतिरेव रक्षणीया ।

( ३ ) यासु प्रश्नपत्राणां गोपननियमो नास्ति तादृशोपाधिपरीक्षासु न ग्रन्थाः, प्रत्युत विषयसमूहा एव निर्देश्याः । तदुपयुक्तग्रन्थनामनिवेदनमेव भवितुमर्हति । एवं कृते आनुकूल्यं प्रातिकूल्यं वा कीदृशम् ?

( ४ ) दक्षिणावर्त्तवासिभिरेवमाशङ्क्यते यत् प्रचाराराहित्यादत्र हिन्दीग्रन्थानां पठनं पाठनं वा भवितुमर्हति । संस्कृतविद्यार्थिनां देशकालज्ञानार्थमेव हिन्दीग्रन्था निर्मिता निर्मीयन्ते च । अतो यत्र प्रान्ते हिन्दी न प्रचरति तत्रेदमसौविध्यं कथं निवारितं स्यात् ?

(५) केचन कथयन्ति यत् देशकालज्ञानाधायका ग्रन्थाः सरलसंस्कृते विरचनीया इति। अत्र किमुचितम्?

(६) देशकालज्ञानोत्पादकानां पुस्तकानां सरलसंस्कृतभाषया रचनेन कार्यमभिप्रेतं तु सेत्स्यति, किन्तु हिन्दीप्रचारस्योद्देश्यं न सफलं भवेत्। किमत्र कर्त्तव्यम्?

(७) हिन्दी नाम वर्त्तमानभारतस्य राष्ट्रभाषा। संस्कृतज्ञेषु विद्वत्सु तस्याः प्रचार आवश्यको न वा?

(८) राष्ट्रभाषापरीक्षा एकप्रकारैव निर्दिष्टा। मध्यमा उत्तमेति तस्याः प्रकारद्वयकल्पने का हानिः? तन्मध्यमा हिन्दीमजानद्भिः संस्कृतज्ञैः प्रदेया भवेत्।

(९) स्त्रीणां कृते हिन्दीभाषायां धर्मविनोदिनी परीक्षा निर्दिष्टा। हिन्दी-प्रचाराभावात् अत्रविषये दक्षिणावर्त्तो विरोधमाचरति। अत एतत्परीक्षा-प्रश्नोत्तरं स्वस्वमातृभाषया लेख्यम्—इदमुत्तरं साधु न वा? अथवा सा परीक्षा द्विप्रकारा भवेत्—एका हिन्दीभाषामयी अपरा च संस्कृतभाषात्मिकेति। किमुचितम्?

(१०) किञ्चैवं कृते हिन्दीभाषिणीनां तु सौविध्यम्, परं हि तद्व्यतिरिक्तानां संस्कृताध्ययनमनिवारणीयं स्यात्। एतेन प्रचारे महती बाधा भवेत्। कोऽत्र समीचीनः पन्थाः?

(११) केचन कथयन्ति यत् निखिलभारतीयसंस्कृतविश्वविद्यालयस्य निर्द्धारिताः परीक्षा न पर्य्याप्ततामावहन्ति। यद्येवं तर्हि काः काः परीक्षा अत्र वर्द्धयितव्याः?

(१२) धार्मिकशिक्षा, आध्यात्मिकज्ञानविस्तारः, सम्पूर्णदार्शनिकशिक्षायाः वैदिकपौराणिकतान्त्रिकज्ञानस्य च प्रसारः, कर्मकाण्डसंरक्षणम्, उपासनाकाण्डीयाधिकाराणां समन्वयः, परस्परं प्रीतिसंस्थापनं च, समस्तसाम्प्रदायिकज्ञानकाण्डप्रचारः, संस्कृतभाषायाः प्रसारबाहुल्यम्, सुरसरस्वतीसेवकानामुपयोगितावर्द्धनम्, जीविकाप्रबन्धश्च, पुरुषाणां नारीणां च समुचितशिक्षाविस्तारः, राष्ट्रभाषाज्ञानवृद्धिः, आयुर्वेदाधिकारिणां संख्यावर्द्धनम्, ज्यौतिषादिविषयाणां प्रचारे सहायताप्रदानम्, देशकालज्ञानप्रवर्त्तनम्, तुलनात्मकगवेषणम्, सुयोग्यानां कर्मकाण्डि-पुरोहित-धर्माचार्य-धर्मोपदेशक-शिक्षकाणां संख्याप्रवर्द्धनम्, इत्यादि विषयान् लक्ष्यीकृत्य संस्कृतविश्वविद्यालयस्य संस्थापनमभूत्। निखिलमेव भारतवर्षमस्य कार्यक्षेत्रम्। अत एतस्य परीक्षाणां, उपाधीनां,

पाठ्यपुस्तकानां च सम्बन्धे स्वीयाभिप्रायप्रकाशपूर्वकं निर्दिष्टप्रश्नरूपाशङ्कानां समाधानं श्रीमद्भिः स्वविचारानुसारमवश्यमेव कृपया शीघ्रं प्रेषणीयम्। सर्वेषां तत्रभवतां पण्डितप्रकाण्डानां प्रहितमतानि संगृह्य पुनः प्रकाशयिष्यन्ते।

---

## ❀ स्वागताभिनन्दनम् ❀

( निखिल प्राच्यदेशीय शिक्षामहासम्मेलने पठितम् )

श्रीमन्तो महनीयमञ्जुलयशोराशिप्रकाशीकृता-
ऽनन्ताऽऽशावलयाः समस्तजनताजेगीयमानोदयाः॥
दाक्षिण्यादिगुणालया विजयिनो विद्यावधूवल्लभा
मान्या धन्यतमाः प्रसन्नमनसां वः स्वागतं स्वागतम्॥ १॥

मन्ये मान्यमहोदयाः सहृदया निर्दूषणान्वो गुणान्
साक्षाद्वागधिदेवताऽपि सकलान् वक्तुं न तावत्क्षमा॥
अन्येषामिह का कथा खलु नृणामज्ञानलीढात्मनाम्
तद्भाग्यातिशयेन नः सुखकरं जातं भवद्दर्शनम्॥ २॥

एतद्भारतवर्षवासिजनताभाग्योदयादेव वोऽ-
भूदत्राऽऽगमनं सुदुर्लभतरं विद्वद्वराणां शुभम्॥
किं चैतस्य पुरा जगद्गुरुतया लब्धप्रसिद्धेर्महा-
देशस्य प्रविलोकनेन भवतां प्रीतिः समुत्पद्यताम्॥ ३॥

व्यासाद्याः खलु पण्डिताः सुकवयो वाल्मीकिमुख्यास्तथा
भीमाद्या बलिनोऽर्जुनप्रभृतयो वीरा धनुर्धारिणः॥
बुद्धाद्या विगतस्पृहाश्च बहवश्चान्ये जनाः सद्गुणाः
आसन्नत्र महाशयाः स्वयशसा संभूषितं यैर्जगत्॥ ४॥

विद्यावैभवभावनाभृतहृदां लोकोत्तराणां सतां
देशोऽयं भवतां शुभागमनतो जातः कृतार्थो यथा।
भूमीमण्डलमण्डनायिततया ख्यातस्य लोके तथा
दृश्यस्याऽस्य समागमेन महतो यूयं कृतार्था न किम्॥ ५॥

एतस्मिन्खलु भारते विजयते वाराणसीयं पुरी
पुण्या संस्कृतवाग्विलासरसिकैर्विद्वद्वरैस्सेविता॥
मूर्त्तो धर्म इवेह राजतिलको नारायणः स प्रभुः
सिंहो राजति तद्विलोकनरसास्वादेन संतुष्यताम्॥ ६॥

रचयिता—देवीप्रसादशुक्लः ( कविचक्रवर्त्ती, महामहोपाध्यायः )

# सूर्यस्नानम्।

## 'सूर्यो वै देवानां मधु'

'देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः।' अत्र हि स्पष्टो निगदः 'सूर्यः सर्वेषां पोता' इति। स किं कृत्वा पुनाति? रश्मिभिरिति। रश्मयो हि विशोधका अन्तर्बहिश्च सर्वेषाम्। सूर्यः सविता मित्र इत्यादीनि नामान्युदयतो भगवतः सहस्ररश्मेरिति सर्वविश्रुतम्। स हि भगवान् द्वादशात्मा पूर्वक्षितिजमुदयगिरिमुपेतः सन्. स्वकरैरमृतस्राविभिः संस्पृश्य सर्वसत्त्वान् पुनरुज्जीवयँश्च प्रेरयति स्वस्वकर्मसु। एवञ्च सर्वानपि वर्धयति नीरोगयति चिरञ्जीवयति च। अतः सवेशोत्थितैः सर्वैरेव भगवान् सहस्ररश्मिर्निषेव्यो बहिर्गृहं गत्वा।

तस्मादादित्यरश्मिसुधया सिस्नासुभिरासूर्योदयं न शयितव्यम्। ब्राह्मे मुहूर्ते प्रबुध्य, तन्द्रां विहाय, शय्यां सन्त्यज्य, मुखशुद्धिपूर्वकं परमात्मनं संस्मृत्य, बहिर्ग्रामं प्रस्थेयम्। यत्र च विस्तृताकाशः प्रफुल्ला वनस्पतयो नदीसरोवरादिकं पवित्रं तीर्थभूतं स्नानीयस्थानं स्यात्, तादृशे स्थाने समुदयत्येव दिनकरे सहस्रशो सुधाधारा विजृम्भन्ते, अमितं च जीवनसत्त्वं विकीर्यते। ततो वञ्चिता नैके वृद्धा अवृद्धाश्च निर्माल्यं जीवनं जीवन्ति। हन्त, तदेव दुर्भाग्यमार्यनीतिरीतीः प्रजहतामिदानीन्तनानामार्यसंज्ञितानां भारतीयानाम्!!

अयि, विमृशन्तु महाशयाः! यद् भवत्पूर्वजास्तु तां सञ्जीवनीं शक्तिं भृशमाहरन्तः समुज्ज्वलंसत्त्ववज्जीवनं समजीवन्। भवन्तो निवाससमीपमेव शौचगृहं निर्मापयन्तस्तत्रैव शौचक्रियां निर्वर्त्तयन्ति, ते तु पूर्वोद्दिष्टं स्थानं गत्वा तत्रैव शौचक्रियां निरवीवृतन्। भवन्तः क्वथितेन निःसत्त्वेन जलेन गृहान्तः स्नानं विदधति, ते तु सूर्यकरविमिश्र-पवित्रजले तीर्थे स्नानं समाचरन्। ते तत्रैव जलार्घ्यप्रदानपूर्वकं सूर्यमुपस्थाय पूर्वां सन्ध्यामुपासत, भवन्तः कदा कुत्र वा सूर्यमुपतिष्ठन्तीति स्वयं परामृशन्तु सुधियः? अपि सुलभस्तत्र सूर्यांशुप्रवेशोऽपि? यदि नेति, भवन्तु नाम, यथार्थं तत् सूर्योपस्थानम्?

'सूर्य आत्मा जगतस्तस्थुषश्चे'ति सनातनं सत्यं सर्वेषां विदितचरम्। सर्वस्थावरजङ्गमानामात्मभूतः केन्द्ररूपश्च भगवान् सविता वरीवर्ति। खनिजोद्भिज्जजन्त्वादिषु यन्निगूढं सत्त्वं (Energe) वेविद्यते तद्धि सूर्यप्रभवम्। तद्वत्सर्वेषु धान्येषु तृणेषु च यज्जीवनसत्त्वं तत्सूर्यादवतीर्णम्। एवं चन्द्रस्य

सुधाकरत्वं, कुजस्य रक्तिमत्वं बुधस्य सौम्यत्वं, गुरोर्बृहद्धामत्वं बृहस्पतित्वं च, शुक्रस्य शुक्ररेतस्त्वं, शनैश्चरस्य यमत्वं, वसुन्धराया वसुधात्वं, भगवतो सवितुरेव प्राप्तम्। स हि सुवर्णरेता भगवान् समुदयन् आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यञ्च। हिरण्मयेन सविता रथेन देवो याति भुवनानि पश्यन्।'

पुरा, ऋषयो मुनयश्च प्रभातिकं द्विहोरात्मकं कालं तु तादृशेऽनावृते तीर्थप्रदेश एव यापयन्तोऽनावृताङ्गाः केवलं कौपीनमेव परिधाय भगवन्तं सवितारमुपातिष्ठन्। एतं मन्त्रं चाजपन्-'अद्या देवा उदिता सूर्यस्य निरꣳहसः पिपृता निरवद्यात्,—इमे ब्रह्मणो द्वादशात्मनो रश्मयः सर्वाणि पापान्यस्मत्तो निष्कृष्य परिशोधयन्त्वस्मान्। अहो, वेदानां परमोत्कृष्टं विज्ञानम्।

इमे रश्मयः Ultra-violet—तिर्यञ्चो बालकिरणा एव भानोः परिवेषे मुख्याः। ते च महदुपकारका विविधागदपरिशोधनविधा इति स्वीकृतमस्त्यधुना चकितैः पाश्चात्यवैज्ञानिकैः 'चक्षुर्वै सत्य' मिति मन्तृभिरपि। ते हि रोगाणां विशोधनप्रक्रियाया यत्र-तत्र सूर्यरश्मीनेवोपयुञ्जते। सन्धिरोग-दन्त रोग-क्षय-सन्निपात-त्वग्रोगादिषु च सूर्यरश्मीनामुपयोगस्तत्र सर्वमान्यः सुसंवृत्तः। तत्र तु भानुः क्वचित् कदाचिदेव प्रकाशते, तस्मात् तैस्तादृशा वैद्युता रश्मयः समुत्पाद्य समुपयुज्यन्ते। अहो सूर्यप्रभावः।

ते हि रश्मयो वनस्पतिषु खनिजेषु च सविशेषं सञ्चीयन्ते, ततश्च ते पदार्था नैरोग्याय कल्पन्ते। एते रश्मयश्छिद्रमार्गेण देहान्तर्गता विशोध्य मलं, समुदीर्य च जाठरं भुक्तमन्नं जारयन्ति, भोज्यगतसत्त्व-( केल्सीयम ) चोषणे साहाय्यं कुर्वन्ति, नूतनास्थीनि शिराभिः संग्रथ्नन्ति, नवचेतनं समुत्साहं च वर्धयन्ति रुधिराभिसारेण, एवञ्च यत्र देहभागे सविशेष-सत्त्वसञ्चयस्य प्रयोजनं भवति तत्र तत्सञ्चिन्वन्ति। एतै रश्मिभिरेवास्थिसारो देहे समुपचीयते।

पश्यन्तु भवन्तः, गोपाल-कृषी-बलादीनां ग्राम-क्षेत्र-खर्वट-वाटिकाशैल-सीमोपान्तमध्यूषुषामव्यवहितरश्मिलाभमधिजग्मुषां जनानां देहा अस्खलित-प्रवहद्रुधिररक्तितया वसन्तादौ प्रस्फुरत्किंशुका इव विराजन्तेतराम्। इतरेषां च जनसम्मर्दबहुलेषु गगनचुम्बितप्रासादशिखरेषु नगरेषु निवसतां, कदाचनैव बहिर् निर्गच्छतां देहकान्तिः क्षुधा बलमोजश्च म्लायन्त इति नाविदितं केषाञ्चन। एवमेव सततं तिरस्करिणीछन्नदेहा ललना अपि हीनसत्वा विवर्णाश्च भवन्ति। तादृश्यो ललनाः प्रसवकाले नैकाभिर्दन्तहर्षादिभिः पीडाभिः पेपीड्यन्ते। यतः, प्रसवेन तदल्पमपि सत्त्वं पुनर्हीयते, स्तनन्धयाश्च स्तन्यपानेन तच्चूषन्ति। यद्यपि ताः प्रसूताः पौष्टिकमहारं लभन्ते, तथापि

सूर्यरश्मीनां देहस्पर्शाभावान् नूतनं सत्त्वं शीघ्रतया नोत्पद्यते, यच्चोत्पद्यते तदप्यपर्याप्तम् । एवं गर्भे प्रसूताः स्तनन्धयाश्च भृशं पीड्यन्ते । तत्रैक एवो· पचारः सूर्यस्नानम् । सूर्यस्नानेन असाध्यास्त्वग्रोगा अपि साध्या भवन्ति, त्वक् च स्निग्धा मृदुला निर्मला च सम्पद्यते । सूर्यस्नानेन केशाश्च स्निग्धा कोमला दीर्घाश्च प्रभवन्ति । एवं स्थिते सर्वैरपि जनैः प्रभातेऽवश्यं द्विहोरामितं कालं रश्मयो निषेवणीयाः । तदानीमियं भावनाप्युरीकर्तव्या, 'उभाभ्यान्देव सवितः प्रसवेन च । मां पुनीहि विश्वतः ।'

'तस्यैव मात्रामुपजीवन्ति' । सूर्यरश्मीनां सेवनमेव मात्रासेवनम् । तयैव मात्रया सर्वे हृष्टपुष्टाङ्गा भवन्ति शतायुषं च जीवन्ति । अन्यच्च बहुविधं जीवनसत्त्वं सूर्यस्नानाल्लभ्यते । अदर्शनात्सूर्यस्य चातुर्मास्ये जठरा· ग्निमान्द्यं भवति रोगजन्तूनामुत्पत्तिश्च । तदानीमुपोषणैकाशनादीनि व्रतानि विधीयन्ते । तस्मान्नागरिकैर्हर्म्यस्य वातायनादीनि प्रभातेऽवश्यमपावृतानि कृत्वा सूर्यरश्मयो हर्म्यान्तः प्रवेष्टव्याः । येन वातावरणविशुद्धिर् विषजन्तूनां विनाशश्च भवेत् । नवचेतनप्रसरेण जाड्यमपि ध्वंसेत । गृहच्छदादपि रश्मयोऽन्तः प्रविष्टाः स्युस्तथा विधेयो यत्नः । एतद् दृष्ट्या तु लोहपत्राच्छा- दितच्छदान् नलिकाच्छादितश्छदः श्रेयान् । ततोऽपि तृणपर्णैश्छादितश्छदः श्रेष्ठः । सुधालेपितप्रस्तरपृष्ठवन्ति हर्म्याणि त्वत्र न किमप्युपकारकाणि । भारते तु सूर्यनारायणस्य शाश्वती कृपा वर्षति तामनादृत्य केचिद्धर्मदग्धा मुधा पेपीड्यन्ते । कस्माद्धेतो भारतीयाः पुरा पर्णोटजेषु वने वासमङ्गीकृतवन्त इति ज्ञातुं साम्प्रतं न किञ्चिद्दुष्करम् । शार्मण्य ( जर्मन ) देशीया विद्वांसोऽपीदानीं जाते सम्पूर्णे विज्ञाने पर्णशालावासमङ्गीकुर्वन्तीति विजयो भारतीयप्राचीन- संस्कृतेः ।

एवं वर्षासु मेघाच्छन्नेषु रश्मिषु नैके रोगजन्तवः समुत्पद्य बाधन्ते, अथ ते शरदि चण्डतापेन क्षीयन्ते । एवमेव जनसम्मर्दसङ्कुलेषु नगरेष्वनातपाद् रोगप्रवृत्तिरभ्यधिका, ग्रामेषु ततोऽपि स्वल्पतरा, वनोटजेषु तु नाल्पोऽपि रोग· प्रसरः । 'एतावानस्य महिमाऽतो ज्यायाँश्च पूरुषः ।'

भगवतः सवितू रश्म्यावरणं हि सुदर्शनचक्रमिवाहर्निशं बम्भ्रम्य त्रिलोकीं परित्रायतीति निःसन्दिग्धम् । तच्च मनोज्ञं रूपकमत्र किञ्चिन्निर्दिशामः । आकाशो हि वैकुण्ठो विष्णुः । ॐ खं ब्रह्मेति श्रुतिचोदनात् । स हि सर्व- गतः शुद्धः श्यामलश्च । विद्युद्वासा अतः पीताम्बरः । नक्षत्रपुष्पमाला तस्य वनमाला । स सदैव परमश्रिया संश्लिष्टः सञ्जुष्टश्च । यश्च वायुः स शङ्खायुध-

रूपः । वायुनाऽऽध्मात एव शङ्खो ध्मायते । तस्य आध्मातेन खे शं भवति । शङ्खाध्मातो हि दुःखवान् शमयतीत्याप्तवाक्यम् । अथ सुदर्शनचक्रम् तद्धि रश्म्यावरणम् भानोः । तच्च सहस्रारं हिरण्मयं, भ्रामंभ्राममनुक्षणं विश्वतो गाढध्वान्तं निशाचरांश्च प्रणुदति । यच्च सवितुर् मुकुटावरणं तद् भगवतो वैकुण्ठस्य मुकुटस्थानीयम् । यच्च मध्यवर्ति मण्डलं तद्धि हृदयम् । तन्मण्डलान्तः प्रविष्टो भगवान् नारायणो वैकुण्ठस्यात्मा ब्रह्माण्डकेन्द्ररूपश्च । यच्च जलतत्त्वं तत्तु पद्मायुधम् । तत्कमलमेव ब्रह्माण्डसंज्ञितम् । 'कमलं जलम्' इत्यमरः । यत्र जन्तवो जायन्ते लीयन्ते च तस्मात्तज्जलम् । येयं भूमिः सा गदा । अत्रोपरिस्थितं कल्पितं भूगोल-मानचित्रं पश्यतां गदाऽऽकारः प्रतीयते । कौमोदकीति तन्नामापि सार्थं प्रतिभाति । एतस्मिन् रूपके भगवान् सूर्य एव सुदर्शनरूपो मुकुटरूपः कौस्तुभरूपो हृदयरूप आत्मरूपश्च संज्ञायते वैकुण्ठविष्णुरूपस्याकाशस्य ।

पार्वतीयाः समुद्यतः सवितुः रश्मीन् प्रथममेव सविशेषं सेवन्ते । ततस्तेषां तनु-मनो-बुद्धिविकासोऽपि सविशेषं भवति । स प्रदेशोऽपि सुरम्यः स्वर्गीय इव राजतेतराम् । कमलादिकुसुमानां विकासः, वनस्पतीनां प्रफुल्लत्वं, सायन्तनीनं प्राभातिकं च स्फुर्तिजनकं वातावरणम्, वसन्ते शरदि च प्रकृते रामणीयकम्-एतस्य सर्वस्यादि कारणं सूर्यरश्मयो बाल ( Scurvy ) किरणा एव ।

सूर्यस्नानस्य कालः प्राभातिको द्विहोरात्मक एव । यदा रश्मयः कोमला अपि स्फुर्तिजनना जीवनसत्त्वप्रदाश्च भवन्ति । तदा विना कौपीनमन्यानि वासांसि परिहृत्य सूर्यरश्मयोऽव्यवहिता एव निखिले काये सम्मूर्छनीयाः ।'सूर्यादात्मानं नाच्छादयेत्' । ते रश्मयः झटिति परावर्तन ( Reflaction ) शीलाः सूक्ष्ममपि वासः प्रवेष्टुं नालम् । अतोऽनावृताङ्गः सन् सूर्यरश्मीन् निषेवेत । सूर्यस्नानाय प्रारम्भिकः कालः पादहोरामितः पर्याप्तः । स च क्रमशो वर्धनीयः । प्रभातादारभ्य द्विहोरामितं कालं यावत् सूर्यस्नानं समाचरेत् । अत ऊर्ध्वं तैक्ष्ण्यादातपस्य नेष्टम् ।

अतः शौचक्रिया बहिर्ग्रामं विधेया । ततो दन्तधावनं कर्तव्यम् । सूर्यरश्मयो निषेव्याः । पृष्ठभागे कर्कोटि-रज्जौ पतिता रश्मः सर्वथा हितङ्कराः । अथ च सूर्यनमस्कारा विधेया द्वादशभिर्नामभिः । 'आदित्यस्य नमस्कारान् ये कुर्वन्ति दिने दिने । जन्मान्तरसहस्रेषु दारिद्र्यं नोपजायते' । एतत्सत्यम् । ततश्च प्राणायामान् विधाय रश्मिमिश्रेण जलेन स्नायात् । अथ धौतानि

वासांसि परिधाय सूर्यसंमुखं सन्ध्योपासना कर्तव्या । ततश्च गृहमभिमन्तव्यम् । प्रतिदिनमेवं कृते सम्पूर्णमायुर्नैरोग्यं च प्राप्स्यते । सूर्योहि सर्वप्रसवकारणं जीवनं, सर्वात्मा, जगन्नेत्रं, ज्योतिःकरः । ज्योतिषां पतिः । ध्वान्तजाड्यविनाशकृत् , सर्वानन्दप्रदाता, सर्वसाक्षी ब्रह्माण्डनायकः वेदप्रकाशकः, धनाधिपः बृहस्पतिः मोक्षदाता, सर्वगुरुश्च । तं भगवन्तं सदैव सर्वे समुपतिष्ठन्ताम् ।

यन्मण्डलं व्याधिविनाशदक्षं यदृग्यजुःसामसु सम्प्रगीतम् ।
प्रकाशितं येन च भूर्भुवः स्वः पुनातु मां तत् सवितुर्वरेण्यम् ॥

केशवात्मजः—
पण्डित मूलशङ्करशास्त्री ( वडाली )

---

## टिप्पणे टिप्पणम् ।

( क्रमागतम् )

निबन्धा—श्रीदीनानाथशर्मा सारस्वतः शास्त्री ।

( मुलतानस्थ-सनातनधर्म संस्कृतकालेजाध्यापकः )

( २ ) कतीनामिति । 'कतीना' मित्यत्र टीकाकर्तृभिः प्रायः 'षट्चतुर्भ्यश्च' इत्येव नुट् समर्थितः । तथा हि—'रामाणा' मित्यत्र 'सुपि चे' तिसूत्रोयदीर्घस्य सन्निपातपरिभाषाविरोधान्न प्रवृत्तिः, 'नामी' त्यस्य त्वारम्भसामर्थ्यान्नोक्तपरिभाषाविरोधः । 'सुपि चे' त्यस्य तु न सामर्थ्यम्; तस्य 'रामाभ्या' मित्यादौ साऽवकाशत्वाद् । 'नामी' त्यस्य तु कुत्राऽप्यवकाशाऽभावादारम्भसामर्थ्यम्; तेनैव सन्निपातपरिभाषाबाधः । तत्र नागेशाऽऽदिभिश्शङ्केयमुपस्थापिता; यदाशयोऽयं यत्–'कतीना' मित्यत्र 'ह्रस्वनद्याप' इत्यतः परत्वात् 'षट्चतुर्भ्यश्चे' ति नुटि दीर्घेऽपि षट्त्वस्य सत्त्वात् सन्निपातविघाताऽभावेन सन्निपातपरिभाषाऽप्राप्त्याऽदन्तत्वाऽभावेन 'सुपि चे' त्यस्याऽप्राप्तत्वाद् 'नामी त्यस्य चारितार्थ्यं विद्यते; तेन नाऽत्र तस्या ऽऽरम्भसामर्थ्यम् । न च 'षट्चतुर्भ्यश्च' इत्यत्र 'चतुर्ग्रहणसामर्थ्या द्धलन्तषट्सञ्ज्ञकादेव नुड् न तु कतिशब्दादिति वाच्यम् ; अन्यथा रेफो यथा हलसञ्ज्ञकस्तथाऽम्सञ्ज्ञकोऽपि, इत्यमन्तषट्सञ्ज्ञकादेव नुड् न तु षकारान्तादित्यापत्त्या' षण्णा' मित्यत्राऽपि नुटोऽनापत्तिः स्यात् । इति शङ्कायां तैरेव ( नागेशादिभिर् ) उच्चारणम्, यद्–मन्नोकमुदाहरणं योगारम्भं जनयति योगारम्भमित्यस्य सामान्यं योगारम्भमित्यर्थः ।

इति भाष्योक्तनयेन 'कतेर्नामी'ति विशिष्टसूत्रेणैव सिद्धे 'नामीति सामान्यसूत्रारम्भवैयर्थ्यस्य स्पष्टत्वात् ।

इत्यादिटीकाकर्तॄणां समाधिग्रन्थं पिशुनयति, यद् 'विप्रतिषेधेऽस्त्यपि 'कतीना' मित्यादौ 'षट्चतुर्भ्यश्चे'ति विशिष्टं परो नुडेवेष्यते, ह्रस्वाऽपेक्षया षट्त्वस्य विशिष्टत्वात् । अन्यथा ह्रस्वाश्रय एवाऽत्र नुटि सन्निपातपरिभाषाविरोधतादवस्थ्यात् 'नामी' त्यस्य चारितार्थ्यशङ्काऽपि नोदियात्, एवञ्च 'नद्यकमुदाहरणं' 'कतेर्नामी' त्यादिसमाधेश्चाऽपि फल्गुत्वाऽऽपातात् । इत्थङ्कारञ्च हलन्तषट्सञ्ज्ञकस्य नुड्विधायकताशङ्कानिरासश्चाऽपि अस्थाने प्रलपितं स्यात् । एवञ्च विप्रतिषेधाऽभावादेव षट्सञ्ज्ञाप्रयुक्तनुण्निषेधे सिद्धे तत्त्वबोधिन्यादीनां मूलोक्ताऽऽरम्भसामर्थ्यसिद्धये कतीनामित्यत्र षट्सञ्ज्ञाप्रयुक्तनुटो बहिरङ्गताऽऽपादनक्लिष्टकल्पनाऽपि वैयर्थ्यकोटिमाटीकेत । अत एव तु तत्त्वबोधिनीकारेण 'कतीना' मित्यत्र षट्सञ्ज्ञाप्रयुक्तनुण्निष्पत्तये मूलोक्ताऽऽरम्भसामर्थ्यनिष्पादाय च अन्तिमसमाधाने 'इतरे तु आरम्भसामर्थ्यादित्यस्याऽयमर्थः—'न तिसृचतसृ' इति निषेधाऽऽरम्भसामर्थ्याद्-इत्यर्थान्तरमुद्टङ्कि, यद् यदि नामि सन्निपातपरिभाषा प्रवर्त्तेत, तर्हि 'तिसृणा' मित्यादौ सन्निपातपरिभाषाबलेनैव दीर्घाऽभावे सिद्धे 'न तिसृचतसृ'ति दीर्घनिषेधो वैयर्थ्यमवाप्स्यत् । इत्यादिः । तेन पूर्वोक्ताऽऽरम्भसामर्थ्यस्य 'कतीना' मित्यादौ ह्रान्यभावात्तत्र षट्सञ्ज्ञाप्रयुक्तो विशिष्टो नुड् निर्बाध एव ।

किञ्च—द्वयोश्शास्त्रयोः प्रसङ्गे विप्रतिषेधाऽभावे उपस्थितत्वात् पूर्वशास्त्रस्यैव प्रवृत्तिरित्ययमप्याग्रहो नोचितः । तत्राऽपि परशास्त्रस्य प्रवृत्तेरुक्तत्वात् । तदुक्तं नागेशेन—'विरोधाद्यभावे विप्रतिषेधशास्त्राद्यप्रवृत्तौ अपि परत्वादेरन्यत्र बलवत्त्वेन दृष्टतयाऽत्राऽपि तेन व्यवस्था । अत एव केचिद् वैयाकरणाः 'पूर्वपरनित्याऽन्तरङ्गाऽपवादानामुत्तरोत्तरम्बलीय' इति परिभाषास्वरूपम्पठन्ति । पूर्वस्मात् परस्य बलवत्त्वमित्यत्र तेषां तात्पर्यम् । * अथ च—

शास्त्रद्वयविहितयोः कार्ययोः सारूप्यमात्रेण विप्रतिषेधाभावं मन्यन्ते श्रीमन्तः? किं वा स्थान एकस्मिन् अवस्थाना ऽविरोधेन ? इति-सारूप्यमात्रेणेति चेद् 'गोमन्ति' इत्यत्र 'नपुंसकस्य' 'उगिदचा' मिति च सूत्रद्वयविहितनुमोर्विप्रतिषेधाश्रयेण 'नपुंसकस्ये' ति नुमभिधायि तत्रत्यं पातञ्जलं न सङ्गच्छते, सारूप्या ऽविशेषात् ।

* अत एव 'वारिणा' इत्यत्र 'इकोऽचि' ति नुमा 'आङोना' इति नाभावेन वा रूपे विशेषाऽभावेऽपि नुमपेक्षया परत्वेन नाभाव एव कृतः कौमुद्याम् ॥

यदि चैकत्र समावेशमविरुद्धं मन्यन्ते, तर्हि केन कल्पेन ह्रस्वेति शास्त्रीयं नुटं प्रवर्त्तयन्ति, 'षट्' इति सूत्रविहितञ्च निवर्त्तयन्ति। वस्तुतस्तु एकस्य आमो नुड्द्वयस्य स्थानित्वं विहन्यते-इति यौगपद्येनाऽसम्भवोऽस्त्येवाऽत्राऽपीति भवति विप्रतिषेधशास्त्रविषयस्थलमपि। द्राघिमभयादत्रैव विरम्यते।

( ३ ) अधीष्टमिति क्लीब-पाठःकदाचित् 'सिद्धान्तकौमुदी' प्राचीनपुस्तकेषु केषुचिद् भवेत्; परन्त्वस्माभिरुपालम्भि; तेनैव तूपाम्भि खल्वस्माभिः। अन्यथा काऽऽवश्यकताऽऽसीद्दोषबलात्कारे।

( ४ ) 'व्यतिस्ते' इत्यादिषु कर्मव्यतिहार-द्योतको "व्यति" रस्त्येव, तेन तत्र कर्मव्यतिहारः स्पष्टः। 'आकाङ्क्षत' इत्यत्र तु न तथा। तेन भाण्डारिमहाशयदृष्टान्तो विषम एव। 'द्योतकत्वात्तु व्यतेः प्रयोगो नाऽस्ति'—इति प्रौढिवादमात्रमेव।

( ५ ) 'लिङ्गविशिष्ट'—'मद्रराज्ञी'—इतिपाठोऽतिराजी' त्युत्तरम्भवेदिति मामकीनकथनस्याऽभिसंहितमेव न ज्ञातं श्रीभाण्डारिमहाभागैः। तेनैव तैर्द्राघिमा कृतोऽत्र। ममाऽयमाशयोऽविद्यत; यद्—'अतिराजी'ति यथा—'राजाऽह:—'इत्यत्र उदाहृतमासीद्—'मद्रराज्ञी' त्यस्याऽपि च पाठस्तेनैव सध्रीचीन युक्त आसीद्—उभयो राजञ्छब्दत्वाद्। पूर्व्वत्र तु राजञ्छब्दे टच् जात एव, तदर्थन्तु लिङ्गविशिष्टपरिभाषाऽनित्यतोपयोगो मम नेष्टः; द्वितीये राज्ञीशब्दे च टच्-सम्भवम्प्रदर्श्य लिङ्गविशिष्टपरिभाषाऽनित्यता दर्शनीयाऽऽसीद्। दीक्षितेन यत्र मद्रराज्ञीति पाठो लिखितस्तत्र मध्ये महाऽन्तरञ्जातम्।

( ६ ) 'आदि' ति योगवि—इति पाठस्य 'द्व्यष्टन' इत्यत्र एतदर्थम्प्रदर्शनाऽऽवश्यकताऽऽसीद्, यद्—'द्वादश' इत्यत्र तु 'द्व्यष्टन' इत्यनेनाऽऽकारः सम्भूतः; परम् 'एकादश' इत्यत्र कथमभूद्—इति तत्रैव 'आदि' ति योगविभागःप्रदर्शनीय आसीद्; न किल 'आन्महत' इति सूत्रे। तत्र 'आदि' ति योग विभागादात्वं—'प्रागेकादशभ्य' इति 'निर्देशाद्वा' इति पाठस्याऽप्रकृतत्वाऽऽपत्तेः। द्व्यष्टन' इति सूत्रे तु द्वादशसहचारित्वादेकादशशब्दस्य तत्र समाधिर्योग्य आसीद्। दीक्षितमहोदयस्तेष्वेव सूत्रेषु केवलं योगविभागोल्लेखमागृह्णन्नासीत; प्रत्युत अन्यत्राऽपि अन्यत्रत्यं योगविभागमदीदृशदेव प्रकरणवशाद्। यथा-'अष्टागवं शकटमित्यत्र दूरेत्यस्याऽपि 'अच्प्रत्यन्व'—इति सूत्रस्य अत्रैव योगविभागम्प्रदर्श्य अच् तेन दर्शितः। अत्र यथा तस्य न किमपि गतं तथैव द्वादशशब्देऽपि एकादशशब्दनिष्परयुल्लेखेन क्वाचित्कत्वात्तस्य शैलीविघातो नाऽजनिष्यत। किञ्च—'उपसर्गादृति' इत्यत्र यद् 'धातौ' इति योग-

विभाग^कृतः; स तत्सूत्रीयेण 'प्राच्छेती' ति लक्ष्येण सम्बद्ध आसीद्; एवमेव 'प्राचा' मिति। परम् 'आन्महत' इति योगविभागो न तत्सूत्रीय 'महादेवाद्युदाहरणेन 'प्राच्छेती' ति प्रकृतिभावस्येव कस्याऽपि व्यावर्त्तक आसीद्। द्वादशशब्देन च एकादशशब्दस्य सम्बन्धो वर्त्तते; तत्रैव अयम् 'आदिति योगविभागः' 'प्रागेकादशभ्य' इत्यादिसूत्रञ्च दर्शनीयमासीद्; यतो 'द्व्यष्टन' इति सूत्रेऽपि 'आदि' त्यस्याऽनुवृत्तिः समेत्येव।

(७) अग्लायिषाताम्। इत्यत्र भाण्डारिमहोदयैरन्तर्भावितण्यर्थता साधिता परं तद्व्यतिरिक्तस्थवीयः। दीक्षितोऽन्तर्भावितण्यर्थताप्रसङ्गे तन्निर्देशं लिखति तत्र तत्र। यथा हि स 'शब्दं जहाति भाषा' इत्यत्र जहातेरन्तर्भावितण्यर्थतामानङ्क्षे। एवम्—'उपाच्च' इति सूत्रे 'यज्ञदत्तमुपरमती' त्यत्र 'अन्तर्भावितण्यर्थोऽय' मित्याश्चिकद्। यतोहि—अन्तर्भावितण्यर्थता सामान्येन भवति, अतएव असावत्र घुव्यतिरिक्तानाम् (पूर्वमेजन्तानां पश्चाद्) आदन्त धातूनां द्विवचने रूपवैलक्षण्यप्रदर्शनार्थमेव ग्लायतेर्द्विवचनं आन्त्याऽऽश्चिकद्; (यद् दा धातोस्तु—'अदायिषाताम्, अदिषाता' मित्याकारा रूपद्वितयी; परं ग्लायतेस्तु—'अग्लायिषाताम्-अग्लासाताम्' इत्येव।) न तु अन्तर्भावितण्यर्थत्वविवक्षया। विवक्षायाम्मानाऽभावाद्; अन्यथाऽन्तर्भावितण्यर्थतोल्लेखमत्राऽऽङ्क्षिष्यताऽन्यत्रेव। यदि सत्यमकर्म्मकधातोरनेन अन्तर्भावितण्यर्थतया सकर्म्मकता पिशुनिताऽभविष्यत्, तर्हि तु आदौ 'अभावि' इत्यत्रैव तद्विवचनम्प्रादर्शयिष्यत् सः। तस्माद् "यत् किञ्चिदेतत्" ॥

अयि पाठकमहाभागाः! नाऽमुना समाधिना वस्तुतो भट्टोजिदीक्षितं दोषदिग्धमेव कर्त्तुममाऽभिलाषः; परं श्रीभाण्डारिचरणैर्यत्राऽऽगृहीतम्; मयाऽपि च तत्र प्रकाशः कृतः। यदि मदीयस्खलनं सेत्स्यत्यत्र; तर्हि मंस्य एवाऽहम्; नाऽऽग्रहिलोऽस्मि। दीक्षितस्य खलनाऽसम्भवे मम प्रसत्त्यासत्तिरेव भाविनी।

* अस्तु। अधुना तैर्मम 'निरदीक्षत' इति प्रयोगे चिन्त्यता प्रादर्शि; तत्रोच्यते।—अज्झनग्रहदृशिभ्यो व्यतिरिक्तत्वाद् निर्दिशतेः (तु० अ० स० ऊ०) सिरण्वदिड् भवितुमर्हति; ततश्च 'लिङ्सिचावात्मने'—इति सिच^किस्वेन लघूपधगुणोऽपि भवितुमार्हति; तच् शुद्धोऽयम्प्रयोग^कथन्तैश्चिन्त्य^प्रादर्शि। "तदिदं दोषदानं तु विशेषतया एव आश्चर्य्यञ्च दुःखञ्च जनयतीति विदन्त एव

---

* भाण्डारिणां 'गीर्वाणगीर्गौरवम्' इति तत्र प्रकाशिते निबन्धे—'भाषा उत्पन्नविभ्रमराः' इति पदं चिन्त्यम्; करप्त्वाद्ङीपोदुर्वारत्वाद्।

विदन्तु"। यतो हि नाऽत्र खिञ्चिशिष्टो दिशुश्रातुरभिसंहितो येन खिलोपस्थानिबद्धावेन गुणाऽवकाशो वैकल्पिकचिरवदिदश्च प्रसङ्गः स्याद्। 'अत्र श्रीभाण्डारिमहाशयानामेवाऽयं दोषो मम वा, इति सुधिय एवाऽत्र विविञ्चन्तु' कृतमत्तरत्तरणेन इति।

## संक्रान्तिनिर्णयः।

अस्मिन् संवत्सरे मकरसंक्रान्तिः कृष्णैकादश्यां विद्यते। तस्याश्च नित्यत्वात्तस्यागायोगात्तदोपवासः प्राप्तः। संक्रान्त्याञ्च नैमित्तिकमन्नदानादिकं च यथाप्रसिद्धं प्राप्तं, तत्र किं कर्तव्यमिति संशये निर्णय एषः—

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि।
वनस्थ-यति-धर्मोऽयं शुक्लामेव सदा गृही॥

इति देवलवचनात् नित्याप्येकादशी गृहिभिर्नानुष्ठेया। सर्वेषामेकादशीव्रतविधायिनां सामान्यवाक्यानां वनस्थयतिविषये वनस्थयतिधर्मोऽयमित्यनेनोपसंहारात् गृहस्थस्य कृष्णायां न नित्यव्रतप्राप्तिः।

संक्रान्त्यामुपवासं च कृष्णैकादशिवासरे।
चन्द्रसूर्यग्रहे चैव न कुर्यात्पुत्रवान् गृही॥

इति नारदवचनेन संक्रान्त्यादिषु पुत्रवतो गृहिण उपवासो निषिद्धः। क्वचित् उपोष्यापि विधीयते पुत्रवतो गृहिणः।

शयनी बोधिनी मध्ये या कृष्णैकादशी भवेत्।
सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन।

सा चाषाढ़ी कार्त्तिकी मध्यस्था नेयम्। ननु गृहिणोऽनपत्यस्य गृहिण्या विधवायाश्चोपवासः प्राप्तस्ततस्तैः किं कर्तव्यमिति चेच्छृणु, तैस्तु व्रतमनुष्ठेयम्। सकृच्च यत्फलादिकं भक्षयेत तदेव तद्दिने देयम्। न तेन व्रतभङ्ग इति सापत्यगृहस्थानां साधवायाश्च—

उपवासनिषेधे तु भक्ष्यं किञ्चित् प्रकल्पयेत्।
न दुष्यत्युपवासेन उपवासफलं लभेत्॥

इति वायवीय उक्तम्। भक्ष्यं च तत्रैवोक्तम्—

नक्तं हविष्यान्नमनोदनं वा फलं तिलाः क्षीरमथाम्बु चाज्यम्।
यदि पञ्चगव्यं यदि वापि वायुः प्रशस्तमत्रोत्तरमुत्तरञ्च॥

अत्रौदनवर्जं हविष्यान्नं फलं तिलाः क्षीरादिकञ्च भक्ष्यत्वेन निर्दिष्टानि। अतस्तैरनपत्यगृहिविधवादिभि र्हविष्यान्नादिकं देयम्, भक्ष्यञ्च। इतरैस्तुपुत्रवत्सधवाभिः कृष्णे व्रतनिषेधः कर्त्तव्यः। भक्ष्यं यत्किंचित्प्रदीयते मकरसंक्रान्तौ तत् तिलादिकं देयं भक्ष्यञ्च। यद्यप्येकादश्यामन्ने बहवो दोषास्सन्ति इति तत्र तत्र स्मृतिग्रन्थेषु व्रतिभिर्वा वर्ज्या उक्तास्तथापि, अन्नशब्दस्य तण्डुले रूढत्वाद् 'योगाद्रूढिर्बलीयसी'तिन्यायात् तण्डुलस्यैव ग्रहणात् तदितरान्नभोजनं फलादिभोजनं वा, असकृत् कार्यं तेन व्रतभङ्गाऽन्नजन्यदोषाभावश्च। असकृत् जलपानाच्च सकृत् ताम्बूलचर्वणादित्यादिस्मृतेरित्यलम्।

श्रीराधाप्रसादशास्त्री।
[ हिन्दूविश्वविद्यालयधर्मशास्त्राध्यापकः ]

---

## श्रीनारायणाष्टकम्।

——:०*०:——

( १ )

मात्स्यं वपुः श्रयति हीनं मुदा सततरक्षापरः श्रुतितते-
रङ्गीकरोत्यपि च कूर्माकृतिं विपुलभूभारधारणमतिः।
क्रोडश्च गां प्रलयवारांनिधौ सपदि मग्नां समुद्धरति यो
नारायणं तमहमाराधये मनसि धाराधराभवपुषम्॥

( २ )

ईशोऽस्म्यहं सकललोकस्य नैव जगदीशोऽस्ति कोऽपि हि परः
प्रह्लाद दुष्ट! यदि ते रक्षिताऽस्ति लघु रक्षेत्स मत्खरकरात्।
इत्थं ब्रुवाणमतिनीचाशयं धृतनृसिंहाकृतिर्हरति यो
नारायणं तमहमाराधये मनसि धाराधराभवपुषम्॥

( ३ )

याचन् बलिं विहितखर्वाकृतिर्भजति लज्जां न यस्तनुमपि
सर्वाधिपोऽपि, खलगर्वापहो विधृतराजन्यकालपरशुः।
शर्वानतोऽखिलसुपर्वाशयेन वनमाटीकते च जटिलो
नारायणं तमहमाराधये मनसि धाराधराभवपुषम्॥

( ४ )

धीराकृतिं शुचिगभीराशयं नतसमीरात्मजस्तुतिजुषं

सीराप्रजापतिमुदाराह्वयं जगति सारायमाणजनुषम् ।
तद्रावणादिखलभारापहं प्रथिततारापतिद्युतिमुषं
नारायणं तमहमाराधये मनसि धाराधराभवपुषम् ॥

( ५ )

नन्दात्मजं महितवृन्दावनं विनतदेवेन्द्रवन्दितपदं
मन्द्रस्वरं सुजनवृन्दायनं विकटवृन्दामहामदहरम् ।
भक्तावने विगततन्द्रं सदाऽगणितचन्द्रश्रियं नरवरं
नारायणं तमहमाराधये मनसि धाराधराभवपुषम् ॥

( ६ )

यो द्रौपदीमवति वस्त्राकृतिर्विपदकूपारमध्यपतितां
यो मोचयत्यथ गजेन्द्रं ग्रहाच्छ्रुततदीयार्त्तिसंहृतधृतिः ।
यो वा ध्रुवं स्पृशति गण्डस्थलेऽङ्कुरितहार्दो ददात्यभिमतं
नारायणं तमहमाराधये मनसि धाराधराभवपुषम् ॥

( ७ )

दुष्टान् विहन्ति मदजुष्टान् सदाऽघपरिपुष्टानतुष्टमनसः
शिष्टान्करोति च विशिष्टान्प्रभुः सततहृष्टान्विचित्रविभवैः ।
क्लिष्टाञ्जनांश्च दुरदृष्टान्वितांल्लघु निजेष्टानिवावति हि यो
नारायणं तमहमाराधये मनसि धाराधराभवपुषम् ॥

( ८ )

यो व्यापकोऽपि नहि सन्दृश्यते पयसि हैयङ्गवीनमिव वा
भासा विभाति जगदेतद्भिया भ्रमति यस्यैव च ग्रहगणः ।
यत्संश्रयात्तरति मायां जनो भजति पूर्णं सुखं भवहरं
नारायणं तमहमाराधये मनसि धाराधराभवपुषम् ॥

**रचयिता—श्रीजगद्रामशर्मा**

प्रधानाध्यापकः—

डेराइस्माइलखानस्थ—श्रेष्ठिवर—नन्दुरामप्यारेलाल—
संस्कृतविद्यालयस्य ।

# संगृहीताः समाचाराः ।

एकस्मिन् समाचारपत्रे प्रकाशितं यत् वंगप्रान्ते मुर्शिदावादमण्डले एकेन मानवेन पञ्चवर्षेभ्यः किमपि अन्नं जलं वा नाङ्गीकृतमिति । एकेन संवादपत्रे वृत्तान्तोऽयं मुद्रापितो यत् तत्रैव प्रान्ते बांकुड़ा-मण्डले इन्दासगुल्मे बिसरग्रामे तादृशी एका विचित्रा स्त्री वर्त्तते, यया पञ्चचत्वारिंशद्वर्षेभ्य इदानीं यावत् न किमपि भुक्तम्, न वा किमपि पीतमिति । इयं बाल्य एव वयसि वैधव्यं प्राप्नोत्! तस्मिन् समये सा एवं दुःखिता चिन्तिता च संवृत्ता येन तस्याः शनैः शनैः भोजनं पानं च स्वयं हि निरुद्धमभूत् । सम्प्रति तस्या भोजनपानादिना न कश्चनापि सम्बन्धो वर्त्तते । आश्चर्यजनक एवंविधोऽपि वृत्तान्तः कुत्रचिदन्धकारे तिरोहित आसीत् । देवीयं प्रतिष्ठिते कायस्थकुले समुत्पन्ना । एतस्या भ्राता पुर्लिया-मण्डलस्य प्रसिद्धः प्राड्विवाकः । इदानीं तस्या अवस्था प्रायः षष्ठिवर्षाणां वर्त्तते । सा तु विविधरोगप्रादुर्भावयोग्येऽपि स्थाने निवसन्ती स्वस्था तिष्ठति । सा तु निरन्तरं भगवद्भक्तिषु व्यापृता निजभ्रातुः पारिवारिकं प्रबन्धादिकं स्वयमेव विदधाति । तदीयभोजनपान-परित्याग-रहस्यमवगन्तुं वर्द्धमान-नगरस्य राजा अन्ये च बहवो माननीयाः सज्जनाः प्रायतन्त, किन्तु न तैः किमपि तत्कारणमासादितम् । यः कोऽपि तत्र जिगमिषति, गच्छतु, स्वीयं सन्देहं निराकरोतु । तया सार्द्धमालपनेन महती सन्तुष्टिरासाद्यते ।

× × × ×

संसारेऽत्र सर्वतोऽपि महान् धनिक आमेरिक-धनकुबेर-न्यूयार्कनिवासी हेनरीफिलिप्समहोदयो द्युनिवासभूयमगात् । स च सार्द्धद्व्यशीतिकोटिमितानि रूप्यकाणि परित्यज्य मृत इति श्रूयते । तस्य सम्पत्तिरेतावती विद्यते यत् तस्याः परिगणनं परिज्ञानं वा दुःशकमेव । पूर्वस्मिन् समयेऽयमतीव निर्द्धनः । न्यूयार्के षष्ठिमुद्रावेतनं लब्ध्वाऽसौ क्लर्ककर्म कृतवान् अभूत् । लौहव्यापारेण तदीय आय एतादृशोऽधिकः सम्वृत्तो यत् प्रतिकलं ( मिनट ) ७५०) सार्द्धसप्तशतमितानि रूप्यकाणि तस्य आय आसीत् । अमेरिकायामनेके तादृशो धनकुबेराः सन्ति समभवंश्च, ये पूर्वं महानिर्धना आसन्; परन्तु व्यापारबलेन संसारे सर्वापेक्षया सुमहान्तो धनिकाः समभूवन् । कारनेगी-फोर्ड-वान्डविल्ट-हैरी-प्रभृतयो हि तादृशेषु उद्योगिषु परिगण्यन्ते । "लक्ष्मीर्व्यापारवासिनी" इत्या-

भणकस्यैते प्रत्यक्षमुदाहरणम्। "उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः" इत्यस्यैते बलवत् प्रमाणम्। एतादृशो बहवः सन्ति तत्र। अमेरिकायाः सम्पत्तेरनुमानं केन कर्त्तुं शक्यते ?

× × × ×

भारतं नाम वर्षमतीव निर्द्धनम्, नहि नहि, दरिद्रमिति वक्तव्यम्। यदि इङ्गलेण्डस्य ( ग्रेटब्रिटेनस्य ) सन्निधाने रूप्यकाणां विंशतिः, तदा भारतस्यैकं रूप्यकमनुमातव्यम्। संसारे अमेरिकायाः संयुक्तं राज्यं सर्वश्रेष्ठं सम्पत्तिशालि। पश्यन्तु, अमेरिकायाः इङ्गलैण्डस्य चापेक्षया भारतस्य कीदृशी दशा वर्त्तत इति। त्रयाणां देशानां वार्षिक आयो निम्ननिर्दिष्टरूपो निभालनीयः—

| देशनामानि— | | रूप्यकाणि— |
|---|---|---|
| ( १ ) अमेरिका संयुक्त-राज्यस्य | ... | १, ५०, ००, ००, ००, ००० |
| ( २ ) ग्रेटब्रिटेनस्य ... | ... | २८, ००, ००, ००, ००० |
| ( ३ ) भारतस्य ... | ... | ७, ३२, ००, ००, ००० |

अमेरिकायाः संयुक्तराज्यस्य सार्द्ध-खरबमितो वार्षिक आयः। ग्रेटब्रिटेनस्य अष्टाविंशति-खरबपरिमितः। भारतस्य तु केवलं सपादसप्ताऽरबतः किञ्चिद्धिकः। भारतस्य आयविभागाध्यक्षैरिदमनुमितं यत् भारते प्रतिपुरुषं प्रतिमासं ३०) त्रिंशन्मुद्रामित आयो वर्त्तते इति। एतेनैव भारतस्य सामूहिक आयः सपादसप्ताऽरबमितो निर्द्धारितः। भारतापेक्षया चतुर्गुणो ग्रेटब्रिटेनस्य, विंशतिगुणश्च अमेरिकासंयुक्तराज्यस्य वार्षिक आयः अनुमीयते। अमेरिकापेक्षया त्रिगुणा, ग्रेटब्रिटेनस्यापेक्षया षड्गुणा च भारतवर्षस्य जनसंख्या समधिका वर्त्तते। परिगणनयैतयाऽत्रत्येनआयेनाऽपि तत्तद्देशापेक्षया त्रिगुणेन षडगुणेन च भवितव्यम्। परन्तु नास्ति तथेति उपर्युक्तप्रकारेण परिज्ञायते। एतादृशदशायाम् एतद्देशस्य शासनकर्मणि न्यून एव व्ययः करणीय आसीत्, किन्तु सर्वथा विपरीतमेव दृश्यते। संसारस्य सर्वेभ्यो देशेभ्यः अत्रत्यः शासनव्ययोऽधिको भवति, अतएव भारतनेतृभिरिदं प्रयत्यते यत् भारतशासनव्ययोऽस्माकं सम्मत्या कर्त्तव्य इति।

---

तृतीयस्य मौलिकं सिद्धान्तमाह—

**तपःप्रधानं वानप्रस्थम् ॥ १४१ ॥**

तपोधर्मस्वरूपं विस्तरशो वर्णितं प्राक् वानप्रस्थाश्रमेऽतिकठिनानां साधनसङ्घानामभ्यासो विधीयते । यतो हि–प्रवृत्तिमार्गं परित्यज्य सद्य एव निवृत्तिमार्गार्थं बद्धपरिकरेण वानप्रस्थाश्रमिणा भूयते । वानप्रस्थाश्रमीयो हि सदाचारः शारीरिकेण मानसिकेन वाचनिकेन त्रिविधेनापि तपसा परिपूर्णः ।

ननु नारीधर्मवानप्रस्थधर्मयोरुभयोरपि तपोमूलकत्वात्तयो र्भेदनिदानं किमित्याशङ्कायामुत्तरयति सत्यपि तयोस्तपोमूलकत्वे परस्परविभेदकहेतुबाहुल्यात्प्रकाशान्धकारवन्महदन्तरम् ।

तथा हि—नारीधर्मः प्रवृत्तिमूलको वानप्रस्थधर्मश्च निवृत्तिमूलकः, नारीधर्मः पारतन्त्र्यप्रधानो वानप्रस्थधर्मश्च स्वातन्त्र्यप्रधानः । पूर्वस्मिन्सृष्टेः प्राधान्यम् परस्मिंश्च लयस्य । पूर्वत्र नार्य्याः त्रिविधमपि शरीरं सर्वा अपि शरीरवाङ्मनसः प्रवृत्तयस्तपसा पत्युरधीनाः,अपरत्र वानप्रस्थाश्रमिणस्तु स्त्रीसहचरत्वेऽपि तस्याः स्त्रियः सर्वथा वाङ्मनसःकायादिभिः परित्यागः । इत्यादिभिर्हेतुभिस्तयोः पार्थक्यं सुस्पष्टमेव ॥१४१॥

इदानीं चरमाश्रमस्य मूलसिद्धान्तं निर्णयति ।

**त्यागप्रधानं चतुर्थम् ॥ १४२ ॥**

विना सर्वस्वहानान्मुक्तेर्दुर्लभत्वात् मुक्त्यर्थं जीवानां स्वसम्पत्तेरहङ्कारस्याहङ्कारजयोरहलौकिकपारलौकिकयोरभ्युदययोस्त्याग आवश्यकः । एतदर्थमेव क्रमतः कुटीचकबहूदकहंस–परमहंसाद्यवस्थाभिः सन्यासाश्रमगैर्ब्राह्मणवंशजैस्त्यागशिक्षाऽभ्यस्ते । सर्वेष्वपि संस्कारेषु सन्याससंस्कारस्यान्तिमत्वात् तस्य सर्वेऽपि सदाचारास्त्यागनियममूलका एव निरूपिताः । स्मृतावप्युपदिष्टम्—

> संयमस्तु गृहस्थानां नियमो ब्रह्मचारिणाम् ।
> वानप्रस्थाश्रमस्थानां तपस्त्यागस्तु न्यासिनाम् ॥ १४२ ॥

सर्वेषामपि चरमफलमभिधत्ते—

**एतान्यभ्युदयनिःश्रेयसकराणि ॥१४३ ॥**

इमे चत्वारोऽप्याश्रमा अभ्युदयनिःश्रेयसप्रदाः । यद्यपि प्रथमद्वितीयौ प्रवृत्तिप्रधानौ तृतीयतुरीयौ च निवृत्तिपरायणौ तथापि क्रमेणनियम-संयमतपस्त्यागमूलकत्वात् तदनुष्ठातॄणामभ्युदयनिःश्रेयसप्रदाने चत्वारोऽपि समाना एव ।

यतो हि नियमाद्यश्चत्वारोऽपि प्रत्येकं सम्यगनुष्ठिता अभ्युदयमात्रमेव

न वितरन्ति, किन्तु निःश्रेयसमपि वितीर्य्यैव विश्राम्यन्ति इति निर्णीतः पन्थाः । श्रुतिसिद्धेयं सरणिः यद्ब्रह्मचारी उत्कटविरागावस्थायाम् एकपद एव संन्यासाश्रमं ग्रहीतुमर्हति । गृहाश्रमिणो जनकादयस्तु जीवन्मुक्त एवासन् इति सर्वप्रसिद्धम् । महर्षयस्तु सर्वेऽपि प्रायो वानप्रस्थाश्रमत एव ब्रह्मसायुज्यं समाश्रिताः । सन्यासस्तु मुक्तिस्वरूप एवेत्यत्र किं वक्तव्यम् । असम्पूर्णत्वमधिगता अप्येते अभ्युदयप्रदाने तु सर्वथैव समर्था इत्यसन्दिग्धम् । अत्र यथोपलब्धाः श्रुतयः स्मृतयश्च यथा—

यदि वेतरथा ब्रह्मचर्य्यादेव प्रव्रजेद् गृहाद्वा वनाद्वा । ( इतिश्रुतिः )

प्रव्रजेद् ब्रह्मचर्य्याद्वा प्रव्रजेद्वा गृहादपि ।
वनाद्वा प्रव्रजेद्धीमानातुरोवाऽथ दुःखितः । ( स्मृतिः )

आचार्य्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधदात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्याहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः, स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते न च पुनरावर्तते" । इति श्रुतिः—

न चैष धर्मो वन एव सिद्धः पुरेऽपि सिद्धिर्नियता यतीनाम् ।
बुद्धिश्च यत्नश्च निमित्तमत्र वनं च लिङ्गं च हि भीरुचिह्नम् ॥
मौलीधरैरंसविषक्तहारैः केयूरविष्टब्धपटैर्नरेन्द्रैः ।
लक्ष्म्यङ्कमध्ये परिवर्तमानैः प्राप्तो गृहस्थैरपि मोक्षधर्मः ॥
ध्रुवानुजौ यौ बलिवज्रबाहू वैभ्राजमाषाढमथान्तिदेवम् ।
विदेहराजं जनकं प्रतीमः पाकद्रुमं सेनजितश्च राज्ञः ॥
एतान् गृहस्थान्नृपतीनवेहि नैःश्रेयसे धर्मविधौ विनीतान् ।
उभेऽपि तस्माद्युगपद्भजस्व चित्ताधिपत्यञ्च नृपश्रियञ्च ॥इति स्मृतिः॥१४३॥

निराश्रमित्वे का हानिरित्याख्याति—

**अनाश्रमित्वादधर्मो लक्ष्याभावात् ॥ १४४ ॥**

आश्रममहत्वमभिधायाऽधुना महर्षिः सूत्रकृत्तत्त्यागानां दोषमभिधत्ते चत्वारोऽप्याश्रमा मानवजीवनोद्देश्यं स्थिरयन्ति । तेषां यथाक्रमं सुकौशल–व्यवस्थान विज्ञानञ्च पूर्णतया पूर्वं प्रतिपादितम् । अनाश्रमिणस्तु जीवनोद्देश्याभावाद्धर्ममार्गोऽवरुद्धो भवति ।

यथा गन्तव्यपथपरिभ्रष्टा नौ महापोतोऽपि वा कूर्पदण्डाभावाद्दिङ्निर्णायकगतेरभावाच्च जलमग्नावेव भवतः ।

यथा वा च्युताध्वा पथिकः स्वात्मानं विपथगामिनं कृत्वा कान्तारे व्याघ्रा-

दिभिर्व्यापादयति तथैवानाश्रमी पुमान् प्रवृत्तिनिवृत्तिभ्यामुभाभ्यामपि पथिभ्यां च्युतोऽभ्युदयनिःश्रेयसप्रदधर्मपरिभ्रष्टः सांसारिकगर्ते परिपतनाद्आत्मानमुत्थापयितुं प्रभवति । तस्मिंश्च न धर्मानुसारिणी प्रवृत्तिर्भवति नापि तस्य निवृत्त्यध्वैव विवृतो भवति, तस्मात् स धर्मसाधनशृङ्खलातो विच्युतोऽधर्मगर्ते पततितरामिति सुनिश्चितम् ॥ १४४ ॥

सिंहावलोकनन्यायतो वर्णधर्ममहिमानमाख्याति—

वर्णधर्मः प्रवृत्तिरोधकः ॥ १४५ ॥

वर्णधर्मो हि कामार्थधर्ममोक्षमूलकानामाचारनियमसङ्घानामनुष्ठानतो मानवानां निरर्गलाः प्रवृत्तीर्निरुध्यात्मज्ञानमुखीना विदधाति ।

तथा हि शूद्रधर्मः कामजन्यां प्रवृत्तिं सेवया निरुणद्धि । वैश्यधर्मश्च अर्थसंग्रहेच्छां कृषिगोरक्षवाणिज्यादिभिः सफलां विधाय प्रवृत्तिनिरोधे समर्थो भवति ।

अन्यथापीदं विज्ञानं विवरीतुं शक्यते—तथा हि—जीवो जन्मजन्मान्तरतोऽनेकयोनिं परिभ्रमन् यदा मनुष्ययोनिमासाद्य शक्तिसम्पन्नो भवति तदा तस्य स्वपिण्डाधीश्वरत्वात् प्रथमतः कामप्रवृत्तय एव प्रबला भवन्ति । तदानीं स तपस्यामूलेऽस्मिन्धर्मे स्ताः सर्वा अपि निरर्गलाः प्रवृत्तीर्निरोध्य स्वकर्मोन्नत्यै सोपानपरम्परामारचयति । स एव यदा जन्मान्तरे वैश्यकुले स्वजनिमासादयति तदा स्वधर्मैर्गोरक्षकृषिवाणिज्यादिभिरर्थान्समुपार्ज्य तांश्च क्रमशो वर्द्धयन् धर्ममार्गे च व्ययीकृत्य प्रवृद्धां तामुद्दामामर्थप्रवृत्तिं नियमयति । ततश्च जन्मान्तरे स पुण्यात्मिकां क्षत्रियब्राह्मणयोनिमासाद्य पूर्वजन्मनोस्ते कामार्थप्रवृत्ती क्रमेण धर्ममोक्षयोः कृते विसर्ज्य एक पद एव स्वोद्दामप्रवृत्तीर्निरोद्धुं समर्थो भवति ।

आदिसृष्टितः क्रमशः परिशुद्धिमधिगते चतुर्णामपि वर्णानां रजोवीर्ये एभिः कामार्थधर्ममोक्षसंस्कारैर्युक्ते भूत्वाऽर्य्यजातीनामेषु प्रवृत्तिरोधकेषु साधनेषु सहायके भवतः । इत्येव वर्णधर्मस्यासाधारणं महत्वम् ॥ १४५ ॥

सम्प्रति क्रमप्राप्त्याऽऽश्रमधर्मस्य विशेषमहिमानमातनुते—

निवृत्तिपोषकस्त्वपरः ॥ १४६ ॥

यथा वर्णधर्मोऽसौ प्रवृत्तिरोधकस्तथैवाश्रमधर्मोऽप्ययं निवृत्तिपोषक इत्यभिहितं धर्मसूत्रकारैः

तथा हि—वर्णधर्मं यतो विज्ञाः प्रवृत्ते रोधकं जगुः ।

निवृत्तेः पोषकश्चैव धर्ममाश्रमगोचरम् ॥

प्रथमो हि ब्रह्मचर्य्याश्रमो मानवान् धर्मानुकूलप्रकृत्यधिकारसमर्पणेन गृहस्थाश्रमे प्रवेशयति तत्र च वेदशास्त्रीयप्रवृत्तिं सर्वथा पूरयित्वा तेषां कृते निवृत्तिमार्गद्वारं साधु समुद्घाटयति । ततश्चाग्रेतनौ वानप्रस्थसंन्यासौ तु निवृत्तिस्वरूपावेव । तस्मादाश्रमधर्मस्य निवृत्तिपोषकत्वे न कस्यचनापि विमतिः ॥ १४६ ॥

सर्वान्तिमफलमिदानीमाह—

**निवृत्त्या कैवल्यम् ॥ १४७ ॥**

वर्णधर्मेण प्रवृत्तिन्निरोधयन्त आश्रमधर्मेण च निवृत्तिं सम्वर्द्धयन्तो जीवा जीवन्मुक्तदशामाश्रित्य कैवल्यभाजो भवन्ति । वर्णाश्रमधर्मस्येदमन्तिमं लक्ष्यं विद्यते-यद् जीवा निर्बाधम् नियमतोऽभ्युदयोपलब्ध्या प्रवृत्तिं शोधयन्तो निवृत्तिञ्च वर्द्धयन्तोऽभयस्थानं मुक्तिपदमधिगच्छेयुरिति ।

वर्णाश्रमधर्माणामाचार-शृङ्खला ईदृशी सुदृढा सुबद्धा विद्यते यत् सा स्वमार्गाश्रितान् जीवाञ्जन्मजन्मान्तरसमर्जितसंस्कारसाहाय्येन निर्वाधम् मुक्तिपदमेव प्रापयति न मध्ये क्वचन पातयति ॥ १४७ ॥

निवृत्त्युत्पत्तौ मतान्तराण्याह—

**भोग-पौरोभाग्यात्तदुत्पत्तिरिति केचित् ॥ १४८ ॥**

सूत्रकृन्महर्षिः स्वमतानुसृत्या वर्णाश्रमशृङ्खलाप्रणाल्या आर्य्यमर्य्यादाश्रितानाञ्जीवानां निवृत्तिमार्गोन्नत्या मुक्तिपदप्राप्तिविज्ञानमभिधाय सम्प्रति महर्ष्यन्तरमतान्यप्युदीरयति—

भोगेषु विषयेषु पौरोभाग्याद् दोषदर्शनात् "दोषैकदृक् पुरोभागी" इत्यमरः। तस्या निवृत्तेरुत्पत्तिरिति केषाञ्चन महर्षिप्रवराणां मतं विज्ञानम् इति सूत्रार्थः।

वर्णाश्रमधर्मावलम्बिनी प्रजा विनापि विशेषप्रयासं केवलं वर्णाश्रमसदाचारपालनत एव निवृत्तिमार्गाधिकारिणी भूत्वा मुक्तिपदमारोहतीति सूत्रकारस्य स्वमतम् ।

महर्षीणां प्राप्यमाणेषु मतान्तरेषु चैकस्य मतमिदम् यद्—भोग्यपदार्थानां दोषानभ्यस्यन्त एव जीवा निवृत्तिमुपलभ्य मुक्तिभाजो भवन्तीति ।

विज्ञानस्यैतस्येदमेव स्वारस्यम् यत् विषयसङ्गा एव जीवान् अधो नयन्तो बध्नन्ति । विषयभोगवासनैव जीवानां गमनागमनचक्रं सञ्चालयति, सैव जीवानीश्वरतो विमुखाञ्च करोति, यदा साधको वैराग्याभ्यासेन विषयतोऽरुचिमधि-

गत्या ताञ्जहाति तदा स्वत एव तस्मिन् भाग्यशालिनि साधके विषयत्याः प्रवृत्तेर्नाशान्निवृत्तेरुदयो भवति, ततश्च स क्रमशो मुक्तिमप्याश्रयतीति ॥ १४८ ॥

अन्यन्मतान्तरमाह—

गुणदर्शनादित्यन्ये ॥ १४९ ॥

केचन महर्षयः प्रकृतेः सत्त्वरजस्तमसां यथावत्सर्वथा सर्वदा दर्शनेनैव निवृत्तेरुपलब्धिर्भवति। ततश्च क्रमशो विमुक्तिरपि भवति इति। विषयविमुग्धः साधको यदि विषयस्वरूपतो मनोऽपहृत्य प्रवृत्तिगुणपर्य्यालोचन एवासक्तो भवति तदा न तं विषया विषिन्वन्ति। स च विषयेभ्यो विनिवृत्तो मुक्तिभूमावुत्तिष्ठते ॥ १४९ ॥

तृतीयं मतान्तरमभिधत्ते—

कर्मदर्शनादित्यपरे ॥ १५० ॥

केचिन् महर्षयः पापमुपेत्य पुण्यकर्मणः पर्य्यालोचनया तथाऽसत्कर्मापहाय सत्कर्मप्रवृत्त्या प्रतिक्षणञ्च सत्कर्मानुष्ठानेनैव निवृत्तिमार्गोपलब्ध्या जीवा-मुक्तिपथगा भवन्तीति सम्मन्वते।

तात्पर्य्यतः कर्मवीरः साधकः सततं सत्कर्मानुष्ठानपर एवास्तेऽतस्तेन, कर्मवीरपरायणया दृष्ट्याऽसत्कर्मावलोकितुमेव न पार्य्यते। किन्तु सदा सत्कर्मानुष्ठानजन्यसंस्कारसञ्चयपरेण तेन निवृत्तिमासादयता मुक्तिपदमाश्रियते ॥ १५० ॥

चतुर्थं मतान्तरमाख्याति।

धर्मप्रवृत्तेरितीतरे ॥ १५१ ॥

केषाञ्चन महर्षीणां मते निरन्तरधर्मप्रवृत्त्या मनुष्यो निवृत्तिपथाग्रेसरो भवन्मुक्तिमधिगच्छति। साधको यदाऽधर्मप्रवृत्तिमुन्मूल्य धर्मप्रवृत्तिमेव सततं वद्र्धयिष्यति तदा क्रमशः तदीया बुद्धिः शुद्धस्वरूपा सती विषयवैराग्यात्मिकां निवृत्तिमवश्यमासादयन्ती तं मुक्तिपथपथिकं कृत्वैव विश्रमिष्यति, इत्यस्य विज्ञानस्य तात्पर्य्यम् ॥ १५१ ॥

सम्प्रति स्वसिद्धान्तं द्रढयितुम्ब्रूते—

उभे देशकालापेक्षे ॥ १५२ ॥

सूत्रकृतोऽयमाशयो यद्—प्रवृत्त्यवस्थायाः क्रमोन्नतिर्यथाऽभ्यासेन वर्द्धमानापि देशकालमपेक्षते तथैव निवृत्तिसिद्धिरपि देशकालमपेक्षते। यथा प्रवृत्तिमार्गीयाः साधनसङ्घा देशकालमपेक्ष्यैव साधकमग्रेसरं कुर्वन्ति, तथैव निवृत्तिसाधनान्यपि देशकालापेक्षाण्येव स्वसाधकमग्रे वद्र्धयन्ति।

अपरञ्च देशकालभेदेन धर्माऽधर्मनिर्णये महत्काठिन्यमापततीत्यादि कारणकलापतः प्रवृत्तिनिवृत्ती उभे अपि देशकालमपेक्षेते इति स्वीकर्तव्यमेव ।

अपरतश्च वर्णाश्रमधर्मव्यवस्थातिरिक्तानि यान्यपि मुक्तिदानि निवृत्तिसाधनानि मतान्तरपक्षतः प्रतिपादितानि तत्साधनेषु समापतन्तीनामापत्तीनां निवृत्तेरुपायाभावात् प्रवृत्तिनिवृत्तिसम्बन्धिन्याः क्रमोन्नतेश्च देशकालापेक्ष्यत्वात् तत्र सर्वत्रैव सत्यामपि सर्वाभ्युदयनिःश्रेयसप्रदायिन्यां शक्तौ विघ्नबाधोपस्थितेरावश्यकत्वम्, न तन्निरोधव्यवस्था तत्र काचनोपलभ्यते ।

इह वर्णाश्रमधर्मे तु सर्वत आध्यात्मिकाधिदैविकाधिभौतिकशुद्धिव्यवस्थाया विद्यमानत्वात् विघ्नबाधाप्रभृतयः स्वत एव दूरी भवन्ति, जन्मान्तरसम्बन्धेन चोन्नतिपथोऽपि विशदो भवति । पूर्वोपात्तमतान्तरेषु नेदृक् सारल्यं सौकर्य्यं वोपलभ्यते । इत्यतो वर्णाश्रमधर्मव्यवस्थैवाबाध्यक्रमोन्नतौ निरापद्ध्वेति सर्वथा स्वीकर्तव्यम् ।

अन्यच्च प्रवृत्तिनिवृत्तिधर्मयोर्देशकालापेक्षणीयत्वात् तयोर्यथोचिताधिकारनिर्णयकाठिन्यानुभवस्यावश्यं पातादित्यभिहितं प्रागपि ॥ १५२ ॥

धर्माधर्मनिर्णये काठिन्यपरिहारेच्छया प्रमाणं निर्दिशति—

**वेदाः प्रमाणं धर्माऽधर्मनिर्णये ॥ १५३ ॥**

पूर्वोक्तरीत्या देशकालसम्बन्धस्य पात्रापात्राधिकार्य्यनधिकारिविचारस्यावश्यकत्वाद् धर्माधर्मनिर्णयस्य दुरूहतां सम्भाव्य तत्र वेदस्याविहतप्रामाण्यमुद्घोषयति भगवान् सूत्रकारः ।

देशकालविमर्शतो धर्माधर्मनिर्णये पात्रापात्रविचारेणाधिकारानधिकारविमर्शेन च धर्माधर्मनिर्णयः इत्येवं सर्वथापि कर्तव्याकर्तव्यनिश्चयोपस्थितौ वेदाश्चैव प्रमाणमित्यसन्दिग्धम् ॥ १५३ ॥

तद्धेतुमभिदधाति—

**अपौरुषेयत्वाज्ज्ञानमयत्वाच्च ॥ १५४ ॥**

ब्रह्मसंलग्नमनसो मुनयो नित्यर्षावतारस्वरूपा ऋषिकल्पा महापुरुषाश्चेत्यत एव जटिलसमस्योपस्थितौ धर्माधर्मनिर्णयसमर्था भवितुमर्हन्ति नान्ये । तत्रापि तेषां महात्मनामपि मतेषु तस्या अघटनघटनापटीयस्या मायायाः प्रभाववैचित्र्यात्परस्परविरोध उपलक्ष्यत एव । इत्येवं विषमसमस्योपस्थित्या धर्माधर्मनिर्णयो बहुधा सङ्कटापन्नो भवति । तत्रैवं किंकर्तव्यविमूढतावस्थायां वेद एवापौरुषेयत्वात् भ्रमप्रमादालस्य-विप्रलिप्सादिपुरुषगतदोषराहित्यादविलङ्घ्यं प्रमाणमङ्गीक्रियते ।

अत्र यदि दार्शनिकः कश्चिदाशङ्केत यत् सर्वथापि विषमसमस्योपस्थितौ सर्वैरप्याश्रयणीयस्य वेदस्य किं स्वरूपं कथञ्च तत्रैतादृशी श्रद्धा करणीया स्याद् इत्यादि, तत्रोत्तरार्थमेवास्य सूत्रस्योपन्यासः सूत्रकृतोपात्तः। तथा हि—वेदस्य प्रामाण्यसिद्धौ दार्शनिकी युक्तिरेव प्रबला। यतो हि वैदिकं शास्त्रीयञ्चोभयमपि प्रमाणं वेदमूलकमेव। तत्रापि वेदस्यालौकिकं महत्त्वमृतम्भराप्रज्ञासम्पन्नैरात्मदर्शिभि महापुरुषैरेव ज्ञातुं शक्यते,नेतरैः साधारणप्रज्ञावद्भिः। इत्यतः सिद्धमिदं यद्वेदप्रामाण्यसमर्थने दार्शनिकविज्ञानस्य प्रयोजनमावश्यकमिति—

प्रथमं तावद् वेदस्याऽपौरुषेयत्वज्ञानमयत्वाभ्यामेव सर्वाभ्यर्हितं प्रामाण्यं सिध्यति। अपरञ्च ब्रह्मणि ब्रह्मशक्तेरभिव्यक्तिलयौ स्वभावसिद्धौ स्तः। यथा कस्मिंश्चित्पुरुषपिण्डे तस्य व्याहरणशक्ति र्ज्ञापनशक्ति र्वाऽभिव्यज्य शब्दमयीं स्वरमयीं वा सृष्टिमाविर्भावयति, ततो द्वितीयक्षणे तस्य वर्णात्मकस्य ध्वन्यात्मकस्य वा शब्दस्य लयेन सहैव स्वयमपि सा विलीयते। तथैव शब्दमय्याः शक्तेः पौनः पुन्येनाविर्भावतिरोभावाभ्यां सह तन्मय्याः सृष्टेरप्याविर्भावतिरोभावौ सम्पद्येते। इत्युदाहरणानुरूपमेव ब्रह्मणः शक्ते महामाया आविर्भावातिरोभावाभ्यां ब्रह्माण्डस्याप्युदयलयौ सर्वदैव सम्पद्येते। ब्रह्मशक्ति र्हि नित्या यस्या व्यक्तत्वे दृश्यप्रपञ्चस्य स्थितिस्तस्या अव्यक्तादशायाञ्च तस्य लयो भवतीत्येतावतैव ब्रह्मशक्तेर्नित्यत्वेऽपि जगतोऽनित्यत्वे न काप्यनुपपत्तिः।

ब्रह्मशक्ति र्हि यथा "अहं ममेतिवत्" नित्या,ज्ञानमपि तथैव नित्यम्। यतो हि सच्चिदानन्दरूपं ब्रह्म सर्वत्रैवास्तिभातिप्रियरूपेण विराजते। इत्यतो ज्ञानस्य चिन्मयभावरूपस्य नित्यत्वे का त्रुटिः। जगतोऽभिव्यक्त्या सार्द्धमेवास्तिभातिप्रियादिरूपस्याप्यभिव्यक्तिरुदेतीत्यस्मादेव कार्य्यरूपे जगत्यपि सर्वेषामेवैषामस्तिभाति-प्रियादीनां पूर्णतया सत्तोपलभ्यते। ब्रह्मणो हि स्वरूपं ज्ञानं प्रथमसृष्टिविकाशे ज्ञानमये शब्दे तटस्थज्ञानस्य बीजत्वं दधदेवाविर्भवति। तदेव तटस्थस्य बीजरूपं शाब्दिकं ब्रह्म प्रणवः कथ्यते। तेनैव प्रणवेन तत्कल्पोपयोगी सर्वोऽपि ज्ञानराशि र्वेदर्चास्वरूपतो महर्षीणामन्तःकरणे समुद्भवति। एतदेवालौकिकमद्भूतञ्च वेदाविर्भावरहस्यम्।

मध्यमीमांसा-ब्रह्ममीमांसादर्शने वेदस्यालौकिकमिदं स्वरूपमनेकधा विवृणुतः। अतो वेदस्याऽपौरुषेयत्वं ज्ञानमयत्वञ्च पूर्वविज्ञानतः सिद्धमेव।

वेदो हि सद्रूपेण ब्रह्मणि तिष्ठति स च सृष्टेरादौ "अहं ममेति"ब्रह्मशक्तिवत् क्रियाज्ञानात्मना परिणतया तया सहैव ब्रह्मणः सकाशाद् प्रणववेदरूपेण महर्षीणां

समाधिस्थेष्वन्तःकरणेष्वाविर्भवति । न तु केनापि प्रणीयते वेदः, किन्तु आविर्भावतिरोभावरूपतयैवादृश्यतां प्रकाशतां चागच्छतीति तस्याऽपौरुषेयत्वम् नित्यत्वम् । एकस्मिन् कल्पे प्राकट्यमाप्तिनवति वेदे प्रतिकल्पान्तरमाविर्भविष्यतस्तत्स्थज्ञानस्य सूक्ष्मबीजसमुदयोऽन्तर्निहितस्तिष्ठतीति तस्य ज्ञानमयत्वम् इत्येवमपौरुषेयत्वज्ञानमयत्वे वेदस्य सिद्धे धर्माऽधर्मनिर्णये काठिन्योपस्थितौ तस्य सर्वतोऽभ्यर्हितमविहतञ्च प्रामाण्यमप्रतिहतमेव ॥ १५४ ॥

स्वपक्षपुष्टये वेदमहिमानमभिधत्ते—

पूर्णज्ञानस्य वेदस्य भाषाऽष्टभावप्रकाशिका ॥ १५५ ॥

"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा"

इति श्रीमद्भगवद्गीतोक्तवचसा यथा ब्रह्मप्रकृतिरष्टधा विभक्ता दृश्यते तथैव ज्ञानात्मिका वेदसृष्टिरपि स्वात्मनाऽष्टधा विभिन्नोपलभ्यते ।

विज्ञानसिद्धमिदं यत् कार्य्यब्रह्मणो यथा मूलकारणमष्टधा प्रकृतिस्तथैव ज्ञानात्मनोऽस्य शब्दब्रह्मणोऽपि सृष्टेरष्टधात्वे नाऽनुपपत्तिः प्रत्युतेदमेव वेदस्यासाधारणं महत्त्वं पूर्णत्वञ्च यदस्याष्टधोपकल्प्यते प्रकृतिः ।

वेदस्य सर्वोऽपि मन्त्रः प्रत्येकमाध्यात्माधिदैवाधिभौतिकभावपूर्णः, कर्मोपासना ज्ञानात्मक-काण्डत्रयक्रियासम्वलितः, बाह्यान्तःप्रकाशक-ज्योतिर्द्वयोपेतश्च विद्यते । समाधिस्थप्रज्ञया पर्य्यालोचिताः सर्व एव मन्त्राः प्रत्येकमध्यात्माधिदैवाधिभौतिक-भावपूर्णतामपि प्रख्यापयन्ति । तथा कर्मोपासनाज्ञानात्मक-काण्डत्रयाणामुपयोगितामपि प्रकाशयन्ति । ज्ञानसम्बन्धेन च बाह्यान्तर्जगतोः, प्रकाशनात्मिकां सम्पूर्णां शक्तिमपि दधतीत्येवमष्टाङ्गस्वरूपं सर्वथा तेषूपलभ्यते । यद्यपि चापाततः काचन श्रुतिः ज्ञानप्रधाना कापि चोपासनामुख्या काचिच्च कर्माभ्यर्हिता प्रतीयते । परन्तु सूक्ष्मबुद्ध्या विमर्शनेनेमा अष्टावपि शक्तयः सर्वत्रैव प्रतिमन्त्रं तासु न्यूनाधिकतयोपलभ्यन्त एव ।

एवमेव याहि ऋक् प्रत्यक्षतोऽन्तर्जगज्ज्ञानं प्रकाशयति तत्रैव समाधिस्थबुद्ध्या संयमतः पर्य्यालोचनया बाह्यस्थूलजगत्प्रकाशिकोपयोगितोपलभ्यत एव । तयैवर्चा कस्यापि जगतः कस्यापि सत्यपदार्थस्य निर्णयोऽपि सम्भाव्यते । इत्थं प्रतिश्रुति वेदप्रकृतिरष्टधोपलभ्यते । इत्ययमेव तस्याष्टभावप्रकाशकम् लौकिकं महत्त्वम्पूर्णत्वञ्च । इत्यस्मादेव कारणात् वेदा धर्माधर्मनिर्णये सर्वाभ्यर्हितं प्रमाणं परिकीर्त्यन्ते ॥ १५५ ॥

अपरञ्च—

न सर्ववेदवक्तृत्वं सर्वेषां तदानन्त्यात् ॥ १५६ ॥

वेदस्यानन्त्ये, सर्वाभ्यर्हितमाहात्म्ये, पूर्णतायाञ्च वैज्ञानिकं रहस्यं प्रतिपादयति । कारणब्रह्मणः श्रीभगवतो वाङ्मयस्य शब्दब्रह्मणो वेदस्याऽपि ज्ञानानन्त्यप्रतिपादकत्वादानन्त्यमप्रतिहतमेव । अत एव न सर्वे ऋषयः सर्वेषां वेदानां वक्तारो भवितुमर्हन्ति । योगदर्शने प्रोक्तं महर्षिणा पतञ्जलिनाऽपि—

'स एव पूर्वेषामपि गुरुः कालेनानवच्छेदात्'

इत्यनेनेदं सिध्यति—यत् कोऽपि महर्षिः, कोऽपि देवः, कोऽपि महापुरुषः स्यात्, किन्तु सर्व एव देशकालपरिच्छिन्नतयाऽल्पज्ञानस्यैवाधिकारिणो भवितुमर्हन्ति न तु पूर्णज्ञानस्य । ज्ञानानन्तराशिस्थितिस्तु केवलं तस्मिञ्जगदाधारे जगदात्मनि परमेश्वर एव भवितुमर्हति । अतो देशकालपरिच्छिन्नत्वात् आपेक्षिकत्वाच्च सर्वेऽपि देवा ऋषयस्तदवतारा वा अपूर्णज्ञानवन्त एव भवन्ति, केवलमीश्वर एव पूर्णज्ञानवान् भवतीति संक्षेपः ।

एतद्विज्ञानानुरूपं जगतोऽस्य सर्वेऽपि मन्त्रद्रष्टार ऋषयः सर्वेषां वेद-मन्त्राणां वक्तारो नैव भवितुमर्हन्ति । यो हि महर्षिर्यं मन्त्रं स्वसमाधिस्थे हृदि समुपलभते स तस्य द्रष्टेत्यवश्यं निगद्यते । एवमेको महर्षिरनेकेषां मन्त्राणां वक्ता भवितुमर्हति तथैकस्यैव मन्त्रस्य कालभेदेनानेकेऽपि ऋषयो द्रष्टारः सम्भवितुमर्हन्ति ।

शब्दब्रह्ममयो वेदो हि विशेषतोऽनन्तब्रह्माण्डे व्याप्तोऽनन्तकालस्थायी च गीयते । एकस्मिन् ब्रह्माण्डेऽथवैकत्र कल्पे यावन्तो वेदा आविर्भवन्ति ते सर्वेऽपि तस्य भगवतोऽनन्तस्वरूपस्य वेदस्यैकस्मादंशत एव भवन्ति । इत्यतोऽपि सिद्ध्यतीदम् यद् वेदानामानन्त्यादनन्तज्ञानाकरत्वाच्च नहि सर्वे महर्षयः सर्वेषां वेदानां वक्तारो भवितुमर्हन्ति ॥ १५६ ॥

इदानीमन्यप्रकारेणापि वेदमहिमानमालोचयति—

नैके देवताविनियोगाः शक्तेरानन्त्यात् ॥ १५७ ॥

शक्तेरानन्त्याद् अपरिमेयत्वात् देवताश्च विनियोगाश्च ते, न एके नैके अनेके इत्यर्थः, असंख्याता इति यावत् 'सुप्सुपेति पाणिनिसूत्रेणाऽत्र समासोऽतो न "न लोपो नञ्" इति न लोपः ।

ज्ञानसम्बन्धेन यथा वेदा अनन्तास्तथा शक्तिसम्बन्धतोऽपि तेऽनन्ता एव । यतो हि वेदानां परमेश्वरवाक्यत्वेन "अहं ममेतिवत्" ब्रह्मशक्तिस्वरूपत्वमेव । उक्तञ्च दैवीमीमांसादर्शने—

"अपौरुषेयत्वाद् भगवद्वाक्यं वेदः ।"
"स्वतः पूर्णोऽभ्रान्तो नित्यश्च" इति ॥

वेदस्य भगवच्छक्तिरूपत्वादनन्तशक्तिशालित्वं सुनिश्चितम्, अनन्तशक्तिशालित्वाच्च तस्यर्चामधिष्ठातृदेवतानां तद्विनियोगानाञ्चानेकत्वं सुतरां सुसम्पन्नम् ।

वेदमन्त्राश्चालौकिकशक्तिसम्पन्ना इत्यतः सर्वा अपि ऋचो मन्त्ररूपा एव। यतो ह्यलौकिकदैवसाम्राज्येन सम्बन्धभाजः शब्दसमूहा एव मन्त्रास्तेषामधिष्ठात्रीणां देवतानां विनियोगानाञ्चानेकत्वम्पूर्वमुक्तमेव ।

ये देवा यस्य मन्त्रस्य शक्तिं क्रियान्वितां कुर्वन्ति, ते हि तस्याधिष्ठातृदेवता निगद्यन्ते । ये च मन्त्रा यस्मिन्नर्थे विनियुज्यन्ते सोऽर्थविनियोग एव तेषां विनियोगशब्दार्थः । अघटनघटनापटीयस्या ब्रह्मणः शक्त्या वाङ्मनोऽतीतापारशक्तिशालित्वं सुनिश्चितमेवेति तस्यैव शब्दशक्तिरूपस्य वेदस्यर्चामप्यनन्तशक्तिशालित्वे को विरोधः ।

यथाऽनलस्यैकस्मिन्नपि स्फुलिङ्गे तस्य पूर्णा शक्तिर्निहिता तिष्ठति तथैव सर्वास्वपि वेदर्क्षु पूर्णैव वेदशक्तिरन्तर्निगूढा विद्यते ।

अपरञ्च वेदर्चां पूर्णशालित्वेनाधिदैवसम्बन्धतोऽधिष्ठातृदेवतानामनेकत्वं क्रियासम्बन्धतश्च विनियोगानामप्यनेकत्वं स्वभावसिद्धम् ॥ १५७ ॥

तत्र द्वितीयं प्रमाणमाह—

**तथा सर्वस्मृतिकर्तृत्वम् ॥ १५८ ॥**

सर्वासां स्मृतीनां कर्तारस्तेषां भावस्तत्त्वम्, तथा वेदवदेव ज्ञेयमित्यर्थः—स्मृतयोऽपि वेदवदेव प्रमाणम् कर्तृसामान्यात् इति यावत् । धर्माधर्मनिर्णये वेदस्य प्राधान्यं संसाध्येदानीं स्मृतीनामपि तथात्वं संसाधयति सूत्रकारः ।

देवलोकनिवासिनां नित्यर्षीणामवतारस्वरूपा हि महर्षयः यानपौरुषेयान् मन्त्रराशीन् समाधिसम्पन्ने स्वान्तःकरणे पश्यन्ति, त एव वेदशब्देनोच्यन्ते कियत् समयानन्तरं तेषामेव वेदमन्त्राणां भावार्थमनुस्मृत्य स्वभाषया जगदुपकृतये यानि धर्मवाक्यानि निबध्नन्ति तान्येव स्मृतयोऽभिधीयन्ते । इत्यत इदमङ्गीकरणीयमापतति यद्यथावेदं स्मृतीनामपि कर्तृमत्त्वम्, तदनन्तरञ्च तासामेव प्रामाण्यमपीति ॥ १५८ ॥

अधुना श्रुतिस्मृतिविरोधे कर्तव्यमादिशति—

**श्रुति र्गरीयसी स्मृत्या विरोधे ॥ १५९ ॥**

श्रुतयो विभिन्नाः स्मृतयोऽपि बहुशो विभक्ताः अतो धर्माऽधर्मनिर्णये उभयोर्विरुद्धवचनोपलब्धिः सम्भाव्यते—

यथा—कस्यचन सिद्धान्तस्य निर्णये श्रुतिरन्यथा ब्रूते स्मृतिश्च श्रुतिविरुद्धमिव सिद्धान्तं समर्थयति, ईदृशि व्यतिकरे पूर्वस्याः प्रबलायाः श्रुतेरेव निर्णयोऽभ्युपेतव्यो भवति न स्मृतेर्दुर्बलायाः।

श्रुतिर्हि साक्षाद्भगवद्वाक्यस्वरूपा योगयुक्तानां महर्षीणामन्तःकरणे तद्रूपैव प्रतिफलिता, स्मृतयश्च तदर्थानुसारिण्यो महर्षिभिः स्वशब्दैर्निर्मिता इत्येवं निश्चये सति विरोधावस्थायां भगवतः साक्षाद्वाक्यस्य प्राधान्यप्रदानं सर्वथोचितम्, न्याय्यं, विज्ञानानुकूलमेव। श्रुतिस्मृतिषु बहुशोऽयम्भावः प्रपञ्चितोऽस्ति। तथा हि—"तस्य ब्रह्मणो निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वा इतिहासः पुराणमिति" श्रुतिः।

"विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्"

श्रुति-स्मृति-पुराणेषु विरोधो यत्र दृश्यते।

तत्र श्रौतं प्रमाणन्तु तयोर्द्वैधे स्मृतिर्वरा ॥ १५९ ॥ इति स्मृतिः।

सम्प्रति धर्मशास्त्रार्थशास्त्रयोर्द्वैधे कस्याऽभ्यर्हितत्वमित्याह—

**धर्मशासनमर्थशासनेन ॥ १६० ॥**

क्वचन धर्माधर्मयोः कर्तव्याऽकर्तव्ययोर्वा निर्णयवेलायां स्मृतिरूपधर्मशास्त्रेण तदतिरिक्तेन च महर्षिप्रणीतेनवाऽर्थशास्त्रेण विरोध आपतेच्चेत्तदा स्मृतिरूपस्य धर्मशास्त्रस्यैवाभ्यर्हितत्वमूहनीयम्। न तु तदतिरिक्तस्य महर्षिप्रणीतस्याप्यर्थशास्त्रस्येति निश्चप्रचम्।

यतो हि स्मृतिप्रभृतयो धर्मग्रन्था वेदस्य साक्षात्सम्बन्धवन्तः तदर्थानुसन्धानपुरःसरा एव महर्षिभिर्निर्मीयन्ते। अर्थशास्त्राणि तु लौकिकाभ्युदयनिमित्तानि लौकिकदृष्ट्यैव तैरपि प्रणीयन्ते। इत्यतो धर्माधर्मकर्तव्यादिनिर्णयावसरे धर्मशास्त्रार्थशास्त्रयोः परस्परसिद्धान्तभेदेन तयोर्विरोधे प्रतीयमाने धर्मशास्त्रस्य प्राबल्यात्तदनुसारतः कर्तव्यनिर्णय एव स्वभावसिद्धः साधीयांश्च। उक्तञ्च स्मृतिशास्त्रे—

"अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्मृतिः ॥ १६० ॥

अन्यथाख्यातप्रमाणं निर्णयति—

सर्वविदेकोऽपि पूर्णज्ञानवत्त्वे ॥ १६१ ॥

सन्तीह त्रिविधानि खलु प्रमाणानि प्रत्यक्षानुमानाप्तवचनानि । यथा तत्र वारिवाहा दूरविलम्बिनो वर्षन्ति साम्प्रतमिति चक्षुरिन्द्रियगोचरत्वात्प्रत्यक्षम् । जलप्लावितायां धरायां व्योम्नश्च निर्मलत्वे पूर्वं वृष्टिरिहाभूदिति यदनुमीयते तदनुमानम् । आकाशोऽपि स्वच्छः स्यात्पृथिव्यामपि वृष्टिचिह्नं न किमपि समुपलभ्येत, तत्र यदि कश्चनाप्तोऽभिदध्याद्यदमुत्र देशे पूर्वं सुवृष्टिरभूदिति तदाप्तवचः प्रमाणमभिधीयते । इत्येवं त्रिविधेष्वप्येतेषु परस्परभेदभिन्नत्वात्सर्वेषामप्यनेकत्वं सिध्यति । किन्तु विस्तारशङ्कयाप्तवचस एव द्वैविध्यं दर्शयित्वा विरम्यते प्रकरणात् । तथा हि वेदशास्त्ररूपमेकमाप्तप्रमाणं द्वितीयश्चाप्तपुरुषस्य वचनरूपम् । आप्तलक्षणञ्च—

'अनुभवेन वस्तुतत्त्वस्य कार्त्स्न्यतो यथार्थज्ञानवान् रागादिवशादपि नान्यथावादी यः स आप्त इति पतञ्जलिः ।

धर्मस्वरूपस्य वैचित्र्यात्तदुदर्कस्य चादृश्यत्वाद्धर्मनिर्णये प्रत्यक्षानुमाने न प्रभवत इत्यत एवोक्तम् शास्त्रे—

"धर्मस्य तत्त्वं निहितं गुहायाम्"

"अर्थकामेष्वसक्तानां धर्मज्ञानं विधीयते ।
धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ।

इत्यनेन धर्माधर्मनिर्णये तृतीयस्याप्तवचस एव प्रामाण्यं सुतरामवलम्बनीयमिति सिध्यति ।

सूत्रकृद्धि द्वयोराप्तवचसोर्मध्ये प्रथमस्याभिधानं पूर्वसूत्रैर्विधायेदानीं द्वितीयश्रेणीगस्याप्तवचसः प्रामाण्यनिर्णयार्थमिदं सूत्रमवतारयति—

एकोऽपि सप्तदर्शनज्ञानाम्बुधिसमुत्तीर्णो ज्ञानस्य सप्तमीं भूमिमारूढा तत्त्वज्ञानस्य पूर्णतामधिगतो महापुरुषो धर्माधर्मनिर्णायकानां सर्वेषामेव रहस्यानामवगन्ता भवितुमर्हति ।

समष्टिव्यष्टिस्वरूपेण एकस्य ब्रह्माण्डस्य तदन्तर्गतानां पिण्डानाञ्चैकत्वं सुसिद्धमेव । इत्यत एकस्मिन् ब्रह्माण्डे यदि कश्चन महापुरुषः सप्तानामपि ज्ञानभूमीनामधिकारं यथाक्रमं पूर्णतयाऽधिकृत्य स्वस्वरूपोपलब्धिसम्पन्नः स्यात्तदा स स्वब्रह्माण्डस्य सर्वमपि ज्ञानराशिमवगाहितुं समर्थः । तत्त्वज्ञानपूर्णतया च मलविक्षेपावरणादीन् समूलकाषं कषित्वा स्वान्तःकरणीयस्वच्छज्ञानापवारकान्

सर्वानेवान्तरायानपहन्ति । तदनन्तरम् स्वप्रज्ञायाः पूर्णज्ञानसम्पन्नतया स स्वेच्छासंयमाभ्यां सर्वमपि सामान्यतो ज्ञातुम् विशेषतो वेत्तुंश्च समर्थो भवतीति निर्विवादम् ॥ १६१ ॥

अधुनाप्तपुरुषमाहात्म्यमभिधत्ते—

तज्ज्ञोऽपि तद्वत्प्रमाणम् ॥ १६२ ॥

स्वस्थितिकाले प्राकट्यमधिगतानां वेदानां ज्ञातारो महापुरुषा ऋतम्भराप्रज्ञामधिगतवन्तो भवन्तीति तेषां तत्त्वज्ञानिनां जीवन्मुक्तानां महात्मनां सिद्धान्ता अपि वेदवदेवावश्यमादरणीया भवन्तीति किं चित्रम्।

अस्मादेव हेतोः स्मृतयोऽपि वेदतुल्या एव गण्यन्ते । यतो हि ता अपि तु तेषामेव महर्षीणां वचनस्वरूपा इति ।

तत्त्वज्ञानपूर्णहृदयानां जीवन्मुक्तानां महर्षीणामन्तःकरणानि चित्ताकाशेन चिदाकाशेन महाकाशेन च त्रिभिरपि साम्यमेत्य स्फारतामुपेत्य नन्दन्ति मलविक्षेपावरणाद्यभावादित्युक्तं प्रागेव ।

एतस्यामसाधारण्यामलौकिकस्थितौ देवपितृषीणां का कथा, ब्रह्माण्डनायकानां ब्रह्म-विष्णुमहेशानां त्रयाणामप्यन्तःकरणैः सह तेषामन्तःकरणानि सङ्गत्यैक्यमधिगत्य सर्वज्ञानावबोधक्षमाण्युद्घाटितसर्वदिग्द्वाराणि जायन्ते इत्यसन्दिग्धम् । अत ईदृशानां महामहिमशालिनां पुरुषाणां वचनानि वेदकल्पानि प्रमाणान्येवेति नाणीयानपि सन्देहः ॥ १६२ ॥

प्रसङ्गतो वैदिकविज्ञानस्य सर्वाभ्यर्हितं माहात्म्यं ब्रूते—

वैदिकविज्ञानमलौकिकम् ॥१६३॥

वेदातिरिक्तस्याप्तप्रमाणस्य वर्णनं यत्पूर्वमुपक्रान्तम्, तद्धि सर्वमेव लौकिकशब्दसम्बन्धभाक् । स्मृतिप्रभृतिशास्त्राणि सर्वाण्यपि लौकिकशब्दमयान्येवाविर्भवन्ति। यतो हि महर्षयः तेषां धर्मशास्त्राणामलौकिकभावमधिगत्यापि स्वलौकिकशब्दैरेव तानि जगति प्रकटयन्ति ।

अपरञ्च—आप्ता महात्मानः स्वान्तःकरणानि सर्वदैवालौकिकभगवद्राज्येन सम्बन्धभाञ्जि स्थापयन्ति, परन्तु उपदेशदानक्षणे च स्वालौकिकशब्दानेव प्रयुञ्जन्ति । वेदे तु नेयं व्यवस्था । तस्य तु सर्वोपरि माहात्म्यमिदमस्ति यत् भगवद्वाक्यमयो हि सोऽपौरुषेय इति तच्छब्दरूपेणैव महर्षीणां समाधिस्थेऽन्तःकरणे प्रकाशते । तत्र वेदर्चां शब्देषु मन्त्रद्रष्टॄणाम् ऋषीणां स्वशब्दोपन्यासस्यात्रसरः सम्बन्धो वा नैवोपलभ्यते । एतावता सन्दर्भेणेदं साधु समर्थितं भवति यद्वेदशब्दा अलौकिका अलौकिकत्वाच्च तेषामलौकिकभावमयत्वमपि स्वभावसिद्धमेव ।

वैदिकं विज्ञानञ्चाष्टप्रकृतिपूर्णमिति पूर्वमेवोदीरितम् । इत्थं वैदिकविज्ञानस्या-लौकिकत्वे नास्ति कियानपि सन्देहावसरः ॥ १६३ ॥

तन्महिमानमेव द्रढयति—

तदनुशासनम्प्रभुसम्मितं प्रभुसम्मितम् ॥ १६४ ॥

धर्माऽधर्मनिर्णये वेदाज्ञायो गौरवं सर्वाभ्यर्हितं महत्त्वञ्च प्रतिपादयितुं सूत्र-कृन्महर्षिः प्रतिपादयति-यत् वेदानुशासनं वेदाज्ञा प्रभो राज्ञ आज्ञावदवश्यं स्वीक-रणीयं भवति । स्मृतिप्रभृतिशास्त्रीयवाक्येषु दार्शनिकयुक्तिप्रत्युक्तीनामप्यवसरो वरीवर्ति । महाजनानामाज्ञावाक्यैः सह शङ्कासमाधानानामप्यवकाशो भवति परन्तु वेदवाक्यानामपौरुषेयत्वान्नित्यत्वाद्भ्रमप्रमादालस्यविप्रलिप्सादिपुरुष-दोषशून्यत्वात्तदीयाज्ञाविषये नास्ति शङ्कासमाधानावसर इत्यवश्यमभ्युपेत-व्यम् । प्राक् प्रतिपादितविज्ञानमेवास्य सिद्धान्तस्य सुदृढं परिपोषकम् ।

इत्येवमष्टशक्तिसम्पन्नस्याभ्रान्तस्य सिद्धान्त-स्वरूप-साक्षाद्भगवद्वाक्य-मयस्य वेदस्य धर्म्माधर्मविषयिणी निर्णायिका आज्ञा प्रभुसम्मितैव भविष्यतीत्यत्र न कोऽपि विचिकित्साऽवसरः । अत्र प्रभुसम्मितशब्दस्य पुनरुक्तिः पादसमाप्त्या सह विषयदार्ढ्यप्रतिपत्तये विज्ञेया ।

सूत्रस्यास्य विषयो बहुधा श्रुतिस्मृतिभिः समर्थितः समुपलभ्यते—

तथा हि—

अनादि निधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
आदौ वेदमयी नित्या यतः सर्वाः प्रवृत्तयः ।
स्वयम्भुरेष भगवान् वेदो गीतस्त्वया पुरा,
शिवादिऋषिपर्य्यन्ता द्रष्टारो नात्र कारकाः ।
अस्य वेदस्य सर्वज्ञः कल्पादौ परमेश्वरः,
व्यञ्जकः केवलं विप्रा नैव कर्ता न संशयः ॥
युगान्तेऽन्तर्हितान् वेदान् सेतिहासान्महर्षयः,
लेभिरे तपसा पूर्वमनुज्ञाता स्वयम्भुवा ॥
पुराणं मानवो धर्मो वेदाश्चत्वार एव च,
आज्ञासिद्धानि चैतानि न हन्तव्यानि हेतुभिः, ॥१६४॥

इति श्रीकर्ममीमांसादर्शनभाष्ये धर्माभिधः प्रथमः पादः समाप्तः ।

# कर्ममीमांसादर्शनम् ।

## संस्कार-पादः ।

आद्ये पादे साङ्गोपाङ्गस्य धर्मस्य विवेचनं विहितवान्महर्षिः सूत्रकारः। इदानीञ्च धर्मस्य सर्वथा कर्माधीनत्वात् कर्मणश्च बीजवृक्षसम्बन्धवत् संस्कारेण सह सम्बन्धभागित्वात् कर्मणो बीजात्मकस्य संस्कारस्य विस्तृतवर्णनं चिकीर्षुर्द्वितीयं पादमारभते—

**कर्मबीजं संस्कारः ॥ १ ॥**

कर्मणो बीजं संस्कार उच्यत इति सूत्रार्थः। बीजाङ्कुरन्यायानुकूलकर्मणो बीजं संस्कार इति स्मृतयोऽपि प्रतिपादयन्ति—

"बीजञ्च कर्मणो ज्ञेयं संस्कारो नात्र संशयः" इति ।

यथा हि बीजाद्वृक्षो वृक्षाद्बीजमिति बीजवृक्षपरम्परया सृष्टिचक्रं प्रचलति, तथैव सृष्टिक्रियायां कर्मणा सह संस्कारस्य सम्बन्धः ।

यथा च कृषिसम्पत्त्यनन्तरं भविष्यत्कृषिसमृद्धये तत्कृषिसमुत्पन्नबीजानि सञ्चीयन्ते। एवमेव जीवानां स्वोपार्जितकर्मणो बीजात्मकः संस्कारसमूहः कर्माशयापरपर्य्यायः चिदाकाशे सञ्चितस्तिष्ठति। ततश्च यथा कृषिव्यापारे बीजेभ्योऽङ्कुरोत्पत्तये धान्यादीनां परिष्कृतायां भूमौ वपनं क्रियते, ततश्चाङ्कुरोत्पत्तिरपि सञ्जायते, तथैव सोऽपि प्रारब्धोत्पादकः संस्कारसमूहः परिणामकालेऽङ्कुरोद्भेदाय जीवानां चित्ताकाशे संगृह्यते, स च बीजवदेवाङ्कुरितः सन् क्रियाशीलतामासादयति ॥ १ ॥

अधुना तस्य प्रादुर्भावभूमिं विविनक्ति—

**ग्रन्थौ तत्प्रादुर्भावः पिण्डवत् ॥ २ ॥**

प्रकृतिर्हि स्वभावत एव परिणामिनीति तस्यास्तरङ्गशालित्वं सर्वदैव सुसम्पन्नम्। एवञ्च तरङ्गायमानायास्तस्यास्तरङ्गो यदा तमोगुणात् सत्त्वाभिमुखः प्रसर्पति तदैव तमसि सत्त्वोद्रेकवेलायामेव चिज्जडग्रन्थिरुत्पद्यते । इयमेव

जीवसृष्टेः पिण्डसृष्टेर्वोत्पत्तिनिदानम् । अस्यामेव चिज्जड़ग्रन्थौ स्वाभाविकतयैव भवति संस्कारोद्गमः।

स्मृतावप्युदीरितोऽयं विषयः—

मम प्रभावतो देवाः ! व्यष्टिसृष्टिसमुद्भवे,
चिज्जडग्रन्थि सम्बन्धाज्जीवभावः प्रकाशते ।
स्थानं तदेव संस्कारसमुत्पत्तेर्विदुर्बुधाः ॥

संसारोऽयं चिज्जडस्वरूपाभ्यां द्वाभ्यामेव वस्तुभ्यां परिव्याप्तः । तत्र हि प्रकृति जड़ात्मिका पुरुषश्चेतनात्मकः, तौ हि परस्परं संपरिष्वक्तौ । तत्र चिन्मये पुरुषे परिणामाभावः, जड़ात्मिकायां हि प्रकृतौ त्रिगुणात्मिकतया स्वभावत एव परिणामो दृश्यते—

स च परिणामो जाड्याच्चैतन्याभिमुखश्चैतन्याच्च जाड्याभिमुखो भवति । अन्यथापीदं वैज्ञानिकं रहस्यं विव्रियते—

तथाहि—संसारमहासागरस्यैकं तटं पूर्णजडात्मकं परमाण्वादिसत्तात्मकं, द्वितीयं तटञ्च चिन्मयं स्वस्वरूपमिति । यदा हि परिणतितरङ्गश्चिन्मयतटात्परिवर्तमानो जाड्याभिमुखो भवति, तदा जीवा इन्द्रियपरायणा भूत्वा बन्धनपाशे पतिता गमनागमनचक्रे बम्भ्रम्यन्ते । अयमेव परिणामो मनुष्यादि-जीवानां जीवत्वस्थितिनिदानम् ।

अयं प्रकृतेः परिणामः पूर्णजडमयपरमाण्वादेः परावर्तते; अर्थात् स्वभावादेव परिणामिनी प्रकृतिः किल तमःसंश्लिष्टपूर्णजडावस्थातः सत्त्वगुणाभिमुख्यं प्रवहति । यतो हि रजोगुणेन हेतुना परतः अन्यत्र, अन्यत परत्र प्रकृतेः परिणामो बोभूयते । तत्रानयोः परिणामयोर्जाड्याच्चैतन्याभिमुखः परिणाम एव स्वाभाविको जीवसृष्टेर्निदानम् ।

तथाहि—घोरतमे तमोरूपे जाड्ये रजोगुणसाहाय्येन यदा प्रथमः परिणामो भवति, तदैव सत्त्वगुणमयचित्सत्ताविकासस्य अणीयस्यप्यवसरे प्राप्ते चिज्जडात्मिका या ग्रन्थि र्बध्यते, सैव जीवानां जीवत्व-सम्पादिका ।

जीवपिण्डेऽपि चेतनो जीवात्मा स्वात्मानं जडशरीररूपं मन्यते, वस्तुतस्तत्रापि शरीरशरीरिणो र्ग्रन्थिर्भवति । कारणे यथा चिज्जडयोर्ग्रन्थिर्भवति तथैव पिण्डात्मके कार्य्येऽपि चिज्जडात्मिका ग्रन्थिराबध्यते ।

विज्ञानेनानेनेदं सिध्यति यत् पिण्डवत् कारणावस्थायां जीवभावोद्भवकरी या प्राथमिकी चिज्जडात्मिका ग्रन्थिराविर्भवति, तत्रैव संस्कारस्यापि प्राथमिकी सृष्टिर्भवति । प्रथमचिज्जडग्रन्थिबन्धनवेलायामेवावश्यकीयानां

# सूर्योदयः ।

( विविधविषयविभूषितं संस्कृतमासिकपत्रम् )

षष्ठे वर्षे } माघस्य पूर्णिमा सं० १९८७ । { अष्टम संख्या

## सम्पादकीया अभिप्रायाः ।

### परमात्मचरणयोरभ्यर्थनम् ।

सनातनधर्मावलम्बिनो दैवमपि जगन्मन्यन्ते, तस्य प्राधान्यं च स्वीकुर्वन्ति। या काचन जाति र्व्यक्तिर्वा दैवं लोकं विश्वसिति परमेश्वरं वा प्रणमति, तया नूनं भागवती कृपा सुतरामधिगम्यते। तदभ्युदये च दैवं जगत् सातिशयं साहाय्यमादधातीति सनातनधर्माणो मन्यन्ते। भारते वर्षेऽत्र माहम्मद-साम्राज्य-संस्थापनात् पूर्वं तत्तद्धर्मसम्प्रदायानां पारस्परिकवैमत्यानैक्यतो धर्मभूमिरियं मालिन्यमुपगताऽऽसीत्। तदेव मालिन्यमुन्मूलयितुम्, धर्म-सम्प्रदाय-विद्वेषं विदूषयितुम्, स्वधर्म-प्रेम शिक्षयितुम्, तदर्थं कठिनतरं तपः कारयितुं च माहम्मदं राज्यमत्र संस्थापितमभवत्। तदनन्तरं ब्रिटिश-साम्राज्य-संस्थापनमपि तदर्थमेवेति न कोऽपि संशयः। विषयेऽत्र दैवी प्रेरणैव प्रधान-निदानभूतेति मन्यामहे। साम्प्रतमपि दैवदयैव भारतवर्षवासिनः स्वजातिप्रेम, भारतव्यापि संघटनम्, स्वदेशसम्बन्धतश्च पारस्परिकमैक्यम्, राजनीतिक-श्रृङ्खलादिकं यथासम्भवमधिगन्तुं प्रभवन्ति। अतः सनातनधर्मावलम्बिभिः, क्रान्तिं दूरीकृत्य क्रमाभिव्यक्तिमाश्रयद्भिः भगवद्भक्तैः दैवराज्यस्य च साहाय्ये विश्वासं विदधद्भि भारतसम्राट्-प्रवर्त्तित-राज्यश्रृङ्खलामनुसृत्य स्वीयायां धार्मिक-सामाजिक-राजनीतिक-क्रमोन्नतौ तत्परै भवितव्यम्, नवीनयैतया भारतवर्षव्यापिन्या संयुक्तशासनयोजनया निजोपकारो विधेयः। श्रृङ्खलेयं भारतव्यापिका सुदृढा च कर्त्तव्या। पूर्वमसावप्राप्याऽऽसीत्, भविष्यति सुगमा भविष्यतीत्यनुमीयते। इदमपि सुस्थिरं विभावनीयम्, यत्-माननीय-भारतसम्राट्-प्रतिनिधि-प्रतिज्ञानुरूपं भविष्यति प्रवर्त्तमाना भारतीय-

शासनपद्धतिः सनातने धर्मे, तस्य शास्त्रीयसंस्कारादिषु च हस्तक्षेपं न कुर्यात् न वा कारयेत्, स्व-स्व-धर्मशिक्षाविधाने च सर्वेषां सौकर्यं समनुतिष्ठेत्। भारतं हि धर्मक्षेत्रम्, सनातनधर्माणश्च धर्मप्राणाः। सर्वैरेवात्र सावधानै र्भवितव्यम्। किं बहुना, आराज-प्रजं सर्वेभ्य एव सर्वान्तर्यामी सुबुद्धिं वितरतु, येन धर्मरक्षा भवेदित्येव परमात्मचरणयोरभ्यर्थनम्।

---

## श्रीविश्वनाथं प्रार्थयामहे।

सूर्योदयस्य वर्त्तमानायामेव संख्यायां समुदिताद् आरास्थ-संस्कृतमहाविद्यालय-प्रधानाध्यापकस्य श्रीमतः पण्डितरामसकलशर्मोपाध्यायमहोदयस्य 'शोक समितौ प्रस्तावतः' पाठका ज्ञास्यन्ति यत् पण्डितप्रवराणां महामहोपाध्यायानां श्रीरघुनन्दनत्रिपाठिमहोदयानां काश्यामत्र माघशुक्लपञ्चम्यां (सं० १९८७) शिवलोकप्रयाणमभूदिति। वयमत्रत्याः काशीस्थाः संस्कृतसरस्वतीसेवकाः पण्डिता अपि स्वीयसहायकानां त्रिपाठिमहाभागानां वियोगेन निरतिशयं सन्तापमनुभवामः। महानुभावा एते, अवस्थीपदभाजः श्रीविश्वेश्वरप्रसादशर्माणः, श्रीमदम्बिकादत्तव्यासाश्चैते त्रयोऽपि विहारोत्कलसंस्कृतसञ्जीवन्याः प्राणभूता आसन्निति कुत्रचन पाक्षिकसूर्योदयाङ्के समुदितं दृष्टचरमेव भवेत् पाठकमहोदयानाम्। त्रिमूर्त्तिषु त्रिपाठिनः सर्वतो ज्यायांसो वर्षीयांसश्चाभूवन्, एतत्प्रयत्नपरिणामभूतैव साम्प्रतिकी विहारोत्कलसंस्कृतसमितिरिति बहवो मन्यन्ते। आराविद्वत्समितेः सभापतिपदमङ्गीकृत्य तदीयकार्यकलापान् परिचालितवन्तस्त्रिपाठिमहाभागा इति नापरोक्षं प्रेक्षावताम्। अन्येषु अपि बहुविधेषु संस्थानेषु विशिष्टः सम्बन्धः सहयोगश्चासीदेतेषाम्। वृद्धावस्थायामपि काशीं सेवमाना अमी वाराणसेयं संस्कृतसाहित्यसमाजं, तदनु संस्कृतसाहित्यसम्मेलनं तन्मुखपत्रं सुप्रभातं च कथमिवोपकृतवन्त इति तत्सञ्चालका न कदापि विस्मर्तुं पारयिष्यन्ति। संस्कृत-सरस्वती-सेवासम्पादनकार्यजातेषु वृद्धा अप्येते तरुणायन्ते स्मेति मामकीनोऽनुभवः। हन्त रे काल! नूनं करालोऽसि क्रूरोऽसि निर्दयोऽसि यदीदृशान् अपि महोपकारनिरतान् कवलीकरोषि! सम्प्रति विषण्णमनसः काशीस्था वयं तदीयपरिवारसन्निधाने समवेदनामावेदयन्तस्तेषां शिवसायुज्यप्राप्तिकामनया काशीपुरपतिं भगवन्तं श्रीविश्वनाथं प्रार्थयामहे।

---

## शोकसन्ततिः।

"एकस्य दुःखस्य न यावदन्तं, गच्छाम्यहं पारमिवार्णवस्य।
तावद् द्वितीयं समुपस्थितं, मे छिद्रेष्वनर्था बहुलीभवन्ति॥"

विदितचरमेव समाचारपत्रपाठकानां यत् फरवरीमासस्य षष्ठ्यां तिथौ प्रातःकाले लक्ष्मणपुरे त्यागमूर्त्तेः पण्डितमोतीलालनेहरूमहोदयस्य गोलोकगमनमभूदिति। नेहरूमहोदयस्य वियोगेन संकटमये समयेऽत्र सम्पद्यमानाया भारतराजनीतिकहानेः पूर्त्तिः सुतरां दुश्शकैव। महाभाग एष आङ्गलराजनीतेः आङ्गलविधानानां च असाधारणो मर्मज्ञपण्डित आसीत्। बहुषु विषयेषु मामकीने सत्यपि मतभेदप्राबल्ये तस्य स्वदेशभक्तिः, तामुद्दिश्य त्यागश्चेति द्वितयी मत्प्रशंसनमतिशेते। परमात्मा तदात्मनो मङ्गलं विदधातु।

---

## नातिचिरमेव प्रारप्स्यते।

अखिलभारतवर्षीयसंस्कृतविश्वविद्यालयस्य कृते उदयपुर-दरभंगा-विजयपुर-राज्यै र्यादृशी सहायता प्रदत्ता सहयोगिता वा प्रदर्शिता, तत्संवाद-श्चास्माभिः सूर्योदयगताङ्केषु प्रकाशितः। स च पाठकमहाभागैरधीत एव भवेत्। सम्प्रति ते वृत्तान्तमिममाकर्ण्य निरतिशयां प्रीतिमाप्स्यन्ति यद् भूमि-संग्रहद्वारा धर्मशिक्षाविस्तारस्य छात्रवृत्तिप्रदानस्य च हेतवे यत् नूतनमायोजन-मारब्धमास्ते; तत्र राजस्थानस्य मालवप्रदेशस्य च कतिपये नरपतयः सदुत्साह-जनकमभिवचनं समुदैरयन्। आर्यनारीषु धार्मिकशिक्षणप्रसारणाय एकेन नरपतिना स्वीये राज्ये सुदृढं सुव्यवस्थितस्य लाटरीनामकस्य विधेयस्य विधानाय निजो निदेशो विहितः। तत्सम्बन्धी कार्यकलापो नातिचिरमेव प्रारप्स्यते।

---

## क्षत्रियनरपतिभिरनुकरणीयम्।

श्रीभारतधर्ममहामण्डलस्य प्रारब्धं नूतनं सदुद्योगमनुसृत्य यथासम्भवं प्रतिनगरं प्रतिराजधानि च न्यूनतोऽपि न्यूनौ सहायकौ द्वौ सभ्यौ नियोक्तव्यौ, येन संस्कारसदाचारहीनेषु द्विजातिशब्दवाच्येषु ब्राह्मण-क्षत्रिय-वैश्येषु व्रात्य-संस्काराणां सदाचाराणां च प्रचारः, धर्मशिक्षायाश्च विस्तारः स्यात्। महा-मण्डलस्य नवीनयाऽनया शृङ्खलया स्थाने स्थाने सहायकसभ्यनियुक्त्या सुप्र-बन्धा विधीयन्ते। श्री १०८ मतां स्वामिमहाराजानां युक्तप्रान्तस्य, मालव-

प्रदेशस्य च बहुषु राज्येषु, राजस्थानस्य बाँसवाड़ा-राज्ये च परिभ्रमणमभूत्। अत्रत्यो नरपतिः सदाचारपरायणः, सुशीलः, स्वधर्मानुरागी धर्मात्मा च। एतेन सादरं कार्यप्रणाल्यामस्यां साधीयसी सहानुभूतिः प्रकटीकृता। स्वामिचरणानां निदेशेन तेन श्रीमहामण्डले क्षत्रियमहासभायां च पूर्णरीत्या सहयोगदानस्याभिवचनं प्रदत्तम्। सदाचरणमिदमेतदीयं नूनमन्यैः क्षत्रियनरपतिभिरनुकरणीयमिति।

---

## तीर्थनिन्दानिवारणोद्योगः।

अमेरिका-यूरोपादिमहादेशतः सहस्रश एव विद्वांसो धनशालिन सज्जनाश्च प्राकृतिकसौन्दर्यदिदृक्षया स्वीयपरिज्ञानविवर्द्धयिषया च भारतं नाम वर्षं प्रतिवर्षं समायान्ति। बम्भ्रम्यमाणास्ते वाराणसीमगत्वा न विरमन्ति। परं हि चेखिद्यते मानसं यत् ते हिन्दूनां हिन्दुतीर्थानां च सम्बन्धे कुसंस्कारमादाय परावर्त्तन्ते! वृत्तान्तोऽयं बहूनां विदुषां संस्थानां च सम्मत्या समधिगम्यते। एतेन हि स्वीयजातेस्तीर्थस्थानानां च नितान्तं दुर्नाम प्रसरति, पथिकानां च वास्तविकपरिज्ञानालाभेन महीयसी क्षतिराविरेति। निष्कारणं बोभूयमानयो र्निन्दा-क्षत्योरनयो र्निवारणाय श्रीभारतधर्ममहामण्डलेन "वाराणसी-प्रदर्शकं ( Benares Guide ) नाम पुस्तकम् आङ्गलभाषया प्रकटीकृतम्। दिदृक्षुभि र्जिघृक्षुभिश्च "भारतधर्म सिण्डिकेट, लिमिटेड बनारस" इति संकेतेन पत्राणि प्रहेलिमानि। अन्यच्च। वाराणसीसंरक्षणविभागं ( पुलिस ) द्वारीकृत्य वैदेशिकानां पथिकानां कृते ये प्रदर्शकाः ( Guide ) नियुज्यन्ते, तेषां सुव्यवस्थाविधानार्थं च श्रीमहामण्डलेन सुप्रबन्धो विहित इति द्वयमपि सातिशयं प्रमोदस्थानमस्माकम्।

---

## गङ्गा।

मासिकी हिन्दीभाषापत्रिकेयं "कृष्णगढ़, सुलतानगञ्ज, भागलपुर" इति संकेततः प्रचरति। मूल्यमस्या वार्षिकं मुद्रापञ्चकम्। एतदीयं संख्यात्रयं मयाऽधिगतम्। सम्पादनशैली सुतरां प्रशंसनीया। तत्रत्याः प्रबन्धाश्च पाठकानां ज्ञानविवर्धका हिताधायकाश्च। विहारप्रान्ते रोरुद्यमानाया राष्ट्रभाषाया जनन्या अश्रूणि पत्रिकेयं मार्ज्जयिष्यतीति बलवान् विश्वासोऽस्माकम्। सनातनं धर्ममार्गं सुचिरमनुसरन्तीयं गङ्गा निजभक्तानां त्रिविधां शुद्धिं विदध्यादित्याशास्महे।

---

# सूर्योदयस्य क्रोड़पत्रम्।

## हिन्दीमें अपूर्व चीज़।

# श्रीमहामण्डल डाइरेक्टरी

मान्यवर महाशय !

१—प्रसन्नताके साथ सूचित किया जाता है कि, सम्वत १९८८ को श्रीमहा॰मण्डल डाइरेक्टरी प्रकाशित हो गयी है। इस वर्ष इसमें अनेक नवीन तथा उपयुक्त विषयोंका समावेश किये जानेसे प्रत्येक गृहस्थके लिये यह संग्रह करने योग्य हुई है। सब मिलाकर इसके १५ खण्ड हैं। उनके नाम यथा—

१—प्रस्तावना, २—धर्मखण्ड, ३—आयुर्वेदखण्ड, ४—नियम खण्ड, ५—ज्योतिष खण्ड, ६—संस्कृत खण्ड, ७—भारतयात्रा खण्ड, ८—राज खण्ड, ९—हिन्दी-साहित्य खण्ड, १०—कला खण्ड, ११—व्यापारखण्ड, १२—महामण्डल खण्ड, १३—संस्था खण्ड, १४—व्यवहार खण्ड १५—पंचांग खण्ड।

पृष्ठसंख्या ५०० से अधिक है। फिर भी मूल्य केवल ॥।) रक्खा गया है। डाकखर्च ।=) पृथक् है। जिल्द बँधे राजसंस्करणका मूल्य १।) डाक खर्च पृथक्।

२—यह निवेदन पत्र श्रीमहामण्डलके संरक्षक, मेम्बर आदि तथा श्रीमहामण्डलडाइरेक्टरीके पुराने ग्राहकोंकी सेवामें भेजा जाता है। डाइरेक्टरकी मांग अधिक है। अतः जिनको डाइरेक्टरी मंगाने की इच्छा हो, कृपा पूर्वक इस निवेदनपत्रके पातेही जितनी प्रतियां चाहें उतनी भेजनेकी आज्ञा लिख अनुगृही करें।

३—समाजहितकारी कोष से सम्बन्ध रखनेवाले मेम्बरों और श्रीभारत-धर्ममहामण्डलके साधारण सभ्योंका गत सालका चन्दा, अथवा जिनके पास जो चन्दा बाकी है, वह आ जानेपर डाइरेक्टरी बिना मूल्य भेजी जायगी अथवा लिखने पर वी॰ पी॰ से भी भेजी जा सकेगी। कृपया आर्डर शीघ्र भेजनेकी कृपा करें।

निवेदक—

मैनेजर-डाइरेक्टरी विभाग,

श्रीमहामण्डल भवन

जगत्गञ्ज बनारस।

# संस्कृत-विश्वविद्यालयान्तर्गतायुर्वेद-सम्मिलन्याः—

## परीक्षा ।

अस्मिन् खीस्ताब्दीय १९३१ ईस्वीये अप्रेलमासस्य ३-४-५-६, दिवसेषु दिनचतुष्टय यावद् अखिलभारतवर्षीय-संस्कृतविश्वविद्यालयान्तर्गतायुर्वेद-सम्मिलन्याः परीक्षा, गृहीता भविष्यन्ति । परीक्षार्थिभिः सौर फाल्गुनमासस्य त्रिंशद्दिवसादर्वागेव केन्द्रीय सम्पादकसमीपे सशुल्कमावेदनपत्रं प्रेषणीयम् । अन्यथा तु आवमध्योरर्द्धमुद्रा उपाधिपरीक्षायाश्चैकमुद्राऽधिक-प्रदानेन परीक्षा पूर्वदिवसपर्यन्तं प्रवेशाधिकारो भविष्यति ।

सम्पादकः—
आयुर्वेदसम्मिलनी कार्यालय,
नं० ८३ दशाश्वमेध घाट,
बनारस सिटी ।

# भारती-गीतिका।

—:*:—

( रचयिता—श्रीहेमेन्द्रचन्द्रव्याकरणतीर्थः, ताँतियर, मैमनसिंह। )

( १ )
जय भगवति भारति !
जय शतरवि-भास्वति !
अयि बुधगण-सरसिजवन-
प्रणयिनि ! शुचिशाश्वति !
जय भगवति भारति !!

( २ )
जय शतदलवासिनि !
श्रुति-सुमधुरभाषिणि !
शशधरकर-सुरुचिरतर-
मृदु-सुमधुर-हासिनि !
जय शतदलवासिनि !!

( ३ )
जय भुवन-वन्दिते !
कविभिरभिनन्दिते !
सितमलयज-सितसरसिज-
सित-वसन-मण्डिते !
जय भुवन-वन्दिते !!

( ४ )
जय विबुध-वालिके !
स्फुट-कमल-मालिके !
त्रितयभुवन- तिमिरहरण-
शशिशकलभालिके !
जय विबुधवालिके !!

( ५ )
नद ललित-वीणया
करकमल-लीनया
नट निरवधि रसवति सति
हृदि सदसि लीलया।
नद ललित-वीणया !!

( ६ )
हर निखिल दुर्मती-
र्दिश विपुलशुभगतीः।
निगमजननि ! भुवन-जयिनि !
सुललितगतिपद्धति !
हर निखिलदुर्मतीः !!

( ७ )
अयि जननि सरस्वति !
त्वयि विलसतु नो मतिः।
तरुण-हरिण-करुण-नयन-
मिह निपततु नः प्रति !
अयि जननि सरस्वति !!

( ८ )
जय जय सुर—भारति
स्फुरतु मनसि संप्रति
तवक-चरण-नखन-पतन-
प्रखर-तरदीधिति !
जय जय सुर-भारति !!!

# सूर्योदय आविरेति।

—:*:—

सूकैर्बुधाब्जं स्फुटयन्मयूखै—
योऽज्ञानमान्धं तिरयन् प्रभूतम्।
दधद्रुचिं द्वैधमयं कलङ्कम्
यतस्ततोमकक्षु विनाशयन् वम्॥ १॥

आनन्दयन्कोविदकोकलोकम्
विस्तारयन् स्वीयविभाप्रभावम्।
रेणून् स्वधर्माम्बुरुहां तनोति
तिग्मः स सूर्योदय आविरेति॥ २॥

—श्रीकृष्णदत्तशर्मा ब्रह्मचारी।

# उपेक्षिताः प्रस्तावाः ❋ ।

## ( अखिल भारतवर्षीयब्राह्मणमहासम्मेलने )

आसीदखिलभारतवर्षीयब्राह्मणमहासम्मेलनस्य कार्य्यपरिचालनार्थमेका कार्य्यनिर्व्वाहिका समितिः। विभिन्नकार्य्यसाधनार्थं तस्याः समितेः कतिचित् शाखासमितयः कारिताः। तासामेका सम्मेलने उपस्थातव्यानां प्रस्तावानां निर्व्वाचनार्थं विधीयते स्म। परन्तु सभाध्यक्षाणां पूज्यपाद-परित्यक्त-महामहोपाध्यायोपाधिक-पञ्चाननतर्करत्नपादानां नितराम् अस्वस्थताहेतोरस्याः शाखायाः किमप्यधिवेशनं न घटितमासीत्, अत एव सम्मेलने उपस्थातव्यानां प्रस्तावानां रचनाभारः सम्मेलनसम्पादकस्यैवोपरि स्वैरं पतित आसीत्। स खलु सम्पादकमहोदयः म० म० श्रीयुक्तानन्तकृष्णशास्त्री प्रगाढपाण्डित्यमण्डितोऽपि एतादृशे कर्म्मणि नितरामभिज्ञतासम्पन्नो नासीदिति मन्ये। नापि तेन तादृक्कार्य्याभिज्ञेन केनचित् सह परामर्शः कृतः। अतः प्रथमे दिवसे सभाधिवेशनकर्म्मणि समाप्तिं गते 'अद्य रजन्यामत्रैव सभास्थले विषयनिर्व्वाचनार्थमेकमधिवेशनं भविष्यतीति' ख्यापितमासीत्, न च समागतानां पण्डितानां सुयोग्याः केचन एतदर्थं निर्व्वाचिता बभूवुः॥ अथ रजन्यां सभास्थले शतसंख्यकाः पण्डिता अपरे च समुपस्थाय अहमहमिकया स्वलिखितान् प्रस्तावान् सम्पादकमहोदयस्य हस्ते न्यस्तवन्तः—सोऽपि समयाभावात् कतिचिदेव तत्र पठित्वा शिष्टान् गृहीत्वा स्वगृहं प्रति प्रस्थितः। परेद्युः सभाधिवेशने न कोऽपि प्रस्ताव उपस्थापित आसीत्। परन्तु अवसानसमये "आगामिनि दिवसे प्रातरेव भूयो विषयनिर्व्वाचनं भविष्यतीति" विज्ञापनं प्रचारितमिति तु मदीयाधन्यतया न श्रुतमासीन्मया तत्सामयिककोलाहलवशतः। अतो न समुपस्थितस्तत्र सभायामासम्। कतिचिद् अपरे च प्रस्तावास्तत्र कृता आसन्निति पश्चाद् आकर्णितम्। अथ तृतीयदिवसीयाधिवेशने केचन प्रस्तावाः सम्पादकमहोदयेन वाचिताः तेन अपरैश्च कैश्चित् वक्तृभिरुपस्थापिताः समर्थिताः परिगृहीताश्च। बहवस्तु सभापतिना—सम्पादकमुखेनैव समुपस्थापिता अतो विनापि व्याख्यानं समर्थनञ्च परिगृहीताः। चतुरः खलु प्रस्तावान् सभास्थले समुपस्थापनार्थं सनिर्व्वन्धं सम्पादकमहोदयस्य करकमले न्यस्तवानहम्—परन्तु तेषामेकोऽपि सभायामुपस्थापितो नासीत्। एते प्रस्तावा अधस्ताल्लिख्यन्ते।

---

❋ ब्राह्मणमहासम्मेलनप्रथमाधिवेशनस्य परस्तादेव लिखितोऽयं प्रबन्धः सम्मेलनमासिकपत्रिकायां प्रकाशनार्थं कस्यचित् सहकारिसम्पादकस्य हस्ते न्यस्त आसीत्। परन्तु दुर्भाग्यवशतो नाभवदयं प्रकाशितः सुबहुकारणसमवायात्। कृच्छ्रेण हि वर्षद्वयात्परं साम्प्रतमेव लेखकस्य हस्तमागतः प्रबन्धवराकः, सम्प्रति प्रेषितः सूर्योदयपत्रे प्रकाशार्थमिति—लेखकः।

(१) अचिरस्वर्गतस्य पण्डितप्रवरस्य शशधरतर्कचूडामणेरभावात् सनातनवर्णाश्रमधर्मस्यापूरणीया क्षतिः शोच्यते सम्मेलनोपस्थितैः सर्व्वैः सदस्यैः। (अत्र अपरेषां केषाञ्चिदचिरमृतानां पण्डितानां नामानि निर्दिष्टान्यपि पश्चात् संक्षेपार्थं प्रधानतमस्यैव तेषां तर्कचूडामणिमहोदयानां नाम केवलमुल्लेखितमासीत्।)

(२) निखिलभारतवर्षस्य एकताविधानार्थं तथा सभासमितिषु कार्य्य-सौकर्य्यार्थं पण्डितानां संस्कृतभाषायां तथा सर्व्वेषां साधारणानां हिन्दी-भाषायां व्याख्यानादिषु पाटवविधानार्थम् अपि च देवाक्षरपठनलेखनाभ्यासे यत्नः कर्त्तव्यः।

(३) अङ्गरेजीशिक्षालयाणां कालेजादीनां छात्राणां स्वधर्मप्रतिपालनपूर्व्व-कमवस्थापनार्थं तेषु तेषु केन्द्रस्थानेषु छात्रावासाः स्थापनीयाः।

(४) समप्राणताविधानार्थञ्च सर्व्वेषां प्रतिदिनं त्रिसन्ध्यासमये सनातनवर्णाश्रमधर्म्मस्याभ्युदय-कामनया स्वकीयेष्टदेवसविधे विशेषप्रार्थना कर्त्तव्या सर्व्वैरेवास्तिक्यबुद्धिभिः समाजहितैषिभिः-विशेषतो ब्राह्मणैः।

एतेषु प्रस्तावेषु व्याख्यानस्य नासीत् प्रयोजनम्। अतः सभापतिकर्त्तृकोपस्थापनेऽपि अभिलषितसिद्धिरभविष्यत्—द्वित्राणां मिनिट्परिमितानां समयमध्ये। एतावन्मात्रेणापि नानुगृहीता आसन्नेते प्रस्तावबराकाः।

प्रथमप्रस्तावविषये किञ्चिदालोचितमासीत्—श्रूयते पण्डितवर्य्यशशधरतर्क-चूडामणिमहोदयस्य नाम सर्व्वैरेव बङ्गेतरैर्नाकर्णितमिति हेतोर्नोपस्थापनयोग्य आसीदयं प्रस्तावो निखिलभारतवर्षीयसम्मेलनेऽस्मिन्निति। यद्येतत् सत्यं भवति तर्हि नास्मात् परं दुःखाकरं किञ्चित्। यतो ब्राह्मणसम्मेलनस्य कस्मिंश्चिदधिवेशने आसीत् तत्रभवान् चूडामणिमहोदयः सभाधिनायकः बङ्गीयब्राह्मणसभायाश्च सभापतिवरोऽभूत्। अस्यैव च ब्राह्मणमहासम्मेलनपत्रस्य द्वितीयायां संख्यायां पण्डितप्रवरेण महामहोपाध्यायवामाचरणन्यायाचार्य्यमहोदयेन लिखिते "पुरुषोत्तम-प्रयाणम्" इति शीर्षकप्रबन्धे च तस्य लोकोत्तरचरितमालोचितमभवत्। तथापि यदि तस्य कृते महासम्मेलने शोकप्रकाशमन्तव्यं नोपस्थाप्यते, न खलु सुविदितोऽयमासीदिति कारणमुल्लिख्यते च तर्हि हा हन्त! वयमेव शोच्या भवामः। कंग्रेसप्रभृतिषु च भूतपूर्व्वसभापतेर्मृत्युमुपलक्ष्य शोकप्रकाशः सर्व्वादौ क्रियते-अत्र तु ब्राह्मणमहासम्मेलनेऽस्मिन् कृतं तन्नियमस्यान्यथाचरणम्।

द्वितीयस्य प्रस्तावस्योपयोगिता अस्मिन्नेव महासम्मेलनाधिवेशने स्फुटीभूता-संस्कृतभाषणेऽनभ्यस्ता नैके पण्डितप्रकाण्डा अपि मूका इवावस्थिताः आसन्-हिन्दीभाषिणां वक्तॄणां व्याख्यानं सादरमाकर्णितं जनतया-वङ्गभाषिणां केषाञ्चित् व्याख्यानोपक्रमो हट्टगोले न व्याहृत आसीत्।

तृतीयस्य प्रस्तावस्योपयोगिता पश्चात् कलिकातायां वर्णाश्रमधर्मसभायां

स्वीकृता, प्रस्तावस्य परिग्रहणात्। श्रीहट्टे ब्राह्मणपरिषद्वार्षिकाधिवेशनेऽपि प्रस्तावोऽयं गृहीतः।

चतुर्थप्रस्तावोऽपि नाभिनवः कश्चित् विषयः। ब्राह्मणमहासम्मेलन-पत्रस्य तृतीयायां संख्यायां ८१ पृष्ठे मयैव 'कः पन्थाः' शीर्षकस्य प्रबन्धस्योपसंहारे एतन्मर्म्मकं निवेदितमासीत् किञ्चित्-अनुमोदितमेवैतद्भवत् तत्रभवतां सम्पादकानां प्रकाशनेनैतस्य तेषां मुखपत्रे।

अवान्तरा अपि केचन विषया उल्लिख्यन्तेऽस्मिन् प्रबन्धे। ब्राह्मण-महासम्मेलनमिदं सर्व्वविधानामेव ब्राह्मणानां—न केवलं ब्राह्मणपण्डितानाम्। विचारसभा तु पण्डितानामेव निजस्वा—न तत्र विषयिणां ब्राह्मणानामधिकारोऽभवत्। परन्तु महासभाधिवेशने सर्व्वेषामेव समानाधिकारोऽभूत्। प्रस्तावानामुपस्थापने समर्थने तु विषयि-ब्राह्मणाः न केपि समदृश्यन्त। केषाञ्चिदुपरि सम्पादकमहोदयः कृपया भारार्पणमपि कृतवान् प्रस्तावनार्थं समर्थनार्थञ्च अपि तु कार्य्यकाले न ते आहूता अभवन्।

सभास्थले व्याख्यानार्थं केचित् द्वित्रा वराका आहूयन्ते स्म। नैतद् युक्तम्। अन्येऽपि वहवो भाषणपटवः समुपस्थिता आसन् मञ्चाधिरूढ़ाः सन्तः सभास्थानां भारतीयानां सुधीवर्गाणां परिचिता भवितुमाकाङ्क्षन्ते स्म। परन्तु ते वक्तृतार्थं निर्व्वाचिता नासन्।

प्रस्तावः कश्चिद् येन रूपेण सभायामुपस्थापितो भवति तेनैव रूपेण संवादपत्रादिषु तस्य प्रकाशनं कर्त्तव्यम्। एतस्यायथाभवनस्य दृष्टान्तः कश्चिन्मया लक्ष्यते। महासम्मेलनस्य स्थायिसमितिगठनप्रस्तावे केवलं सभापतेः सहकारिसभापतीनां सम्पादकस्य च नामानि उद्घोषितान्यभवन्। परन्तु ब्राह्मणमहासम्मेलनस्य—पत्रस्य सप्तम्यां संख्यायां २३५ पृष्ठे 'नवमः प्रस्तावः, इति कृत्वा स एव प्रस्तावः ईदृशो लिखितः येन बुध्यते सदस्यानां नामान्यपि तत्र सभायां पाचितान्यभूवन्। तत्र म० म० पूज्यपादतर्करत्न-महोदयं विना सर्व्वेऽपि सहकारिसभापतयः सदस्यानां मध्ये एव सन्निवेशिता आसन्।

यथा भविष्यति कुत्राप्यधिवेशने सम्मेलनस्य कार्य्यजातमच्छिद्रं सम्पद्येत, तदेवोद्दिश्य लिखितोऽयं प्रबन्धः। सत्यामपि विघ्नशताशङ्कायामिदं विशाल-सम्मेलनं श्रीश्रीचण्डीपाठादिमाङ्गलिककार्य्यफलेनैव निर्व्वाधं सम्पन्नं जातम्। भ्रमप्रमादसंकुलमतीनां मानवानामनुष्ठिते कर्म्मणि न कश्चिद्दोषलेशः स्यादिति सर्व्वथाऽप्रत्याशितमेव। यत् किञ्चिद्दोषावहं घटेत तत्प्रदर्शनन्तु शुभानुध्यायिनः कार्य्यमेवेति मन्यते—

श्रीपद्मनाथदेवशर्म्मा

(विद्याविनोदः, एम्० ए०)

## श्रीकृष्णस्यावाहनम्।

आगम्यतां मुरारे, दीनार्तिपापहारिन् (ध्रुवम्)
नवनीतगीतकीर्ते, हृतभीतभक्तभीते।
नन्दात्मनन्दकारिन्, व्रजमेदिनी-विहारिन्॥ १॥
शोकाकुला यदासीत्, द्रुपदात्मजा विपत्तेः—
मुक्तीकृता त्वया सा, निःशेषशोकहारिन्॥ २॥
नवकञ्जमञ्जुकान्ते, वृन्दावने निशान्ते।
चारिन् गवां कुलानां, मुरलीनिनादकारिन्॥ ३॥
पापात्मनां विनाशिन्, पुण्यात्मनां विकासिन्।
आगच्छ भारतेऽस्मिन् दुष्टात्मदैत्यहारिन्॥ ४॥

श्रीकृष्णदत्तशर्मा ब्रह्मचारी।

## नवीनाऽऽविष्कारैः का क्षतिर्निष्पन्ना।

निबन्द्धा—श्रीदीनानाथशर्म्मा सारस्वतशास्त्री।
(मुलतान'स्थ-श्रीसनातनधर्मसंस्कृतकालेजाध्यापकः)

'जेम्सजान्सन नामा कश्चित् पाश्चात्यविपश्चित् किल जनान् प्रति प्रतिपादयति निजाऽनुभवभवान् भावान्। यद्—"I declare as my conscientious conviction, founded on long experience; that if there were not a single physician, surgeon, midwife etc., there would be less sickness and less mortality, than now prevalent."

James Johnson, M-D.F.R.A.S.

अयमाशयः--"चिरकालिकाऽनुभवेन एतद् व्यक्तीकर्त्तुम्प्रभवामि; यद्—यदि वैद्याः, शस्त्रचिकित्सका धात्र्यश्च, इत्यादयश्चेत् सर्व्वथा नाऽभविष्यन् तर्हि इयन्तो व्याधय आधयो वा नाऽभविष्यन्नक्षिलक्ष्ये; यावन्तोऽद्यत्वे (वैद्यादिभूम्नि) सन्ति" इति।

वस्तुतो 'जेम्स जान्सन' महाभागस्य एतच्चिरत्नम् अनुभवरत्नं न व्यभिचारकोटिमाटीकते। निखिला एव जना अधुनाऽप्येतस्य याथार्थ्यमक्षि-

लक्ष्यी कुर्व्वाणा भवन्त्येव । अद्यत्वे 'डाक्टर' पदवाच्यानां वैद्यानां स्थानस्थाने बंहिमा जातोऽवलोक्यते; जायमानश्च वर्त्तते । तद्—'रोगाणामन्तो जातः, व्याधयो वा व्यलेषत' इति व्यपदेष्टुमीष्टे कश्चित् कश्चित् ? नहि २, जात्वपि नहि । एतद्वैद्य-भूम-युगात् पूर्व्वं तन्नैयून्याऽनेहसि केन ग्रन्थिक ( Plague ) रुजो विशूचिकायाः ( Cholera ) नव्यज्वरस्य ( Influenza ) वा नामान्यपि श्रुतान्यासन्; या मार्य्यः क्षणादेव बृहन्नगरमपि जनशून्यङ्कुर्व्वन्ति । तन्निदान-व्यतिकरे, खल्विदमेव वक्तुं शक्यते; यद्—अयम्प्राकृतिको नियमो नाम; यस्या अनुविधाया एकान्तनिरोधाऽर्थं प्रयत्येत, तस्याऽसौ विध्वस्य ईप्सितो निरोधस्तु न सम्भवति, प्रत्युत तस्या दैव्या अनुविधायाश्शाखाप्रशाखा एव प्रायशो जायन्ते । इयं वार्त्ता विधान्तरेणेत्थमुपोद्बलनीया, यत्—प्रत्नयुगे द्यूतमांसम-द्याऽऽदीनामोद्भविको निरोधो नाऽविद्यत; यथा हि—अद्यत्वे व्याख्यातृभिर्विविधा-भिर्विधाभिर्जनतायां वक्तृताऽऽदिद्वारा चिकीर्ष्यते, चेकीय्यते च, परङ्ग्रन्थवृन्द-कतिपये तदुपयोगे दृष्टेऽपि तदा ( पुराणकाले ) द्यूतमांसमद्याऽऽदिप्रसारो नाऽ-वर्त्तिष्टैतादृक्षो, यादृगद्यत्वे साक्षान्निषिद्धोऽपि प्रवर्त्तमानो दृश्यते । अन्यद् दृश्यताम्; वयङ्कमपि विद्यार्थिनं किमपि नोपदिशामः, केवलं तदाचरेषु प्रणिहित भवामः । तस्य विद्याऽर्थिनस्तेन विद्यार्थिना सह आचरणे तुलना कार्य्या; यदर्थ-मयमुपदेशः प्रत्तःस्याद्; यद्—अयि विद्यार्थिन् ! सदा सदाचारी भव; कुत्सित-कर्म्मप्रवृत्तिं जहीहि, कामस्य वर्द्धकेषु वस्तुषु सौन्दर्य्ये च दृक्-पातम्मा कार्षीः; समयञ्च वृथा मा कृथा, इति । तुलनया स्वयं ज्ञास्यते; यद्—यस्मायुपदेशः प्रत्तोऽस्ति, तदाचरणानि तद्विद्यार्थ्यपेक्षया किञ्चिन्निकृष्टतराण्येव भविष्यन्ति, यः किल एतं विषयं सर्व्वथा नोपदिष्ट इति । यद्यपि देशकालपात्रभेदात् क्वचि-देवंविधया विधयाऽपि भेदो भवितुमर्हेत्; तथाऽपि अत्यन्ताऽल्पसङ्ख्यायाम् । प्रायशस्तु तथात्वमेव भवेद्, यथाऽस्माभिः प्राक् प्रत्यपादि । तत्र किम्बीजम् ? एतदेव—यस्य सतो वस्तुनोऽत्यन्ताऽभावोऽनुतिष्ठास्येत; प्रकृतिनियमवशात्तस्य अपेक्षातोऽपि प्रकाराऽन्तरेण वृद्धिर्जायते ।

किं वयं व्यपदेष्टुमीश्महे; यद्—बाष्पयानेन आविर्भूय पदातित्वकष्टजन्य-हानिर्व्यपोहि ? सुविधा वाऽकारि ? अथवा मुद्रायन्त्राऽऽदिभिराविष्कारैरव-तीर्य्य वयं सर्व्वथा लाभं लम्भिताः ? नहि । यदा बाष्पयानं नासीद्; अस्मत्पूर्व्व-जास्तदा दविष्ठेऽपि यात्रां कर्त्तुमीशाना बभूवुः; विश्वविश्रुतेयं वार्त्ता । किमद्य तथैव वर्त्तते ? नहि २ । प्रत्यक्षे त्विदं निभाल्यते, यद्—वयं बाष्पयानाऽऽश्रयेण अयुतशः क्रोशान् अल्पैरेवाऽह्नोभिरतिवाहयामः; परं यदि विमर्शदृशा दृश्यते

दृश्येत, तर्हि बाष्पयानेन वयं सुखं शान्तिं वा न लम्भिताः, प्रत्युत आलस्यमेव । अधुनाऽको जनः पञ्चगव्यूतिमितमध्वानमेतुं शक्नोति । अप्राकृताऽसौविध्येनाऽमुनाऽऽलस्यभाजो वयं नियतकालाऽनागमवशाद् यदि बाष्पयानतो मुक्ताः स्याम; तर्हि ईप्सितव्यनगरं प्रति पदातिगमनं तु दूराऽपेतम्, तन्नगरं प्रति प्रतिष्ठासाऽप्यस्माकं प्रविलीयते । एवञ्च पुनः स्वाऽधिष्ठितचरबाष्पयानाऽऽलयाद् ( Station ) एकक्रोशमितमध्वानमतीत्य पदातिस्वगृहपरावर्त्तनमपि कष्टस्य † जनकन्दृश्यते । किमिदम् ? वैकृतिक्याः सुविधायाः परिणतिरियम् । बाष्पयाननिर्म्मितिस्तु सुविधायै जाता; परमीदृग्व्यतिकरेषु असुविधैव निष्पन्ना । यदा च बाष्पयानानाम्परस्परं सङ्घट्टो भवति, अथवा लोहपट्टिकातः स्खलनम्भवति, स्थित्यादिसम्बन्धे विवादा जञ्जन्यते, यदृच्छया वा गवाक्षोद्घाटनतः पतनञ्जायते; तदा बाष्पयानस्य सुविधा (!) सम्यग्लक्ष्यते । बाष्पयानेनैवाऽऽगम्य शस्यश्यामलाया भारतभुवो जीविका छिन्ना । यावति द्राघिम्णि बाष्पयानजालप्रसारः; तन्मात्र्याम्भुवि यदि गोधूमशस्यमभविष्यत्; तर्हि शस्यस्याऽऽधिक्येन + समर्घतायां सँवृतायां बहूनान्निर्द्धनानामुदरदरी-पूर्त्तिरभविष्यद् । बाष्पयानद्वारा वस्तूनां विदेशगमन ❀ सौविध्यवशादेव महाऽर्घताऽपि समवर्द्धिष्ट । यदि बाष्पयानं नाऽभविष्यत्; तर्हि गोधूमाऽऽदीनां बहिर्गमनसौविध्यमपि नाऽभविष्यत् । तेन गोधूमस्याऽऽधिक्याद् वणिजां गोधूमाऽऽदिमहाऽर्घताकरणाऽऽवश्यकताऽपि नाऽजागरिष्यत् । समर्घतया च भारतीयनिर्द्धनजनानां क्षुन्निवृत्तिरत्यर्थमभविष्यद् । बहिःप्रहयणवशाच्च महाऽर्घता स्वाभाविकी । एतदादिकथनेन नेदमभिप्रेतम्, यद्-अधुना बाष्पयानाऽऽदित्याग एव कार्य्यस्सर्वथा; नहि । अधुना तु नैवम्भवितुं शक्यम्, यतः पङ्गवः कृताः स्मो बाष्पयानेनाऽनेन । यथा वैद्यादिभूमि अद्य नवीनरोगा अश्रुतचरा अपि श्रूयन्ते; तथैव अभूतपूर्व्वा आवश्यकता अप्यस्माकमधुना बाष्पयानप्रसारे वरी-

---

† 'कष्टस्य जनकम्' इदमादिषु 'कर्तृकर्म्मणि कारकषष्ठी; तेन च 'तृजकाभ्यां कर्त्तरि' इति षष्ठी समासनिषेधः ।

+ 'शस्यस्याधिक्येन'—एतदादिषु गुणवचनत्वात् 'पूरणगुणे' ति षष्ठीसमासव्युदासः ।

❀ 'गमनसौविध्यम्' इत्यादिषु 'अदर्शिष्यं सञ्ज्ञाप्रमाणत्वाद्' इति निर्देशेन गुणे षष्ठी समासनिषेधस्याऽनित्यता पिशुनिता ।

वृधां ‡ प्राप्ताः। त्यागाऽऽदिजल्पनकल्पना तु विषयाऽन्तरमेव। अस्माभिस्तु नवीनाऽऽविष्कारैः का क्षतिर्निष्पन्नेत्येव प्रकृते निदर्श्यते। तथाऽपीदं वक्तुमवश्यमेव सन्नद्धा वर्त्तामहे, यद्—यथासम्भवं प्रकृतेरेव स्नेग्धव्यम्; न तु सर्व्वथा विकृतेरेव। भारतवासिनां प्रकृति ( Nature ) रेव प्रकृतिः। यदि ते विकृतिं प्रकृतिङ्कुर्व्वताम्; तदा तेषाम्प्राच्यां सभ्यतायां व्याघातः प्रसज्यते। अत्रेदं वाष्पयानमेव द्रष्टव्यम्—इदमादिना वैदेशिकसभ्यताया एवोन्नतिः। कदाचिदासिष्ट समयो यदास्माभिर्जलयन्त्रीय-( नलका ) जलोपयोगे घृणा वितेने, मोहमदीयादिभिरस्पृश्यैस्साकं निषत्तौ जुगुप्सा मेने, उपपुरीषाऽऽलयं निषद्य जग्धिर्दुष्टाऽमानि, प्रतिवार्त्तं वैदेशिकभाषिकशब्दशब्दनं दौष्ठवविशिष्टमभ्युपागामि; किम् अद्यत्वे आस्माकी तादृशी घृणा निध्यायते? नहि २। अधुना तु गुडगोमयवत् सङ्कर एव सर्व्वत्र देदीप्यते। तर्हि कथन्न कथ्येत, यदिमे नवीनाऽऽविष्कारा एव भारत × नाशकाः। आलस्यस्य तु कैव कथा; एतस्मादेव क्रोशमितमार्गसमाप्त्यर्थमपि अस्माभिर्मृत्तरो मरुत्तरो (Motor) वा, विद्युद्यानानि ( Tramcars ) वायुशकलानि च (Bicycles ) अपेक्ष्यन्ते; येषामेव कारणात् प्रतिहायनं शतशः पुरुषाश्शमनसदनप्राघुणिका भवन्ति। तेषु सर्व्वदोपयुज्यमानं वायुशकलयन्त्रं तु शिरःस्थितमृत्यु एव यानम्। यतः कदाचित् प्रमादाद्वाऽऽनुषङ्गिकं वा मृत्तरादियानाऽभिमुखं पतितं सद् वोढारं मृत्युमुखमेव गमयति; इतरेऽपि भूयिष्ठा दोषाः सर्व्वेषां * मता एव गुप्तेन्द्रियव्याघातप्रदाः।

अधुना मुद्रायन्त्रे दृग् विन्यसनीया। एतदाविष्कारात् प्राग् यथा लेखचुञ्चवोऽक्षरचणा वा आसन्; तादृशाः किमद्यत्वे प्राप्यन्ते? यादृशं प्राक्तु लेखकेषु मुद्रायन्त्रस्याऽपि दर्पयितृ लेखे सौन्दर्य्यं स्वच्छता, बहुलेखनेऽप्यनालस्यमवर्तिष्ट; तादृक् किमद्यत्वे आसाद्यते? निरवच्छिन्नं होरात्रितयपर्य्यन्तं लेखितुमापतेद् यद्यद्यत्वे; तर्हि शिरो घूर्णते, लेखनी स्खलति, अक्ष्णोस्तमः प्रसरति।

‡ वरीवृधा—वर्द्धतेर्यङि द्वित्वे रीकि च 'वरीवृध्य' इति स्थितौ, 'सनाद्यन्ता' इति धातुत्वे, 'अप्रत्ययाद्' इति 'अ' प्रत्यये तस्याऽऽर्द्धधातुकत्वाद् 'यस्य हल' इति यलोपे, 'अतोलोप' इत्यतोलोपे 'न धातुलोप आर्द्ध–' इति गुणनिषेधः स्त्रीत्वाधिकाराच्च टाप्।

× भारतनाशकाः—अत्र 'शेषे षष्ठी' अतः 'षष्ठी'ति समासः। 'तृजकाभ्या'मिति षष्ठीसमासनिषेधस्तु न, तस्य कारकषष्ठीसमासनिषेधकत्वात्।

* सर्वेषां मताः—'मतिबुद्धीति' वर्त्तमाने क्तः, 'क्तस्य च वर्त्तमाने' इति षष्ठी; 'क्तेन च पूजायाम्' इति समासनिषेधः। सर्वमता इत्यत्र तु भूते क्तस्तृतीयासमासश्चोह्यः।

पुरा यथा पुस्तकानामादरो रक्षा च भवतिस्म; सा किं वर्त्तमाने निरीक्ष्यते ? नहि कदाचन नहि। मुद्रायन्त्राणामेव कृपया निबन्धॄणां निबन्धेषु मुद्राऽशुद्धय ईदृश्यो जातु भवन्ति, याः पाठका निबन्द्धुरेव जानीयुः; परम्भवति तत्र मुद्रकाणाम्प्रमादः। तादृशमात्राऽऽद्यभावास्तत्र अन्यामेव मात्रां वर्णं वा योजयन्ति; यत्र ह्यर्थस्याऽनर्थो भवति। पाठकवर्गो ज्ञातुमीष्ट एव; यद्-हिन्दीभाषायाम्मुद्राऽशुद्धौ तु तादृग् × हानिर्नो जायते; यथा हि संस्कृतभाषिकनिबन्धे। तत्र दीर्घमात्रास्थाने ह्रस्वमात्रायोजनेन, वैपरीत्येन वा, कस्या अपि मात्राया भङ्गेन वा, कीदृशी हानिर्भवति। पाठकास्तु तां लेखकाऽशुद्धिंजानन्ति, यद्-अवैयाकरणोऽयम्। परं मुद्रायन्त्रस्य मुद्रकाणाञ्च त्रुटिं वेदितुं नेशते। एतद्विषये निबन्द्धार एव जानते, यथा तद्बुद्धि विषण्णता जागरूका भवति। इतस्ते मुद्रकाद् द्विष्ठा भवन्ति, इतश्च असकृत् सूचनेन पत्रादिगमागमव्ययस्याऽऽधिक्यम्भवति। यदि ते लेखे मुद्रकाभिर्भर्त्सयेयुः, तदा मुद्रका ज्ञात्वैव तेषां लेखान् भ्रष्टान् विदध्युः, यदि लेखकाः पौनः पुन्येन सम्पादकान् बोधयेयुः, तर्हि त एव कदर्थिताः सन्त उपेक्षेरन्। एवञ्चाऽत्यन्तलघुमुद्राऽक्षर-मुद्रणपठनपाठनवशाच्च बहूनामेव जनानां दृष्टिन्यूनत्वं प्रपद्यते, तदा चोपनेत्रधारणाऽऽवश्यकता बोभूयते। उपनेत्रात् तु-( Spectacles ) परमात्मैव त्रायेत। यदैवाऽस्याऽभ्यासो भवति, तदा एतद् विना पुरुषः किमपि कार्य्यं कर्त्तुं नेष्टे। अल्पसमयस्य कृते यद्यभ्यस्तोपनयन उपनेत्रमवतारयेत्, तदा कीदृशी-भीषणाऽऽकृतिर्लक्ष्यते-इति नाऽपरोक्षमुपनेत्रव्यसनिनाम्। तर्हि मुद्रायन्त्रेणोदयमाऽऽप्य का क्षतिपूर्त्तिरकारि, प्रत्युत तदीयं लाभं हानिरग्रसिष्ट।

एवं 'सोडावाटरा' द्याविष्कारो भुक्तपाचनाऽर्थमुत्पादितः, परमनेनैव तस्य पातॄणां नवयुवकानामपाचनशक्तिरेवाऽद्यत्वे दृश्यते।

एवं विद्युद् आदीयताम्। जना आचक्षते, यद्—विद्युता व्यक्ति विरक्षा ( वेदित्वा ) महती सुविधा व्यधायि। परम्मीमांसया त्विदमपि निरसिष्यते। अभ्यस्तविद्युत्कः पुमान् पुनस्सामान्यमृत्प्रदीपप्रकाशे पठितुं नेष्टे, एवञ्च चक्षुषोर्ज्योतिरुपहत्य उपनेत्रपरतन्त्रो जञ्जन्यते। किञ्च-यदा विद्युत् कदाचित् स्फुटति, तर्हि सर्व्वम्भवनमेव अग्निसात् कुरुते। स्पर्शेऽपि हन्ति।

एवं समाचारपत्राऽऽदिनवीनाऽऽविष्कार एव अस्माकञ्चिन्ता अपि अवर्द्धिषत, एतेभ्यः पूर्व्वमोभ्यश्चिन्ताभ्यो मुक्ता आसन्नस्मत्पूर्व्वजाः। अधुना इमाश्चिन्ता इत्थमस्मत्सम्बद्धा जाताः; यद्-यावत् किञ्चित् समाचारपत्र-

× तादृग् हानिः। क्लिनि रूपम्; तेनेदं सौ लिङ्गत्रये साम्यं वहति; तादृशीतितु क्लि।

मस्माभिः पठितुन्न प्राप्येत; तावद्भोजनमपि न रोचते । तत्प्रतीक्षायां पत्रवाहक· (Postman) स्यैव देवतावद् ध्यानङ्क्रियते । अधुना समाचारपत्राऽध्यायनं प्राचीनकालिक 'स्वाध्याय' वेदपाठतुलामधिरोहति । परं यत्र नगरे विवादो न स्यात्; तत्र समाचारपत्राणामेव कृपया नवीना व्यक्तिगताः समष्टिगता वा विवादाः पक्षा वा सुखेन उत्पादयितुं शक्येरन् । एवञ्च पत्रसम्पादका अपि केषाञ्चिल्लेखाऽप्रकाशनात् तत्कोपाऽमत्राणि जायन्ते; कस्यचिद्विरुद्धलेखनाच्च तद्द्वेषपात्राणि जायन्ते, कदाचित्तु तेषां स्वजीवनेऽपि सन्देहो भवति । इतश्च 'प्रेस ऐक्ट' 'मानहान्या' द्यभियोगैश्च उद्विग्नास्तिष्ठन्ति । इदानीम् ईदृग्विध-चिन्तासु अस्थिमज्जासम्पृक्तासु नवीनाऽऽविष्कारखण्डनं लोकानाञ्चेतसि खट-खटायते ।

एवम्पत्रालयप्रबन्धेऽपि क्षतिर्द्रष्टव्या । पत्रम्प्रेष्यते सम्बन्धिकुशलाऽऽदिप्रश्नाय; यच् चेतश्शान्तिः स्यात्; परममुत्र अशान्तेरेवाऽऽधिक्यम्भवति । कतिपयैरहोभिस्तु तदुत्तरस्यैव प्रतीक्षायां रुधिरं शुष्यति; पश्चाद् यदा कुतश्चिज्ज्ञायेत यद् उत्तरपत्रं कस्यचिद् द्वारा पत्रवाहकेन प्रेषितम्; तर्हि तस्य पत्राणां वाहक-स्यैव गवेषणाऽर्थं बम्भ्रमा † क्रियते; ततश्च तदानेतुः + इत्थञ्चिन्तायास्सातत्येन वैद्यकमताऽनुसारं भूयिष्ठो रक्तशोषो जायते । पत्रे नष्टेऽन्यैव व्याकुलता जायते; गुप्तवृत्तस्य च अन्यकर्तृक-पठनभयमपि नितमाङ् क्षोभयति । किङ्कथ्येत; इदन्तु वस्तुतोऽल्पस्य कृते भूरिनाशनमेव । एको वणिग् गणनायामेकपणकस्य च न्यूनतामवसाय रात्रौ दीपं सञ्ज्वलय्य पुनरखिलां व्यापाररूप्यकगणनामारेभे । अर्द्धरात्रे व्यतीते सति गणना साधिमानमाचकलत्; पणकस्य च न्यूनता परिहृता । परमसौ वराक एतन्नाज्ञासीद्; यद्-एक पणकस्य साधिम्नः कृते मम पणकद्वय्यास्तैलस्य व्ययस्समजनि; मस्तिष्कव्ययश्चेतरोऽभूद् ।

एवं विद्युत्तन्त्र्या ( Telegraph ) संवादयन्त्रेण ( Telephone ) च प्रत्यक्षे ※ तु लाभो विभाव्यते । परं यदि विमृश्येत; तर्हीमे एव यन्त्रे भारतस्य निर्द्धनताया आपादके । इमे एव लोकेभ्यो वस्तूनां वैदेशिकसमर्घतामहार्घते

---

† बम्भ्रमा—भ्राम्यतेर्यङि द्वित्वे लुकि च 'बम्भ्रम्य' इति स्थितौ 'अप्रत्यया' दिति 'अः' । परतश्च 'यस्य हल' इति यलोपः । शिष्टं 'वरीवृधावत्' ।

+ 'तदानेतुः' तृच्त्वात्षष्ठीसमासनिषेधोऽत्र । 'गुणकर्मणि वेष्यत' इति षष्ठ्यभावे 'अकथितञ्चे'ति कर्म ।

※ प्रत्यक्षे । 'अक्षि प्रति' इति विग्रह ग्रहे 'लक्षणेनाऽभिप्रती' इति अव्ययीभावः । 'तृतीयासप्तम्योर्बहुल' मित्यमोऽभावः ।

व्यक्तीकुरुतः। तेन बहव एव महार्घतागृहीतवस्तूनां समर्घतया हानिम्प्राप्य असमर्थतां ( दिवालियापन ) लभन्ते; अकाले च कालाऽऽस्यद्रष्टारो भवन्ति; आत्मनं घ्नन्ति वा।

गोधूमपेषणयन्त्रमपि नोपेद्यम्। एतदुदयेन घरट्टस्य ( चक्की ) अस्तता जाता; बहूनां निर्धनयोषितां धनाऽऽगमे च हानिर्जाता। एतद्व्यायामस्य चाऽभावात् स्त्रीषु यादृशः कृशिमा, कामवासना-प्रेष्ठत्वञ्च समजनि, तन्नाऽविदितचरं मतिमताम्।

वस्त्रस्यूतियन्त्रमपि मा विस्मर्त्तव्यम्। यद्यप्येतेन वस्त्रस्यूतौ सुन्दरता जागर्त्ति, तथाऽपीयं सुन्दरतैव चिराय संयम-व्रतिन आर्य्यान् अब्रह्मचर्य्यगर्ते समपीपतद्, इत्यनुभूतचरमेव समेषाम्, किन्द्राघिम्णा।

एवं सर्व्वत्रैव अप्राकृतिकाऽऽविष्कारेषु विचारणयाऽवश्यं हानिभूयिष्ठता प्राप्स्यते, विस्तरभिया नेह प्रपञ्च्यते। कथनस्याऽयमाशयो यद् वयमित्थमेतदाश्रये पतिताः स्मो यद् यदि एतेषामधिष्ठातार एकदिवसकृत एवाऽमीषां यन्त्राणां संवरणं विदध्युः, तर्हि वयं 'शतचन्द्रं नभस्तलं' पश्येम। केवलं सुख एव पतिताः पुनरल्पेऽपि दुःखे समागते सति, आशातोऽप्यधिकं व्याकुलायन्ते। अस्माकीनाः पूर्व्वजा एतदाद्याविष्काराऽनभिज्ञा नासन्। त एभ्योऽपि सहस्रगुणानि यन्त्राणि प्रादुष्कर्तुं प्रभू-† बभूवुः। महाभारताऽऽदिके तत्सत्ता प्राप्यत एव। परं ते विदन्ति स्म; यद्—नवस्तु वस्तुनिचयोऽयं विशिष्टसमय उपयोगपर्य्यवसायी भवति; न तु सामान्यसमयेऽपि। सर्व्वदैव एभिर्यन्त्रैर्व्यवहारे जायमाने पुरुषा अलसा अकर्म्मण्या अनुत्साहिनो नवीनविविध-रोगाऽऽस्पदञ्च भवेयुः। अत एव तैर्य्यन्त्राणीमानि न सर्व्वसाधारणानि व्यधिषत। वर्त्तमानयन्त्राणां सर्व्वसाधारण्येन या याः क्षतय आविरासते; ता न परोक्षा विदुषाम्। ( यथा घटीयन्त्राद्यवलम्बिनो वयं सूर्य्यनक्षत्रादिद्वारा जायमानां समयविज्ञानदिशं व्यस्मार्ष्म।) यथाऽद्यत्वे विज्ञानाय प्रबला वरीवृधा प्रसेक्षीयमाणा + विद्यते, नाऽत्र सन्देहसन्दोहोऽवसेयो यद्—अग्रे ईदृशां यन्त्राणामाविष्कृतिर्जरीजृम्भ्येत; येन पुरुषाणामुत्थानस्य चलनस्य दूरगमनस्य भोजनस्नानादिकानाञ्च उद्यम आवश्यकतैव न निष्पद्येत।आसन्द्य (Chairs)

† प्रभूबभूवुः। च्विः, ततो दीर्घः।

+ प्रसेक्षीयमाणा—सृबातोः‍यङ्क्षीयिते रीङि द्वित्वे हलादिशेषेऽभ्यासस्य गुणः। शानच्; आने मुक्।

एव बाष्पयानवद् यन्त्रद्वारा चलन्त्य पुरुषानन्यस्थानं नयेयुः। सँव्वाद ‡ यन्त्राण्येव दूरस्थितानप्यालापयेयुः, यन्त्राण्येव पुरुषं स्वयमेव भोजयेयुः स्नपयेयुश्च। विद्युदेव शतं वर्षाणि जीवयेत्। कृत्रिमम्प्राज्यम् आज्यं, कृतकं दुग्धं, कृत्रिमम्भोजनम्, अप्राकृतिका अश्वा इत्यादि सर्व्वङ्कृत्रिमतामासीदेद्। नाऽसम्भाव्यमनेन पदार्थज्ञातेन। परं तत्र या हानिर्जागृयात्; तत्राऽपि प्रणिधेयम्। तादृशामालस्य–वर्णने, अनुत्साहाऽङ्कने; मस्तिष्कशक्तिदौर्व्बल्ये, विविधव्याधिकल्पने च महाकाव्यान्यपि पूर्त्तिं नैष्यन्ति; कर्गलान्यपि समाप्तिमियुः।

अयं सिद्धान्तस्सर्व्वस्य सम्मतो यद्–यथा प्राकृतिकाः पदार्थाः सर्व्वथा लाभस्य लम्भकाः; तथा वैकृतिका आविष्कारा हानेः प्रापकाः। कामं स्यात् कृत्रिमपुष्पाणाम्प्राकृतिकपुष्पेभ्यो मूल्ये भूयस्त्वं, रचनासौष्ठवं चारिमा × वा; परं स सुगन्धः † स आमोदस्तादृग् बलञ्च कृत्रिमपुष्पेभ्यः कदाऽपि न लप्स्यते कदाऽपि न लप्स्यते। अतो वर्त्तमानसमयेऽपि पुरुषाणामुचितमेतदेव; यद्— यथासम्भवं प्रकृतेरेव * स्निह्यन्तु। कृत्रिमताञ्च दूरे परिहरन्तु। तेनैव प्राची सभ्यता किञ्चिदवशिष्येत। अन्यथा भारतस्य विशेषकः प्राचीनयुगवातः खलु निर्व्वात + एव; भारतविरुद्धाऽर्व्वाची प्रतीची वा सभ्यता समायाता समायातैव; अस्माभिरालिङ्गिता आलिङ्गितैव, अस्मदीयविनाशो जातो जात एव। किम्बहुप्रपञ्चनेन। सम्प्रति वयं नवीनाऽऽविष्काराऽऽश्रयेषु सुतमाम्पतिता अक्षिभिरन्धाः; पादैः खञ्जः, श्रोत्रैर्बधिराः बलेन हीनाः, वाण्या मूकाः, जल-दुग्धाऽन्न-प्रकाश-वस्त्र–व्यावहारिकवस्त्वन्तराणाञ्च कृते परमुखाऽपेक्षिणः, वृत्तिप्राप्तौ पराधीनाः, किम्बहुना-स्वशरीरस्याऽपि चाऽस्वामिनस्सन्तः कथं स्वातन्त्र्य-सुखं प्रपत्तुमलम्भूष्णवः स्म इति कृतमनल्पजल्पनकल्पनया॥ इति॥

---

‡ सँव्वाद—'वापदान्तस्ये' त्यनुस्वारस्य अनुनासिको वकारः; 'सँव्वत्सर' इत्याकृतिस्तु न श्रेयसी; सकारेऽनुनासिकस्याऽप्राप्तत्वात्।

× चारिमा—चारोर्भावः। इमनिचि टेर्लोपः।

† "गन्धस्येदुत्पूति सुसुरभिभ्य"इतीत्वं तु बहुव्रीहिविषयम्, अत्र तु तत्पुरुषः।

* प्रकृतेः स्निह्यन्तु। स्निह्यतिरकर्म्मकः, 'न च स्निह्यति कस्यचिद्' भट्टिः १८।९

+ निर्व्वातः—'निर्वाणोऽवाते इति नत्वाऽभावः।

समपेक्षितानां तत्त्वानां सृष्ट्या सहैव कारणात्मकं जीवानामन्तःकरणमपि सृज्यते । विनाऽन्तःकरणं संस्कारस्थितेरसम्भवात् तत्रैव स्वतन्त्रसत्त्वात्मकः प्राथमिको यो हि संस्कार उदेति स एव सर्वेषां संस्काराणामादिमः ।

यथा चिज्जड़भावापन्नं पिण्डमेकैकं स्वात्मानं ब्रह्माण्डतः पृथक् मन्यत इति प्रत्यक्षसिद्धम् । तद्वदेव कारणशरीरं प्राप्तवत् प्राथमिकजीवान्तःकरणं स्वात्मानं जड-चेतन-राज्याभ्यामुभाभ्यामपि पृथगेव विविनक्ति । एतत्पृथग् ज्ञानमेव प्रारम्भिकस्य संस्कारस्योदर्कः । अथवा पृथगवभासः प्राथमिक-संस्कारोत्पत्ति र्वा युगपदेव जायत इत्यपि वक्तुं शक्यते ॥ २ ॥

प्रसङ्गसङ्गतिसंप्राप्तं सृष्टिनिदानं निर्वक्ति—

**तन्निमित्ता सृष्टिः ॥ ३ ॥**

स संस्कारो निमित्तं यस्या स्तथोक्ता सृष्टिर्भवतीत्यर्थः । पूर्वसूत्रोक्त-विज्ञा-नतः सिद्धमिदं यत् जीवसृष्ट्या सार्धमेव प्राथमिकः संस्कारोऽपि प्रादुर्भवति तथा कर्मणोऽपि बीजं संस्कार एव, यतो हि संस्कारत एव कर्माणि समुत्पद्यन्ते । श्रुतिरपि—"यथापूर्वमकल्पयदिति पूर्वसंस्कारेणैव सृष्टेरुद्भवं समर्थयति । स्मृतिरप्यत्र—

"सृष्टेः संस्कार एवास्ति कारणं मूलमुत्तमम्" ।

इति संस्कारमूलिकामेव सृष्टिमुद्घोषयति । प्रकृतेः साहजिकस्पन्द-नतः स्वत एव जीवपिण्डानां प्रादुर्भावपरम्परा प्रचलति । ततश्च जीवपिण्डानि स्वाभाविकक्रमाभिव्यक्तिनियमत उद्भिज्जतः स्वेदजाण्डजजरायुजादि-क्रमेण मनुष्यदेवपिण्डादिभावमासादयन्ति सृष्टिप्रवाहं प्रवाहयन्ति ।

प्रथमतः सृष्टिप्रादुर्भावसमय एव समुत्पन्नः साहजिकः संस्कारः क्रमशो नानारूपतो विपरिणमन् यावद्विलयनमक्षुण्णस्तिष्ठति । समष्टि-ब्रह्माण्डसृष्टिश्च व्यष्टिपिण्डसृष्ट्यैव सम्बन्धमादधाति । तथा व्यष्टिसंस्कारेण-पिण्डानां समष्टिसंस्कारेण च ब्रह्माण्डानां सृष्टिचक्रं प्रचलतीति निर्विवाद सिद्धम् । इत्यतः संस्काराणां सर्वसृष्टिनिदानत्वं सुसम्पन्नमेव ॥ ३ ॥

तद्भेदानाह—

**स द्विविधः ॥ ४ ॥**

स संस्कारो द्वे विधे यस्य तथोक्तोऽस्तीति सूत्रार्थः । जीवानां गते द्वैविध्यं प्रसिद्धम् । एका जीवान् ब्रह्मतो विमुखयन्ती अस्वाभाविकीत्युच्यते अपरा

ब्रह्माभिमुखं नयन्ती स्वाभाविकीत्युच्यते, इत्येवं द्वैविध्यमनयोः । इत्थमनयोरेव जीवगत्योः पोषकस्य सृष्टिकारणात्मक-संस्कारस्यापि द्वैविध्य मव्याहतमेव ।

स्मृतावप्युक्तम्—

ब्रह्मवैमुख्यनेतैकः संस्कारो जीवबन्धकः ।
स्वस्वरूपप्रदोऽप्यन्यः संस्कारो द्विविधो मतः ॥ ४ ॥

सम्प्रति प्रथम-संस्कार-स्वरूपं निर्वक्ति—

स्वाभाविकान्मुक्तिः ॥ ५ ॥

संस्कारस्य द्वयोर्भेदयो र्मध्ये स्वाभाविकादेकस्मात् संस्कारान्मुक्तिरपवर्गो भवतीति सूत्रार्थः ।

स्मृतिशास्त्रेऽप्यभिहितम्—

प्राकृतोऽप्राकृतश्चैव संस्कारो द्विविधो मतः ।
स्वाभाविको हि भो देवाः ! प्राकृतो बोध्यते बुधैः ॥
अस्वाभाविक-संस्कारस्तथाऽप्राकृत उच्यते ।
स्वाभाविकोऽस्ति संस्कारः स हि मोक्षस्य कारणम् ॥

जीवसृष्टेः स्वाभाविकत्वात् तत्सहचरस्य संस्कारस्यापि स्वाभाविकत्वं सुतरां सिद्धमिति पूर्वसूत्रविज्ञानेनैव साधितम् ।

ब्रह्मप्रकृतेः स्वाभाविक्यास्त्रिगुणात्मिकाया श्चेष्टाया अनुरूपमेव सृष्टि-स्थितिलयात्मिकाः क्रियाः स्वत एव प्रचलन्ति । एतस्मादेव स्वाभाविका-न्नियमात् स एव साहजिकः संस्कारो जीवान् अभ्युदयपथं प्रापयन्नुद्भिज्जात् स्वेदजाण्डजजरायुजादियोनि क्रमेण च अनार्य्यादार्य्यं शूद्राद्वैश्य-क्षत्रिय ब्राह्मणान् ब्रह्मचर्य्यतो गार्हस्थ्य–वानप्रस्थ-सन्यासाश्रमं, तत्रापि कुटीचक-बहूदक-हंस-परम-हंसादिगतिं प्रापयन्नन्ते जीवन्मुक्तपदमप्यर्पयति । इत्येवं यः संस्कारः क्रमशो जीवान् ज्ञानश्रेण्यामग्रेसरान् कुर्वन् आत्मज्ञानं प्रापय्य मुक्तान् विदधाति स एव स्वाभाविकः संस्कारो निगद्यते ।

बीजाङ्कुरवत् संस्कारकर्मणोः सम्बन्ध इति पूर्वमेव प्रमाणितम् । इत्यतः संस्कार-बलेनैव कर्माणि संवर्द्धमानानि जीवान् स्वानुरूपोद्भवां योनिम्प्रापयन्ति । अन्ततः सिद्धमिदं यद्रूपकस्वरूपेण वर्तमानो जीवान् निरवधिमग्रे संवर्द्धयन्स्वस्वरूपप्रापको निर्विकारः शुद्धो यो हि संस्कारः स एव स्वाभाविको मुक्तिप्रदश्चेत्यत्र न कोऽपि सन्देहावसरः ।

स्मृतिशास्त्रेष्वप्युपवर्णितोऽयं विषयः—

धर्मस्य धारिका शक्तिस्तस्य चाभ्युदयप्रदः ।
क्रमः कैवल्यदश्चैव सहजे प्राकृते शुभे ॥
नित्यं जागर्ति संस्कारे प्राणिनां हितसाधके ।
विश्वकल्याणदे नित्ये सर्वश्रेष्ठे मनोरमे ॥ ५ ॥

इदानीं द्वितीय-संस्कारस्वरूपमाह—

**अस्वाभाविकाद्बन्धनम् ॥ ६ ॥**

यो हि अस्वाभाविकः संस्कारः स हि न जीवैः सह जन्यते । अत एव सोऽस्वाभाविक इत्युच्यते । स एव जीवानां गमनागमनचक्रस्य सञ्चालको बन्धनदृढीकारकश्चेति स्मृतिशास्त्रेऽप्युक्तम्—

अस्वाभाविकसंस्कारो निदानं बन्धनस्य हि ।
स एव सततं जीवान्संबध्नाति सुनिश्चितम् ॥

स्वाभाविकाऽस्वाभाविकयोः संस्कारयोर्भेदं विवेक्तुकामः स्पष्टतो विशदयति यत्—जगज्जनयित्र्या ब्रह्मशक्तेः प्रकृतेः स्वाभाविकस्य गुणत्रयस्य परिणाम आवश्यकः । तत्परिणामानुकूलञ्च कर्मणां जीवानां स्वाभाविकानां च संस्काराणां सृष्टिसमुद्भवोऽपि साहजिको निःसन्दिग्धश्च ।

अस्वाभाविकस्तु संस्कारः सर्वथा विपरीतोऽस्मात् । यदा जीवो मनुष्यपिण्डे समागत्य स्वाधीनो भूत्वा स्वेच्छया स्वप्रकृतिं नियोजयन् हठात्प्रकृतिविरुद्धां क्रियामाचरितुं प्रारभते तदा तस्य संस्कारस्योत्पत्तिः । तदानीं हि पञ्चकोषपरिपूर्णो जीवो मनुष्यपिण्डप्रविष्टः स्वेच्छाशक्तिं सुदृढां प्रबलां विदधदस्वाभाविकतया प्रबलेन वेगेन स्वेन्द्रियाणि विषयेषु प्रसञ्जयन्नुद्दामप्रवृत्तिर्भवति । तदा हि नवीनैः कर्मभि र्जायमानास्ते नवाः संस्कारा अस्वाभाविकाः कथ्यन्ते । तैर्हि प्रकृतिविरुद्धैर्मानवप्रकृत्या हठात्समुपार्जितैरस्वाभाविकैः संस्कारैरपूर्वाः विविधा जात्यायुर्भोगाः परिणामस्वरूपाः परिपच्यन्ते । अयमेव हेतुर्जीवानां गमनागमनचक्रपरिभ्रमणे तद्बन्धनदृढतायाञ्चेति संक्षेपः ॥ ६ ॥

तत्र समयसम्प्राप्तं स्वाभाविकसंस्कारस्य विशेषमाहात्म्यं निर्वक्ति—

**त्रिविधशुद्धिराद्यात् ॥ ७ ॥**

एतद्दार्शनिकविज्ञानं परिलिलक्षयिषुर्महर्षिः सूत्रकारोऽभिदधाति-यत् स हि आद्यः स्वाभाविकः संस्कारोऽद्वैतभावापन्नोऽविचलश्चैकस्वरूपोऽपि

अध्यात्माधिदैवाधिभौतिकस्वरूपां त्रिविधामपि शुद्धिं प्रयच्छति । तैश्च शुद्धित्रयैः स्वस्वरूपाधिगत्या जीवो मुक्तिमार्गमाश्रित्य नन्दति शुद्धित्रयापादकानां तत्त्वानां मुक्तिप्रदस्वभावात् । विज्ञानमिदमन्यथाऽपि विवरीतुं शक्यते यथा—

स्वाभाविकेषु संस्कारेषु क्रमोन्नतेरन्ततश्च मुक्तितत्त्वस्यापि विद्यमानत्वाद् अध्यात्माधिदैवाधिभौतिकात्मिकायास्त्रिविधाया अपि शुद्धेरवश्यम्भावित्वं स्वभावसिद्धत्वञ्चेति । स्मर्य्यते चात्र--

स्वाभाविको हि संस्कारस्त्रिधां शुद्धिं प्रयच्छति
आध्यात्मिकाधिदैवाधिभौतिकीं क्रमशः सुराः ॥ ७ ॥

त्रिविधशुद्धिप्रसङ्गेन तद्विशेषमप्याह--

**एकस्यापि षोडशकलाप्रकाशः ॥ ८ ॥**

यथा चन्द्रः प्रतिदिनं कलयैकया वर्द्धमानः प्रतिपदमारभ्य पूर्णिमां यावत् क्रमशः षोडशभिः कलाभिः परिपूर्णो भवति, तथैव स्वाभाविकः संस्कारः स्वाभ्युदयनिःश्रेयसकरीं सम्पूर्णामपि शक्तिं क्रमविकाशत एवासादयति ।

अयञ्च पूर्णविकाशः स्वभावतः साधनसाहाय्येन चोभयथापि भवति । तत्र स्वभावतः क्रमविकाशो यथा—स्वेदजत्वादण्डजत्वादि–जरायुजान्तयोनि-क्रमेण, अनार्य्यमनुष्यत्वादार्य्यमनुष्यत्वादिभिः, तेष्वपि शूद्रत्व-वैश्यत्व-क्षत्रियत्व-ब्राह्मणत्वादिभिः, ब्रह्मचर्यादिसन्यासान्ताश्रमैस्तत्रापि कुटीचकबहूदकहंसपरमहंसादिभिरवस्थाक्रमैरित्येवं षोड़शभिः सन्धिभिः परिस्फुटतामासादयन्नद्वितीयः स्वाभाविकः संस्कारः परिपूर्णत्वमासादयति ।

यद्यपि मनुष्ययोनौ साधनबलेनैव पूर्णकलासादनं सम्भवति । तथाप्यत्रोदाहरणक्रमेण षोड़शकलासादृश्यतया षोडशसोपानानि निदर्शितानि । एतदुदाहरणानुसृत्या मनुष्ययोनितो देवयोनिं यावदन्यविधान्यपीदृशानि सोपानानि भवितुमर्हन्ति । तत्रापि पूर्णकलाविकाशः साधनाधीन एव भविष्यति । तानि च साधनानि तपोयोगज्ञानमूलकान्येवोहनीयानि ।

वैदिककर्मपद्धत्या सम्बद्धस्य स्वाभाविकस्य संस्कारस्य यः क्रमविकाशो वैदिकैः षोडशभिः संस्कारै र्भवति, अर्थात् साधनसाहाय्येन पुरुषार्थमाश्रित्य वेदोक्तपद्धत्या अस्वाभाविकानां संस्काराणां वेगं निरोध्य स्वाभाविक–संस्कारसम्बन्धिनीनां षोडशीनामपि कलानां विकाशो भवतीत्येतदपि पुरतो विस्तरेण स्फुटीभविष्यति ।

स्मृतिशास्त्रेषु विस्तरशो विषयोऽयमुपवर्णितो यथा—

स्वाभाविकी यदा भूमिः संस्कारस्य प्रकाशते।
यच्छ्रुन्त्यभ्युदयं नृभ्यो दद्यान्मुक्तिमसौ क्रमात् ॥
एतावच्छ्रौत-संस्काररहस्यमवधार्यताम्।
वेद्या भवद्भिरप्येषा श्रुति र्देवाः! सनातनी ॥
संस्कारेष्वहमेवाऽस्मि वैदिकेष्वखिलेष्वहो।
स्वसम्पूर्णकलारूपैस्तन्नृन् स्वाभिमुखं नये ॥
गर्भाधानं पुंसवनं सीमन्तोन्नयनं तथा।
जातकर्म तथा नामकरणञ्चान्नप्राशनम्।
चूडोपनयने ब्रह्म व्रतं देवव्रतं तथा।
समावर्तनमुद्वाहोऽग्न्याधानं विबुधर्षभाः ॥
दीक्षामहाव्रतञ्चान्त्यः सन्यासः षोडशो मतः।
संस्कारा वैदिका ज्ञेया उक्तषोडशनामकाः ॥
अन्ये च वैदिकाः स्मार्ताः पौराणास्तान्त्रिकाश्च ये।
एषु षोडशसंस्कारेष्वन्तर्भुक्ता भवन्ति ते ॥

संक्षेपेणैवं विज्ञेयं यद् स्वाभाविकानां संस्काराणां क्रमाभिव्यक्तिश्चन्द्रवदेव भवति। स्वतो वा स्यात् साधनबलेन वा स्यात्। क्रमाभिव्यक्तिमतस्तस्य संस्कारस्य स्वरूपे नाणुरपि विभेदः। यतो हि तत्रान्तरायोत्पादकस्य न कस्यापि जैवस्य कर्मणः सम्पर्कः सम्भवति। स तु प्रकृतिसहजात एकरसोऽद्वितीयः क्रमशोऽभिव्यक्तिमासादयन् पूर्णतामासादयति।

यथा यथा च तस्य विकाशो भवति तथा तथा त्रिविधापि शुद्धिस्तद्विकाशानुरूपैव समधिगम्यते। अवसाने च शुद्धित्रयस्य पूर्णतया मुक्तिपथं परिष्कृत्य च परमानन्दोपलब्धिरासाद्यत इति संक्षेपः ॥ ८ ॥

इदानीमस्वाभाविक-संस्कार-स्वरूपमभिधत्ते—

**द्वितीयस्यानन्त्यं सृष्टि-वैचित्र्यात् ॥ ९ ॥**

जीवो यदा प्रकृतितरङ्ग-वशादान्दोलायमानेन स्वाभाविकेन क्रमशो विकाशमासादयता संस्कारेण मनुष्ययोनिमासादयति तदा पञ्चकोषपरिपूर्णः स्वयं पूर्णशक्तिविशिष्टो नवीनसंस्कारार्जनक्षमोऽप्रतिहतया स्वेच्छया स्वोद्दामक्रियाशक्त्या नानाविधान् यान् नूतनान् संस्कारान् समर्जयति, त एव नवाः संस्कारचया अस्वाभाविका अभिधीयन्ते। वासनानां वैचित्र्याच्च तेऽनन्ता अनेकधा भिद्यन्ते।

स्मृतावप्युक्तम्—

अस्वाभाविकसंस्काराः पुंभिः स्वयमुपार्जिताः।
अनन्तास्तत्प्रभेदाः स्युर्जीवबन्धन-हेतवः॥

प्रकृतिप्रवाह-वशादुत्पन्नो हि स्वाभाविकः संस्कार एक एव। अस्वाभाविकस्तु मानवेच्छाया अपरिमेयत्वात्तदुत्पन्नतया अनन्तः।

यतो हि—मानवानां प्रकृतिवैचित्र्याद्वासनावैचित्र्यम्। इच्छाऽपरपर्य्यायाया स्तस्या अपरिमेयत्वात्तज्जन्यानां संस्काराणामानन्त्यं स्वभावसिद्धमेव।

स्वीयगुणत्रयस्य परस्परं घातप्रतिघाताभिभवाद्याश्रयतया वैषम्यमुपगता प्रकृतिरानन्त्यं वैचित्र्याणामासदयतीत्यतोः मनुष्यप्रकृतिरपि नानावैचित्र्यं समश्नुते। अस्मादेव हेतोरस्वाभाविकानां संस्काराणामप्यानन्त्यं स्वभावसिद्धम्॥ ९॥

तस्य प्रारब्धिस्थानमाह—

मानवे तदारम्भः॥ १०॥

स्वाभाविकस्य संस्कारस्य प्रारब्धिर्यथा प्रकृते र्लीलासाम्राज्यपयोऽब्धेश्चिज्जड़ग्रन्थिरूपे बुद्बुदे भवति तथैवास्वाभाविकस्यापि तस्य मनुष्ययोनाविह प्रारम्भो भवति। चिज्जडग्रन्थिसन्धौ उद्भिज्जस्वेदजसन्धौ स्वेदजाण्डजादिसन्ध्योरित्येवं मनुष्ययोनितः प्राक्तनेषु चतुर्ष्वपि सन्धिषु जीवः प्रकृतिवशगः सन् पराधीन एव तिष्ठति। तदनन्तरमिह मानवयोनिश्रेणिमुपेत्य स्वाधीनताधिकारमासादयति, ततश्चात्र मानवयोनिमुपेत्य इच्छाशक्तिक्रियाशक्तिबलेन स्वाधीनो भूत्वा विचरति।

अनया स्वाधीनतयैव सार्धं तस्य जीवस्याऽभ्यन्तरीणाः सर्वा अपि वैचित्र्यगर्भा वासनाः सञ्चिता उद्बुद्धा भवन्ति। तदनुसारिण्यश्चास्वाभाविकाः संस्काराः संगृह्यन्ते। फलतो यदा मानवदेहे जीवः पूर्णप्रकृति भूत्वा कर्माणि सञ्चिनोति तदैव तत्राऽस्वाभाविकानां संस्काराणामपि प्रवाहः प्रादुर्भवति॥ १०॥

तदवयवान् संख्याति—

स तु त्र्यवयवः॥ ११॥

सोऽस्वाभाविकः संस्कारस्त्रयोऽवयवा यस्य तथाविध इति सूत्रार्थः। त्रिगुणात्मिकायाः सृष्टेः स्वाभाविकभेदत्रयानुकूलतया मानवानामस्वाभाविकः संस्कारोऽपि भेदत्रयेणैव विभक्तो भवति।

ते च त्रयो भेदाः सञ्चित-क्रियमाण-प्रारब्धाभिधानो ज्ञेयाः। तत्र च मनुष्यैः स्वेच्छाशक्त्या स्वक्रियाशक्त्या च ये संस्कारा नवीना असंख्याताः प्रतिमुहूर्तं सञ्चीयमानाः स्वीयचिदाकाशे संगृह्यन्ते त एव संस्काराः सञ्चितशब्देनाभिधीयन्ते । यतो हि ते तत्रानङ्कुरिता धान्याढके धान्यबीजसंग्रहवत् संगृहीता एव तिष्ठन्ति । तेभ्य एव संस्कारसमूहेभ्यः कियन्तः पृथग्भूय जीवस्यैकजन्मनो निदानीभूतास्तज्जन्मोपयोगिनो जात्यायुर्भोगान् निर्मातुमङ्कुरिता भवन्ति त एव संस्कारसंघाः प्रारब्धशब्दवाच्या भवन्ति। ये च मानवैः प्रारब्धं भुञ्जानै र्नूतनाः संस्काराः समुपार्ज्यन्ते त एव क्रियमाणा इत्यभिधीयन्ते। अत्र विषये स्मृति-शास्त्रेष्वेवमुपलभ्यते तद्यथा—

दुर्दमा कर्मणः शक्तिस्त्रिधाऽवघ्नाति प्राणिनः ।
तत्प्रकारत्रयं देवाः! नूनं वेदेषु विद्यते ॥
ख्यातं सञ्चित-प्रारब्ध-क्रियमाणाभिधैर्ननु ।
यत्क्षणात् संसृतावादौ जीवैर्जीवत्वमाप्यते ॥
तावन्तं कालमारभ्य संस्कारा जैवकर्मणः ।
यावन्तः सम्प्रगृह्यन्ते सञ्चितं कर्म तान्जगुः ॥
ये फलोन्मुखसंस्कारा जात्यायुर्भोगरूपकम् ।
तथा जीवप्रकृत्यादिफलं दातुं मुहुर्मुहुः ॥
जनयन्ते वपुः स्थूलं तान् प्रारब्धं प्रचक्षते ।
स्थूलदेहान्विता जीवा नैजीं जैवीं हि वासनाम् ॥
सन्तृप्त्या सफलां कर्तुं नूतनं कर्म कुर्वते ।
तत्त्वज्ञानविनिष्णातैः क्रियमाणं तदुच्यते ॥ ११ ॥

तदीयं प्रधानं कार्य्यं वर्णयति—

## तस्मादाविर्भाव आवागमनचक्रस्य ॥ १२ ॥

चिज्जडग्रन्थिनिबद्धो जीवः स्वप्रारब्धावस्थात आरभ्योद्भिज्जस्वेदजाण्डजजरायुजादियोनिषु परिभ्रमन्निर्बाधं क्रमोन्नतिमासादयन् अवसाने मनुष्ययोनिमासाद्याऽस्वाभाविकसंस्कारग्रहपरो भूत्वा स्वक्रमोन्नतौ स्वात्मनैवान्तरायं समुपस्थापयति । स एवान्तरायः तस्य गमनागमनचक्रस्य निदानम् । नवीना अस्वाभाविका एव संस्कारास्तस्य जीवस्य कृते नवाजात्यायुर्भोगाञ्जनयन्तः स्वाभाविक-संस्कारसमुपार्जननिरोधेन क्रमोन्नतौ विघ्नमाचरन्ति । इत्येवं स जीवः

संसारचक्रे परिभ्रमन्ननन्तकालं यापयन्दैवात् कदाचिद् गुरुदेवसत्सङ्गप्रसादतः सुमार्गमासादयन्नग्रे समेधते।

स्मृतिषु बहुधोपलभ्यते,

तद्यथा—

सृष्टेः संस्कार एवास्ति कारणं मूलमुत्तमम्।
प्राकृतोऽप्राकृतश्चैव संस्कारो द्विविधो मतः॥
स्वाभाविको हि भो देवाः! प्राकृतः कथ्यते बुधैः।
अस्वाभाविकसंस्कारस्तथाऽप्राकृत उच्यते॥
स्वाभाविकोऽस्ति संस्कारस्तत्र मोक्षस्य कारणम्।
अस्वाभाविकसंस्कारो निदानं बन्धनस्य वै॥
स्वाभाविको हि संस्कारस्त्रिधा शुद्धिं प्रयच्छति।
देवाः षोडशभिः सम्यक् कलाभि र्मे प्रकाश्यते॥
मुक्तिप्रदोऽद्वितीयोऽपि संस्कारः प्राकृतो ध्रुवम्।
साहाय्यात् षोडशानां मे कलानां कर्म-पारगाः॥
ऋषयः श्रौतसंस्कारैः शुद्धिं षोडश-संख्यकैः।
आर्य्यजाते विशुद्धाया रक्षुर्यत्नतः खलु॥
अस्वाभाविक-संस्कारा जीवान् वध्नन्ति निश्चितम्।
अनन्ता स्तस्य विज्ञेया भेदा बन्धन-हेतवः॥
स्वाभाविकी यदा भूमिः संस्कारस्य प्रकाशते।
यच्छन्त्यभ्युदयं नृभ्यो दद्यान्मुक्तिमसौ क्रमात्॥ १२॥

गमागमचक्रविस्तृतिस्वरूपं वर्णयति—

तच्चङ्क्रमणं मृत्युतः प्रेतावधि॥ १३॥

तस्याऽस्वाभाविक-संस्कार-सस्वलितजीवस्य मृत्युतो मृत्युलोकात् प्रेतावधि प्रेतलोकान्तमेव चङ्क्रमणं भवतीति सूत्रार्थः।

इह मानवयोनावागत्य पञ्चकोषपरिपूर्णः पूर्णावयवसम्पन्नो जीवो यदोद्दामप्रवृत्त्या स्वतःप्रेच्छाशक्तिक्रियाशक्तिभ्यामस्वाभाविकान् संस्कारान् संगृह्य अस्वाभाविकेषु भोगेष्वासक्तो भवति, तदा सोऽनार्य्योऽसभ्यो मृत्युतः स्थूल-शरीरं विहाय प्रथमं प्रेतलोक एव गमागममारभते।

यतो हि—स इन्द्रियाणामस्वाभाविक्या प्रवृत्त्या तेष्वस्वाभाविक्या आसक्त्या च यां तीव्रातितीव्रां वासनां सञ्चिनोति तद्बलेनास्मिन् मृत्युलोक एव

मोह-पाशनिगडितो मरणानन्तरं एतत्संश्लिष्टप्रेतलोकमुपेत्य तत्रैव निरुध्यते, नाग्रे भवति तस्य गतिः। तत्र च स्ववासनानुकूलान् भोगान् तर्पयित्वा पुनर्मृत्युलोकमुपैति । इत्येवमस्यां प्राथमिकग्रामावस्थायां तथाभूतस्य जीवस्य गमागमचक्रप्रसारः प्रेतलोकावध्येव भवति ॥ १३ ॥

इदानीं चक्रक्रमगतिं ब्रूते—

तत्प्रसरति नरकतः पितृलोकम् ॥ १४ ॥

तत् गमागमचक्रं नरकलोकतः पितृलोकं यावत् प्रसरति गमनं करोतीति सूत्रार्थः ।

मानवो यदात्र कर्मभूमौ मृत्युलोके पौनःपुन्येन जन्ममृत्यू गृह्णन् कर्मभूमेरस्याः प्रतापेन स्वत एवोपलब्धकर्मकर्तृत्वसुयोगेन अनार्य्यभावत उन्नतामवस्थामधिगच्छन्ति, तदा स सुखदुःखनिदानयोः सदसदात्मकयोः कर्मणोः सम्यज्ज्ञानमधिगत्य पूर्वतो भूयस्या मात्रया सुकृतदुष्कृते समुपार्जयितुं समर्थतया लब्धाधिकारो मरणानन्तरं प्रेतलोकसीमानमतिक्रम्य तदग्रिमलोकमप्युपैति । तथा हि–स स्वकृतकर्मानुसारं पापभोगाय नरकलोकं पुण्यभोगाय च पितृलोकं यावदुपैति ।

स्मृतिशास्त्रेऽभिहितम्—

परिधिस्तस्य चक्रस्य द्विधा भिन्नोऽस्त्यसंशयम् ।
तत्रैकः प्रेतलोकोऽस्ति मृत्युलोकोऽपरस्तथा ॥
असौ चक्रस्य परिधिः पितृलोकावधि क्रमात् ।
विस्तीर्य्य प्रथमं पश्चान्नरके स्वरपि ध्रुवम् ॥

तस्य जीवस्य ज्ञानक्रियाशक्तिवृद्ध्या प्रातिभाव्यमपि समेधतेऽतः स पुण्यपापयोः पूर्णाधिकारवान् स्वगमागमचक्रपरिधिमपि पूर्वतोऽधिकतरं विस्तारयति । बाल्यकालेऽज्ञानासामर्थ्यतो यथा मानवः पापपुण्ययोर्न विशेषाधिकारमावहति तथैव पूर्वसूत्रोक्तावस्थायामपि स्वभोगचक्रपरिधेः सङ्कोचेन पुण्यपापयोर्न पूर्णाधिकारवान् । अत्र तु स्वोन्नतावस्थायां स्वोच्चाधिकारप्राप्त्या स्वभोगचक्रपरिधेरपि विस्तीर्णतामेवासादयति ।

चतुर्दशसु भुवनेषु भूर्लोको भुवनमेकं गण्यते। स च ब्रह्माण्डस्य चतुर्दशांशानामेकोंऽशः । पुनश्च स मृत्युलोक-नरकलोक-प्रेतलोक-पितृलोकेतिनाम्ना चतुर्धा विभक्तः । तत्र चायमस्माकं लोक एव प्रथमो मृत्युलोकशब्दभाक्, यतो हि जीवा अत्र लोके मातृगर्भतो जनिमासाद्य पञ्चत्वमपि यान्ति । अस्मा-

नमित एतल्लोकसंश्लिष्ट एव प्रेतलोको द्वितीयः। मृत्युलोकावशिष्टदुःखभोगाश्रयो लोको नरकलोकस्तृतीयः। एतल्लोकसन्निहितः सामान्यसुखभोगभूमिः पितृलोकश्चतुर्थः। इमामवस्थामुपेतो जीवश्चतुर्ष्वप्येषु लोकेषु गमनागमनचक्रद्वारा प्राप्ताधिकारः स्वगतागतं वितनुते ॥ १४ ॥

अधुना क्रमप्राप्तां सर्वाभ्यर्हितां गतिं वर्णयति—

**विस्तृतिश्चतुर्दशभुवने ॥ १५ ॥**

विस्तृतज्ञानक्रियाशक्तीनां जीवानां चतुर्दशभुवनेऽपि गतिविस्तारो भवतीत्यर्थः।

मानवो यदा स्व-क्रिया-ज्ञानशक्त्यधिकारमधिकं विस्तारयति, तदा चतुर्दशभुवनेषूपरि षट्स्ववशिष्टेषु भुवः स्वर्महर्जनस्तपःसत्यमित्येतेषु लोकेषु तथाऽधस्तनेष्वपि सप्तसु तल-अतल-वितल-सुतल-रसातल-तलातल-पातालेषु लोकेषु सुखभोगपरिसमाप्तये गमागमचक्रपद्धत्या यातायातमातनोति, पुनश्चावसानेऽत्र मृत्युलोके विश्राममासादयति। पितृलोकोऽन्ये च ये षड्लोका उपरिस्थितास्ते सप्तापि दैवसुखभोगाश्रया लोकाः। अधस्तनाश्च तलादयः सप्तलोका आसुरभोगयोग्या इति विभावनीयम्।

एतत्सूत्रोक्तविज्ञानतात्पर्य्यमिदम्, यदस्यामुन्नतावस्थायां समागतो जीवोऽस्वाभाविकसंस्काराणामसाधारणेन बलेन स्वगमनागमनचक्रमेवं विस्तारयति यत् स्वभोगाभिलाषं समापयितुं चतुर्दशस्वपि भुवनेषु गतागतमाचरति।

अत्र विषये स्मृतिशास्त्रेऽप्यभिहितम्—

तमः प्रधानं प्रथमं चक्रमेतदनन्तरम्।
तमोरजःप्रधानञ्च रजःसत्त्वप्रधानकम् ॥
शुद्धसत्त्वप्रधानं हि जायते तदनन्तरम्।
ऊर्ध्वलोकं ततो मृत्युलोकं व्याप्नोति केवलम् ॥
परिधिस्तस्य चक्रस्य ततोऽन्ते मयि लीयते।
मृत्युलोके गतिस्तस्य स्वतो हि सहजा सती ॥
अथवाऽसाद्य शुक्लत्वं सत्यलोकावधि ध्रुवम्।
गत्वा तत्र तदैवाशु सर्वथैव प्रशाम्यति ॥ १५ ॥

द्वितीयस्यापूर्णतामुपपादयति—

**द्वितीयो नाऽलं चक्रभेदाय ॥ १६ ॥**

यो हि संस्कारश्चक्रं निर्माति सोऽसमर्थस्तद्भेदाय "यद्येन जन्यते न

तत्तेन विनाश्यत" इति नियमात्। अतोऽस्वाभाविकः संस्कारो गमागमचक्रभेदाय सर्वथैवासमर्थः।

धर्मस्य द्विविधो हि विहितोऽधिकारः। एकश्चैहलौकिकपारलौकिकाभ्युदयप्रदायकरूपो द्वितीयश्च निःश्रेयससमर्पकस्वरूपः। तत्रास्वाभाविक संस्कारसमुपार्जितेन सुकृतेनाभ्युदयस्तूपलब्धुं शक्यते, निःश्रेयसाधिगतिर्हि तदधिकारबाह्यैव सम्मतेति न तेन निःश्रेयसो लब्धुं शक्यः।

जीवसमष्टिवासनापुञ्जत एव ब्रह्माण्डोत्पत्तिस्तत्र च ब्रह्माण्डोत्पत्तिनिदानस्वरूपाणां वासनानामस्वाभाविका एव संस्कारा हेतवः। तैश्चास्वाभाविकैः संस्कारैः सर्वत्र चतुर्दशस्वपि भुवनेषु यथेच्छमभ्युदयमधिगच्छन् परिभ्रम्य जीवो गमागमचक्रप्रवाहतः पुनरपि मृत्युलोकमेव समुपैति। यतो हि गमागमचक्रमस्वाभाविकसंस्कारमूलकम्, अस्वाभाविकश्च संस्कारो जैववासनामूलकः। अतश्च यावज्जीववर्गः स्ववासनां प्रविलाप्य प्राकृतिके स्वाभाविके संस्कारप्रवाहे स्वात्मसमर्पणन्न करोति, तावन्न स गमागमचक्रभेदं विधाय मुक्तिपथपथिको भवितुमर्हति।

श्रीगीतोपनिषद्यप्यभिहितम्—

> व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन !
> बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥

इत्युदाहृत्यावसीयते यद् या व्यवसायात्मिका बुद्धिरेकाऽद्वितीयेति, सा मुक्तिप्रदा। अव्यवसायात्मिका या च बहुशाखावती अनन्ताऽपरिमितेति, सा बन्धननिदानम्। तथैवैकतत्त्वपरः स्वाभाविको हि संस्कारो जीवान् यथाधिकारं यथानियममग्रेसरानुन्नतिपथपथिकान् विदधन्मुक्तिभूमिमपि प्रापयति। अस्वाभाविकस्तु संस्कारोऽनन्तशाखासंश्रयणतो बहुत्वादनन्तत्वादपरिमेयत्वाच्च जीवाश्रितरां गमागमचक्र एव पातयति, न ततोऽपसर्तुमवसरमप्युपयच्छतीति ॥ १६ ॥

चक्रभेदने कः समर्थ इत्याह—

**तत्सामर्थ्यमाद्यस्याऽबाधितत्वात् ॥ १७ ॥**

आद्यस्य स्वाभाविकस्य संस्कारस्य अबाधितत्वाद् अविहतगतित्वात् तस्मिन् चक्रभेदने सामर्थ्यं तत्सामर्थ्यम् इति सूत्रार्थः।

स्वाभाविको हि संस्कारो जीवान् प्रथमसृष्टिदशात एवारभ्य क्रमशो नियमेन समुन्नयन् चतुरशीतिलक्षात्मिकासु जीवयोनिषु संसारयन् निर्बाधं

मनुष्ययोनावानयति । तत्र च मानवयोनौ जीवोऽस्वाभाविकसंस्कार-समुपार्जनया यद्यपि गमागमचक्रावर्त्ते पतितः पुनः पुनस्तत्रैव पतितो बम्भ्रम्यते । तथापि तत्र शुद्धित्रयस्यापि पूर्णसत्तायास्सत्त्वात् तद्व्रिगत्या तत्त्वज्ञानावस्थायां महापुरुषत्वदशायां निष्कामभावनोदयेन वासनाराहित्येन च जीवन्मुक्तिदशामुपेत्य पुनरपि स्वस्मिन् स्वाभाविकस्य संस्कारस्योदयेन तेन स्वपदमासाद्यत एव ।

यद्यपि चतुरशीतिलक्षात्मकोद्भिज्जादियोनिगैर्जीवैस्सह जीवन्मुक्तस्या-न्धकारप्रकाशवद् रात्रिन्दिनवदान्तर्य्यं, तथापि जीवन्मुक्ते पुरुषे जैववासनारा-हित्येनान्यत्र च प्रकृतिपारवश्येनोभयत्रापि सादृश्यातिशय एव स्फुरति ।

तथा हि मानवयोनितोऽधोयोनिगा जीवा यथा प्रकृतिपरवशाः प्रकृतिचेष्ट-यैव परिचाल्यन्ते, स्वीयेच्छाक्रियाशक्त्युपयोगन्नैव कर्तुमर्हन्ति, तथैव जीवन्मुक्ता-वस्थामुपेतास्तत्त्वज्ञानिनो महापुरुषाः प्राकृतिकनियमानुकूलमेव शारीरिकं मानस-ञ्च व्यापारं प्रयुञ्जते । यतो हि ते तदानीं वासनानाशेन तत्त्वज्ञानोदयेन च स्वेच्छाक्रियाशक्तिविरहिता एव भवन्ति । एवमत्रोभयत्रापि एकोऽद्वितीयः स्वाभाविक एव संस्कारः सर्वं व्यापारं परिचालयतीति सुनिश्चितम् ।

विज्ञानमिदमन्यथापि विव्रियते । तथा हि—अस्वाभाविको हि संस्कारो जीवानां वासनया समुत्पद्यते । यतस्तत्राऽस्वाभाविकी नवीनता जटिलता च निगूढा, अतश्च तेन बन्धनमेव सूयते न मुक्तिपथ आविष्क्रियते ।

दृष्टान्ततो यथा—किञ्चन सूत्रं परस्परं संसक्ततया जटिलितं स्यात्तद-नन्तरञ्च तस्य ग्रन्थिविमोचनं त्यक्त्वा पुनस्तज्जटिलितमेवोत्तरोत्तरं क्रियेत चेत् तर्हि तद्ग्रन्थिविमोकः कदापि न स्यात् ।

स्वाभाविकस्य संस्कारस्य या क्रिया भवति सा तु सरलैकरसा सुगमेति यतो हि कर्मणो बीजभूतः संस्कार इति पूर्वमेवाभिहितम् । अतः स संस्कारः कर्म अङ्कुरोन्मुखं कृत्वा तदग्रे प्रवृत्त्यै प्रेरयतीति तदीयं स्वाभाविकं कर्तव्यम् ।

परिणामतोऽस्वाभाविको हि संस्कारः कर्मगतिं जटिलां विदधज्जीवं गमागमचक्रे पातयति । स्वाभाविकस्तु स कर्मगतिं सरलयन् तद्ग्रन्थिञ्च विमो-चयन् गमनागमनचक्रतो जीवान् विमोचयतीति मुक्तिहेतुः केवलं स्वाभाविकः संस्कार एव सिध्यति ॥ १७ ॥

तद्गतिपरिणामं विवेचयति—

तत्कलाभिरभ्युदयनिःश्रेयसे ॥ १८ ॥

स्वाभाविको हि संस्कारः क्रमशो विकाशमासादयन् षोडशभिः कलाभिः परिपूर्णः पूर्णमेव फलं प्रयच्छतीति विस्तरतः प्रतिपादितं पूर्वम् ।

धर्मशक्तिसमेधितो जीव उद्भिज्जयोनितः क्रमशो विकाशमासादयन् परमहंसदशामुपेतः पुनः स्वस्वरूपमेवोपलभते। धर्मशक्तिरेव स्वाभाविकं संस्कारं क्रमविकाशाय प्रोत्साहयति। यथा धर्म्मेऽभ्युदयनिःश्रेयसशक्तिरस्ति तथैव स्वाभाविकसंस्कारेऽपि सास्तीति नाणुरपि तत्र सन्देहावसरः। स्वाभाविकस्य संस्कारस्यक्रमविकाशः प्रथममभ्युदयं चरमे च स्वपूर्णतया निःश्रेयसं प्रयच्छतीति ॥ १८ ॥

विज्ञानमिदमधिकं विशदयितुकामः पुनराह—

ऊर्ध्वगस्थास्ताः ॥ १९ ॥

ता अभ्युदयनिःश्रेयसप्रदाः कला ऊर्ध्वगामिसंस्कारस्था इति सूत्रार्थः। स्वाभाविकसंस्कारस्वरूपं स्फुटं लक्षयितुकामो ब्रूते-यद् यो हि संस्कारो जीवसृष्टिसहचरः, प्रकृतिस्वभावसम्बद्धः, प्रकृतिश्च प्रोद्यत्तरङ्गां विदधत्, तत्तरङ्गान् स्वस्वरूपे नयति, स एव स्वाभाविकः संस्कारोऽभिधीयते। अथवा यश्च कर्मबीजात्मकः संस्कारो जडचेतनात्मकेऽस्मिन् जगति स्वीयत्रिगुणात्मकस्वभावतएवोद्यत्तरङ्गाया जडायाः प्रकृतेस्तरङ्गान् नियमतः स्वस्वरूपं प्रापयति, स एव स्वाभाविक इति यावत्। यश्च तांस्तरङ्गान् स्वस्वरूपमप्रापय्य प्रकृतिमर्यादाभ्यन्तर एव तत्प्रवाहे पौनःपुन्येनावर्तयति स एवास्वाभाविको निगद्यते।

अन्यथापीदं बोद्धुं शक्यते—तथाहि—यः संस्कारो नियमतो जीवान् स्वस्वरूपत्वाधिगमाय प्रेरयति, स एव स्वाभाविकः। यश्च मुहुर्मुहुर्जीवानिन्द्रियाभिमुखानेवाकृषति स एवास्वाभाविक उच्यते। यो हि संस्कारो यथार्थतो धर्मगतिमृजुं प्रबलां च करोति स स्वाभाविकः। स हि जीवावस्थया सहैव प्रकृतितरङ्गे स्वत एवोत्पद्यते। तस्मिंश्च धर्मस्य जगद्धृतिमत्त्वशक्ति र्जीवानामभ्युदयनिःश्रेयसदा च शक्तिरव्यक्ते तिष्ठतः।

अतो मानवसंस्कारराशिषु यत्रेदं लक्षणमुपलक्ष्यते स हि सर्वोऽपि स्वाभाविकसंस्कारसजातीय एव इत्यसन्दिग्धम्। विज्ञानमिदमित्थमपि बोद्धुं शक्यते—

तथाहि—प्रकृतिप्रवाहतो यथा जीवोत्पत्तिः स्वाभाविकी तथैव, तत्स्वरूपोपलब्धिरपि स्वाभाविकीत्यतो जीवान् मुक्तिपदं प्रापयन्त्याः क्रियाया बीजात्मकं कारणमेव स्वाभाविकः संस्कारः। स च सर्वोऽपि तत्रोर्ध्वगामिषु संस्कारराशिषु विद्यत इति ॥ १९ ॥

प्रसङ्गतो वैदिकान् संस्कारान् साधयति ।

वैदिकनिष्ठाश्च ॥ २० ॥

स्वाभाविकसंस्कारस्य साधारणीमवस्थामभिधायेदानीमसाधारणीमवस्थामभिधत्ते—वैदिकेति—वेदे भवा वैदिकाः संस्कारास्तेषु निष्ठा स्थितिर्यासां कलानां ता अपि अभ्युदयनिःश्रेयसप्रदा इत्यर्थः ।

मनुष्ययोनितोऽधःस्थयोनिषु केवलं प्राकृतिकी एव कर्मधारा प्रचलति । न तत्र जीवानां स्वसंकल्पो हेतुः कर्मोत्पत्तौ । यतस्तासु योनिषु स्वाभाविकानां संस्काराणां क्रियानिर्बाधं प्रचलतीत्यत एव तासु योनिषु स्वाभाविकानां संस्काराणां साधारणावस्थैव तिष्ठति ।

मनुष्ययोनावपि वर्णाश्रममर्य्यादाशालिन्यामार्य्यजातौ स्यादाहो तद्विरहितायामनार्य्यजातौ वा स्यादुभयत्रापि प्रकृतेः स्वाभाविकेनैव नियमेन या क्रमोन्नतिः सततं प्रवर्तमाना समेधते तत्रापि स्वाभाविकानां संस्काराणां साधारण्येव स्थितिरित्यभ्युपगन्तुं शक्यते ।

परन्तु श्रुत्यनुसारेण श्रुतिसम्मतस्मृतिपुराणानुसारतोऽपि ये क्रमोन्नतिसोपानस्वरूपा विशेषसंस्कारा आर्य्यजातौ निर्धारिताः सन्ति, यैश्च संस्कारैः सुसंस्कृताऽऽर्य्यजाति र्भुवां सिद्धिं विन्दन्ती एकस्मिन्नेव जन्मनि मुक्तिपथमध्यारोढुं समर्था भवति,—तेषां शास्त्रीयसंस्काराणां क्रियाभिर्ये स्वाभाविकाः संस्काराः सम्बन्धभाजः सन्ति त एवासाधारणाः संस्कारा निगद्यन्ते । ते च श्रौतस्मार्तपद्धतिप्रचालितेषु अष्टचत्वारिंशत्सु संस्कारेषु षोडश प्रधाना गण्यन्ते । ते चाभ्युदय-निःश्रेयसप्रदानक्षमा अवसीयन्ते । तत्र गर्भाधान-संस्कारतोऽभ्युदयप्रारब्धिः क्रमशः समेधमाना चरमे संन्यासे निःश्रेयसाधिगत्या विश्राम्यति ।

स्मृतिषु विस्तरशो वर्णितः प्रभावः संस्काराणाम्, तथा हि—

वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् ।
कार्य्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥
गार्भैर्होमैर्जातकर्मचौलमौञ्जीनिबन्धनैः ।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥ इति ॥ २० ॥

तद्धेतुमाह—

नित्यज्ञानमयत्वाद्वेदानाम् ॥ २१ ॥

वेदानां नित्यज्ञानमयत्वन्तु प्रथमे पादे विस्तरशो वर्णितमेव । तादृशानां

नित्यज्ञानमयानां भगवदाज्ञास्वरूपाणां वेदानां यदपि शासनं स्यात्तत् सर्वमपि सत्यं नित्यं भवेदित्यत्र नाणीयानपि सन्देहः । एताहशैर्वेदशासनैर्याः क्रियाः प्रवर्तिताः स्युस्ता अपि सिद्धा एवेत्यपि निर्विवादमेव ।

अपरञ्च यथा बीजानां वृक्षैः सह वृक्षाणाञ्च बीजैः सह नित्यः सम्बन्ध ऐक्यञ्च, तथैव कर्मणां संस्कारैः सह संस्काराणाञ्च कर्मभिः सार्द्धं नित्यः सम्बन्ध ऐक्यञ्च ।

यथा विषमायामपि भूमौ वृक्षमूले आलवालरचनया जलधाराया नियमनं सारल्यञ्च सम्पाद्यते तथैव नित्यज्ञानमयै वेदैर्निर्णीतानां षोडशसंस्काराणां क्रियासमुदायेन मूलाधारनिर्माणेन स्वाभाविकसंस्काराणां गतिर्नियमिता सरला च सम्पाद्यते ।

वेदो हि नित्यज्ञानमयत्वात् कर्मरहस्यानां कर्मगतीनाञ्च पूर्णज्ञानवान् । अतो हि वैदिकसंस्काराणां क्रियापद्धतिरेव सर्वाङ्गसम्पूर्णा दिव्यशक्तिसम्पन्ना च विद्यते । यथा वैदिकसंस्काराधिकारिणो जीवा निर्बाधमभ्युदयनिःश्रेयसाव-धिगच्छन्ति यथा साधारणा अपि मानवाः सोपानसाहाय्येन पृथ्वीतो हर्म्यतलं समारुह्य स्वच्छवायुप्रकाशौ विन्दन्त इति ॥ २१ ॥

इदानीं गर्भाधानात्मकं प्रथमं वैदिक-संस्कारं निरूपयति—

आधानम् ॥ २२ ॥

षोडशसु वैदिकसंस्कारेषु प्रथमस्य संस्कारस्य आधानम् गर्भाधान-मित्याख्या । अस्मिन् मृत्युलोके नरनारीसङ्गमेन मातृगर्भे मानवजन्म जायते । तत्रैव मातृपितृसम्बन्धतो जायमानायां क्रियायां गर्भाधान-संस्कारस्य सम्बन्धः ।

सन्तानोत्पत्तेः पूर्वक्रियाया आदिमत्वात् संस्कारस्यास्य प्राथम्यम् । गर्भा-धान-संस्कारस्य पीठविज्ञानमूलकत्वात् प्रथमं पीठविज्ञानरहस्यज्ञानमावश्यकम् । प्राणमयकोशे आवर्तचक्रोत्पत्त्या देवताधिष्ठानक्षमं यत् स्थानमाविर्भवति तदेव पीठमित्युच्यते । पीठविज्ञानञ्च मध्यमीमांसापरपर्य्याये दैवीमीमांसादर्शने विस्तरशः साधु विवृतम् । पीठविज्ञानस्य भेदास्तस्य गर्भाधानेन सह सम्बन्धश्च स्मृतिशास्त्रे निम्नाङ्कितविधया विवृतमुपलभ्यते ।

तथाहि--

द्वितीयं सहजं पीठं दम्पत्योः सङ्गमे भवेत् ।
गर्भाधानस्वरूपस्य तस्य पीठस्य दम्पती ॥
यौ मर्य्यादाञ्च पावित्र्यं पितरः! स्मरतः सदा ।

तथा दैवे च जगति श्रद्धालू यौ निरन्तरम् ॥
यौ स्वस्मिन् शततं सत्त्वगुणलक्षणमीप्सितम् ।
आधातुं यत्नमाधत्तः सन्ततौ हि तयोर्ध्रुवम् ॥
उच्चाधिकार एतादृग् ध्रुवमायाति येन सा ।
ज्ञातुमिष्टे सदा पुण्यां पूर्णधर्माधिकारिताम् ।

गर्भाधान-संस्कारो हि स्वपत्न्यां शुद्धे प्रथमे रजसि समाधीयते, यतो हि तदानीमेव स्त्री मन्त्रपूता सती सुसन्तानप्रसवयोग्या भवति ।

अत्र प्रथमे रजस्येव गर्भाधानसंस्कारस्यानुष्ठाने विहितेऽपि योग्यसन्तानोत्पादन कालविधौ महर्षीणां परस्परमतवैषम्यमुपलभ्यते। तथा हि—अस्मिन् विषये शरीरविज्ञानविदां प्रथमाचार्य्यस्य सुश्रुतमहर्षे र्निदेशोऽयम् यत्—

ऊनषोडशवर्षायामप्राप्तः पञ्चविंशतिम् ।
यद्याधत्ते पुमान् गर्भं कुक्षिस्थः स विपद्यते ॥
जातो वा न चिरं जीवेज्जीवेद्वा दुर्बलेन्द्रियः ।
तस्मादत्यन्तबालायां गर्भाधानं न कारयेत् ॥

तात्पर्य्यत आर्य्याणां विवाहसंस्कारो हि न कामवासनाचरितार्थतायै भवति ते हि पत्नीसंयोगं पवित्रतमं पीठोत्पत्तिनिदानञ्चामनन्ति । कालनियमविषये तु तदाचार्य्याणां स्वारस्यमिदं यत् पत्न्याः प्रथमरजस उद्गमे एव गर्भाधानसंस्कारस्य धार्मिको विधिरनुष्ठेयः। ततश्चोपयुक्तवयस्कायां तस्यां गर्भाधानसंस्कारसिद्धान्तमाश्रित्य धार्मिकसन्ततिसमुत्पादनाय सङ्गमो विधेयः। स च पूर्वानुष्ठितसंस्कारानुरूप एवानुष्ठेयः। तत्रापि ज्योतिषसिद्धान्तमाश्रित्य शुभे मुहूर्ते शुभानुष्ठानमिदं प्रयोज्यम् ।

तदानीञ्च दम्पती उभावपि धर्मं दैवसाहाय्यञ्चापेक्षमाणौ योगयुक्तौ समाहितमानसौ भूत्वा प्रथममभ्यर्हितमिमं संस्कारं सम्पादयेतामिति महर्षीणामादेशः। प्रत्येकं सृष्टिक्रियायामेव दम्पत्योः शास्त्रीयविज्ञानानुसरणमावश्यकमित्येव वैदिक-प्रथम-संस्कार-रहस्यमवगन्तव्यम् ॥ २२ ॥

अधुना द्वितीयं संस्कारं पुंसवनं निरूपयति—

पुंसवनम् ॥ २३ ॥

द्वितीयस्य वैदिकसंस्कारस्य पुंसवनसंज्ञा। दम्पत्योः सङ्गमनवेलायां यदा सहजपीठोत्पत्तिर्भवति तदा शास्त्रोक्तगर्भाधानसंस्कारेण संस्कृते दम्पतिशुद्धान्तःकरणे सुदृढ-सुन्दर-वज्रसंहनन-तेजस्वि-प्रतापि-विद्वदग्रणी-शतायुरल-

# सूर्योदयः ।

( विविधविषयविभूषितं संस्कृतमासिकपत्रम् )

षष्ठे वर्षे } फाल्गुन-चैत्रयोः पूर्णिमा सं० १९८७ । { नवमदशम-संख्ये

## मङ्गलाचरणम् ।

चित्तचमत्कृतिचयकृच्चित्रचरित्रातिचञ्चन्तो ।
चारुचिरत्नवचणा चिच्छुक्तिश्चेतनां चिनुयात् ॥

—श्रीदेवीप्रसादशुक्लः 'कविचक्रवर्ती'

[ महामहोपाध्यायः ]

## सम्पादकीया अभिप्रायाः ।

### शब्दज्ञानार्णवस्य प्रयोजनीयता ।

भाषा हि जातीय-जीवन-दृढता-सम्पादन-भित्तिः, यस्या जाते र्भाषा नास्ति पूर्णा, न सा प्राचीनेतिहासानुसारेण मानवत्वेन परिगृहीता, न वा नवीनेतिहासानुसारेण पूर्णावयवमनुष्यजातौ परिगणिता भवति । वर्तमानकाले सर्वत्रैवेदं दृश्यते यत् सर्वाः स्वाधीनमनुष्यजातयः पृथिवीभूषणभूताः सिद्धान्तमिमं लक्ष्यीकृत्य स्वजातीयभाषायाः पूर्णतासम्पादने सर्वतः प्रथमं कटिबद्धा भवन्ति । भाषायाः पूर्णतायै पूर्णावयवकोषापरनामक-शब्दज्ञानार्णव ( Encyclopaedia ) प्रकाशनस्य विद्यते सुमहत् प्रयोजनम् । अतो हि भूमण्डलस्य निखिलैरेव सभ्य-जातीयैः फ्रांसामेरिकाङ्गलस्थानादिदेशसमुद्भवैः पण्डिताग्रगण्यैर्महता व्ययेन परिश्रमेण च स्वजातीयभाषायां शब्दज्ञानार्णवस्य प्रकाशनं समनुष्ठितम् । राष्ट्रियदृष्ट्या भारतीयजातेः समीचीनं संघटनं तदैव सम्पत्स्यते यदा तस्या भाषा पूर्णावयवसम्पन्ना भविष्यति । हिन्दी किल हिन्दुस्थानस्य राष्ट्रभाषेति सर्व-

वादिसम्मतः सिद्धान्तः। अत्र विषये आराजप्रजं सकला राजनीतिक-सामाजिक-धार्मिक-नेतारोऽपि ऐकमत्यमवलम्बन्ते। अतो हि राष्ट्रभाषाया हिन्द्याः सर्वतः पूर्णतासम्पादनार्थं वर्त्तमानक्रान्तिमये समये तदीयशब्दज्ञानार्णवप्रकाशनस्य नितान्तमावश्यकतेति के न स्वीकरिष्यन्ति ?

## पूर्णा भाषा।

पृथिव्यां समुपलब्धासु, भाषासु संस्कृतभाषा खलु सर्वतः प्राचीना पूर्णावयवसम्पन्नेति जागतिकानां केषामपि सुधियामत्र नास्ति मतभेदः। यां द्वारीकृत्य कठिनतरोऽपि विषयोऽतिसारल्येन बोधयितुं शक्यते, सैव पूर्णा भाषेति भाषातत्त्वविदां मतम्। गुणोऽयं संस्कृतभाषायां पूर्णतया समुपलभ्यते। पूर्णभाषायामन्यदपि वैचित्र्यं भवति। सा तादृशी कोमला भवति यत् व्यवहारेषु तस्या यथेच्छमुपयोगो बोभूयते। असावपि गुणः संस्कृतभाषायां पूर्णरूपेण निभाल्यते। सुरसरस्वत्याः पूर्णताविषये सन्ति बहूनि प्रमाणानि। तस्यां पूर्णतोपयोगिनः संख्यातीता असाधारणा गुणा वर्त्तन्त इत्यत्र सर्वेषामपि विपश्चितामैकमत्यम्। सर्वप्रथमं सुसंघटितायां मानवजातौ सुरभारती किलासीत् व्यावहारिकी भाषेति पाश्चात्या भाषातत्त्वविदोऽपि स्वीकुर्वते। संस्कृतभाषायाः शाखात्रयमभूत्, एकया शाखया भारतवर्षस्य, द्वितीयया एशियामध्यस्य तन्निकटवर्त्तिनां प्रान्तानां, तृतीयया यूरोपस्य च तास्ता भाषाः समुत्पेदिरे। सुतरां प्रत्यक्षतः परोक्षतो वा संस्कृतवाण्या एव सन्ततिरूपा जागतिक्यो निखिला अपि भाषा विद्यन्त इत्यत्र नास्त्यणीयानपि संशयः। परलोकवादस्य, अध्यात्मवादस्य, ईश्वरवादस्य अन्तर्जगत्सम्बन्धीयानामखिलानां दार्शनिकरहस्यादीनां च समुदयः, प्रकाशः, प्रसारो वा यथा सुरभारत्या समभूत, न तथा संसारस्य कयाऽपि भाषयेति सर्वेषामन्तर्दृष्टिसम्पन्नानामैतिहासिकानां सुदृढं मतम्। अतो हि भारतस्य स्वजातीयपूर्णावयवकोषरचनाकार्येऽत्र अमरभारतीमाधारभित्तिं परिकल्प्यैव शब्दज्ञानार्णवरूपाट्टालिकानिर्माणं युक्तियुक्तं हिताधायकं च प्रतीयते।

## निर्माणरीतिः।

शब्दज्ञानार्णवेऽत्र भारतीयानां मौलिकभाषाणां, तत्सम्बन्धयुक्तानां जागतिकीनामन्यासामपि भाषाणामुपयोगिनः शब्दाः पदार्थविद्याविशारदनिजात्यन्तपरिश्रमसमुपलब्धानि सांसारिकैरविज्ञातानि आध्यात्मिकानि च ज्ञानानि सम्रहिष्यन्ते। वर्त्तमानसमये समुपलब्धानां वेदानां, पुराण-स्मृति-

तन्त्रादीनां, हिन्दीशब्दसागर-मराठीज्ञानकोष-बंगलाविश्वकोषादीनां, कहावतरत्नाकरस्य, हिन्दीसंस्कृतसूक्तीनां, बृटिश-इन्साइक्लोपीडियानामकपुस्तकस्य, विविधपदार्थविद्यादीनां च सर्वविधान् शब्दान्—येषां समावेशो हिन्दीभाषायां नास्ति-संगृह्य राष्ट्रभाषायाः पूर्णता सम्पादनीया विद्यते। इदानीं यावत् भारतेऽत्र प्रकाशमुपगतैः शब्दकोशैर्हि सुगमं शब्दज्ञानम्। किन्तु न चास्ति तत्र पाश्चात्यभाषाया इन्साइक्लोपीडियावत् शब्दाश्रितानां व्यापकज्ञानानामूहापोहः, नवा वर्त्तते नवीनप्राचीनमतानां तुलनात्मकं विचारं विधाय सत्यानुसन्धाने सामर्थ्यम्, नापि च वर्तते बाह्यानां ज्ञानानां च यथेष्टसंग्रहः। भारतस्य प्राचीनत्वे मौलिकत्वे, संस्कृतभाषायो आध्यात्मिकशक्तिप्रकाशनसामर्थ्ये च न तत्प्रकाशकै र्ध्यानमपि प्रदत्तम्! उपर्य्युक्तान् निखिलानभावान् उन्मूल्य शब्द-भावराशीनामत्युपयोगी संग्रहो हि शब्दज्ञानार्णवस्याद्वितीयमुद्देश्यम्। शब्दानां संग्रहे भावानां प्रकाशने च परिश्रमशीलानां पूर्वविदुषां शब्दकोषेभ्यो ग्रन्थेभ्यश्च कृतज्ञतापूर्वकं साहाय्यमादाय, विदेशीयानाम् इन्साइक्लोपीडियाग्रन्थानां सहायतया पदार्थविद्याशब्दान् तद्रहस्यानि च संगृह्य स्वकीया राष्ट्रिया वाणी पूर्णतापदे प्रतिष्ठापयिष्यते। शब्दज्ञानार्णवोऽयं सर्वविधानामावश्यकीयविषयाणां तुलनात्मकविमर्शेन हिन्दुस्थानस्य जातीयता-मौलिकता-महत्तादिषु स्वीयां दृष्टिं निक्षिपन् न केवलं भारतवासिन एव, प्रत्युत भूमण्डलस्य सर्वानपि मानवान् ज्ञानार्णवाभ्यर्णमानयिष्यति। अतो ह्यत्र वैदेशिकानां गवेषणशीलानां विपश्चितामुपकारार्थं प्रत्येकं शब्दस्यार्थ आङ्गलभाषायामपि प्रदास्यते।

## व्ययभार आर्थिको लाभश्च।

एतस्य राष्ट्रियस्य विद्यासम्बन्धिनो महतः कार्यस्य सुसम्पादनार्थं धनबलस्य, जनबलस्य, ज्ञानबलस्य च नितान्तमावश्यकत्वमास्ते। एतत्कार्यसञ्चालकैः परमात्मनोऽपारया कृपया ज्ञानबले निश्चिन्तैरेवस्थीयते। जनबलस्य (विज्ञवर्गस्य) संग्रहो धनबलाधीनः। विषयेऽत्र बहुभि र्विज्ञैः साहाय्यं दातुं प्रतिश्रुतमपि। धनसंग्रहस्य कृते धनिनां सन्निधौ याचनं,—यथा ईदृशे बहुव्ययसाध्ये कार्ये क्रियते—न करिष्यते। "भारतधर्मसिण्डिकेट लिमिटेड" नामधेया स्वजातीया संस्था महत् कार्यमिदं सम्पादयिष्यति। शब्दज्ञानार्णवं मुद्राप्य विक्रीय च लाभांशप्रदानेन स्वसंविभागिनः सन्तोषयिष्यति। उपर्य्युक्तसंस्थाया प्रेफरेंसनामधेयो दशमुद्रात्मको भागः, पञ्चविंशतिरूप्यकात्मकस्तु आर्डिनरीपदवाच्यः। बहून् एतद्भागान् विक्रीय पञ्चपलक्षं संगृह्य च शब्दज्ञानार्णवप्रकाशनं करिष्यते।

अनुमानतः ग्रन्थोऽयं त्रिंशत्खण्डात्मको भविष्यति। यदि प्रथमसंस्करणे पञ्चसहस्रसञ्चिकाः प्राकाश्यं नीयेरन्, मुद्राशतत्रयम् तन्मूल्यं स्यात्, तर्हि पञ्चसहस्रमूलधनेन पञ्चदशलक्षरूप्यकमूल्यानि पुस्तकानि प्रस्तुतानि भवेयुः। अनया योजनया सर्वविधं व्ययं विधायापि उक्तसंस्थासंविभागिनां महीयान् लाभो भवेत्। क्षेत्रेऽत्रेदानीं यावत् यावन्तः पुरुषाः कार्यमकुर्वन्, तैरार्थिकी असुविधा हानि र्वा न दृष्टा। आशास्महे, उपरि निर्दिष्टमायव्ययविवरणं सर्वेषामनुकूलमुत्साहजनकं च भविष्यति। कार्येऽत्र तादृशा विद्वांसो लप्स्यन्ते, ये धर्मबुद्ध्या कार्यं विधास्यन्ति। अतः सम्पादने व्ययोऽप्यल्पीयानेव भविष्यति। 'भारतधर्मसिण्डिकेट' संस्थायाः संविभागिनामुत्साहदानार्थं शब्दज्ञानार्णवस्य सम्पादन-मुद्रण-प्रकाशनार्थञ्चेदं स्थिरीकृतं यत्-ये दशसहस्ररूप्यकाणां भागान् क्रेष्यन्ति, ते संरक्षकाः; ये च पञ्चसहस्ररूप्यकभागक्रेतारस्त उपसंरक्षकाः। एतेषां सचित्रं शुभचरित्रं तत्र शब्दज्ञानार्णवे प्रकाशमेष्यति। येन तेषां कीर्त्तिः स्थायिनी स्यात्। तेषां रूप्यकाणि तु संविभागित्वरूपेण सुरक्षितान्येव स्थास्यन्ति। तेभ्यस्तु यथानियमं शब्दज्ञानार्णवस्य कियत्यः सञ्चिका विना मूल्यं दास्यन्ते। ये किल न्यूनतोऽपि 'सिण्डिकेट' संस्थायाः पञ्चशतरूप्यकाणां संविभागिनस्तै र्हि त्रिंशत्खण्डात्मकः सम्पूर्णोऽपि शब्दज्ञानार्णवो यथाप्रकाशं यथाक्रमं च लप्स्यते। तै र्दीयमानमपि धनं संविभागित्वरूपेण सुरक्षितमेव स्थास्यति। यथासमयमन्यैरिव तैरपि लाभांशो लभ्यः। 'सिण्डिकेट' संस्थासंविभागिभिस्तु एतत्स्वजातीयमहत्त्वकार्यसहायताप्रदानरूपं पुण्यं यशश्च लब्धव्यमेव, अपिच कीर्तेः स्वभागै र्नियमितरूपतो धनमप्यधिगन्तव्यम्। शब्दज्ञानार्णवस्य अन्यान्यसंस्करणमुद्रणेन वा नानाशास्त्रीयग्रन्थानां प्रकाशनेन वा सिण्डिकेट-संस्थेयं निर्बाधं प्रचरिष्यति। संविभागिनां च धनानि सुरक्षितानि स्थास्यन्ति। आशास्महे यत् स्वदेशहितैषिणो राष्ट्रभाषाप्रेमाणश्च सज्जनाः सिण्डिकेट-संस्थानेऽत्र सहयोगं दास्यन्तीति।

× × × ×

मार्चमासस्य द्वाविंश्यां तिथौ रविवासरे ब्राह्ममुहूर्ते महामहोपाध्यायानां न्यायाचार्य-पण्डितप्रवर-वामाचरणभट्टाचार्याणां वाराणस्यामस्यां शरीरावसानमभूदिति नितान्तं दूयते स्वान्तम्! काशीस्थै र्बहुभिर्विद्यालय-महाविद्यालयैस्तस्मिन् दिने स्वीयानि कार्याणि निरुध्य तेषां वियोगेन दुःखं प्रकटीकृतम्। एते किल भारतवर्षस्याद्वितीयविद्वांसो न्यायशास्त्रस्य मुकुटमणयः परमनैष्ठिका धर्मात्मान आसन्। १८०१ शकाब्दे आश्विनशुक्लत्रयोदश्यां तेषां जन्म।

एते वाराणसी-राजकीय-संस्कृतमहाविद्यालयेऽधीत्य, पुनस्तत्रैव त्रयोविंशति-वर्षपर्यन्तं न्यायशास्त्रमध्यापिपन्। श्रीराजेश्वरशास्त्रिणो न्यायाचार्याः, श्रीशिवदत्तशर्माणो न्यायाचार्याः, श्रीपद्मप्रसादशर्माणो न्यायाचार्याः—इत्येवमादयोऽनेके विद्वद्धुरीणास्तेषामेव शिष्याः सन्ति। श्रीविश्वनाथचरणसरसीरुहेषु सर्वे वयं काशीवासिनः पण्डिताः शोकसन्तप्तास्तेषामात्मनः शान्तिं प्रार्थयामहे तदीयकुटुम्बिनां सन्निधौ च समवेदनामावेदयामहे।

× × × ×

श्रीमतां पण्डितप्रवरवागीश्वरधरमिश्रमहोदयानामाकस्मिकमृत्युसंवादेनापि सातिशयं दुःखमनुभवति मामकीनमन्तःकरणम्। एते किल चम्पारण्य-मण्डलान्तर्गत-रत्नमालाया रत्नरूप-मध्यमणिभूता जन्मना श्रोत्रियकुलमन्वगृह्णन्। एतेषां परलोकप्रस्थानेन, धर्मात्मता-सदाचारिता-नैष्ठिकता-निरभिमानिता-दयालुता-प्रभृतिगुणावली निराश्रया संवृत्तेति मन्यामहे। अमीषां पुण्यबलेनैव तदग्रजन्मानो विहारप्रसिद्धा विद्यालङ्कार-चिकित्सकचूडामणि—वैद्यरत्न-कवीन्द्रादिविविधविरुदावलीविभूषिताः श्रीचन्द्रशेखरधरमिश्रशर्माण आयुर्वेदाचार्या बहुविधान् आयुर्वेदीयान् आविष्कारान् कुर्वन्तः सर्वेषु नैजेषु विधेयबाहुल्येषु समधिगतसाफल्याः समभवन् इति तत्प्रान्तीयाः मन्यन्ते। मिश्रमहोदयानां गृहम् ऋषिकालीनं गुरुकुलं मन्यामहे। यथा किल कुलपतीनामाश्रमेषु संख्यातीताश्छात्रा सभोजनवसनपुस्तकमध्ययनं चक्रुस्तथा तद्गेहेऽपीति ज्ञायते। स्वर्गीयमिश्रमहोदयैः स्वयमानीतेन शुद्धजलेन पाकं विधाय तदीयधर्मपत्नी ऋषिपत्नीवत् स्वीयकरकमलपरिवेषितेन अन्धसा अध्ययनपरान् प्रियप्राणरूपपुत्रनिर्विशेषान् छात्रान् दिवानिशं भोजयन्ती बहुभिर्दृष्टा। बिहारविश्रुते तदीयौषधालये न केवलं विना मूल्यमौषधमेव, वस्त्रं भाजनमपि लभमाना असाध्या अपि निर्धनरोगिणो नीरुजः क्रियन्ते। तदीयविद्यालये आयुर्वेद-व्याकरण-साहित्यादिविषयानध्यापयन्तोऽधीयानाश्च त्रयोऽध्यायका अनेके विद्यार्थिनश्च सन्ति-एवंविधमहोपकार-परम्परा कुत्र दृश्यते श्रूयते वा? स्वर्गीयमिश्रवर्या व्याकरणस्य दर्शनशास्त्रस्य च प्रसिद्धा विद्वांस आसन्। एतेषां समयः स्वाध्याय-देवोपासनादिकार्येष्वेव प्रायो व्यतिगच्छतिस्म। एतेषां जन्मतिथिः वैशाखस्य कृष्णा त्रयोदशी (सं० १९२३), महाप्रयाणतिथिश्च चैत्रस्य कृष्णा द्वादशी (सं० १९८७) इति। हन्त रे काल! नूनं करालोऽसि यदीदृशानपि कवलीकरोषि। मिश्रमहोदयवियोगसन्तप्तमनसो वयं तदीयधर्मपत्न्याः श्रीमत्या महीपालीदेव्याः, तदग्रजन्मनां पण्डितश्रीचन्द्रशेखर-

धरमिश्राणां, तत्तनूजानां पण्डितश्रीगङ्गाधरशास्त्रिमिश्राणामन्येषां तत्कुटुम्बिनां च दुःखेषु सहानुभूतिं प्रदर्शयन्तस्तदात्मनः शान्तये परमात्मानं प्रार्थयामहे।

× × × ×

भारवर्षेऽत्र नास्ति संस्कृतविद्यालयमहाविद्यालयानां न्यूनता। परन्तु पुराणाध्यापने तत्सञ्चालकाः प्राय औदासिन्यमेवावलम्बन्ते। केषुचिदङ्गुल्यग्रगणनीयेषु पाठनालयेष्वध्याप्यते पुराणशास्त्रम्। नैतावतैव सचेतसां चेतांसि सन्तोषमेष्यन्ति। संस्कृतविद्यायाः प्रधानकेन्द्रस्थाने श्रीवाराणसीक्षेत्रेऽपि प्रायो नास्त्येव विद्यामन्दिरेषु पुराणपाठनपद्धतिरित्येव वक्तुं शक्यते। काशीहिन्दुविश्वविद्यालयाधिकारिभिस्तु प्राच्यविद्याविभागेषु गौणरूपेण पुराणस्थानमपि निर्दिष्टम्, तत्र च पुराणान्यपि समध्याप्यन्ते, किन्तु न तत् सन्तोषकरम्। वाराणसेयराजकीयमहाविद्यालये तु पौराणिकं स्थानमेव नासीत्, परन्तु श्रेष्ठिनः श्रीगौरीशङ्करगोयनकामहोदयानां धनसाहाय्यदानेन पौराणिकं पदं तत्सम्बन्धिनी परीक्षा च भविष्यति भविष्यति। संस्कृतविद्यायाः प्रधानपीठभूतेऽप्यत्र काशीक्षेत्रे उपर्युक्तविद्यालयद्वयव्यतिरिक्तेषु केषुचिदपि विद्यालयमहाविद्यालयेषु प्रायः पुराणचर्चालेशोऽपि न श्रूयते इति महान् खेदविषयः। पुराणेषु बहूनि शङ्कास्थलानि सन्ति, यानि पुराणाध्यायिनां ज्ञानगोचरीभवन्ति। समाधाने तेषां महान्तो विद्वांसोऽपि प्रायोऽसमर्था इव निभाल्यन्ते। तादृशशङ्कानां समाधानार्थं श्रीभारतधर्ममहामण्डलीयोपदेशकमहाविद्यालयशिक्षा नितान्तं हिताधायिका; किन्तु न तत्राध्येतुमखिलैरेव भारतवर्षीयैः विद्यार्थिभिः सौविध्यं लप्स्यते। अतस्तत्तद्विद्यालयसञ्चालकानामभ्यर्थनेन श्रीमहामण्डलः स्वीयोपदेशकमहाविद्यालयपरीक्षोत्तीर्णान् पण्डितप्रवरान् प्रेषयितुं शक्यति। श्रीभारतधर्ममहामण्डलेन "भारतधर्मसिण्डिकेट लिमिटेड" नामकसंस्थाद्वारा शङ्कासमाधानटीकाटिप्पणीसहितं सर्वेषां पुराणानां सुमनोहरमत्युत्तमं संस्करणमपि प्रकाशयितुं प्रयत्यते। सम्प्रति सिण्डिकेट-संस्थया शङ्कानिरासकटीकोपेतं हिन्दीभाषानुवादरूपं मार्कण्डेयपुराणं प्रकाश्यते। अग्रिमाङ्केषु तत्सम्बन्धिन्य उपयुक्ताष्टिप्पण्योऽस्माभिः 'सूर्योदय'—पाठकानामुपकारार्थं प्रकाशयिष्यते।

\+ + + ×

समाचारपत्रपाठका जानन्त्येव यत् साम्प्रतिकेषु दिवसेषु संयुक्तप्रान्तेऽन्यत्र वा हिन्दुमाहम्मदयुद्धं भीषणरूपेण प्रचलतीति। कैश्चन दुष्टशिरोमणिभूतैरसज्जनैरियं दुर्घटना परमपवित्रे काशीक्षेत्रेऽपि समुद्भाविता। नैतच्

चर्चया सम्पादकीयं स्तम्भं कृष्णीकर्तुं दूषयितुं वा वयं समीहामहे। किन्तु पाठकमहानुभावानां सन्निधाने इदमेव निवेद्यते—यत् हिन्दुमाहम्मदयुद्धरूपया दुर्घटनयाऽनया बहुदिनानि यावत् मुद्रणालयकार्याणि रुद्धान्यासन्। अत एव समुचितसमये सूर्योदयस्य फाल्गुनाङ्को नास्माभिः सम्पादितः। सम्प्रति फाल्गुनचैत्रयोः संयुक्ताङ्कः प्रकाशितः पाठकसान्निधाने प्रेष्यते। आशास्यते च यत् ग्राहकानुग्राहका आस्माकमसामर्थ्यं दयां दर्शयिष्यन्तीति।

---

## निबन्धृ-नामधाम-निह्नवः।

### निह्नोता—एतत्प्रश्नोत्तर-मध्यगाऽक्षरः।

( शुनावादाऽभिजनः )

( १ )

कोऽब्धिः१, किन्तु सपिण्डवाचकपदं२, का स्याद्ध्रुवस्य स्वसा३,
किञ्जातङ्कलशोदधेः४, किमु पदं संशीतिविद्योतकम्५।
भिद्यन्ते ननु कानि संयतिशरैः६, कश्यस्य कोऽर्थो मतो७,
गार्हस्थ्येऽस्ति नु कस्सुखी८, भवति को वृद्धा९, वनिष्ठक्किमु१०॥

( २ )

को जीवन्मृतको११, मृतेऽभिदधते किं१२, कोऽग्निपर्य्यायकः१३,
किम्भोश्छादनवक्त्रावभिहितं१४, नेत्रागतौ काऽर्यते१५।
पुन्नाम्नो नरकात् प्रत्राति नु को१६, धर्म्मे कया सत्फलं१७,
मूर्खः को वरिवस्यतेऽपि१८, महिषः ख्यातः कया सञ्ज्ञया १९॥

( ३ )

सर्वो नाऽस्ति नु कीदृशो जगति२०, को भावो न हृद् गाहते,
का सञ्ज्ञा वरिवर्त्ति कण्टकिफलस्या२२, ऽऽस्ते नु का दुःखिनी २३।
विद्वन्! केन द्रुतिर्विरच्यत इहा२४, ऽश्रेयान् मतःकोऽञ्जसा२५,
किं कृत्वा पुरुषोऽत्ति शाक२६, मथ ना प्राणैर्विना कीदृशः२७॥

( ४ )

कोऽनभ्रश्शरदि२८, प्रसिद्धिजनकः२९, कस्या हितैषी नृपः ३०,
काद्दन्तङ्किमु दर्शनाऽर्थकपदं३१, गङ्गास्ति किं जातिका ३२।
दृष्ट्वाकीरमथो भणन्ति किमिहा३३, ऽमीषां त्रयस्त्रिंशतः,
प्रश्नानाम्प्रतिवाक्यमध्यमखिलैर्ज्ञेया मदीयाऽभिधा॥

---

# कालिदासः ।

ले०—पण्डितहजारीलालशर्मा शास्त्री विद्यालङ्कारः ।

—०※०—

श्रद्धेय—प्रिय पाठकगण ! यद्यपि-अनेककाव्यकवयिता कविः कालिदासः कदाऽऽसीत्-स्वजन्मना कं देशञ्चालञ्चकार-के के ग्रन्थाश्चानेन विरचिताः-का चास्य विषये जनश्रुतिरिति सर्वं निश्चेतुमतिकठिनं तथापि किंचिद्-विलिख्य श्रीमतां मनोविनोदयिष्याम्येव । महात्मा कालिदासो जन्मना ब्राह्मणोऽभवत् । लोका अस्य विषये इत्थं वदन्ति यदसौ स्वगृहेऽतीवदरिद्र आसीत् । केवलं प्रत्यहं एडकासंवपोषणार्थम् अजाभिः सह वने वभ्राम ।

एकदा कस्याश्चित् कन्यकाया अपराधहेतुना क्रुद्धेन महाराजभोजेन'एतदर्थं' कश्चित् कुरूपोऽतिनिर्धनो मूर्खश्चवरोऽन्वेषणीय इत्याज्ञप्ताः कतिपये कर्मचारिणः ( नापिताः ) एकां वृक्षशाखामारूढं तामेव छिन्दन्तं कालिदासं ददृशुः । सान्निध्यमागत्य च ते परस्परमूचुः—"अयं हि महान् मूर्खः, यतोऽयं यां शाखामारूढस्तामेव छिनत्ति । रे महात्मन् ! शीघ्रं वृक्षादवतर । राजदुहित्रा सह तव विवाहं कारयिष्यामः" । इति श्रुत्वा स वृक्षादवततार । विवाहसम्बन्धि वृत्तं ज्ञात्वा स्वगृहे गत्वा च सर्वं वृत्तजातं स्वमात्रे व्याचचक्षे । माता चातीवदीनेन भावेन प्रत्यभाषत "रे पुत्र ! नास्ति तादृशं मम भाग्यं यदहं वधूसुखमनुभूयाम् । परं भाग्यं फलति सर्वत्र" इति । कियदहनि व्यतीते सति विद्यावत्या अतिपण्डितया राजपुत्र्या सह किलदासस्य पाणिपीड़नमभूत् । विद्यावती च यदयं पण्डितो मूर्खो वेति ज्ञातुमेकान्तसंभाषणे—"अस्ति कश्चिद् वाग्विशेषः" इत्यवदत् । कालिदासस्तां प्रति किमपि न जगाद । तदा विद्यावती स्थूलबुद्धिरयमिति ज्ञात्वा पादप्रहारेण तमताडयत् । स च पादप्रहाराभिहतो देवीमन्दिरस्याधः पपात । अधःपतितस्य तस्य मुखाद् निर्गता रुधिरबिन्दवो भगवत्या मुखे न्यपतन् । तत्समये अतिप्रसन्ना साक्षात् देवी भगवती-वरं वृणीष्वेति वभाषे । ततः कालिदासः "एषा मां पृच्छति यत्त्वं केन ताडितोऽसि"इति बुद्ध्वा विद्या-विद्येति व्याजहार । तदा भगवती विद्याप्राप्तिरूपं वरंतस्मै ददौ। ततः कालिदासो भगवत्याः कृपया महतीं कवि-पदवीं लेभे । विद्यावती कथितवाक्यस्य च (अस्ति-कश्चित्-वाग्-विशेषः) एकैकं पदं स्वरचितकाव्यानामारम्भे कृत्वा त्रीणि काव्यान्यरचयत् । यथा—'अस्त्युत्तरस्यां दिशि देवतात्मा'—इति श्लोकादौ 'अस्ति', इति पदं कृत्वा कुमारसम्भवं, "कश्चित् कान्ता विरहगुरुणेति" 'मेघदूतं' "वागर्थाविव सम्पृक्तौ"-इति रघुवंशंकाव्यमरचयत् । तदा विद्यावती प्रसन्ना जाता । अयं कविः—अन्यानपि कुशन्तला-विक्रमोर्वशी-प्रभृतीन् ग्रन्थान् विरच्य जगत्यां ख्यातिमवाप ।

जयन्ति ते सुकृतिनो रससिद्धाःकवीश्वराः ।
नास्ति येषां यशःकाये जरामरणजं भयम् ॥

## वसन्तवर्णनम्।

— o:*:o —

मुनीन्द्रजनमानसम्प्रमदयञ्जगन्मोदय—
अमन्दमधुगन्धतो मधुपवृन्दमानन्दयन्॥
चिरोपचितमानिनीमदमतिद्रुतं मन्दय—
अनङ्गमभिनन्दयन्मधुरयं समुज्जृम्भते॥१॥

समुल्लसितमल्लिकामुकुलकेलिगेहान्तरे
निरन्तरनिषेविते पवनसम्यगुद्वीजनः॥
प्रविश्य सह्योषितोद्गतपरस्परालापज—
प्रमोहमधुनाऽनिशं भ्रमरराशिराक्रीडति॥२॥

क्षणं पिबति केतकीरसमपास्य तं रंहसा
मनाग्बकुलमञ्जरीमधुझरीं विमृज्याऽञ्जसा॥
ततोऽपि नवमल्लिकागलदमन्दमाध्वीं मधौ-
समश्नति मधुव्रतश्चरणभूरितायाः फलम्॥३॥

निशम्य मधुमागतं तमुपगन्तुकामा इव—
स्फुरत्किसलयांशुकैस्समवतंसयन्त्यस्तनुम्॥
अशेषसुषमामवेक्षितुममुष्य किं काङ्क्षयो—
द्विकास्य लतिकाश्चिरं स्वकुसुमेक्षणान्यासते॥४॥

विकीर्णमधुकुत्कचा विकचपुष्पचञ्चत्कुचा—
निरन्तररजोमुचा गलितसद्विचारा इव॥
लता विकलिताःकिमुस्मरशरैरपि स्थाणुभि—
र्मिलन्ति, भुवि नातुरीभवति को वसन्तागमे॥५॥

विधूतनवचम्पकच्युतरजःकणाञ्चिन्वता—
श्रितानि मरुताऽनिशङ्कुटजनिम्बपुष्पाण्यपि॥
भृशन्दधति सौरभं तदपरस्य काऽऽस्तां कथा,
यथायथमुदञ्चिनी भुवि समे वसन्तागमे॥६॥

सखे! कथय किंशुक! त्वमिह किं शुकस्याननं—
विडम्ब्य वनिताऽधरभ्रममुदञ्चयन्नध्वगान्॥

द्विजान् विकलयन्नसि स्मरसि किन्नचैतत्फलं—

प्रलम्भित इवासि यद्वत ! विरञ्चिना सौरभे ॥७॥

न सञ्चर न सञ्चर कचन चञ्चलाक्ष्यञ्चला—

द्वहिः सचिवसङ्गमोन्नमितविक्रमोऽसौ स्मरः ॥

सुसज्जितशरोत्करव्यतिकरेण ते मर्मभिद्—

भवेदिति किमध्वगानुपदिशन्ति सन्तः पिकाः ॥८॥

सवर्णवपुरीक्षणाद्बलिभुजैरभेदभ्रमो—

वनप्रियकुलेऽप्यभून्मनसि यस्य तत्कर्णयोः ॥

सुधामधुरकाकलीकणमपि क्षिपन्तःपिका—

स्तमाशु किमपासितुं प्रचुरयन्ति बाधग्रहम् ॥९॥

**श्रीभूपनारायणझा शर्मा**

( व्याकरणाचार्यः साहित्यरत्नम् । )

---

## मोहनविहारिणोरालापः ।

( स्थानं लवपुरीय-गोलोद्यानम् )

**सर्वतोमुख सर्वेश सर्वप्रिय महोदर ।**
**स्वार्थदेव नमस्तुभ्यं नारायणसहोदर ॥**

विहारी—सखे ! पञ्चापपरीक्षासमित्याऽस्मिन् प्रान्तेऽसम्भाव्यं संस्कृत-प्रचारमाचरन्त्या सत्यमाचितानि सचेतसां चेतांसि । निजाभिनवाद्भुतचाकचिक्येन चमत्कृतानि च लोकलोचनानि । उपकारभारमिममतुलं भूसुरकुलम् नोत्तमाङ्गे कलयितुमलं विशेषतः ।

मोहनः—सत्यम्, परं न जानेऽस्मञ्चियतिविपर्ययाद्वा, विकरालकाल-प्रभावाद्वा, अत्यारूढेरपभ्रंशनिष्ठत्वाद्वा सम्प्रति किञ्चिदन्यदिव दृश्यते ।

विहा०—( साश्चर्यम् ) किमिव ।

मोह०—किं न पश्यसि; प्राज्ञपरीक्षायां संस्कृतस्थाने हिन्द्येवोत्तरलेखन-नियमो जातः । येन संस्कृतलेखाभ्यासविरहादग्रिमपरीक्षासु क्लिश्यन्ति भृशं छात्राः । सार्धवेदशतसंख्येषु द्विषष्टिसंख्या उत्तरन्ति ।

विहा०--भ्रातः, एकस्य वस्तुनो नामद्वयघोषणे व्युत्पत्तिर्भवतीति परीक्षा लक्ष्यतो भ्रश्येत्, बालानां वृथा मस्तिष्कशक्तिश्च ह्रसेत्। अग्रिमपरीक्षासु स्वल्पाः सफला भवन्ति चेत्का हानिः, "यावज्जीवमधीते विप्रः"। किञ्च धनिनश्चिरं जीवन्तु ये प्रतिवर्षं शुल्कधनेन समितिकोषं पूरयन्ति।

मोह०—अपरोयमनर्थः--साम्प्रतं पूर्ववन्नोक्तसमितिः पाठ्यपुस्तकनिर्वाचनावसरे तदुपयोगितां परामृशति। नवा बहुग्रन्थभारं गणयति। तथाहि--प्राज्ञनियता विक्रमोर्वशी बालानां बालिकानां च नाध्ययनार्हा शृङ्गारपूर्णत्वात्। एवं तत्प्रथमपत्रे विक्रमोर्वशी लघुरामायणं चासीत्पूर्वम्; परमधुना तृतीयं कल्याणसौगन्धिकं योजितम्। चतुर्थपत्रे ऽत्र तर्क-वृत्ताभ्यां सह दीपिकाऽपि दीपिता।

विहा०-मुग्ध! अर्थमनर्थं मन्यसे। यतो बाल्यप्रेमसंस्कारा दृढा यौवने सुखदा भवन्ति। किं नाधीतम्--'यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेत्' इति, अतो विक्रमोर्वशी परमोपकारिणी। उर्वशीवशीकरणाय च सौगन्धिकाहरणमप्यपेक्षितम्। तच्छृङ्गारचमत्कारसाक्षात्काराय दीपिकाप्रकाशोऽत्यावश्यकः।

मोह०--विशारदपरीक्षायां प्रथमपत्रे शकुन्तलामहाकाव्यसंग्रहाभ्यां कुन्दमालापि वेष्टिता।

विहारी--कुन्दमालां विना शकुन्तलाविवाहविधिरपूर्णो भवेदिति युक्तमेवानुष्ठितं मात्रा समित्या। किञ्च--

त्रयो देवास्त्रयो लोकास्त्रयो वेदास्त्रयोऽग्नयः।
यथा सन्ति तथा ह्येते त्रयो ग्रन्था विनिश्चिताः॥

मोह०--इयमपराऽविमृश्यकारिता--शिवराजविजयस्थाने भानुमतीकुटुम्बसखी स्वल्पकलेवरापि महार्घलभ्या गद्यरत्नावली समादिष्टा।

विहारी—मित्र! छात्राः सुलभकोपा भवन्ति, शिवराजवीररसं निपीय पाचकैर्महाभारतमारभेरन्; तदिदमत्याहितम्। मुग्ध! रत्नावलीं स्वल्पमूल्येन प्रार्थयसे, यां त्वं सार्द्धद्वयमुद्रालभ्यां महार्घां मन्यसे 'प्राणैः पणैः स्वं निपुणं भणन्तः क्रीणन्ति तामेव तु हन्त सन्तः'। किञ्च ब्राह्मणस्वममृतं भवति, ब्राह्मणा ग्रहीतुमेव जानन्ति न दातुमिति लोकोपवादमार्जनं च मूल्याधिक्ये कारणम्।

मोह०—शास्त्रिद्वितीयपत्रे 'संस्कृतसाहित्यका इतिहास' नामकमबहुमूल्यमपि बहुमूल्यं पुस्तकं नैषध-मुद्राराक्षस-कादम्बरीभिः सह सन्निवेशितम्।

तदेवमेकस्मिन्नेव पत्रे ग्रन्थचतुष्टयं सम्पद्यते । सोऽयं गण्डस्योपरि पिटकः संवृत्तः ।

विद्या०—साधु भोः साधु, इतिहासप्रकाशं विना संस्कृतसाहित्यमन्धकारगह्वरे पतितमासीत् । रूप्यकत्रयस्य वार्तैव का, त्रिकोटिमुद्राभिरपीदमलभ्यमभवत् । इदं ग्रन्थरत्नं नियोज्य बहूपकृतं भगवत्या । अन्यथा केन दृश्यं भवेत् । अनुपालम्भ एवैष यथा एतद्ग्रन्थचतुष्टयमिति ।

ब्रह्माननानि चत्वारि, चत्वारः सागरास्तथा ।
चतस्रश्च दिशः ख्याताश्चतुर्ग्रन्थी न किं भवेत् ॥

तत्र भेतव्यम्, भारहरणाय क्रमेलकः क्रेतव्यः । भ्रातः ! यावान् गुडस्तावन्मिष्टम्, 'अधिकस्याधिकं फलम्' ।

मोहनः—उपाध्यायचरणा अपि मौनं सेवन्ते । न खलु पत्रेषु, समितिप्रधानान्तिके चैकमत्येन विरोधमाचरन्ति ।

विद्या०—शान्तं पापम्, किं न वेत्सि पत्रनामग्रहणमपि पापजनकम्, ऐकमत्ये च जगदैक्यप्रसक्तिः, किञ्चिदाचरणे च चिरगृहीतमौन-सहिष्णुताव्रतलोपः । किञ्च नायं विरोधसमयः, समित्यध्यक्षप्रार्थने च लाघवमिति किं कुर्वन्तु तत्रभवन्तः । तेषां कृते तु सर्वतः पाशा रज्जुः ।

मोह०—( स्वगतम् ) अन्येषां गृहा दीप्यन्तेऽस्य हास्यं प्रसरति । ( प्रकाशम् ) कष्टं भोः कष्टम्, किं दीर्घदर्शिनः समितिसदस्या अपि नैनमन्यायं निवारयन्ति ।

विद्या०—किं त्वं स्वार्थमार्गं रोत्स्यसि ? किं वा मद्याचितं न पूरयिष्यसि ? भ्रातः, स्वार्थः सुहृदनुरोधश्चावारणीयौ भवतः । दूरदृष्टिं पिधत्तः । अस्तु, सम्प्रति सम्पादनीयं सायन्तनकृत्यम्, पुनरत्रविचिन्तयिष्यावः । उच्चैर्ब्रूहि-'जयति स्वार्थदेवः'

( इति निष्क्रान्तौ )

लेखकः—श्रीजगद्रामशर्मा,
डेरा इस्माइलखानस्थ—श्रीनन्दूरामप्यारेलालसंस्कृत—
विद्यालय-प्रधानाध्यापकः ।

# भारतं वर्षं भूगोलविद्या च।

ले० बालगोबिन्दशर्मा वैद्यः,
गोयनकामहाविद्यालयः, काशी।

इदं भारतं नाम वर्षं विषुवद्रेखाया लङ्कातश्चोत्तरस्यां दिशि वर्त्तत इति सर्वजनप्रसिद्धम्। विषुवद्रेखातो विन्ध्यपर्यन्तं केषांचित्पर्वतानां नदीनाञ्च नामानि राशिनाम्नैव कृतानि सन्ति इति ज्ञायते। तद्यथा—

अजनाभखण्डः=मेषराशिः।

गोदा=गोदावरी=वृषराशिः।

नर्मदा=रेवा=मिथुनराशिः।

विन्ध्यः=कर्कराशिः।

मन्दराचलः=महेन्द्रः=सिंहराशिः।

कुमार्यन्तरीयम्=कन्याराशिः।' इति।

यदा भगवान् दिवाकरो विषुवद्रेखाया उपरिष्टाद्गच्छति तदा मेषार्को भवति, मेषश्च ज्योतिःशास्त्रे अजशब्देनापि प्रतिपाद्यते इति ज्योतिर्विदो जानन्ति। ततश्च मेषाजयोः पर्यायत्वान्मेषस्थानेऽजं प्रयुज्य अजनाभखण्डेन भारतवर्षं गृह्यते, अजापरनाम्नो मेषराशेः भारतशिरःस्थत्वात् कन्यावत्-यथा कन्याऽपरपर्यायं कुमारीशब्दं प्रयुज्य कुमारिकापदेन भारतं गृह्यते। यथा—

'वर्णव्यवस्थितिरिहैव कुमारिकाख्ये' इति ज्योतिःशास्त्रवचनम्।

यदा भगवान् दिनकरो विषुवद्रेखातो यात्रामुत्तरस्यां दिशि विधत्ते, आगच्छति च द्वादशकभंशं तदा महेन्द्रापरनामा मन्दराचलः समुपलभ्यते। यश्च मन्दराचलोऽपभ्रंशपरम्परया सम्प्रति 'मदरास' शब्देनाऽभिधीयते! अपभ्रंशे च अन्तिमलकारलोपं विधाय लोकैः केवलेन 'मन्दराच' शब्देन मन्दराचलो व्यवह्रियते। अपभ्रंशश्चेत्थं बोद्धव्यः। तद्यथा--

'मन्दराचलः=( मन्दराच=मन्दराज=मन्दरास=मदरास') इति। अयं मन्दराचलो महेन्द्रापरनामा यो बहुदूरं समुद्रमवगाहते यावद् 'अरामन् निकोबार द्वीपम्' इत्यमुमर्थंप्रतिपादयति भगवान् बाल्मीकिः-'समुद्रमवगाढांश्च पर्वतान्पत्तनानि च। मन्दरस्य च ये कोटिं संश्रिताः केचिदालयाः॥ कर्णप्रावरणाश्चैव तथा चाप्योष्ठकर्णकाः। घोरलोहमुखाश्चैव यवनाश्चैकपादकाः' इति। ( किष्किन्धा ४०। २५-२६।) भगवान् दिवाकरो आगच्छति यदा मन्दरा-

चलस्योपरि तदा वृषार्को भवति, भवन्ति च मेषराशेर्द्वादश अंशा भोग्याः सूर्यस्य। अमुमर्थमभिधत्ते भगवान् वाल्मीकिः 'स मन्दराग्रस्थ इवांशुमाली विवृद्धकोपो बलवीर्यसंवृतः' इति पद्येन । एतेन ज्येष्ठे एव यदा द्वादश अंशा दिवाकरभुक्ता भवन्ति तदा सूर्यस्य मन्दराग्रस्थता सम्पद्यते । सञ्जाते वृषार्के वृषराशेः कथमापामरं ज्ञानं स्यादेतदर्थं वृषराशिपरिचायिका गोदा नदी पूर्वाचार्यैर्वृषराशित्वेन परिकल्पिता । द्वादशकादंशात्परं विंशतिं यावत् भवन्ति अष्टौ अंशा भोग्या अहस्करस्य अयमेव वृषराशिः । गां वृषं ददाति इति गोदा । इयं गोदावरी नदी द्वादशविंशत्यो र्मध्ये प्रवहन्ती पूर्वसमुद्रं पतति इति जानन्ति भूगोलज्ञाः । यदा च विंशतिरंशा भुक्ता भवन्ति भगवता दिनमणिना मिथुनस्य भवति प्रवेशः । वृषराशिवन् मिथुनराशेरपि आपामरज्ञानं कथं स्यादेतदर्थं नर्मदा नदी विंशादंशात् चतुर्विंशतिमंशं यावत् चतुर्षु अंशेषु परिकल्पिता । अत्र कार्यकारणयोरभेदोपचारात् नर्मपदेन तत्कारणं मिथुनं गृह्यते । नर्म मिथुनं ददाति इति नर्मदा=मिथुनराशिः रेवाशब्दोऽपि कोशेषु रतिवचनो दृश्यते । रतिरपि नर्मवत् मिथुनकार्यम् तेनाऽपि स एवार्थः समुपलभ्यते । आपन्ननर्मदे दिवाकरे भवति समुपस्थितो विन्ध्यो, यं विदेशीया भारतीयाश्च कर्कराशित्वेन प्रतिपादयन्ति । विध्यतीति विन्ध्य इति व्युत्पत्त्या विन्ध्यः कर्कपर्यायः । वा विशेषेण इध्यते इति विन्ध्यः पृषोदरादित्वात्सिद्धिरित्यमरटीका । अनया रीत्या विषुवद्रेखातो विन्ध्याचलं यावत् सूर्यस्योत्तरदिग्यात्रा भवति, न भवति विन्ध्यतः उत्तरमेकमप्यङ्गुलम् । इत्थं च अयं विन्ध्याचलो दिवाकरस्योत्तरयात्राया अवरोधकः विन्ध्यमप्राप्य न गच्छति भगवान् उत्तरां दिशम् , किन्तु पुनः दक्षिणां दिशं परावर्तते । परावृत्तिकाले कर्कराशिपरिचायको विन्ध्यः । नर्मदादेश्यः चतुरंशात्मकः । ततोऽष्टांशात्मकस्य सिंहराशेः परिचायको महेन्द्रपदवाच्यो मन्दराचलः । 'हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु' इति कोषाद्धरिशब्दो महेन्द्रवचनः 'महेन्द्रः पर्वते शक्रे' इतिकोषाच्च । हरिश्च 'सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः, इत्यमरात् सिंहवचनः । ततः सिंहराशिपरिचायकोऽष्टांशात्मको गोदावरीप्रदेशः सुतरां समुपलभ्यते । एवं कर्कराशेश्चत्वारोंऽशाः सिंहस्य चाष्टौ अंशा मिलित्वा द्वादशांशा भवन्ति राशिद्वयाभ्यां कर्कसिंहाभ्यां भुक्ता इति साधु प्रतिपादितं भवति । अतिक्रान्तमन्दरो दिवाकरः ( मन्दरःसिंहः ) कन्याराशिगतो भवति, कन्याराशिश्च द्वादशांशात्मको भवति । ते च द्वादश अंशा मन्दराचलादारभ्य विषुवद्रेखां यावद् भवन्ति । स कन्याराशिः कुमारीशब्देनाऽभिधीयते । भारतशिरःस्थत्वात् कन्याशब्देन कुमारीशब्देन च भारत-

वर्षमभिधीयते। ततो विषुवद्रेखातः परं सर्वे राशयो दक्षिणसमुद्रगता भवन्ति। तत्र काः संज्ञाः कथं प्रतिपादिताः सन्ति इति ज्ञातुं दुःशकम्।

इति पर्वतनदीभी राशिनामकरणदर्शनाद्राशिज्ञानं लग्नज्ञानं यथा भारतीयानामासीत्, नासीत्तथाऽन्यदेशीयानामासीच्चेत्तत्तद्देशीयैः स्वस्वदेशेषु राशिपरिचायकनामानि कथनीयानि।

एतेन 'मार्गं निरोद्धुं सततं भास्करस्याचलोत्तमः। सन्देशं पालयंस्तस्य विन्ध्यशैलो न वर्द्धते' इति वाल्मीकीयारण्यकाण्डस्य एकादशे सर्गे पञ्चाशीतितमं पद्यं संगच्छते, अन्यथा भूमिष्ठेन विन्ध्येन भास्करस्याकाशीयो मार्गः कथं निरोद्धुं शक्यते। मया तु 'विषुवद्रेखात उत्तरां दिशमागच्छतो भास्करस्य विन्ध्योऽन्तिमा सीमा, न तां विन्ध्यसीमानमतिक्रम्याङ्गुलमात्रामपि उत्तरां दिशं गच्छति भगवान् भास्करः। किन्तु भूयो दक्षिणां दिशं गन्तुमारभते इति समीचीनतया विन्ध्यो निरुणद्धि भास्करमार्गमिति न कापि विप्रतिपत्तिः' इति प्रतिपाद्यते।

एवञ्च यदि भूचित्रे विन्ध्यः=कर्कः, नर्मदा=मिथुनम्, गोदावरी=वृषः, मन्दराचलः ( मदरास )=सिंहः, कुमार्यन्तरीयं=कन्यामेषौ इति लिख्येरन् तर्हि विद्यार्थिनामध्यापकानाञ्च कृते महत्सौकर्यं स्यात् विन्ध्यादिकुमार्यन्तप्रदेशानामतिप्रसिद्धत्वात् अतिप्रसिद्धानामेवार्थबोधे समर्थत्वाच्च। कर्कराशिज्ञानाय साम्प्रतिकैर्भूचित्रे एका रेखा लिख्यते। अनया रेखया तथा ज्ञानं न भविष्यति दृढं यथा विन्ध्यनर्मदाभ्याम् भविष्यति। किञ्च यथा कर्कज्ञानाय दृश्यतेऽधुनातनानां प्रयासो न तथाऽन्यराशीनां कृते। किञ्च, कर्कात्मकस्य विन्ध्यस्य नर्मदासहितस्य सूर्येणाऽनाक्रान्तत्वादेव प्रतिवर्षं नर्मदोत्तरभागेऽन्यः संवत्सरः प्रचलतिः प्रचलति चान्यो दक्षिणभागे, इति भिन्नसंवत्सरप्रचारोऽपि विन्ध्यं नर्मदां च सीमानं प्रमाणीकरोति यां सीमानमबुध्वाऽधुनातनाः कर्करेखाज्ञानाय काल्पनिकीं रेखां विदधति इति।

किञ्च, मन्दराचलस्य स्थितिमबुध्वा साम्प्रतिकैर्मदरासप्रदेशस्याऽन्या एव कथा लिखित्वा हिन्दी-पाठशालासु प्रचार्यते इति महद् दुर्भाग्यम्। मन्दराचलस्यैकोऽपभ्रंशः उपरि प्रतिपादितः। अन्ये चाधो लिख्यन्ते, तद्यथा—मन्दरः=मण्डरः=मण्डडः=मन्डण=मण्डमन् इति। अत्र मानन्तु 'समुद्रमवगाढांश्च पर्वतान् पत्तनानि च। मन्दरस्य च' इत्यादिना प्राक्प्रतिपादितम्। समुद्रमध्यवर्त्तिनः मन्दरस्य पर्वतान् पर्वतपादान् इत्यर्थः। तत्र अपभ्रंशरीत्या मण्डमन् यथा आयाति तथोक्तम्।

अपरञ्च, तथा 'यवनाश्चैकपादकाः'=इतिपद्येन मन्दरस्यैकपादनिवासिनो यवनाः प्रतिपाद्यन्ते । एकः पादः प्रत्यन्तपर्वतो न तु सक्थि येषां ते एक पादका यवना इत्यर्थः पद्यस्य । 'यवनैकपादा' इत्यत्र क्लिष्टकल्पनया 'यवं' विलोप्य 'नैकपादानिकोवार' इति यथा कथंचित् सिध्यति ।

अपरञ्च, मन्दरः=मन्दारः=मनार इत्यपि अपभ्रंशेन भवति ।

किञ्च, महेन्द्रस्याद्यमन्तिमञ्चाक्षरं गृहीत्वा वैयाकरणप्रत्याहारवत् मन्द्रोऽपि संस्कृतभाषायां मन्दराचलस्य पर्यायः । अयं मन्द्रो मन्दरापरपर्यायो विन्ध्यस्यैकदेशः तद्देशजो गजोऽपि मन्द्रः द्रष्टव्यो इत्यध्यक्षे चाणक्यः । इति ।

---

# वैदिकवर्णनविवेचनम् ।

लेο—पंο राधाप्रसादशास्त्री ।

[ धर्मशास्त्राध्यापकः हिन्दूविश्वविद्यालयः, काशी । ]

---

"ऊर्द्धमूलोऽवाक् शाख एषोऽश्वत्थः सनातनः
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।"—

"तस्मिँल्लोकाश्रिताः सर्वे तदुनात्येति कश्चन । एतद्वैतत्" अनेन काठकवाक्येन संसारो रूपकत्वेन अश्वत्थो वृक्षः कल्पितः । स च वृक्षो लोकवृक्षाद्विलक्षणः । तदेव वैलक्षण्यं विशेषणेन दर्शयति । ऊद्र्ध्वं मूलं अस्य सः । अस्य च वृक्षस्याधोमूलम् । लौकिकवृक्षस्य तूद्र्ध्वं गता शाखा, अवाक् शाखा चास्य, अयं च व्रश्चनाद्वृक्षः । अन्यस्तु सनातनः आकल्पं तिष्ठति । तदेव शुक्रं शुद्धं ब्रह्म अमृतञ्च उच्यते कथ्यते । तस्मिन् ब्रह्मणि सर्वे लोका आश्रितास्तत उकश्चन नात्येति नातिक्रम्य तिष्ठति । यद्भवता पृष्टं तद्ब्रह्म एतत् ।

अस्य वृक्षस्य परमात्मा मूलम् । नानाविधेष्टफलप्रदत्वात् । कल्पवृक्षकल्पः । तच्च फलं लौकिकं पुत्रवित्तादि, स्वर्गादिकञ्चेति । लौकिकमपूर्वम् पुण्यलक्षणम् पापलक्षणञ्च । विहिताकरणप्रतिषिद्धसेवनजमधर्म्मलक्षणम् विहितानुष्ठानधर्मलक्षणम् । तच्च सर्वं वेदबोधितम् । वेदाश्चत्वारः ऋग्यजुःसमाथर्वलक्षणाः । ब्रह्ममूलाश्रिताः संसारान्तर्गताः संसारोत्पत्तिप्रयोजका विशिष्टाः कल्पवृक्षभेदास्तस्य च द्वे प्रधानस्थूलशाखे मन्त्रब्राह्मणात्मके तत्र ब्राह्मणस्योपशाखाविध्यर्थं वादरूपा मन्त्रस्य च बह्व्यः शाखाः सन्ति । तत्र

ऋग्वेदस्य शाकल-बाष्कल-आश्वलायन-शाङ्खायन-मण्डूकादयः । चारकाह्वरक-कठ-प्राच्यकठ-कापिष्ठल-कठादयो यजुर्वेदस्य शाखाः ।

अष्टादश सहस्राणि मन्त्रब्राह्मणयोः सह ।
यजूंषि यत्र पठ्यन्ते स यजुर्वेद उच्यते ।
अष्टौ साम सहस्राणि सामानि च चतुर्दश ।
ऊह्यानि सरहस्यानीत्येतत्सामगणः स्मृतः ॥

अथर्व वेदस्य पैप्पलाद-शौनकीयादयो बह्वयः शाखाः सन्ति । एवं चरणव्यूह-ग्रन्थे शाखोपशाखा दर्शितास्तदन्तर्गता एवाङ्गपुराणादयो विद्यास्थानानि, तथाचोक्तम् -

पुराण-न्याय-मीमांसा धर्मशास्त्राङ्गमिश्रिताः ।
वेदाःस्थानानि विद्यानां धर्मस्य च चतुर्दश ॥

सा च विद्या द्विविधा परा चापराच-

"शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः
पप्रच्छ कस्मिन्नुभगवो विज्ञाते सर्वमिदं विज्ञातम् भवति ।

तस्मै सहोवाच द्वे विद्ये वेदितव्ये पराचैवापरा च तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यते" एवं शाखाप्रशाखोपशाखासहितः कल्पवृक्षस्यैकांशो वेदो यत्र सृष्टेर्निखिला रचना दर्शिता "धाता यथा पूर्वमकल्पयत् । दिवञ्च पृथिवीञ्चान्तरिक्षमथोस्वः" ।"एते असृग्रमिन्दव" इत्यादि मन्त्रे तत्तत्पदपदार्थौ स्मृत्वा तत्तत्सृष्टिमदर्शयत् । यथा असृजि रमत इति असृग्रं मनुष्यमसृजत् । इन्दुपदार्थस्मरणेन पितॄनित्यादि । बह्वर्थद्योतिनो वेदाः । सर्वार्थवेदको वेदश्चतुर्धा भिद्यते क्रमात् । तद्यथा चत्वारि शृङ्गा त्रयोऽस्य पादा द्वे शीर्षे सप्तहस्तासोऽस्य त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्यां आविवेशेति । चत्वारि शृङ्गाणि चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च । त्रयोऽस्य पादाः त्रयः काला भूतभविष्यद् वर्तमानाः । द्वे शीर्षे द्वौ शब्दात्मानौ नित्यः कार्यश्च सप्तहस्तासोऽस्य सप्तविभक्तयः । त्रिधा बद्धः त्रिषु स्थानेषु बद्धः उरसि कण्ठे शिरसि इति वृषभो वर्षणात् रोरवीति शब्दं करोति इत्येवमर्थं वैयाकरणा मन्यन्ते । मीमांसका नैरुक्ताश्चैवं मन्यन्ते चत्वारि शृङ्गा वेदा वा एत उक्तास्त्रयो अस्य पादा इति सवनानि त्रीणि द्वे शीर्षे प्रायणीयोदयनीये सप्त हस्तासो अस्य-सप्त छन्दांसि त्रिधा बद्धः त्रेधाबद्धः मन्त्रब्राह्मणकल्पैर्वृषभो रोरवीति । रोरवणमस्य सवनक्रमेण ऋग्भिर्यजुर्भिःसामभिर्यदेनमृग्भिश्शंसन्ति यजुर्भिर्यजन्ति

सामभिस्स्तुवन्ति महोदेव इत्येष हि महान् देवो यद् यज्ञो मर्त्यां आविवेशेत्येव हि मनुष्यानाविशति यजनाय। अपर आह चत्वारिवाक्परिमिता पदानि तानि-विदुर्ब्राह्मणा ये मनीषिणः गुहा त्रीणि निहिता नेङ्गयन्ति। तुरीयं वाचो मनुष्या वदन्ति। चत्वारि वाक् परिमिता पदानि। चत्वारि पदजातानि नामाख्यातो-पसर्गनिपाताश्च तानि विदु ब्राह्मणा ये मनीषिणो मनस ईषिणो मनीषिणः। गुहा त्रीणि निहिता नेङ्गयन्ति न चेष्टयन्ते न निमिषन्तीत्यर्थः। तुरीयं वाचो मनुष्या वदन्ति। तुरीयं वा एतद्वाचो यन्मनुष्येषु वर्तते चतुर्थमित्यर्थ एषोऽर्थो वैयाकरणनये। अन्येषां यास्कादीनान्तु नये—चत्वारि वाचः परिमितानि पदानि तानि विदुर्ब्राह्मणाः, ये मेधाविनो गुहायां त्रीणि निहितानि नार्थं वेदयन्ते। गुहा गूहतेस्तुरीयं त्वरतेः कतमानि तानि चत्वारि पदानि ओङ्कारो महाव्याहृतयश्चेत्यार्षम्। नामाख्यातोपसर्गनिपाताश्चेति वैयाकरणाः। मन्त्रः कल्पो ब्राह्मण श्चतुर्थी व्यावहारिकीति याज्ञिकाः। ऋचो यजुंषि सामानि चतुर्थी व्यावहारिकीति नैरुक्ताः,सर्पाणां वाक् वयसां क्षुद्रस्य सरीसृपस्य चतुर्थी व्यावहारिकी-त्येके। पशुषु तूणवेषु मृगेषु आत्मनि चेत्यात्मप्रवादाः। अथापि ब्राह्मणं भवति सावै वाक् सृष्टा चतुर्धा व्यवभवदेष्वेव लोकेषु त्रीणि पशुषु तुरीयं या पृथिव्यां साग्नौ सा रथन्तरे यान्तरीक्षे सावायौ सा वामदेव्ये या दिवि साऽऽदित्ये सा बृहति सा स्तनयित्नावथ पशुषु ततो या वागत्यरिच्यतत्तां ब्राह्मणेष्वदधुस्तस्माद् ब्राह्मण उभयीं वाचं वदन्ति या च देवानां या च मनुष्याणामिति। एवमखिलविज्ञानानां निधयो वेदाः।

संसारकल्पवृक्षस्यैकांशो वेदः परांशो लोकरूपः ते च लोका द्विविधा हिरण्यगर्भादिस्थावरान्तः भूर्भुवः स्वः प्रभृति चतुर्दशभुवनानि च लोक्यते कर्मफलं येषु त इति व्युत्पत्त्या हिरण्यगर्भादिस्थावरान्ता देहा भोगायतनत्वाद्गृहीताः भोगाश्रयदेहाश्रयतया भोगप्रयोजकतया च भूर्भुवादयो लोका अपि तद्व्युत्पत्त्यैव संगृहीताः। इमेच लोका अपरांशाः संसारकल्पवृक्षस्य पतत्रिणामावासकृते नीडीभूताः तत्र द्वौ पक्षिणौ निवसतः साक्षी भोक्ता च। तद्यथोक्तम्। द्वा सुपर्णा सयुजा सखाया समानंवृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति। भोक्तारश्च नाना ते चतुर्दशभुवनेषु नीडेषु यथा कर्म यथाश्रुतं यथायोन्युत्पद्य भोगं भुञ्जानाःकालं यापयन्ति आप्रारब्धक्षयम्। तत्र च संसारवृक्षं परमात्ममूलमधिवसतां भोक्तॄणां जीवानां विहङ्गमानां नाना कलरवः श्रूयते हर्षशोकलिङ्गः संसारवृक्षश्च जन्मजरामरणशोकाद्यनेका-नर्थात्मकःप्रतिक्षणमन्यथा स्वभावो मायामरीच्युदकगन्धर्वनगरादिवद् दृष्ट

नष्टस्वरूपत्वादवसाने च वृक्षवदभावात्मकः कदलीस्तम्भवन्निःसारोऽनेकशतपाखण्डबुद्धिविकल्पास्पदस्तत्त्वजिज्ञासुभिरनिर्धारितेदंतत्वो वेदान्तनिर्धारितपरब्रह्ममूलसारोऽविद्याकामकर्माव्यक्तबीजप्रभवोऽपरब्रह्मविज्ञानक्रियाशक्तिद्वयात्मकहिरण्यगर्भाङ्कुरसर्वप्राणिलिङ्गभेदस्कन्धतृष्णाजलासेकोद्भूतदर्पो बुद्धीन्द्रियविषयप्रवालांकुरः श्रुतिस्मृतिन्यायविद्योपदेश-पलाशो यज्ञदानतपआद्यनेकक्रियासुपुष्पः सुखदुःखवेदनानेकरसः प्राण्युपजीव्यानन्त-फलस्तत्तत्तृष्णासलिलावसेकप्ररूढजडीकृतदृढबद्धमूलः सत्यनामादिसप्तलोकब्रह्मादिभूतपक्षिकृतनीडः प्राणिसुखदुःखोद्भूतहर्षशोकजातनृत्यगीतवादित्रक्ष्वेलितास्फोटितहसिताक्रुष्टरुदित-हाहा-मुञ्चमुञ्चेत्याद्यनेक-शब्दकृततुमुलीभूतमहारवो वेदान्तविहितब्रह्मात्मदर्शनासङ्गशस्त्रकृतोच्छेद एषसंसारवृक्षोऽश्वत्थ अश्वत्थवत्कामकर्मवातेरित नित्यप्रचलितस्वभावः स्वर्ग नरकतिर्यक् प्रेतादिभिरवाक्-शाखः सनातनोऽनादित्वाच्चिरं प्रवृत्तः । तूलावधारणे न मूलावधारणमितिन्यायेन "पराञ्चि खानिव्यतृणत् स्वयंभूस्तस्मात् पराङ् पश्यति नान्तरात्मन् कश्चिद्धीरः प्रत्यगात्मनमैच्छदावृत्तचक्षुरमृतत्वमिच्छन्" इति श्रुत्युक्तो विषयव्यावृत्तेन्द्रियो मोक्षं कामयमानो धीरो मूलं प्रत्यगात्मानं ब्रह्मैच्छत् प्राप्य च विनिवृत्तसकलेहो ब्रह्मानन्दमनुभवति । अयञ्च श्रेयोमार्गगामी निःश्रेयसमेव प्राप्य ब्रह्माप्येति । अपरश्च प्रेयोमार्गगामी संजातपुत्र-वित्त स्वर्गैषणःयथाकर्म यथाश्रुतं तत्तल्लोकेषु वंभ्रमीति । तत्र च प्रेयोमार्गे चत्वारो वर्णा आश्रमाश्च निर्दिष्टाः तावन्मार्गावेतौ प्रभिन्नौ तथाचोक्तम् । अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषं सिनीतः तयोःश्रेय आददानस्य साधुर्भवति हीयते अर्थाद्य उप्रेयो वृणीते । श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति धीरः श्रेयो धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते । दूरमेते विपरीते विषूची अविद्याया विद्येति ज्ञाता इति । प्रवृत्तिरूप-वर्णाश्रमधर्मनिवृत्तिरूपतद्धर्मप्रज्ञापका वेदाः प्रेयःश्रेयोमार्गप्रदर्शकाः । परमात्ममूलसंसारवृक्षमाश्रिताः वर्णाश्रमाश्चतामेवाश्रित्य स्थिताः ।

"पञ्चजनन्यथा विशा" इति निगमव्याचक्षाणः, यास्क आह चत्वारोवर्णा निषादपञ्चमा इति ते च वर्णाः द्वीपान्तरेष्वपि प्रागासन् किमुता न सर्वत्र जम्बूद्वीप इति । तद्यथा श्रीमद्भागवते पञ्चमस्कन्धे विंशतिमेऽध्यायेवर्णितम् जम्बूद्वीपे ब्राह्मणक्षत्रिय वैश्यशूद्राभिधेया वर्णास्त एवापरनामधेया द्वीपान्तरेषु प्लक्षादिषु । प्लक्षे हंसः पतङ्गः ऊर्ध्वायनः सत्याङ्गः । शाल्मलद्वीपे श्रुतधरः, वीर्यधरः वसुन्धरः इषन्धरः । कुशद्वीपे कुशलः कोविदः अभियुक्तः कुलकः । क्रौञ्चद्वीपे पुरुषः, ऋषभः, द्रविणः, देवकः, । शाकद्वीपे ऋतव्रतः, सत्यव्रतः,

दानवतः। अनुव्रतः पुष्करद्वीपे वर्णनामनिर्देशो न कृतः यथा जम्बूद्वीपे। परन्तु व्यवहारतोऽत्र यथा ब्राह्मणादयो गृह्यन्ते तथा तत्रापि स्युरिति मन्यामहे। तत्र-केवलमेतावदेव प्रतिपादितम् तद्वर्षपुरुषाः भगवन्तं ब्रह्मरूपिणं सकर्मकेण कर्म-णाराधयन्ति इति। सकर्मकेण कर्मणा ब्रह्मसालोक्यादिसाधनेन कर्म-णेत्यर्थः।

अत्र च जम्बूद्वीपे चतुर्णां वर्णानामुपास्या देवाः शिव-विष्णु-सूर्य-शक्ति-गण-पतयः सुप्रसिद्धा एव पञ्च देवाः प्लक्षे चोपास्यदेवं निर्दिशति व्यासः महानदीरु-पक्रम्य यासां जलोपस्पर्शनविधूतरजस्तमसो हंसपतङ्गोर्द्ध्वायनसत्याङ्गसंज्ञा-श्चत्वारो वर्णाः सहस्रायुषो विबुधोपमसंदर्शनप्रजनना स्वर्गद्वारं त्रय्या विद्यया-भगवन्तं त्रयीमयं सूर्यमात्मानं यजन्ते। एवं शाल्मलद्वीपीया भगवन्तं वेदमयं सोममात्मानं वेदेन यजन्ते। तथा कुशद्वीपौकसो भगवन्तं जातवेदस्वरूपिणम् कर्मकौशलेन यजन्ते। क्रौञ्चद्वीपीया अपोमयं देवमपां पूर्णेनाञ्जलिना यजन्ते। शाकद्वीपीया भगवन्तं वाय्वात्मकं प्राणायामविधूतरजस्तमसः परमसमाधिना-यजन्ते। पुष्करद्वीपविषये तु भगवन्तं ब्रह्मरूपिणं सकर्मकेण कर्मणाऽऽराध-यन्तीत्यनुपदमुक्तमेव।

संसाररूपस्यास्य सनातनस्य वृक्षस्य परमात्ममूलस्याश्रयेण सर्वे स्थावरजङ्गमास्तिष्ठन्ति। प्राणिजातानि च तत्र ब्राह्मणादयो मनुष्यवर्गाश्चवर्णा-श्रमोपेताः सर्वे सर्वत्र विलसन्तिस्म। "पञ्चजनन्यया विशा" इति मन्त्रे तथोक्त. पुराणवाक्ये च भारत एव तत्रापि तदेकदेश एव वर्णाश्रमविभाग इति विशे-षानुपादानेन सर्वत्र तद्विभाग इति निश्चितं प्रतीयते। अतो वर्णाश्रमोद्धारणे-हैरद्यतनैरपि भाव्यम्। तत्तत्स्वस्वधर्मपालनेन मूलावधारणमपि कर्तव्यमिति न्यायेन परमात्ममूलगवेषणापि कर्तव्या मननशीलैर्मनुष्यैरित्यलम्पल्लवितेन।



# भर्तृव्रत-धर्म्म-विवेकः।

लेखकः—श्रीकृष्णदत्तशर्म्मा कल्हा, काश्यपः।

गोपीजनोल्लासनकारिणं हरिं,
गोपालबालैरनुगम्यमानम्।
कंसादि-दैत्यान्तक-कृष्णचन्द्रं,
नमामि कृष्णं यदुनन्दनन्तम् ॥ १ ॥

( कस्यचिदिति )

इह खलु प्रत्यवायप्रवर्तकदोषकोषान्धतमसापसारणोद्दण्डेऽनाश्रित-पाखण्डे सद्गुणिगुणगणकरण्डे भारतखण्डेऽस्मिन्निरिक्ष्यते यावल्लोचनविषय स्तावल्ललनाश्रितो हि दृश्यते जगदभ्युदयो नाम। यतोऽस्मिन् कलौ निगमागमनिष्णातैः कोविदैः सन्न्यासाद्याश्रमत्रयं दुस्साध्यदुस्सेव्यधियाऽवेत्य "गार्हस्थाश्रमः" सुखं साध्यः सेव्यश्चेति भावमङ्गीकृत्य स्वस्वान्तपटले, तस्यैव प्रधानत्वमाश्रमचतुष्टयधुरीणत्वञ्च प्रत्यगादि किल निस्संशयम्। वस्तुगत्याऽपि यावत्युपकृतिर्गृहस्थाश्रमेण सम्भाव्यते नहि तावती केनचनान्येन।

यथा गृहस्थाश्रममन्तरा प्रजोद्भवोऽसम्भवः, तथा सर्गीयसमस्तव्यवहृतिनिष्पत्तिरपि तेन विनाऽसम्भाविनी। स एवैषो गृहस्थाश्रमः, यत्र खलु सकलसर्गप्रणेता समस्तभुवननेता सदा स्वच्छन्दः सच्चिदानन्दो भगवान्नारायणो मानुषीयं कायमधिश्रित्य सद्धर्म्मं, सदा भक्तिरसैकतानं प्राप्ताऽनल्पविज्ञानं नित्यं मुखेनिहितबालमुकुन्दं निजभक्तवृन्दं पुष्णाति, संहरते च कंस-पौलस्त्यादीनवद्योपेतान् दुष्टान् सततं कामक्रोधादिम्लानमनस्कान् दुराचारव्यवहारप्रचारि-प्राणिनिकरान्।

भगवद्भक्ति-रसप्रचारिणां जगदुपकारिणां सद्धर्म्मसदाचारव्यवहारव्यवहारिणां परार्त्तिहारिणां महात्मनामाविर्भाविनी सूतिरप्ययमेवैको गृहस्थाश्रमो हि विद्यत इत्यवसेयं श्रीमद्भिर्विपश्चिद्भिरनिशम्। अयमेव हि विज्ञान-वैराग्यसम्पादनकरान् सद्गुणनिषेवितान् शेषान् ब्रह्मचर्य्य-वानप्रस्थ-सन्न्याससंज्ञाकानाश्रमान् बिभर्त्यनोरतमन्नादिना निजान्नस्य निर्दोषत्वात्। एवमेव गोऽग्रजन्माऽभ्यर्चनं, पितृ-देवर्षितर्पणं, मखादिकर्म्माण्ययमेव विधत्ते श्रौत-स्मार्तिकानि चापि। किमत्राधिकं वच्मि संसारसंस्थानपि सर्वथा दुःशक्यं खल्वनेनान्तरेण। अलमत्रेदं निदानमेव गृहस्थाश्रमधुरीणताद्योतकतायै इत्यवधेयं पाठकैः पाठिकाभिश्च।

यथाऽत्र मनुः—यस्मात्त्रयोऽप्याश्रमिणो ज्ञानेनान्नेन चान्वहम् ।
गृहस्थेनैव धार्यन्ते तस्माज्ज्येष्ठाश्रमो गृही ॥

महानुभावाः पाठकाः ! देव्यः पाठिकाश्च !! ब्रह्मचर्य्याद्याश्रमत्रय-साहाय्यित्वादस्याश्रमस्य गृहिणो ज्येष्ठत्वमस्तीति निर्विकल्पम् । अहो ! यस्यैतादृक्षं स्तवनम्, तन्मुख्यसाधनं दाम्पत्यमेव वरीवर्त्ति । यद्यपि स्त्रीपुंसयोरेकं कलेवरं पार्थक्येनालोच्यते, तथाप्यस्य युगलस्य मिथः प्रणयातिदार्ढ्यादयुक्तमपि तद्वपुः सम्पृक्तं सन्निगद्यते । अतः स्त्री-पुरुषस्यार्द्धाङ्गिनीत्वमुपेता । एतावद्धि स्त्रीगौरवाधिक्यं, यत्र खलु स्त्रीपुरुषमिथुनतायां प्राक् स्त्रीमुच्चार्य ततो पुरुषमुच्चारयन्ति लोकाः । यतः 'स्त्रीपुरुष' इत्यनवरतं व्याह्रियते, न च पुरुषस्त्रीति कदाचित् । अतः स्त्रीपुरुष-संयोजिततनौ स्त्रियाः श्रेष्ठमर्द्धाङ्गमभिमतं विज्ञैः शास्त्रज्ञैश्च ।

विविधसांसारिक-सम्मदस्य, सुकृतपरिणतेः सन्तत्युद्भूतेः सन्ततिसन्तानस्य च, मौलं बीजमियमेका भार्यैवास्ति इत्यत्र निस्सन्दिग्धिः । अत एवैतादृशी स्त्रैणस्योच्चसत्कृतिः, तस्माच्च यावज्जगदभ्युदयोऽपि ललनामाश्रयते । संसारसरणित्वात् समस्तसुखागारत्वात् पतिधर्म्मानुकूलवर्तित्वान्निखिलनिलयकृतिविदग्धत्वाद् वाङ्माधुर्यत्वादियं साक्षादिन्दिरैव प्रतीयते । यथाऽत्र शास्त्रम्—

अनुकूला न वाग्दुष्टा दक्षा साध्वी पतिव्रता ।
एभिरेव गुणैर्युक्ता श्रीरेव स्त्री न संशयः ॥

सद्गुणनिष्ठाः ! विद्वद्वरिष्ठाः !! एतादृक्षं महिलामाहात्म्यं समीक्ष्य मनोमोदसीमाऽपि स्वस्थानं जिहासते । किमत्राधिकं निगदेयम्, अहह ! कीदृक्षोऽयं जनमनोरञ्जनो भावः सद्गुण-गरिष्ठा प्रियवचन-पटीयसी वरीयसी सीमन्तिनी साक्षाल्लक्ष्मीपदाधिकारिण्येव । प्रत्युत सीमन्तिनी सर्वदेवर्षि-तेजोमयी सर्वतीर्थमयी चेत्यभिदधति शास्त्रकाराः ।

विगतवैक्लव्यस्य सदा सुखासनासीनस्य गृहस्थाश्रमस्याहोभाग्यम्, यस्य खलु बीजात्मिकाः स्वाम्येकसर्वस्वात्मिका विगत-लीलाः शीला निरभिमानिन्यो भामिन्य आसन्, तस्मादेतादृक्षे समुच्चकोटिगते स्त्रैणे आश्रमान्तरेभ्योऽस्य गौरवप्राचुर्य्ये को विस्मयः ?

परं, हा भारत ! कष्टम् !! कष्टतरञ्च !!! यत आधुनिकेऽनेहसि नहि तासां पुण्यशीलानां सदा भर्तृभक्तिविलीनानां महिलानां दर्शनम्, तास्तु गोधूमचूर्णलवणमिव विरला एव दृश्यन्ते, इति महान् खेदावकाशः । अत एव

नहि तस्याश्रमस्य प्राक्तना रोषनिरोधिनी मनोमोदिनी व्यवस्था वीक्ष्यते। आधुनिकस्तु विगत-सद्गुणावसथः वैदेशिकवेषस्थः गार्हस्थः यंत्रायते खलु नितराम्। तथाऽऽधुनिकशासनादस्य व्यवहृति-ज्ञानं शास्त्रीय-ज्ञानञ्चापि सर्वथा नष्टप्रायम्, येनास्मद्गृहमन्दिरं जाड्यगाढान्धकारावृतम्, सञ्जाते च जाड्यान्धकारे, कामुकीनिषेवणरूपाऽऽजीवावयवविलासाऽश्लीलव्यवहारवैदेशिक-वेषाधर्माचरणानाचाराविचार-परिवाद मृत्यनन्तरभुक्ति कलहादिभिर्लुण्ठकरूपै रेभिर्लुण्ठकैरास्माकीनमनोनिलयमाक्रम्य सदाचार स्वस्त्रीसन्तोष-धर्माचरणादिकं यावद्द्रव्यमलुण्ठि शास्त्र व्यवहार-विज्ञानाऽऽलोकविलुप्तत्वात्।

शास्त्रीय-व्यावहारिक - विज्ञानमौर्ख्याधिक्यादाधुनिक राजकीय-कुवेषधारणाल्लेडिसम्बन्धिक-शृङ्गार-विधानात् प्राय एक-देशिकवयस्त्वात् सर्वासां समान-वेशात्समानाकृतित्वाच्चैकत्रोपविष्टानामशिष्टानां सधवा-विधवा वेश्यानाप्तानङ्गानां ललना मध्ये नेवोह्यत इति सम्यग्, यत् का खल्वासु सधवा, का विधवा, का वेश्या, का चानाप्तानङ्गाऽस्तीति भेद-दर्शकं ज्ञानं नहि सुसम्पद्यत इति सर्वश्चित् साम्प्रतिकराज्यस्यैव दुष्प्रभावः।

सदाचारहीने दुराचारलीने सदादुर्नयासनाऽऽसीनेऽदीनेऽभ्राज्येऽस्मिन् राज्ये प्रचुरत्तमाभिरमाभि निलयकार्यकौशलपत्याऽऽदेशानुसरण-पतिजोषण-ह्रीनिषेवण-सदाचार - व्यवहार-पूर्वजमर्यादानुष्ठान-पत्यौप्रणयप्राचुर्य-स्वनग्नताच्छादन-मित-भाषणानन्यमनस्त्व-विनीतत्वानन्य-दृष्ट्य नन्य-भक्ति रहस्युपासन-सन्तत्युत्पादन-साधन-निगमोक्त-नियमविवेक-पूर्वकपत्यौगमन-परपुरुषादर्शनासेवनपरकाः समस्ताः सद्गुणा व्यमोचिषत।

अद्यतनीनां विरुद्धाचारिणीनां रमणीनां शास्त्रविरुद्धं सर्वथा पूर्वजमर्यादानिषिद्धं दुश्चरित्रमवेक्ष्य हृदोदूयते नितराम्। भारतस्यैतादृशं क्लिष्टजनमनिष्टिजं भस्मन्त्रं स्त्रीस्वातन्त्र्यं समीक्ष्यौषधीशः शैत्यम्, जिहासति मरीचिमाली मरीचीन्, शेषोभूभारं, त्रिदिशास्त्रिदिवं, सन्तः सद्भावम् ऋषयः स्वाध्यायं नद्यो निजनीरमाधुर्यं गावः पयोदानम्. "एषां स्वकर्मजिहासायां का कथा" भगवन् भक्तवत्सलो वैकुण्ठोऽपि वैकुण्ठं जिहासते। हा! खलु कलिजा वनिताः स्वातंत्र्यं पतिप्रतिकूलताञ्चाश्रित्य, विहाय च स्वस्त्रीत्वधर्म्मंत्रायिकां त्रपां मानुषीयं कर्म निषेवन्ते। मनुजा यथा प्रत्यूषे दिनान्ते च पर्यटितुमिष्टमित्रैः सममुद्याने गच्छन्ति, तथेमा अपि एलाऽऽमोदाऽऽमोदित तैलेन वालान् वासयित्वा कंकतिकया तान् प्रसाध्य चिक्कणीकृत्य च तत्र दिव्यां विविधकुसुमरचनां विधाय तत्प्रसरणभयाच्च तेषु कबरोधकानि (क्लिपसंज्ञकानि) शिरोभूषणविशेषाणि दत्वा, ऐदानीन्तना-

दर्शकं चोलकं (कमीजं गवनं वा) कटिभागालम्बि वसनं (वासकटं) अनल्प पटलं जंघापटं (सलवारं), सूक्ष्मसूक्ष्मं प्रत्यङ्गनिदर्शकं शिरोवसनं (पोल्कुणं) आंग्लिकीमुपानहं (बूटं) करे च चर्मनिहितघटिकां बध्वा नेत्रयोरुपनेत्रं धृत्वा प्रेमनिष्ठाभिः प्रेष्ठाभिः सखिभिः सार्द्धं विनोदवार्ताः कुर्वन्त्यः सुवासितं करपटं (रुमालं) जिघ्रन्त्यः विकसितकुसुमानि त्रोटयन्त्यः परस्परं हाव-भावं दर्शयन्त्यो मिथो विलसन्त्योऽट्टाट्टहासं कुर्वन्त्य इतस्ततो भ्रमन्त्यः क्वचि-दुपविशन्त्यः कदाचित् करबद्धघटिकायां कालं विलोकयन्त्यः प्रतिष्ठन्ते वेश्या वेषेनोपवनं प्रति प्रत्यहम्। एवमेव मनुजा यथा कौमार्ये संस्कृतविद्यालये गुरु-कुले आंग्लविद्यालयेषु च आचार्यान् काव्य-नाटक-व्याकरण-न्याय-दर्शन-धर्म-मीमांसाशास्त्राण्यांग्लविद्याश्चाधीयते मीमांसन्ते च, तथैना अपि कन्यालयेषु-आचार्याया आचार्याद्वाऽनङ्गरसनिदर्शकानि सातिशयं शृङ्गाररससमन्वितानि का-व्यनाटकादीन्याङ्गलविद्याश्च पठन्त्यनुशीलयन्ति च। एतदतिरिक्तं विश्वविद्या-लयसञ्चालकै विद्वन्मतल्लिकाभिः पण्डितमहोदयैः संस्कृतपरीक्षासु तथा-भूतानि काव्यनाटकानि न्यस्तानि, येषां प्रत्यङ्गं शृङ्गाररसप्रायम्, तेषां शृङ्गार-रसपरीतानि पद्यानि गद्यानि चाधीत्य झटित्येव परीक्षादित्सूनां स्त्रीणां मनसि मनसिजावेशो जायते, येन तास्तासां पाठकाः पाठिकाश्च व्यभिचार-दोषदुष्टा लोके लोकैरपवाद्यन्ते सुतराम्। कामावेशजेन व्यभिचारेण स्त्रीणां पातिव्रतधर्मं पतीनाञ्च पत्नीव्रत धर्मः सर्वथा विलुप्यत इत्यखिलाऽऽधुनिक-राज्यस्वातन्त्र्यपरिणतिः।

विवेकविचक्षणाः! शास्त्रानुशीलनसुदक्षाः!! समीक्ष्य समीक्ष्यमिमां पातिव्रतधर्मतरुमूलोन्मूलपरां मनोऽमोदनकरां परिणामे कशां दशाम्, क्लान्ति-मनुभवच्चेतः "अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम्। विषयेषु च सज्जन्त्यः संस्थाप्या आत्मनो वशे। पिता रक्षति कौमारे भर्ता रक्षति यौवने। पुत्रश्च स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हती", ति सुपूतं नैतिकं शास्त्रा-कूतमनुसरन्तीः पातिव्रतं पोषयन्तीः पतिमेवैकं सर्वस्वं स्वीकुर्वन्तीः शास्त्रप्रतिपादित-तीर्थव्रतादिकमवहेलयन्तीः सत्कामिनी भामिनीः स्मारं स्मारं ईषद्धृतिमनुजु-षद्विमर्शते, यत्—स्त्रियोऽनवरतं परायत्ताः, न कदाचित्तासां स्वातन्त्र्यावलम्बना-वकाशः। यतस्तासां कौमार्ये जननीजनकाधीनत्वम्, परिणीतत्वे भगवद्विष्णु-स्वरूपिणोऽमितप्रदातुः पत्युः, अध्युषिते च तस्मिन्नाके स्वसमुद्भावितस-न्ततेः, सन्तत्यभावे मृतायां वा तस्यां पितृकल्पस्यानुत्तमसङ्कुलस्य श्वशुरादिकस्य, तस्मिन्नपि गतेन्द्रलोके, विविधस्वरूपिणोऽन्तर्यामिणः परम-

पितुः परमात्मनः सच्चिदानन्दस्य । पुरातनाः सद्गुणोनाः स्वामिसेवने सदा नवीना वामलोचना उपरिनिर्दिष्टं नैतिकं शास्त्रीयमनुत्तमं नियममधिश्रित्य निजनिलयतो बहिश्चरणनिक्षेपं फणिफणांश्रित्या त्रनिभममवागच्छन्, नैच्छंश्च विस्मृत्याऽपि परभवनगमनम् । तथा च "प्रतिकूलकलत्रस्य नरको नात्र संशयः" इतीहैव नरकक्लेशानुभवभिया भर्त्रा भर्त्सिताऽपि नहि भर्त्रा विवादं तत्प्रातिकूल्यं विपरीतमनस्त्वमनन्यमनस्त्वं पतिदोषजं परीवादं च प्रचक्रिरे । ताश्च पुनः विसृज्य सर्वं तीर्थव्रतादिकम्, अनुसृत्य च शास्त्रव्यवहारविज्ञानं, सर्वस्वभूतं भगवत्स्वरूपं सुखे सुखिनं दुःखे च दुःखिनं प्रत्यक्षं देवममितदातारमनिशं सात्त्विकप्रणयकर्तारं एकमात्रं भर्तारमेवाजुषन्त । कान्ताऽऽदेशेन कदाचित्तीर्थव्रतादिकञ्चापि चेरुः, यतो भर्तृभक्त्यैव भगवद्भक्त्यैव सुभगाः स्त्रियोधर्मार्थकाममोक्षाभिधेयं पदार्थचतुष्टयमधिगच्छन्ति ।

यथाऽत्र शास्त्रम्—

पातिव्रत्यात्परं नास्ति स्त्रीणां श्रेयस्करं व्रतम् ।
धर्म्मं कामञ्च मोक्षञ्च सर्वं प्राप्नोत्यतो यतः ॥

अत एव विद्यमानेऽपि कान्ते पातिव्रत्यधर्म्मं विहाय धर्मान्तरं या विधत्ते तन्निष्फलीभवति कृत्स्नं तस्याः । तस्मात् पतिमेवैकं तीर्थमयं सर्वदेवमयं साक्षाद् भगवद्विष्णुमयं चावगच्छन्ती तं प्रपूजयेत् स्वच्छस्वान्तेन, प्रेमपरीतया वाचा शुद्धेन कायेन च कामिनी । तदभ्यर्हणादेवानुत्तमं मोदं प्रशस्तं भागधेयं सगुणां सन्ततिं मालयालङ्काररूपलावण्यवासोयशांसि संलभते । पातिव्रत्यसेविनी कामिनी पतिवियोगजं वैकल्यमसहमाना तल्लग्नमनस्का तमनुव्रजति । यथा—पतिप्रेमपरीता स्वामिसेवनविक्रीता क्लान्त्यनुभवे सदाऽभीता विनीता श्रीमती महिषी सीता सदा पैतृकाऽऽदेशशिरोधारकेण जगन्मर्य्यादामार्तण्डेन श्रीमता काकुत्स्थेन वन्यवेदनया भृशं निषिध्यमानाऽपि पतिविरह-वैक्लव्यविक्लवा सती सती माणिक्य-मुक्तामालाऽऽभरण-कौशेयपटकटाह-लेह्य-चोष्यभक्ष्यपदार्थास्वाद-प्रियसखिजनक्रीडाविलासव्यासा-न्तःपुरनिवासघृणासि-न्धुसद्बन्धुसम्भवसन्दोहानुभवा-नुकूलवर्ति-प्रणतिनम्रचरक-सदासम्मुदित-चेतस्क-मधुरवचनमयमनस्क-भृत्यकृत्य-विचित्र-सचित्ररतिनिलयविश्रामप्रमोद-गजचपलतुङ्गतुरङ्ग-स्यन्दनारोहण-मनोविनोदककौतुकावलोकनादिकान् राजकीयान् विविधभोगानविगणय्य वन्याऽऽद्रेयमहाफणिफणाफूत्कारान् सरोषहर्यक्षक्ष्वेडान् भल्लतल्लजायुधाग्रपरिस्पर्द्धिखरनखर-ऋक्षरौद्रारण्यदेशान् व्याघ्र-घृष्टि-गण्डकगोमायु-मर्कट-मार्जाराद्यनल्पप्रतिभयसत्त्वसङ्घैः सर्वतो व्याप्त-

मार्गान् कन्दरिकन्दरान्धकारान्, एकमात्रं परमतत्त्वपात्रं परमं पातिव्रत्यधर्म्मं निर्वोढुं सोत्कण्ठं स्वीकुर्वाणा सा चतुर्दशाब्दीयां वनवसतिमतिक्रमितुं दाशरथिज्यायांसमनुययौ ।

अहह ! कीदृक्षः सच्चरित्रः पवित्रः सातिशयं पतिप्रेमपरीतः विनीतः ससारः उदारः सीताव्यवहारः, यत्र खलु नितान्तकान्तकृतमनस्का पतिसेवनाद् विख्यातयशस्का श्रीमती सीता प्रतिक्षणमभिरामं निष्कामं श्रीरामं स्मरन्ती सर्वथा रामाऽऽनुकूल्यं भजन्ती "ॐ नमः कान्ताय शान्ताय सर्वदेवाश्रयाय चे"ति पतिपूजनमहामंत्रमधीत्य चन्दनाक्षतपुष्पपाद्यार्घ्यधूपदीपनैवेद्यताम्बूलवासोभिः स्वं पतिं विष्णुरूपिणं श्रीराममभ्यर्चन्ती विवाहकालीनां "माता त्यज्यते, पिता त्यज्यते भ्राता त्यज्यते, कस्यार्थं केवलं पत्यर्थमिति" कृतपूर्वां प्रतिज्ञामनुस्मरन्ती पतये श्रीरामाय गहनीय-गिरिजगजेन्द्रमृगेन्द्र–गण्डक–विकरालव्यालकन्दरिकन्दरानिविडान्धकारदरदर्शकक्लेशान् सेहे ।

सदा सद्भावपूताः ! अवगतपातिव्रत्यधर्म्माकूताः !! अबोधिषत तत्रभवद्भिः सद्भि र्विनीतायाः श्रीमत्याः सीतायाः पतिप्रणयमाहात्म्यम् । यत्र न क्वचित् क्लेशलेशः, प्रत्युत तस्याः पतिप्रेमानन्दसन्दोहो जनमनो रञ्जयति नितराम् । किमस्याः पातिव्रत्यविषये वदेयम्—इयं खलु लोकमान्येनासामान्येन स्वादेशश्रृङ्खलानिगडितशेषगुणालङ्काररीतिरसनिवहेन वैदिकविवेकविचक्षणेन राज्यकृतौ प्रदक्षिणेन निबद्धनिजनिष्कलङ्कपर्यङ्कविकरालभालकालेन पररमणीहरणात् कालिमाऽवलिप्तभालेन प्राप्ताऽनङ्गसङ्गेन दशोत्तमाङ्गेन हृतिमासाद्यापि तद्राजकीयविविधभोगाभिरीदृयापि मायोपेताभिर्निशाचरीभिस्त्रासिताऽपि न जहौ पातिव्रत्यधर्म्मम् । अतो वृन्दारकवृन्दमप्यस्याः श्रीरामं पतिं प्रति रतिततिमवेत्य पातिव्रत्यधर्म्मपरीक्षणे साक्षिभूतं सत् साहाय्यं विदधौ । यदा लङ्कातः परावृत्य सीता प्रेष्ठं दाशरथिज्येष्ठमियाय, तावदिमामनलोल्लङ्घनेनासौ परीक्षितुम्, अयि अनलदेवते ! सततं मयि समर्पितस्वान्ता ममेयं कान्ता सत्यं चेदधर्मिष्ठा, मयि स्खलितपातिव्रत्यधर्म्मा, तदिमां ममावलोकनसमकालमेव स्वीयतेजःपुञ्जेन भस्मसात् कुरुष्व, यदि च साध्वी पातिव्रत्यधर्म्मनिष्ठा, तदा क्षमस्व नाम । दहनोऽपि स्वीयया दैवशक्त्या निभाल्याऽस्यां परपुरुषागतिं, नैनां ददाह निर्दुष्टाम् । अनेनैव दृश्येन शर्मयुतेन पातिव्रत्येनादर्शभूता सती सीता मह्यते मह्यामखिलायाम् । एवमेव कृतायां पातिव्रतमीमांसायां भोजराजकालीनाः पतिभक्तौऽनिशं नवीनाः पत्येकशरण्यः रमण्यः नैजेन पातिव्रत्यधर्म्मेण विनोदयन्ति नो नेत्रविषयम्, तासु कस्याश्चिदेकस्याः

पतिजुष्टिपुष्टिकरं पवित्रं चरित्रं सङ्कमय्य समाप्नोमि निर्दिष्टं विषयम् । यथा—पुरा परमोदारः सदा सद्व्यवहारः कविताऽऽगारः प्रचुरौजोऽवनिपभोजो रजन्यां परिवर्तितवेषो निजनगरव्यवहारचर्चा समीक्षमाणः कस्यचिदेकस्य द्विजन्मनो निलयमभ्युपेत्य किमीक्षते, यदेका भूदेवपत्नीपतिव्रता शयानं पतिमनन्यमनस्त्वेन न्यस्तनिजाङ्ककान्तचरणा मर्दयति सानन्दम्; तदा क्रीडनकैः क्रीडन् तस्याः कनीयाननभिज्ञः शिशुस्तापसन्ताने दहने न्यपतत् । दाहात्मकदहनस्थोऽप्यसौ वरीयान् कनीयान् बालः प्रहासं प्रहासं मधुरगिराऽलपत् जनयित्रीम् । इतः पतिपादमर्दनी विप्रपत्नी भर्तुर्निद्राऽऽनन्दभङ्गभयान्नहि तज्जागरितश्चकार, अवोचच्च-चेत्तथ्याद्धर्मयुतं मे पतिपादमर्दनम्; तदत्पष्टभाषिणं मुग्धं माणवकं त्रायस्व वह्ने! ज्वलनोऽपि पतिव्रतायाः पातिव्रत्योत्कर्षं संवीदयेयाय चन्दननिचयशैत्यम् । वसुन्धरेशो भोजोऽपि विलोकयेमां दिव्यां विस्मापयित्रीं घटनामूचे तदेति—

"हुताशनश्चन्दनपङ्कशीतलः ।

अत्रान्तरे च स्वीयसभितिस्थानां पण्डितानां पञ्चशतीमुपरिनिर्दिष्टं पद्यचतुर्थचरणं संश्राव्य व्याजहार—अयि विवेकिनः! सुमेधावन्तः!! अत्र समस्यापूर्तिरनुष्ठेतिमा । अनुत्तरितेषु विश्वेषु कोविदेषु तत्रोचिवान् कविकुलावतंसः संसदि लब्धप्रशंसः कालत्रयोदन्तावगन्ता गुणालङ्काररीतिरसनियन्ता भारतीदासः श्रीकविकालिदासः—

"सुतं पतन्तं प्रसमीक्ष्य पावके
न बोधयामास पतिं पतिव्रता ।
पतिव्रताशापभयेन पीडितो
हुताशनश्चन्दनपङ्कशीतलः ॥

निशम्यैतज्जातविस्मयो भोजः परामृष्टिश्चक्रे, कथमयं दृष्टिपथमनधिगतामननुभूतां प्रवृत्तिमिमामविन्दत? इत्थं खलु तत्कवेः प्रज्ञाप्रागल्भ्योत्कर्षं स्तुवन् तस्मै प्रचुरं पारितोषिकं दापयित्वा संसदं विससर्ज । अयि प्रेयस्यः श्रेयस्यः भगिन्यः! जनन्यश्च!! अनुभवन्त्वत्र क्षणं चेतस्कं चापल्यं निरुध्य, दृश्यं पातिव्रत्यदृश्यम् । अत्र तया स्वस्वामिसेवनमेव मुख्यमक्षय्यफलदमवागामि, न चात्मसम्भूतसुतप्राणत्राणम् ।

अहह! कीदृशः परमोच्चकोटिं गतः विनतः नितान्तकान्तस्वान्तसन्तोषकरः मुकुलितमनःकमलविकासी भर्तृव्रताकामिनीहृन्निवासी प्रबलप्रभावः पातिव्रत्यधर्म्मभावः । परं हा भारत! कुतस्तवार्यरमणीनां भर्तृव्रतभरणम्,

कुतश्च तवाधुनिकीनां व्यपगतह्रीणां निःश्रीणां स्त्रीणां सर्वथा स्वातंत्र्यसेवनम्, कुतस्तवाशुक्रतस्मृत्यनुसरणम्, कुतश्च तव प्रत्यवायपद्धतिविचरणम् । कुतस्तवाव-सितक्षात्रधर्माकूतानामात्मजानां सिंहसाम्मुख्यम्, कुतश्च तव श्व-शृगाल-विडा-लरवाविताररण्यत्रासाभिमुख्यम् । कुतस्तव शरीराधार-मूलस्य अत्युग्रकठिन-कृतिकरणेऽपि सदाऽनुकूलस्य केसरिकल्पस्य शूरहृत्तल्पस्य, सद्भिरा-चर्यस्य, ब्रह्मचर्यस्यानुचरणम्, कुतस्तव पामरपुरुषाद्दृतस्य व्यभिचार-स्यानुसरणम्, कुतस्तव सज्जनसङ्गः, कुतस्तव दुर्जनदुस्सङ्गः, कुतस्तव देवाहुतिको होमः, कुतश्च तव तमालपत्रपात्रस्थहुताशने तमालाहुतिको होमः, इति तव पौर्विके आधुनिके चावस्थाभेदे महान् खेदावसरः । अयि ! प्रमादावलम्बिभारत ! मुञ्च तावत्प्रमादम्, मोहनिद्राञ्च । उत्तिष्ठ, स्मर तावत् सर्वविधोन्नतिमूलं जगन्नदर्शकम् पालितपातिव्रत्यं गार्हस्थ्यम्, अनेनैव तवाभ्युदयः श्रेयः कीर्तिकलापश्च अद्यापि वर्तते ते जागर्ति-कालः, लभस्व पूर्वकालीनां जागर्तिम् । नियोजय स्वीयं गार्हस्थ्यं पातिव्रत्यधर्मे । अनेनैव तवोद्धरणम् कर्मबन्धनभञ्जनं च । भारत ! नोद्विग्नो भव, यद्यपि सर्वदेश-प्रायिकं पातिव्रत्यनिषेवणं नो दृष्टिपथमवातरीति, परन्तथापि तद्बीजन्तु न क्वचिद्विवरान्तर्हितं सञ्जातम् । अधुनापि राज्याधिकारकाङ्क्षिणां विदुषां भूदेवानां राजन्यानां वैश्यानां वर्णत्रयसेविनां वित्ताढ्यानां राजव्यवहारिणां दाराः पत्युरा-देशं शिरस्कुर्वन्तः पातिव्रत्यधर्मं निर्वहन्ति । अभ्यर्हणीयं स्वस्वामिनं स्वदेशिलौ-त्रवाससि संवीक्ष्य स्वयमपि ते सूक्ष्मसूक्ष्मवासोधारिणः स्वदेशिसौत्रवासांसि ( खद्दर वस्त्राणि ) परिधारयन्ति । तथा च पत्यौ गते कारागारे, इति निश्चि-न्वन्ति ते—यावदास्माकीना अस्मच्छुभाकाङ्क्षिणो भर्तारः कारागारतः सुखं मोचिता नास्मन्निलयमलङ्करिष्यन्ति, तावद्वयमपि तान् प्रतीक्षमाणा एकाऽऽहारि-त्वेन भूशायित्वेनामिष्टभोजनेन बहिरगमेनालापभाषणेन क्षोदीयसा वेषेण च कालं नेष्यामः । सम्प्रत्यपि पतिवियुक्तौ तदाऽऽगमावधि तद्व्रतमनुतिष्ठन्ति दाराः, परं यदेमे शास्त्रविधिमनुसृत्य षोडशोपचारैर्देववद्भूष्या भर्तारमर्चिष्यन्ति, भारत ! तावत्तवाभ्युदयः असंदिग्धः अल्पीयस्यनेहस्येवाभ्युदयशिखरिशिखरमुपेष्यसि । सम्प्रति सपूजनपतिसेवनस्तवं प्रदर्श्य समाप्यतेऽयं विषयः । यथा—

ॐ नमः कान्ताय शान्ताय शिवचन्द्रस्वरूपिणे ।
नमः शान्ताय दान्ताय सर्वदेवाश्रयाय च ॥ १ ॥
नमो ब्रह्मस्वरूपाय सतीप्राणपराय च ।
नमस्याय च पूज्याय हृदाधाराय ते नमः ॥ २ ॥

पञ्चप्राणाधिदेवाय चक्षुषस्तारकाय च।
ज्ञानाधाराय पत्नीनां परमानन्दरूपिणे ॥ ३ ॥
पतिर्ब्रह्मा पतिर्विष्णुः पतिरेव महेश्वरः।
पतिश्च निर्गुणाधारो ब्रह्मरूप ! नमोऽस्तु ते ॥ ४ ॥
क्षमस्व भगवन् दोषं ज्ञानाज्ञानकृतञ्च यत्।
पत्नीबन्धो ! दयासिन्धो ! दासीदोषं क्षमस्व च ॥ ५ ॥
इदं स्तोत्रं महापुण्यं सृष्ट्याद्ये पद्मया कृतम्।
सरस्वत्या च धरया गङ्गया च पुरा व्रज ॥ ६ ॥
सावित्र्या च कृतं पूर्वं ब्रह्मणे चापि नित्यशः।
पार्वत्या च कृतं भक्त्या कैलासे शंकराय च ॥ ७ ॥
मुनीनाञ्च सुराणाञ्च पत्नीभिश्च कृतं पुरा।
पतिव्रतानां सर्वासां स्तोत्रमेतच्छुभावहम् ॥ ८ ॥
इदं स्तोत्रं महापुण्यं या शृणोति पतिव्रता।
नरोऽन्यो वापि नारी वा लभते सर्ववाञ्छितम् ॥ ९ ॥
अपुत्रो लभते पुत्रं निर्धनो लभते धनम्।
रोगी च मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ॥ १० ॥
पतिव्रतापि श्रुत्वा च तीर्थस्नानफलं लभेत्।
फलञ्च सर्वतपसां व्रतानाञ्च व्रजेश्वर ॥ ११ ॥

इदं श्रीब्रह्मवैवर्तमहापुराणान्तर्गतं पातिव्रत्यसम्पादनकरं कान्तस्तवं या काचिदपि स्त्री नित्यशोऽधीते शृणोति श्रावयति च भक्त्या सा सर्वविधात्माभीप्सिता मिष्टामनुत्तमां गतिञ्चाधिगच्छति। अनेनैव पतिः पूज्यते, साध्यते च पातिव्रत्यधर्म्मः पतिव्रताभिः स्त्रीभिरित्यलम् ॥



# शोकोच्छ्वासः * ।

—०*०—

काशीपण्डितमण्डलीपरिवृढो वादीभकण्ठीरवो
विद्वद्वृन्दसमर्चिताङ्घ्रियुगलो वन्द्यो नृपालैरपि ।
श्रीवामाचरणो गुरुर्यदि विधे नीतस्त्वया शोच्यतां
कस्मिंस्ते करुणा दया च भविता नैतावता भावये ॥१॥
किं वा ते करुणैव नास्ति हृदये लेशो दयायाः क्व वा
सौजन्यं तु न दूरतोऽपि भवतः साम्मुख्यमागच्छति ।
रे दुर्दैव विधे ! त्वयाद्य किमिदं दुश्चेष्टितं चेष्टितं
भट्टाचार्यमहोदये प्रहरता सर्वं जगत्खेदितम् ॥ २॥
क्रूरं त्वामपहाय सा भगवती श्रीभारती भारते
मान्यं शान्तमुदारमद्भुतगुणं श्रीसद्गुरुं संश्रिता ।
आहूतापि गता न तेऽन्तिकमियं मूढोऽसि यस्माद्विधे
तस्मादेतदनर्थकारि भवता कार्यं समानुष्ठितम् ॥ ३ ॥
तर्कोऽयं किमु वेद एव किमु वा धर्मोऽथवा मूर्तिमान्
वादो वा शशिशेखरः किमु रसः शान्तोऽथवा भारती ।
इत्येवं विविधा मतिः समभवद्यस्मिन्बुधानां विधे !
श्रीवामाचरणं तमेव हरता क्रूरत्वमाविष्कृतम् ॥४॥
या सत्तर्कविचारचारुपटुता, याऽनल्पसत्कल्पना
वादिव्यूहसमूलगर्वदमनी, या शिष्यवर्गे दया ।
सा सर्वा भवता सहैव निरगात्काशीमनाथां सतीम्
अस्मान्भाग्यहतान् किमर्थमधुना नालोकसे सद्गुरो ॥५॥
अधिकाशि मधौ सिते शनौ कतिथौ पण्डितमण्डलीपतिः ।
अपहाय सुदुर्भगामिमामविशद्धामशिवस्य पावनम् ॥ ६ ॥

—सूर्यनारायणशर्मशुक्लस्य ।

---

* महामहोपाध्याय-पण्डितप्रवर-न्यायाचार्य-वामाचरणभट्टाचार्यमहोदयानां कैवल्यावाप्ति-मधिकृत्य काशीस्थविदुषां ( १-४-२१ ) शोकसभा समभूत् । तत्र बहुभिः पण्डितैरनेकाः शोकोच्छ्वासकविताः श्राविताः । —सम्पादकः

# लघुमञ्जूषा रत्नप्रभा सहिता ।

अयि ! —स्वाध्यायविधिबोधितश्रुतिस्मृतिशास्त्रादिनिखिल-विद्याकलापपारदृश्वानोऽनेकविधातिकठिनप्रश्नचातुरीधुरीणाः पण्डितराजशीर्षण्याः महोदयाः किञ्चिदिदं कर्णे कुरुत । इह खलु विरिञ्चिप्रपञ्चे ब्रह्माण्डे समेषां प्राणिनां परमसुखावाप्तिपूर्वकात्यन्तिकदुःखनिवृत्त्यर्थं स्वभावत एवास्ति सततमुद्योगः । किन्तु—सत्यं, स्वात्मानन्दपराङ्मुखः पुरुषः स्वीयमतिदुर्लभं मानुषशरीरं कामादिमोहितातिभयङ्करतापतापिते संसारानले जुहोतीति नाविदितं केषामपि मानवानाम् । श्रेयःपरिपन्थिस्वात्मावरणध्वंसद्वाराऽपरविद्यात्वेनाम्नाताद्यमहानुशासनाननीभूतव्याकरणतन्त्रस्वतन्त्रप्रज्ञ एव नाशिताखिलज्ञेयान्तरपरमानन्दरतो भवतीति भगवान् पतञ्जलिरपि अमुमेवार्थम्—"एकः शब्दः सम्यग्ज्ञातः स्वर्गे लोके च कामधुग्भवती"ति वाक्येन स्फुटमाह । अत एव चरमकर्तव्यतया सर्वशास्त्रकृतामात्मस्वरूपप्रतिपादने एवाधिका प्रवृत्तिर्दरीदृश्यते, केचन साक्षात्स्वरूपं प्रतिपादयन्ति, अपरे परम्परया तदुपपादनेनाङ्गत्वं गमयन्ति । एवञ्च शाब्दिकशिरोमणेर्नागेशभट्टस्य तत्कर्तृकानेकेषु व्याकरणग्रन्थेषु आसेतु हिमाचलं विराजमानेष्वपि तदीयसर्वस्वभूतशब्दशास्त्रीयवास्तविकतत्त्वतो मतप्रतिपादिका-सांख्ययोगार्वाचादि मत सम्वादिका तार्किकादूद्युद्भावितशुष्कयुक्त्याभासादीनामसारत्वेन निराकरणात्मिका चेयं लघुमञ्जूषा नाम ।

तत्र वैयाकरणमूर्धन्यनागेशभट्टपादैः प्रक्रान्तविविधविलक्षणविचारचातुरीचमत्कारतर्ककर्कशपदार्थानामतिदुरूहतया-छात्राणां हृदङ्गमस्याशक्यत्वेनानेकविधमतभेदानामल्पकालेनावगन्तुमशक्यतया, नव्यनैयायिकादि-परिभाषाजटिलत्वेन दर्शनशास्त्रेऽकृतपरिश्रमैरनायासेन बोद्धुमयोग्यताञ्चावलोक्य सर्वेषामुपकाराय मञ्जूषामर्मज्ञानाय चाल्पधिषणानामल्पाभ्यस्तशास्त्राणामशक्यत्वेनातिदुरूहैवेति मनसि कृत्य महाभाष्याद्यनेकग्रन्थेषु निमज्ज्य निखिलशास्त्रपारावारपारीणैः शब्दशास्त्रीयतत्त्वाज्ञानेनाज्ञानान्धकूपनिमग्नच्छात्रसमूहोद्दिधीर्षुभिः परमकारुणिकैः वलियामण्डलवास्तव्यैः काशीस्थविरला—संस्कृतविद्यालय-प्रधानाध्यापकै र्व्याकरणाचार्यैः श्रीसभापतिशर्ममहोदयैरखिलशब्दशास्त्रसारपीयूषमखिलान् पाययितुं बद्धपरिकरैर्नानाविधमतान्तराणि परिष्कृत्यापूर्वेयं—'रत्नप्रभा' नाम टीका निरमायि । सा चेयं रत्नप्रभा स्वकीयप्रभया तरणिकिरणप्रपातेन प्रतिपन्नमुत्पलविकाशवत्प्रतिपदतदर्थज्ञापनेनातिगूढपदार्थान् बोधयन्ती छात्रानुपकृत्याविद्यातमस्काण्डं विनिवर्तयन्ती सर्वटीकान्तरमतिशेते इत्यत्र नास्ति संशयलेशोऽपि सुधियाम् । किम्बहुना नवनीतमिव सारभूतैषा-सर्वेषामुपादेयैवास्या विषयप्रतिपादनशैली-इतरापेक्षयात्यन्तमनोरमा-व्याकरणसिद्धान्तमधिजिगमिषूणामन्तेवासिनां कृतेऽत्यन्तमुपयोगिनी च ।

एतस्या अवलोकनेनैव कृतार्थयिष्यन्ति महाभागाः। अंशतः किञ्चिदुधृत्य पण्डितानां पुरतः स्थाप्यते येन सारासारविवेकशीलैर्विद्वद्भिः स्वयमेव निर्धारयिष्य-

न्त इति । तथा हि–शक्तिनिरूपणावसरे–ईश्वरेच्छाशक्तेः पदविशेष्यकार्थविशेष्यकोभयात्मकपरिष्कृतरूपं निर्वक्ति ग्रन्थकृदिति स्फुटम्प्रतीयते । यथा—"अस्माच्छब्दादिति"–अत्र समीपतरवर्त्तिबोधकेनेदमोच्चारणकर्मीभूतं परामृश्यते, तस्याभेदेन शब्देऽन्वयः । शब्दपदोत्तरपञ्चम्याः जन्यत्वमर्थस्तत्र शब्दस्य निरूपितत्वसम्बन्धेनान्वयः । जन्यत्वस्य च बोधव्यपदघटकबुधधात्वर्थे बोधे स्वरूपसम्बन्धेनान्वयः । बोधस्य च निरूपितत्वसम्बन्धेन तव्यप्रत्ययार्थविषयतायामन्वयः । तस्य च स्वरूपसम्बन्धेनार्थेऽन्वयः । तथा च—"एतदभिन्नशब्दनिरूपितजन्यतावद्बोधनिरूपितविषयतावानर्थः" इत्यर्थविशेष्यकेश्वरेच्छाशक्तिः सिद्धा । तथा च "अभेदसम्बन्धावच्छिन्नैतत्त्वावच्छिन्नप्रकारतानिरूपिता शब्दत्वावच्छिन्ना या-विशेष्यता-तादृशविशेष्यत्वावच्छिन्ना-शब्दत्वावच्छिन्ना-निरूपितत्वसम्बन्धावच्छिन्ना-या प्रकारता तादृशप्रकारता-निरूपिता जन्यत्वत्वावच्छिन्ना-या-विशेष्यता-तादृशविशेष्यत्वावच्छिन्ना-जन्यत्वत्वावच्छिन्ना-स्वरूपसम्बन्धावच्छिन्ना-या-प्रकारता-तादृशप्रकारतानिरूपिता-बोधत्वावच्छिन्ना या–विशेष्यता–तादृशविशेष्यत्वावच्छिन्ना बोधत्वावच्छिन्ना निरूपितत्वसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता विषयतात्वावच्छिन्ना या विशेष्यता तादृशविशेष्यत्वावच्छिन्नविषयतात्वावच्छिन्ना स्वरूपसम्बन्धावच्छिन्ना या प्रकारता तादृश-प्रकारतानिरूपितार्थत्वावच्छिन्ना या विशेष्यता तादृश-विशेष्यता निरूपिकेश्वरेच्छा शक्तिरिति परिष्कृतं स्वरूपं फलति, "ननूक्तबोधविषयत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छायाः शक्तित्वेऽर्थधर्मत्वापत्तिः शब्दधर्मत्वानापत्तिश्च शक्तेः स्यादत आह—"इदं पदमिति" अत्रेदमर्थस्याभेदेनार्थेऽन्वयः । अर्थस्य च विषयत्वरूपेऽर्थे निष्ठत्वसम्बन्धेनान्वयः । विषयत्वस्य च निरूपकत्वसम्बन्धेन बुधधात्वर्थे बोधेऽन्वयः । बोधस्य च निरूपितत्वसम्बन्धेन जनकत्वरूप–आख्यातार्थेऽन्वयः । जनकत्वस्य च स्वरूपसम्बन्धेन पदेऽन्वयः, तिङन्तस्थले प्रथमान्तार्थविशेष्यकबोधस्यैव नैयायिकैस्स्वीकृतत्वात् । तथा च इदमर्थनिष्ठविषयतानिरूपकबोधनिष्ठजन्यतानिरूपितजनकतावत्पदमिति पदविशेष्यकेश्वरेच्छाशक्तिः" इत्यादि ।

एवमेव लक्षणा निरूपणप्रस्तावे "मुखश्चन्द्रः" गौर्वाहीक इत्यत्र तन्मतं प्रतिपाद्य पुनरालङ्कारिकमतेन प्रत्याख्याय स्वमतेनापि तन्मतम्प्रत्याख्यातम् । पुस्तकदर्शनेनैव सर्वमवगतं स्यात् । बौद्धार्थनिरूपणकाले–"आत्मानमिति प्रसङ्गमुद्धृत्याधिकम्प्रतिपादितमिति विस्तरभयान्नेह तन्यते" । पुस्तकस्य मुद्रणमतीवसुन्दरम् । मूल्यं ३॥) रूप्यकमात्रम् । प्राप्तिस्थानम्—ग्रन्थप्रकाशक–पण्डित गिरिजाप्रसादपाण्डेयः, लालघाट, बनारस सिटी ।

रामदेवद्विवेदः ( व्याकरणाचार्यः ) ।

—०*०—

र्वसल्लक्षणोपेतनिर्माकयोग्य-सन्तानोपयोगि रजोवीर्यात्मकं सूक्ष्मं शरीरो-पादानं नारीगर्भे सञ्चीयते । ततः प्रभृत्येव पितृगणाः यथावसरं यथो-पादानं यथासंस्कारं यथायोग्यं स्थूलशरीरं निर्मातुं प्रयतमानाः कतिभि-र्मासै र्जीववासक्षमं तत् मनुष्यवासयोग्यं गृहमिव शनैः शनैः सर्वेन्द्रियवि-काशपरिपूर्णं विरचयन्ति ।

तत्र चतुर्थे मासि स्थूलशरीरस्याङ्गप्रत्यङ्गकल्पना भवतीत्यतः पूर्वमेव देवपितृप्रसादतो गर्भस्थजीवस्य पुरुषशरीरस्यैवोपलब्धिः स्यादिति संकल्पेन पुंसवन-संस्कारोऽनुष्ठीयते । तस्मिंश्च संस्कारे मातापितरौ मन्त्रशक्त्या स्वसंकल्पशक्त्या देवपितृप्रसादेन च गर्भस्थजीवस्य पुंस्त्वे सर्वथा सर्वतः तदवयवोपचयाय यतमानौ तद्रक्षामातन्वाते । प्रबलकर्मवेगेन च कन्यात्वभावेऽपि तस्मिन् तदीयावयवसौन्दर्य्य–सौभाग्यादिगुणसञ्चयमाधातुं प्रयतेते ।

अध्यात्माधिदैवाधिभौतरूपाणां त्रयाणामपि दैवजगतां सञ्चालकानां महर्षि-देव-पितृगणानां सर्वेषामपि साहाय्यमस्मिन् संस्कारे समासादयितुमव-सरो लभ्यते । अत्र प्रयुज्यमानो मन्त्रो यथा—

पुमान्सौ मित्रावरुणौ पुमान्सावश्विनावुभौ ।
पुमानग्निश्च वायुश्च पुमान् गर्भस्तवोदरे ॥

कर्मभूमावत्र सर्वोत्तमादृष्टसंग्रहनिमित्तं सर्वोत्तमस्य कर्मणः संग्रह आवश्यक इति तदर्थं योग्यस्थूलशरीरोपलब्धिरप्यपेक्ष्यत एव । एवञ्च येन संस्कारेण तादृशं सर्वोन्नतं सुदृढसुन्दरं वज्रसंहननं तेजस्वि सर्वसल्लक्षणोपेतं स्थूलशरीरमुपलभ्येत किं वाच्यं तस्योपयोगित्वे । स्मृतिरपि समर्थयति संस्कारस्यास्यानुष्ठानम् ।

गर्भे पुंसवनान्याशु पूर्वं व्यक्तेः प्रयोजयेत् ।
बली पुरुषकारो हि दैवमप्यतिवर्तते ॥
पुष्ये पुरुषकं हैमं राजतं वाऽथवाऽऽसम् ।
कृत्वाग्निवर्णं निर्वाप्य क्षीरे तस्याञ्जलिं पिबेत् ॥ २३ ॥

तृतीय-संस्कारं सीमन्तोन्नयनमुपदिशति—

## सीमन्तोन्नयनम् ॥ २४ ॥

गर्भावस्थायाश्चरमोऽयं तृतीयः संस्कारः । गर्भस्थजीवस्य पूर्णं विकास-सम्पत्त्यै संस्कारोऽयमनुष्ठीयते । पतिः स्वपत्नीप्रसादाय स्वयं तस्याः

सीमन्तस्योन्नयनं करोतीत्यत एवास्य सीमन्तोन्नयनं नाम। संस्कारेऽस्मिन् यादृशी प्रार्थना देवताभ्यः क्रियते यादृशश्च संकल्पो मातृचित्ते समुद्भाव्यते, स्वयञ्च पित्रा स्वचित्ते यादृशो भाव आधीयते सर्वस्यास्य सूचका मन्त्रा अधोनिर्दिश्यन्ते ।

मूर्द्धानं दिवऽअरतिं पृथिव्या वैश्वानर मृतऽआजातमग्निम् ।
कविं सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ।
ॐ अयमूर्ज्जावतो वृक्ष उर्ज्जीव फलिनी भव ।
पर्णं वनस्पते नुत्वा नुत्वा सूयतां रयिः ।
ॐ येनादितेः सीमानं नयति प्रजापति र्महते सौभगाय ।
तेनाहमस्यै सीमानं नयामि प्रजामस्यै जरदष्टिं कृणोमि ।
ॐ यास्तेराके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि ।
ताभिर्नो अद्य सुमनाउपागहि सहस्रपोषं सुभगे रराणा ।

गर्भाधानात्मकेनाद्येन संस्कारेण तु सहजपण्ठरूपायां स्त्रीपुरुषसंयोगात्मिकायां सृष्ट्युत्पादिकायां क्रियायाम् आध्यात्माधिदैवाधिभौतशुद्धिसंपादनतो रजोवीर्योपादानकस्य गर्भस्य शुद्धिः सम्पाद्यते। द्वितीयेन च पुंसवनेन योग्यस्थूलशरीरसम्पत्तिरासाद्यते। अनेन च तृतीयेन संस्कारेण पतिः स्वसंकल्पबलेन वैदिकविधिना मन्त्रबलेन च देवपितृप्रसादमुपलभ्य स्त्रियाः चित्तप्रसादेन तत्संकल्पशुद्ध्या च गर्भस्य पूर्णतासम्पादनेन तत्स्थ-जीवस्य च स्थूलावरणरूपस्य शरीरस्य च शुद्धिविधानेन तत्कल्याणाय सर्वथोद्योगस्तत्पित्रा समनुष्ठीयत इत्येवास्य संस्कारस्य सूक्ष्मं गूढञ्च विज्ञानमूहनीयमिति ॥ २४ ॥

सम्प्रति चतुर्थं संस्कारं संसूचयति—

जातकर्म्म ॥ २५ ॥

इतः पूर्वं स्थूलशरीरसम्बन्धिनां त्रयाणां संस्काराणां वर्णनमभिधाय सम्प्रति सूक्ष्मशरीरान्तःकरणाद्युन्नतिसाधकानां संस्काराणां मध्यतः प्रथमं जातकर्मसंस्कारमुपपादयति । ततश्चान्यान्यं संस्कारमुपपादयिष्यति यथावसरं सूत्रकृत् ।

गर्भे यावज्जीवस्तिष्ठति तावत् पूर्वजन्म-स्मृतिस्तस्मिन् विद्यते। येन तत्र तस्यान्तःकरणीयसंस्काराणामवसरो नोपतिष्ठते। तत्र तु केवलस्य स्थूलशरीरस्य संसिद्ध्यै दैवं साहाय्यमासाद्यते। गर्भविनिर्गमनवेलायां सङ्कुचितगर्भद्वारनिष्पेषणेन मातृकायतः पृथग्भूत्वो भूमौ पातेन च विगतपूर्वस्मृतिरेव जायते। येनेत

आरभ्य तस्यान्तःकरणस्य संस्कारोऽपेक्ष्यते। अत्र मृत्युलोके भूमिष्ठस्य तस्यान्तःकरणे मानसिकबलवृद्धिः स्यादिति तदानीं जातकर्मसंस्कारोऽनुष्ठीयते। तत्र मन्त्राः—

मेधान्ते मित्रावरुणौ मेधामग्निर्दधातु ते।
मेधान्ते अश्विनौ देवावाधत्तां पुष्करस्रजौ॥
ॐ सदस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम्।
सनिं मेधामयासिषं स्वाहा।

इह मृत्युलोके मातृगर्भतो भूमिष्ठे जायमान एव शिशौ संस्कारोऽयमनुष्ठीयते, येन तस्य जातकर्मेति संज्ञा भवति। भूमाविहागमनात्पूर्वं जीवः स्थूलशरीरेण सह पूर्णसम्बन्धभाग् न भवति। तत्र पूर्वस्मृतिबलेन जीवो गर्भावासं स्थूलकायसम्बन्धञ्च स्वात्मनः कृते कारागारनिवासकल्पमामनुते। ततोऽपसरणवेलायामेव सर्वामपि पूर्वस्मृतिमेकपद एव विस्मृत्य तेनैव स्वस्थूलशरीरेण सम्बन्धभाग्भूत्वा अपूर्वलोके समागतमात्मानमुपलभ्यापवाहितानर्घरत्न इव रोदिति। अतस्तदानीमन्तःकरणबलमेव तस्य धर्ममार्गनिदर्शकमध्यात्मदृष्टिप्रसारक्षमञ्च स्यादिति तद्दार्ढ्याय तस्य संस्कारस्य सुतरामपेक्षास्ति॥ २५॥

साम्प्रतं पञ्चमं संस्कारमाह—

नामकरणम्॥ २६॥

जीवान्तःकरणे बलसञ्चारो यथा स्यादित्यत एवाऽयं संस्कारोऽनुष्ठीयते। नामरूपात्मकत्वादस्य जगतो नाम्ना सह जातजीवस्य बलीयान् सम्बन्ध इति साधु परामृश्य पूर्वापर्यालोच्य वर्णविभागक्रमेण नामकरणं तेन च तस्य जीवस्यान्तःकरणे विशेषबलेन सहाध्यात्माधिदैवबलप्रयोग इत्यस्य संस्कारस्य मुख्यं प्रयोजनम्।

मानवजातावाध्यात्माधिदैवबलसञ्चाराय तथान्तःकरणसंस्कार-शुद्ध्यै च नाम बहूपकारि भवतीति संन्यासाश्रमेऽपि नामान्तरं क्रियते। ब्रह्माण्डस्य समष्टिसत्ताया व्यष्टिसत्तायाः पार्थक्यसम्पादनाय नामैवैकं साधनमिति तदुपयोग इह जगति परमावश्यकः। अपरं च सर्वथा नामार्थप्रभावानुसारी जीवोऽस्मिन् लोके बहुधा विचेष्टते। यादृशगुणशक्तिसम्भूतन्नाम निर्धारितं स्यात् तादृशमेव संस्कारं तादृशमेवाध्यात्माधिदैवात्मिकमान्तःकरणिकं प्रभावं सुदृढं तस्मिञ्जीवे तदासञ्जयेदिति सर्वसम्मतः सिद्धान्तः। अतो नामकरणात्म-

कोऽयं संस्कारो हितकरः परमावश्यकश्च सम्मत आर्यजातिषु वेदमार्गानुगासु। स च संस्कारो देवर्षिपितृसाहाय्यबलमालम्ब्य ज्योतिष-धर्मशास्त्रानुसारतो देशकालपात्रविचारमाश्रित्य ज्ञानशिशोरैहलौकिक-पारलौकिकाभ्युदयमनुसन्धाय शुद्धार्थभाव-समृद्धिमन्नामनिर्धारणेन सम्पादनीय इति संक्षेपः ॥ २६ ॥

सम्प्रति षष्ठं संस्कारं समादिशति—

अन्नप्राशनम् ॥ २७ ॥

स्थूलसूक्ष्मयोरुभयोरपि शरीरयोः पोषकमन्नमेव। अन्नेनान्नमयकोशस्य पुष्टी रक्षणञ्च जायते। अन्नेन प्राणा पुष्यन्ते। अन्नं हि मनसः प्रकृतेर्निदानम्। इदं हि दार्शनिकविज्ञानसिद्धम् यदन्नमयकोशप्रधानमेव प्राणिनां प्राणधारणम् इत्यत एव मातृदुग्धपानानन्तरम् अन्नप्राशन-वेलायामयं संस्कारोऽनुष्ठीयते। संस्कारोऽयं दैवसाहाय्येन शिशोरन्तःकरणं भविष्यत्काले सुदृढं योग्यञ्च विदध्यादिति वेदविधिना विधीयते। अपरञ्च वेदमन्त्राभिमन्त्रितान्नसम्बन्धेन शिशोरन्तःकरणे शुद्धसंस्कारमङ्कयित्वा दैवेन बलेन तत्राध्यात्मिकबलसञ्चारणायास्य संस्कारस्यानुष्ठानं परमावश्यकमिति निष्क्रमणादयः संस्कारा अपि एतदन्तर्गता एव ज्ञेयाः।

श्रुतिरप्यन्नप्राशन-संस्कारमहिमानं स्तौति—

"अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत् पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः। अन्नमयं हि सौम्य मनः। आपोमयः प्राणस्तेजोमयी वागिति।" "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः"। इति ॥ २७ ॥

साम्प्रतं सप्तमं संस्कारमाख्याति--

चौलम् ॥ २८ ॥

चूडायां निमित्तोभवम् चौलम् डलयोरभेदात्, डकारस्य स्थाने लकारोच्चारणं ज्ञेयम्। आर्य्यजातेः स्वस्वरूपस्थितौ संस्कारोऽयं प्राधान्यं विन्दते। आर्य्यजातेः स्वजातीय-जीवनपर्य्यालोचनया यावन्ति तल्लक्षणानि सन्ति तत्र सर्वत्रैवाध्यात्ममर्यादायाः परिपालनं प्रधानप्रयोजनमवलोक्यते तस्यैवाध्यात्मप्रयोजनस्य बीजवापाय दैवसाहाय्यबलेन संस्कारोऽयमनुष्ठीयते।

गर्भस्थकचकर्तनानन्तरशिखास्थापनमेवास्य प्रधानं प्रयोजनम्। तच्च सहस्रदल-पद्मस्थित-ब्रह्मसिलक्षयिषया क्रियते। संस्कारस्यास्यानुष्ठानानन्तरं

बालस्य चेतसि सर्वदोर्ध्वस्थितमाध्यात्मिकमेव लक्ष्यं स्यादिति भावपरिपुष्ट्यै विधानमस्य संस्काररूपेणानुष्ठीयते। शिखाकरणस्येदमेवाध्यात्मिकं रहस्यमवसेयम्।

योगशास्त्रानुसारं मूलाधारे आधारपद्मे ब्रह्मप्रकृत्याः कुलकुण्डलिन्याः स्थानं सप्तमे चक्रे सहस्रदलपद्मे ब्रह्मणःस्थितिः। एवञ्च संस्कारशुद्धया यावदेव मानवान्तःकरणं बलीयो भवत्तदभिमुखं प्रसर्पति तावदेवाध्यात्मपथस्तस्य परिष्कृतो भवति।

शिखायाः स्थापनेन तन्मार्जनेन नित्यनैमित्तिककाम्यात्मके सर्वस्मिन्नेव कर्मणि च तस्या उपयोगेनास्य संस्कारस्य सुदृढं प्रयोजनमुपलक्ष्यते। अतश्चार्य्यभावसुरक्षायै तत्परिपोषाय चास्य संस्कारस्यानुष्ठानं परमावश्यकमिति न कस्यचनापि विमतिरस्योपयोगित्वे।

स्मृतिरपि—

चूडाकर्म द्विजातीनां यथागोत्रं विधीयते
तृतीये गर्भतो वर्षे जन्मतो वा शुभेऽहनि
केचिद्वामशिखाः प्रोक्ताः केचित् पञ्चशिखस्तथा
ऊर्ध्वचूडा मताः केचिद्यथागोत्रं यथाकुलम् ॥ २८ ॥

अधुनाष्टमं संस्कारमभिधत्ते—

उपनयनम् ॥२७॥

उप समीपे ( गुरोः, वेदस्याथवा स्वान्तर्निलीन महाशक्तेः ) नीयते (द्विजो) येन तदुपनयनम्, उपनयन संस्कारः। प्रवृत्तिमार्गस्यान्तिमो निवृत्तिमार्गाश्रिताध्यात्मोन्नतेश्च द्वारस्वरूपोऽयं संस्कारः। इतः परं येऽष्टौ संस्कारास्ते सर्वेऽपि निवृत्तिमार्गसंस्कारा अग्रिमसूत्रैरभिधास्यन्ते।

अयमुपनयन-संस्कारः चतुर्ष्वपि वर्णेषु केवलं द्विजातिष्वेव भवति। कामपरायणेषु शूद्रेषु नास्य संस्कारस्योपयोगः सम्भाव्यत इति न तेषां कृतेऽयं संस्कार उपदिश्यते। यतो हि कामेन सार्धमिन्द्रियाणां साक्षात्सम्बन्ध इतीन्द्रियविलासपरेषु शूद्रेषु संयमाभावो निश्चितः।

यद्यपि कामसाहाय्याचरणात् अर्थोऽप्यधोगामी तथापि धर्मसाहाय्यानुष्ठानेनोर्ध्वगाम्यपि स भवतीति माध्यस्थ्यं तस्य। अतो धर्ममोक्षसहायकस्यार्थस्याधिकारमाश्रितेषु वैश्येषु धर्माधिकारवत्सु क्षत्रियेषु मोक्षाधिकारभाक्षु विप्रेषु चास्य संस्कारस्य विधानं सङ्गच्छते।

अस्य संस्कारस्य स्वस्मिन् विद्यमानतयैवेमे द्विजशब्दवाच्या भवन्ति। यतो हि संस्कारेणानेनाधिभौतिकमधोगतं लक्ष्यं निरुध्यते। ऊर्ध्वगामिन अध्यात्मलक्ष्यस्य द्वारं विवृतं भवति। अस्मात्संस्कारात् तेषां द्वितीयं जन्म जायते। अत एव ते द्विजन्मान इति निगद्यन्ते। संस्कारेणानेन शुद्धो द्विजो गायत्रीमन्त्रस्य ब्रह्मसाक्षात्कारकारणस्याधिकारी भूत्वा वेदाध्ययनक्षमं पात्रत्वमासादयति।

यथा चौलकर्मणि तेन वैदिकसंस्कारेण संस्कृतः पुमान् शिखामधिकरोति तथैवास्मिन् संस्कारे वेदविधिसंस्कृतः शुद्धो बटुः परमपवित्रं ब्रह्मोपासनानिदर्शनस्वरूपं यज्ञोपवीतमासाद्य नन्दति। चौलसंस्कारे देवसाहाय्येनाध्यात्मलक्ष्योपयोगमाश्रयति एतस्मिंस्तु तस्याध्यात्मलक्ष्यस्य स्थैर्य्यसम्पादनाय ब्रह्मोपासनायां याथार्थ्येनाधिकारमासादयतीति विवेकः ॥ २९ ॥

अधुना नवमं संस्कारं निर्वक्ति—

ब्रह्मव्रतम् ॥ ३० ॥

मनोबुद्धिचित्ताहङ्कारात्मकेऽन्तःकरणचतुष्टये मनश्चित्ते जडत्वप्रधाने बुद्ध्यहङ्कारौ च चेतनत्वप्रधानौ, तत्रान्तःकरणमेव जीवानां बन्धनमुक्तिनिदानम्। तत्र जडत्वप्रधानमन्तःकरणं बन्धनकारणं चेतनत्वप्रधानन्तु मुक्तिनिदानमिति विवेचनीयम्। संक्षेपादितः पूर्वं येऽष्टौ संस्कारा गर्भाधानादयोऽभिहितास्तत्र जडांशस्यैवाभ्यर्हितत्वमासीदितोऽग्रे येऽष्टौ ब्रह्मव्रतादयो वक्ष्यन्ते तत्र चेतनांशस्यैव प्राधान्यमूहनीयम्।

अन्यथापीदमवगन्तुं शक्यते यद् व्यतीतेष्वष्टसु संस्कारेषु दैवसाहाय्येन मानवस्य मनोबलं सञ्चीयते। आगामिष्वष्टसु तु तस्य बुद्धिबलं समुपार्ज्यत इत्यनयोर्द्विधा विभिन्ना पद्धतिरष्टकयोः परस्परविभिन्नयोर्द्वयोः।

ब्रह्मव्रतसंस्कारोऽयं प्रथमाश्रमस्य ब्रह्मचर्य्यस्य मूलाधारो निगद्यते। आचार्य्यसान्निध्यमुपेत्य दीक्षितोऽधिगतद्विजत्वलक्षणो बालो गृहीतप्रतिज्ञो भूत्वा श्रद्धयामुं संस्कारं स्वीकरोति। गुरुसेवा-शुक्रसंरक्षण-तपोव्रत-मातृपूजनात्मकेन व्यूहचतुष्टयेन संस्कारोऽयं सुदृढं संदब्धः।

इह जगति लौकिकं वा पारलौकिकं वा किमपि ज्ञानं स्याद् गुरुशुश्रूषणं विना न तस्य सिद्धिर्भवतीति निश्चप्रचम्।

ययोराकर्षणविकर्षणयोः शक्त्योरभिधानं पूर्वपादे कृतम्। ते हि शक्ती जीवात्मनोऽन्तःकरणे सदा कार्य्यसम्पादिके भवतः। तत्र विकर्षणशक्तेरि-

न्द्रियगणः केन्द्रम् । आकर्षणशक्तेश्च श्रीगुरुदेवः केन्द्रस्थानन्निगद्यते । यतो हि उद्दामा इन्द्रियप्रवृत्तयो जीवान् सततमधः पातयन्ति । ज्ञानाश्रयो जगद्गुरुरीश्वरोऽन्तःकरणे विधुत्य तानूर्ध्वं नेतुं साहाय्यमाचरतीति प्रतिक्षणमन्तःकरणे संग्रामः प्रचलति । इत्यत एव लघुशक्तिसम्पन्नं शिष्यं गुरुशक्तिविशिष्टस्य ज्ञानदातुरीश्वरस्य जगद्गुरोः प्रतिनिधिस्वरूपः श्रीगुरुदेव ऊर्ध्वमुन्नेतुं यतते । यतो हि श्रीगुरुप्रसादमन्तरा जीवानां ज्ञानोन्नतिरसम्भाविनी ।

स्मर्यते च—

यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः । इति ।

लौकिकज्ञानोपलब्धयेऽपि गुरुप्रसादोऽपेक्ष्यतेऽलौकिकस्यातीन्द्रियस्य ज्ञानस्य प्राप्तिस्तु विना गुरुकृपामशक्यैव । सा तु सर्वथा श्रीगुरुदेवाश्रयैव तिष्ठति । इत्थंभूतस्य श्रीगुरुदेवस्य शुश्रूषायोग्यतोपलब्धिरस्य ब्रह्मव्रतस्य प्रथमं व्यूहम् । मनो वायुः वीर्य्यमिति त्रयोऽप्येकमेव तत्त्वम् । इत्यतस्त्रयाणामेकस्यापि स्ववशीकारेण त्रयोऽपि स्वायत्ता भवन्तीति योगदर्शनसमर्थितमिदं विज्ञानम् । तत्रापि तेषु वीर्य्यसंयमनस्य इतरापेक्षया सारल्यादाधिभौतिकसम्बन्धसम्वलितत्वात्सर्वश्रेष्ठो महिमा । मनस आधिपत्याधिगतिमन्तरा बुद्धेर्विकाशोऽसम्भवः बुद्धिदार्ढ्यं विना इन्द्रियातीतस्य परमपुरुषस्योपलब्धिर्जीवस्य कृतेऽसम्भाविन्येवेति कारणतः ऊर्ध्वरेतस्त्वसिद्ध्या मनस आधिपत्यं सम्पाद्य बुद्धितत्त्वविकाशद्वारा ब्रह्मप्राप्तिनिदानं भवतीति संस्कारोऽयं ब्रह्मव्रतमिति शब्देनोच्यते इति हि द्वितीयव्यूहविज्ञानम् ।

केवलं गुरुशुश्रूषामूलकेनाचारेणैव ब्रह्मचर्य्याश्रमस्य धर्मः परिपूर्णो भवति। ब्रह्मचर्य्याश्रमाचाराणां परिशीलनेनास्य संस्कारस्य तपोमूलकत्वं स्फुटं प्रतीयते इति तृतीयं व्यूहविज्ञानम् । ब्रह्मचर्य्याश्रमस्य यथावत् परिपालनन्तु तदैव सम्भवति यदा ब्रह्मचारी जगतीतलस्थासु सर्वास्वपि नारीषु मातृभावनया व्यवहरेत् । प्रथमतः पृथिवीतलस्थासु सर्वास्वपि स्त्रीषु मातृभावकल्पनामन्तरा ब्रह्मचर्य्यपरिपालनमेव पूर्णतो न सम्भवति, द्वितीयतश्च भिक्षादियाचनामाचारो मातृपूजनविधानार्थमेवास्मिन्नाश्रमे विहितो विद्यते । एतदेव चतुर्व्यूहरहस्यम् । एवञ्च चतुर्व्यूहात्मकधर्मानुष्ठानेन ब्रह्मव्रताधिकारी आश्रमधर्मभित्तिं द्रढयति ॥ ३० ॥

इदानीं दशमं संस्कारं निर्वक्ति—

वेदव्रतम् ॥ ३१ ॥

सर्वाश्रमाधारस्वरूपेऽस्मिन्प्रथमे ब्रह्मचर्याश्रमे प्रवेश-वेलायामेवास्य संस्कारस्य प्रारब्धिः । ब्रह्मचारी हि सावित्री-समाराधनतत्पर आचार्य्यसेवापरायणो ज्ञानप्राप्तयेऽमुं संस्कारं स्वीकरोति । अनेन संस्कारेण संस्कृतो हि ब्रह्मचारी वेदानां वेदानुकूलानाञ्च शास्त्राणां चाध्ययनेन कृतकृत्यो भूत्वा नन्दति।

एतत्संस्कारसाहाय्येनैव ब्रह्मचारी गुरुकृपामधिगत्य कुशाग्रशेमुषीसम्पन्नो भूत्वा सुमेधया समेधितः पवित्रस्य ज्ञानस्योपार्जने प्रवृत्तो भवति । कुतर्करूपं मूषकं वाहनीकृत्य यथा गणपतिर्देवो बुद्धिसम्राट् भूत्वा बुद्ध्यधिष्ठाता सन् सर्वदेवाभ्यर्हितः सर्वप्रथमपूज्यतामाश्रयति । तथैव वेदव्रतसंस्कारसंस्कृतो द्विजातिः कुतर्कबहुलजल्पवितण्डाप्रयोगविरहितः वेदशास्त्रानुकूलज्ञानपद्धत्या प्रचलन् अन्ते ऋतम्भरायाः प्रज्ञाया अपि अधिकारी भवतीति सुस्पष्टं विज्ञानमेतस्य ॥ ३१ ॥

अधुनैकादशं संस्कारं स्मरति—

समावर्तनम् ॥ ३२ ॥

सम्यक् ( वेदान् वेदौ वेदं वा ) अधीत्य गृहे आवर्तनम् पुनरुपस्थितिः समावर्तनम् इति सूत्रार्थः । ब्राह्मणसन्ततीनां कृते संस्कारोऽयं महतः सन्धेराश्रयः । यतो हि पञ्चविंशतिवार्षिको ब्राह्मणबटुरधीत-चतुर्दशविद्योऽतः परं दारग्रहणं कुर्वन् गृहस्थाश्रमं प्रविश्य सृष्टिक्रमं चालयितुमर्हति । आहोस्वित् एवनिर्विद्य संसारासारतां विभावयन् संन्यासाश्रमं प्रवेष्टुं क्षमते । इत्यञ्च उभयसन्धिसम्बन्धतः संस्कारेऽस्मिन्नयं विशेषोऽन्येभ्यः संस्कारेभ्यः ।

अत्र यदि द्विजो ब्रह्मचारी गृहस्थाश्रमं प्रविविक्षुः स्यात्तर्हि तस्य संस्कारपद्धतिरन्यथा भविष्यति । यदि स संन्यासाश्रमम् जिगमिषुः स्यात्तर्हि तस्यान्यथैव स्यात् संस्कारव्यवस्थितिः ।

तथा हि प्रथमे पितुरभ्यर्हितत्वम् द्वितीयस्मिंस्तु श्रीगुरुदेवस्य प्राधान्यमिति विभेदः । गृहस्थाश्रमे कर्मणां समारम्भेण प्रवृत्तिमार्गसंशोधनम् । चरमे च वैराग्यज्ञानप्रधानतया निवृत्तिमार्गस्यापि चरमा कोटिराश्रीयत इति महदान्तर्य्यम् ॥ ३२ ॥

द्वादशं संस्कारं लक्षयति—

उद्वाहः ॥ २३ ॥

उदुह्यते ( वरेण पत्नी ) यस्मिन् संस्कारे स उद्वाहो विवाह इत्यर्थः ।

अस्योद्वाहसंस्कारस्य प्रभावेणैव आर्य्यै द्वितीयाश्रमे सर्वाभ्यर्हिते प्रवेशाधिकारोऽधिगम्यते । ते हि देवसाहाय्यमुपलभ्य शास्त्रोक्तविधिना अन्योन्याव्यभिचाररूपप्रतिज्ञाबद्धा भूत्वा सहधर्मिणीसमेता गृहस्थाश्रमेऽत्र प्रविशन्ति ।

यद्यपि बाह्यदृष्ट्याऽर्य्याणां दारसमादानरूपः संस्कारोऽयं प्रवृत्तिमार्गसमेधकः प्रतिभाति; तथापि वर्णाश्रमधर्ममर्य्यादाविज्ञानपरिशीलनेन आर्य्याणां स्त्रीपरिणयात्मकोऽयं संस्कारो निवृत्तिसमर्थक एव प्रतीयते । यतो हि वर्णाश्रमधर्मविज्ञानतः पुमान् नारीदुर्गाश्रयेणात्मानं गोपाययन् दुर्दम्यानामिन्द्रियाणामाधिपत्यमाचरन् शास्त्रीयस्वीयप्रवृत्तिबलेन निवृत्तिमार्गमेव पुष्णाति । आर्य्याणां प्रवृत्तिपद्धतिर्यथा यथा पर्य्यालोच्येत तथा तथा सोत्तरोत्तरं निवृत्तिपोषिकैवोपलभ्येत ।

ननु सृष्टिक्रियायाः प्रवृत्तिमूलकत्वात् कथं सृष्टिवर्द्धकस्यापि विवाहसंस्कारस्य निवृत्तिमूलकत्वमिति चेदुच्यते—वर्णाश्रममर्य्यादामाश्रितानामार्य्याणां सृष्टिक्रिया न कामार्थमूलिका । किन्तु धर्ममोक्षमूलकतया तस्या निवृत्तिपोषकत्वे न काप्यनुपपत्तिः । आर्या हि योग्यसन्तत्युत्पादनेन तद्रक्षया च पितृदेवर्षीणामृणानि ऐहलौकिकं भूतर्णं मानवर्णञ्चापाकृत्य स्वनिवृत्तिमार्गं परिष्कुर्वन्ति ।

दैवसूक्ष्मजगतां देवर्षिपितर इति त्रयः सञ्चालकाः सन्ति । तेषां नियमतः सम्वर्द्धनायेह मृत्युलोके योग्यसन्ततिसमुत्पादनस्य तद्रक्षणस्य चावश्यकताऽपेक्षिता । अपरञ्च भूतानां मनुष्यमात्राणाञ्च कर्तव्येन प्राप्तानामुपकाराणां प्रत्युपकारस्याप्यावश्यकतेत्येवं पञ्चानामप्येषामृणानामुद्धाराय धार्मिक्या योग्यायाः सन्ततेः समुत्पादनं तद्रक्षणञ्च न कदापि प्रवृत्तिमूलकं सम्भवति भावप्राधान्यान्निवृत्तिप्रवृत्तिमार्गयोः ।

ननु प्रजातन्तुविच्छेदस्य पापाधायकत्वात् सर्वेषां गृहस्थाश्रमे प्रवेशस्यावश्यकत्वात् ब्रह्मचारिणो गार्हस्थ्यं विहाय संन्यासाश्रम-प्रवेशः कथन्न विगर्हित इति शङ्काया उत्तरमाह यावदेषु पञ्चस्वपि ऋणेषु ब्रह्मचारिणः कर्तव्यबुद्ध्याऽऽसक्ति विद्यते तावत्त ब्रह्मचर्य्यतः समावृत्य गार्हस्थ्यप्रवेश एव साधीयान् । एवं सति दारग्रहणात्मकस्योद्वाहसंस्कारस्यानुष्ठानं दोषावहमेव । यदि च

पूर्वजन्मसमुपार्जितसुकृतानां बलेन योग्याधिकारी ब्रह्मचारी विषयवैराग्यमात्मज्ञानञ्च समधिगम्यानादिवासनाक्षयेन प्रसन्नचेता ब्रह्मविचारक्षमः सम्पन्नस्तस्य तु नास्त्येवेहाश्रमे प्रवेशप्रयोजनम्, स तु तस्मादेव ब्रह्मचर्य्यात्सन्यासाश्रमाश्रयणाधिकारीति सर्वतन्त्रसिद्धान्तः । श्रुतिरपि—

"ब्रह्मचारी भूत्वा गृही भवेत् गृही भूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेत् यदि वेतरथा ब्रह्मचर्य्यादेव प्रव्रजेद् गृहाद्वा वनाद्वा।" इति अपरञ्च "यदहरेव विरज्येत्तदहरेव प्रव्रजेद्" इति ।

स्मृतिश्चात्र—

प्रव्रजेद्ब्रह्मचर्य्याद्वा प्रव्रजेद्वा गृहादपि ।
वनाद्वा प्रव्रजेद्धीमानातुरो वाऽथ दुःखितः ॥ ३३ ॥

साम्प्रतं त्रयोदशं ब्रूते—

अग्न्याधानम् ॥ ३४ ॥

कर्म्मकाण्डसाहाय्येन दैवेन जगता विशेषसम्बन्धबन्ध एवास्य संस्कारस्य मुख्यं प्रयोजनम् । वैदिक-कर्म्मकाण्डानुष्ठानेन मलावरणान्यपाकृत्य मानवो मुक्तिभूमावुत्तिष्ठत इत्यभिहितं प्राग् । कर्मकाण्डस्य प्राधान्यतः सर्वोत्तमा चैषैव सिद्धिः । मृत्युलोके च स्थूलशरीरस्यैव प्राधान्यादस्याः सिद्धेर्विशेषो विद्यते समुपयोग इत्यप्यवधारणीयम् । अनेन संस्कारेण प्रत्यहं दैवसाहाय्यबलाश्रयेण मानवः सिद्धिमिमामुपालब्धुमग्रेसरो भवति । गृहस्थाश्रमगो हि पुमान् विविधप्रवृत्तिसमासक्तोऽपि संस्कारादस्मात्स्वीयमलापसारमासादयन्निवृत्तिरूपमूर्ध्वमार्गं निष्कण्टकं करोति ॥३४॥

इदानीं चतुर्दशं संस्कारं वर्णयति—

दीक्षा ॥ ३५ ॥

उपासना-काण्डसाहाय्येन दैवस्य जगत आनुकूल्यं विशेषतः सम्पादयतो मुक्तिमार्गपरिष्कार एवास्य संस्कारस्य प्रधानं विधेयम् ।

इदञ्च पूर्वमभिहितं यदुपासनाकाण्डस्य प्रधानाङ्गयोगानुष्ठानेन भक्तिसाधनेन च साधकः सूक्ष्मशरीरसम्बन्धिनो विक्षेपान् विनाश्य मुक्तिभूमावग्रेसरो भवति । मलविक्षेपापसरणावसर एव ध्रुवमात्मावरणमपि ज्ञानप्रकाशेन स्वत एवापगच्छति, दूरमपसरतीति यावद् । मुक्तिभूमिसमुपस्थितो सुतरां विक्षेपनाशकोऽयं संस्कारः परमोपयोगी भवतीति स्फुटम् ।

भाग् भवति। वेदाध्यापको हि आचार्य्यशब्देनोच्यते, दीक्षादातु गुरुरित्यपदेशः। वेदव्रतसंस्कारे आचार्य्येण सम्बन्धोऽत्र तु श्रीगुरुदेवेनैव सम्बन्धः।

दीक्षासंस्कारानन्तरमेव साधक उपासनाधिकारमुपलभ्य देवसंघसाहाय्यमाश्रित्यान्तःकरण-विक्षेपं विनाशयन्मुक्तिमार्गमनुसरति। अस्मिन्संस्कारे विना सिद्ध्युपलब्धिं साधको निवृत्तिपोषकस्य वानप्रस्थाश्रमस्याधिकारितां नैवोपादत्ते। यतोऽयं हि गार्हस्थ्यस्यान्तिमः संस्कारोऽभिधीयते। अन्ये तु यावन्तो गृहस्थाश्रमीयाः संस्काराः सन्ति। ते सर्वेऽपि द्वयोरग्न्याधान-दीक्षयोः संस्कारयोर्मध्यवर्तिनःसन्तोऽन्तरङ्गत्वेनैव निगद्यन्ते ॥ ३५ ॥

सम्प्रति पञ्चदशं संस्कारं वर्णयति—

महाव्रतम् ॥ ३६ ॥

अस्मादेव संस्काराद् वानप्रस्थाश्रमारम्भो भवति। यद्यपि चत्वारोऽप्याश्रमा निवृत्तिमार्गप्रापकास्तथापि प्रथमयोर्द्वयोः प्रवृत्ति-संयमनेन निवृत्तिमार्गारोहणं प्रधानं कर्तव्यम्। ताभ्यां हि प्रवृत्तिं प्रसृतां बहुमुखीनां सन्नियम्य पुरुषः स्वनिवृत्तिमार्गं सरलं विदधाति। अत्र च वानप्रस्थाश्रमेऽनेन संस्कारेण सुसंस्कृतस्तां निवृत्तिं सुदृढां विधाय कृतकार्य्यो नन्दति। वानप्रस्थाश्रमस्य सर्वेऽपि विधयो दीक्षासाधनादयोऽमुमेव महाव्रतं संस्कारोमाश्रित्य प्रतितिष्ठन्ति ॥ ३६ ॥

इदानीमन्तिमं षोडशं संस्कारमभिधत्ते—

संन्यासः ॥ ३७ ॥

यो हि संस्कारः संन्यासाश्रमाधिगमाय भवति स हि संन्यासशब्देनोच्यते। अस्य बहुषु भेदेषु चत्वार एवोत्तरोत्तरमभ्यर्हिताः प्रधानत्वेन परिगणिताः। ते च यथा—कुटीचक-बहूदक-हंस-परमहंसाख्याः प्रथमे पादे विस्तरेण विवेचिताः।

बुद्धितत्त्वसमेधनाय यो हि संस्कारः साधनानि च प्रथमे ब्रह्मचर्य्याश्रमे प्रारभ्यन्ते, तेषां हि सर्वेषां साधनानां क्रमशः संस्कारशुद्धि-साहाय्येनेहाश्रमे सम्पूर्णता सम्पद्यते। अपरञ्च निवृत्तिपूर्णविकासश्चास्मिन्नेवाश्रमे संजायत इत्यपि ज्ञेयम्। यथा हि सर्वे संस्कार-यज्ञा द्रव्यशुद्धि-क्रियाशुद्धि-मन्त्रशुद्धि-प्रतिज्ञाचारमहाकृपा-दैवानुकम्पारूपेषु सप्तस्वङ्गेषु विभक्ताः तथैवायमपि चरमः संस्कारोऽवगमनीयः।

प्रत्येक–यज्ञानुष्ठानावसरे पूर्वोक्तशुद्धित्रयस्य त्वैकान्तिकी समुपस्थितिरपेक्ष्यते। सप्तसु संस्कारेषु च संकल्पमन्त्रो हि प्रतिज्ञास्वरूप उपनयनत आरभ्य संन्यासं यावदाचार्य्यस्य गुरोर्वा सान्निध्ये प्रतिज्ञापुरःसरं यद्व्रतग्रहणं क्रियते तस्य महत्वमनिर्वचनीयं प्रख्याप्यते पूर्वाचार्य्यैः। तत्र हि ज्ञानवृद्ध्या सार्धमाचारा अपि परिपुष्टा दृढाश्च क्रियन्ते। विशेषेण च चतुर्णामाश्रमाणामाचाराः परस्परं पार्थक्येन प्रतिपादिताः श्रुतिस्मृतिषूपलभ्यन्ते। तत्र सर्वत्रैव महाकृपासम्बन्धोऽनुस्यूतः समुपलभ्यते।

प्रथमेषु संस्कारेषु पुरोधसः, द्वितीयश्रेणिस्थेषु आचार्य्यस्यान्तिमेषु च तेषु गुरोरनुकम्पा परमावश्यकी। दैवानुकूल्यन्तु सर्वत्रैव मूलमिति सुदृढम्। अस्यैवान्तिमस्य संन्यास-संस्कारस्य सिद्धौ ब्राह्मणोऽवश्यं कैवल्यमाश्रयतीति सर्वविदितो मार्गः॥ ३७॥

इह प्रसङ्गसङ्गतां शङ्कामपनयन्नाह—

एष्वन्तर्भाव इतरेषाम्॥ ३८॥

इतरेषाम् अन्येषां संस्काराणाम् एषु एव षोडशसु संस्कारेषु अन्तर्भावः अन्तर्गतत्वमिति सूत्रार्थः। ननु कथं षोडशानामेव संस्काराणामत्र कीर्तनं यतो हि अष्टाचत्वारिंशतः संस्काराणामुपादानं श्रुतिस्मृतिषूपलभ्यते? इति पूर्वपक्षस्य उत्तराभिधानबुद्ध्या सूत्रकृत्सूचयति–यावन्तः श्रुतिस्मृति–प्रतिपादिताः संस्काराः समुपलभ्यन्ते ते सर्वेऽपि प्रतिपादितेष्वेतेष्वेव षोडशसु संस्कारेषु प्रकारान्तरेणान्तर्भूता ऊहनीयाः। उदाहरणतो यथा निष्क्रमणसंस्कारो हि नामकरणान्तर्गत एव गण्यते। यतो हि नामकरणमेव निष्क्रमणस्यापि फलं सूते। नाम्न आह्वानेनैव निष्क्रमणं सिद्ध्यति तच्च नामकरणसंस्कारेणैव सम्पादितमिति नास्ति प्रयोजनं निष्क्रमणस्य पृथगनुष्ठानेन। सामर्थ्योत्साहाभ्यामनुष्ठितं चेदधिकमेव फलं लम्भयतीत्यन्यदेतत्।

एवमेव समावर्तनान्तर्गत एव केशान्तसंस्कारोऽपीति स्वल्पविचारेणैव प्रतिभाति। यतो हि सोऽपि गृहस्थाश्रम-प्रवेशायैव भवति, इति पञ्चमहायज्ञानाम् अष्टकापार्वणादिश्राद्धानां श्रावणीकर्मणश्चेत्यादीनामुद्वाह एवान्तर्भावः। यतो हि गृहस्थाश्रमप्रवेशकालत एवैषां प्रारब्धिर्भवतीति।

एवञ्च दर्शपौर्णमास-चातुर्मास्याग्निष्टोमसौत्रामणीयागादिसंस्कारा अपि अग्न्याधान–संस्कारान्तर्गता एव। यतो हि अग्न्याधानमेवैषां मूलमिति।

इत्थञ्च महाभिषेक-तीर्थ-सन्यासादिसंस्कारा महाव्रतसंस्कारान्तर्गताः।

कुटीचक-बहूदकादयश्च संन्यास संस्कारान्तर्भूता-इति सुविज्ञेयम्। किम्बहुना वेद-स्मृति-पुराण-तन्त्रादि-प्रतिपादिता यावन्तः संस्काराः स्युस्ते सर्वेऽपि षोडशस्वेतेष्वेवान्तर्भवन्ति इति प्रधानानामेषां षोडशानामेव संग्रहः ॥३८॥

प्रवृत्ति-निवृत्ति-सम्बन्धतस्तद्विभागमाह—

पूर्वे प्रवृत्तिरोधका निवृत्ति-पोषकाः परे ॥३९॥

एषु षोडशसु संस्कारेषु पूर्वे प्रथमेऽष्टौ संस्काराः प्रवृत्ति-रोधकाः, परे चरमे चाष्टौ निवृत्तिपोषका निवृत्तिसमर्थका इति सूत्रार्थः।

प्राथमिकानामष्टानां संस्काराणां प्रभावः प्राधान्येन मनसि समासज्यते अन्तिमानाञ्चाष्टानां बुद्धाविति प्रागेवोक्तम्। मनसः सम्बन्धः साधारणतये न्द्रियैः सह बुद्धेश्चात्मनेति मनसः कार्यमासक्तिमूलकं बुद्धिकार्य्यञ्च भाव-प्रधानम्। मनसः प्रवृत्तिपोषकत्वाद् बुद्धेश्च निवृत्तिसहायकत्वाद्धेतोः यथा मनश्चित्तसंयोगेनासक्तिरुत्पद्यत इति संस्कृतस्यैव मनसः प्रवृत्तिरोधे सामर्थ्यम्। तथैवाहङ्कारबुद्धिसंयोगतो भावोद्गमप्रसङ्गात् सद्भावस्य च निवृत्तिजनकत्वात् संस्कृता बुद्धिरेव निवृत्तिं जनयिष्यतीत्यत्र कः सन्देहावसरः।

गर्भाधानत उपनयनं यावदष्टस्वपि संस्कारेषु दैवकृपया मनसो बला-धानम्। अन्तिमेषु चाष्टसु दैवानुकम्पया बुद्धेर्बलसञ्चार इति सर्ववादिसम्मत्या प्रथमेऽष्टौ संस्काराः प्रवृत्तिरोधकाश्चरमाश्च निवृत्तिपोषका इति सिद्धम् ॥३९॥

सर्वेषामेव संस्काराणां विशेषफलम्ब्रूते—

ततो दैवाधिष्ठानम् ॥४०॥

मनुष्याणां गमागमचक्रीयक्रमोन्नतेरभावे देवानां साहाय्याभावो हेतुः। दैवसाहाय्यबलेनैव क्रमोन्नतिर्भवतीति सुनिश्चितम्। यतो हि देवा एव कर्म-फलदातारस्तत्सहायकाश्च निगद्यन्ते। तेषां कृपोपलब्धिश्च संस्कारशुद्धि-मूलकक्रिया-शुद्धि-जन्यपुण्यसञ्चयेनैव भवति। एभिः सम्पादितैः संस्कारैर्दैव-जगतां सम्बन्ध उपस्थाप्यते देवानां सहायकत्वबलञ्चोपलभ्यत इति पूर्वमेवा-भिहितम् ॥ ४० ॥

नारीकृते तत्र वैशेष्यमभिधत्ते—

नारीणामुद्वाहो विशेषः ॥४१॥

आर्य्यपुरुषेषु तु षोडशानां संस्काराणामेव प्राधान्यम्। किन्तु तत्रार्य्य-महिलासु विवाहसंस्कारस्यैवाभ्यर्हितत्वम्। तपः-प्रधानस्य पातिव्रत्यमूलकस्य

नारीधर्मस्य बीजरूप-विवाहसंस्कारस्य प्राधान्यं स्वभावसिद्धमिति तस्य संस्कारस्य पूर्णतयैव नारीजातेः देवबलोपलब्धिरिति सुनिश्चितम् । यद्यपि तेषु संस्कारेषु कियन्तो नारीणामपि अभ्युदयाधायकत्वात् कन्यावस्थायामनुष्ठीयन्त एव । तथापि नारीणां विशेषहिताधायकत्वाद्विवाहस्यैव प्राधान्यमुक्तम् ।

यदि काऽपि कन्या पूर्वार्जितसंस्कारवशाद् ब्रह्मवादिनीलक्षणोपेता भवति, तर्हि तस्याः कृते उपनयनसंस्कारस्यापि विधानं शास्त्रादिषूपलभ्यत एव । प्रधानतस्तु नारीधर्म्माणां तपोमूलकत्वान्नारीसदाचाराणाञ्च सतीत्व-समर्थकत्वाच्चाद्वाहस्यैव सर्वाभ्यर्हिततत्वमिति सर्वशास्त्ररहस्यम् ॥४१॥

प्रसङ्गसंगत्या दैवसाहाय्योपलब्धिसमयं सूचयति ।

प्रागृतु-प्रवृत्तेः सन्धिभावात् ॥४२॥

प्राकृतिकोऽयं नियमो यन्नारी-शरीरे रजोधर्म-प्रवृत्तिकाल एव तच्छरीरपूर्णतया तस्यां स्त्रीपुरुष-सम्बन्धीयाकर्षणविकर्षणशक्त्यनुभवोद्गमः सम्पद्यते । इन्द्रियभाव-विरहितस्य बाल्यस्य तद्भावयुक्तस्य च यौवनस्य सन्धिदशायां महत्यां परिवर्तनावस्थायामस्यां संस्कारशुद्धेर्नितान्तमावश्यकत्वम् । अतो रजःप्रवृत्तेः प्रागेव नार्य्युद्वाहसंस्कारसम्पादनेन तत्र दैव्याः कृपाया अवसरो मुक्तद्वारस्तिष्ठति ।

सर्वेषां वैदिक-संस्कारात्मकानां यज्ञानां मौलिकोऽयं सिद्धान्तो यत् तदनुष्ठातृभि र्दैवसाहाय्यमाश्रित्य मनोबुद्धिबलसञ्चयनं तथा करणीयं यथाऽभ्युदयनिःश्रेयसयोः पन्थाः सुगमः समासाद्येत । नारीजातीनामस्मिन् संस्कारे दैवबलप्राप्तिपूर्वक-स्वलक्ष्यसिद्धये च रजःप्रवृत्तेः प्राक्तन एव कालः श्रेयान् ।

यद्यपि देवाः सर्वथा सर्वदा साहाय्यमाचरितुं समर्था एव तथापि रजःप्रवृत्तित ऊर्ध्वं विघ्नबाधोपस्थितेरावश्यकत्वात्तदनन्तरं नार्य्युद्वाहसंस्कारसम्पत्तौ तेषां साहाय्यप्राप्तावसौकर्य्यं सुनिश्चितमेव ।

इत्यत इदं सिद्ध्यति यत् नारी-विवाहसंस्कार-शुद्धेर्दार्ढ्याय साफल्योपगमाय च रजःप्रवृत्तितः पूर्वसमय एव साधीयोऽस्य संस्कारस्य सम्पादनम् ।

शङ्का-समाधानमाह—

पुरुषाणान्तु सर्वे ॥ ४३ ॥

ननु षोडशसु संस्कारेषु नारीणां यथोद्वाहस्य प्राधान्यम् तथा पुरुषाणां कस्य संस्कारस्य प्राधान्यम् ? इति प्रश्ने उत्तरयति—यन्नहि पुरुषाणां कृते

संस्कारतारतम्यं विद्यते, तेषां कृते तु षोडशानामपि संस्काराणां समानमेव प्रयोजनमिति सूचयति—पुरुषाणां पुंसां कृते तु सर्वेऽपि संस्काराः समाना एव तेषु तारतम्य-विचारो न विद्यत इति।

पुरुषेषु षोडशानामपि संस्काराणां तुल्योपादेयत्वे मुख्यो हेतुरयमस्ति यद् अखिलेषु संस्कारेषु अभ्युदय-निःश्रेयसयो र्यथाक्रमं नियमव्यवस्थिति विंद्यते। अस्य रहस्यस्य विस्तृतं विवेचनं पूर्वप्रस्तावे समुपवर्णितमेवेति नात्र विविच्यते। विशेषेण च पुरुषधर्म्मस्य यज्ञप्राधान्यात्पुरुषापवर्गेण चाभ्युदयस्य साक्षात्सम्बन्धान्नियमेनैव तदीयसंस्काराणां यथाक्रममेकस्यानन्तरमन्यस्य सम्पादनमावश्यकमिति ॥ ४३ ॥

संस्कार शुद्धेर्वैचित्र्यं विशदयति—

**संस्कारशुद्धि-वैचित्र्यं प्रकृति-वैचित्र्यात् ॥ ४४ ॥**

पुरुषाणां संस्कारशुद्धेः स्त्रीसंस्कारशुद्धेश्च साधनयोः पार्थक्यं पर्य्यालोच्य संस्कार-शुद्धौ कश्चित्क्रमोऽस्ति न वेति शङ्काया अवसर उदेति, तत्राह—जीवप्रकृते वैचित्र्य-बाहुल्यात्संस्कारशुद्धेः साधनानामपि वैचित्र्य-सम्भूतत्वे नाणुरपि सन्देहः। त्रिगुणभेद-बुद्धिभेदाधिकारभेदादिकारणकलापात् कर्म-बीजात्मकसंस्कारस्यापि बलतारतम्यं सुतरां सम्पद्यते।

उदाहृत्या यथा—समतलभूतले समारोपितमाम्रबीजं परिणामे सुधाव-त्सुस्वादु फलति। पार्वत्यप्रदेशे उप्तं तु तदेवाम्लतामाश्रित्य विरसतया परिण-मतीति महद् वैचित्र्यम्। करमर्दक-( आम्लातक ) बीजञ्च समतलायां क्षिताव-त्याम्लतामाश्रितोऽपि पार्वत्यप्रान्तेऽतिसुस्वादु मधुरं च फलतीति जडेष्वपि प्रकृति-विशेषवैचित्र्योपलम्भाज्जीव-प्रकृति-वैचित्र्याद्विभिन्नाधिकारिभेदेन संस्कार वैचित्र्यपार्थक्यमपि स्वभावसिद्धमिति न शङ्कनीयम् ॥ ४४ ॥

पुनरुदाहृत्या विज्ञानमिदं समर्थयति--

**अतो दोषो नाततायिवधे ॥ ४५ ॥**

जीववधे पापो मनुष्यवधे पापातिशयः, परन्तु मनुष्येष्वेवाततायि-मानववधे नाणुरपि पापसम्पर्कः। प्रत्युत पुण्योद्गमो भवति हन्तुराततायिनामिति विवेकः।

के आततायिनः कथञ्च तेषां वधे पापाभाव इति स्मृत्यन्तरं यथा--

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः।<br>
क्षेत्रदारहरश्चैव षडेते ह्याततायिनः ॥<br>
आततायिनमायान्तं हन्यादेवाऽविचारयन्।<br>
नाततायिवधे दोषो हन्तुर्भवति कश्चन ॥ इति ॥

अत्र कर्मणां जडत्वात्तेषां दैवायत्तफलसमर्पकत्वं स्वभावसिद्धम् । इत्यतः कर्मणां बीजभूतात्संस्कारात् फलोत्पत्तौ देवा एव निदानम् । अपरञ्च कर्तुश्चेतसि यथा भावोद्गमो भवति तथैव संस्कारस्तस्य चेतसि निधाप्यते ।

यदि कर्तुश्चेतसि गर्हितोऽशुद्धो भावः सम्भूतश्चेत् तदा संस्कारोऽपि तादृगेवाशुद्धो गर्हितस्तस्य चेतसि सञ्चीयते । यदि च कर्तुर्मानसे भावशुद्धिः स्यात् तदा तदीयः संस्कारः पुण्यसमेधकः शुद्धो भवेदिति निर्विवादम् ।

एवञ्चाततायिनां प्रकृतिविरुद्धकार्य्यकर्तृत्वेन ईशसृष्टि-विघाताधायकत्वात्तेषां वधो देवानामानुकूल्यसम्पादक इति पुण्यजनकत्वं तस्य । अपरञ्च हन्तुर्मानसस्य भावशुद्धिपरिपूर्णत्वात्पापोद्गमस्य तु सम्भावनैव नोदेतीत्युभयथाऽप्याततायिवधः श्रेयान्पापाऽजनकत्वात् पुण्याऽधायकत्वाच्च ॥ ४५ ॥

प्रसङ्गतो राज्याभिषेक-संस्कार-प्रयोजनं निरूपयति—

तदर्थं राज्ञामभिषेकोऽपेक्ष्यः ॥ ४६ ॥

नरपतेरष्टानां लोकपानामंशप्रकाशेनैव योग्यत्वमिति स्मृतावुदीरितम्—

इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च
चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः ।
जङ्गम-स्थावराणां च भूपः स्वतपसा भवेत् ॥
यस्मादेषां सुरेन्द्राणां मात्राभ्यो निर्मितो नृपः
तस्मादभिभवत्येष सर्वभूतानि तेजसा
यो हि धर्मपरो राजा देवांशोऽन्यश्च रक्षसाम् ।
अंशभूतो धर्मलोपी प्रजापीडाकरो भवेत् ।

याथार्थ्यतोऽस्मिञ्जगति सदैव देवासुरसंग्रामः प्रचलति । येन पवित्रात्मनः सदाचारसम्पन्नस्य धार्मिकस्य राज्ञः शरीरं देवानां पीठस्थानं भवति । कदाचारवतोऽपवित्रात्मनोऽधार्मिकस्य नरपतेः कायस्तु असुराणां पीठस्थानं सम्पद्यते ।

योग्यस्य भूपतेः शरीरे कियतामेव देवानाम् पीठस्थितिर्भवतीति पूर्वोक्तपद्यै विज्ञायत एव । इत्यतो राजा यदि पूर्वोक्तदेवानामंशसम्भूतः स्यात्तर्ह्येव स सर्वकलासम्पूर्णः कथ्यते । दैव-शक्तिसम्पादनेनैव नरपतिः स्वपदार्ह-योग्यतामासादयितुमर्हतीति सुनिश्चितम् । एतद्योग्यतोपलब्धये नरपते राज्याभिषेकसंस्कार आवश्यकः ।

यथा पूर्वोक्तयज्ञेषु दैवानुकम्पोपलब्धिर्भवति, तथैवेहाऽपि राज्याभिषेके वेदमन्त्राणां वैदिक-क्रियानुष्ठानादीनां च साहाय्येनास्य संस्कारस्य साफल्यावाप्तावश्यं नरपतिरासां दैवशक्तीनां विकाशमासादयति। संस्कारयागेषु शक्तिवैचित्र्यस्यैतदपि प्रदीप्तमुदाहरणं ज्ञेयम्। एतत्तु न कदापि विस्मरणीयम्, यद्यथा षोडशसु संस्कारेषु अभ्युदयस्य तदनन्तरं निःश्रेयसस्य चाधिगतये क्रमो विद्यतेऽपरतश्च प्रवृत्तिनिरोधस्यानन्तरं निवृत्तिपोषणस्य च तत्र यथा शक्तिप्रश्रयोऽस्ति नैवैषु संस्कारेषु तस्य क्रमस्य तस्याः शक्तेर्वोपलब्धिरित्यवश्यमभ्युपगन्तव्यम्। तत्रापि राज्याभिषेककल्पाः संस्कारास्तु केवलमभ्युदयमात्रं समर्पयन्ति, नैवास्ति एषामन्यत्राणीयानपि शक्तिप्ररोहः।

नरपतिर्यदि योग्यतरः स्यात्तर्हि तु स स्वप्रजासमष्टिसमभ्युदयमपि साधु संसाधयेदित्यन्यदेतत्। यतो हि योग्ये राजनि प्रजासमष्टिसमभ्युदयोऽपि समेधते। तस्य राज्ञः समभ्युदयस्य तु कथैव का। भगवतः श्रीकृष्णस्य "नराणाञ्च नराधिप" इत्यभिधानस्याप्येतदेव प्रयोजनम् यद्—

"राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः।
राजानमनुवर्तन्ते यथा राजा तथा प्रजा" इति ॥ ४६ ॥

सम्प्रति तद्धेतुं निरूपयति—

धर्मरक्षकत्वात् ॥ ४७ ॥

संस्कारशुद्धेर्वैचित्र्यादाततायिवधात्पुण्योत्पत्तिरित्युदाहृतं प्राक्। तदनन्तरञ्च दैवशक्तिसम्पादनक्षमस्य राज्याभिषेकसंस्कारस्यापि प्रयोजनं परिलक्षितमिदानीमत्रोद्भूतायाः कथं नररूपेऽपि राज्ञि देवानामधिवासः? इति शङ्कायाः समाहितिर्ब्रूते—

धर्मरक्षाया अनन्यसाधारणात्मिकायाः शक्तेस्तत्र राज्ञि विद्यमानत्वात् तस्य राज्ञो दैवपीठाधिष्ठानत्वमावश्यकम्। प्रजानां तामसिक-राजसिक-सात्त्विकभेदेन तद्बुद्धेरपि त्रैविध्ये न कोऽपि विवादः। उक्तञ्च भगवद्गीतायाम्—

प्रवृत्तिञ्च निवृत्तिञ्च कार्य्याकार्ये भयाभये ॥
बन्धं मोक्षञ्च या वेत्ति बुद्धिः सा पार्थ ! सात्त्विकी ॥
यया धर्ममधर्मञ्च कार्य्यञ्चाकार्य्यमेव च।
अयथावत्प्रजानाति बुद्धिः सा पार्थ ! राजसी।
अधर्मं धर्ममिति या मन्यते तमसाऽवृता।
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ ! तामसी ॥

इत्येवं त्रिविधास्वप्येतासु प्रजासु सात्त्विक्याः प्रजायाः कृते योगानुशासनम्, राजसिक्यास्तस्याः कृते शास्त्रैस्तत्तदाचार्य्यैश्च कृतं पवित्रं शब्दानुशासनम्। तामसिक्याः प्रजायाः कृते तु राजानुशासनमेव केवलं परमं हितं साधनं नान्यदिति सर्वसम्मतम् ।

इह जगति तामसिकीनामेव प्रजानां सर्वत्र भूयस्त्वात्तच्छासनाय तासां निरङ्कुशत्वनिरोधाय च धार्मिकस्य राजगुणसम्पन्नस्य राज्ञ आवश्यकत्वन्तु सर्वैरपि स्वीकरणीयम् । यतो हि तामसीनां प्रजानां दुर्दान्तायाः शक्तेर्निरोधेनैव राज्यच्छत्रभङ्गाभावो धर्माधर्मव्यवस्थितिश्च यथार्थतः प्रचलति । तथा च सात्त्विक्यः प्रजा मोक्षसाधने राजसिक्यश्च ता धर्मसाधने सुशान्त्या निर्बाधं प्रवृत्ताः समर्थाश्च भवन्ति ।

एवञ्च राजानुशासनं धर्मानुकूलं स्थिरीकृत्य धर्ममार्गस्य वर्णाश्रमव्यवस्थानस्य च यथायथं प्रवर्तनं, तत्र सौकर्य्य-सम्पादनञ्च राज्ञः प्रधानं कर्तव्यमिति तत्र राज्ञि देवपीठस्थित्यैवेदं दैवं कर्तव्यं साधु सम्पन्नं स्यात् । अन्यथा राजमदमोहितेऽपवित्रे आसुरसम्पत्तिसम्पन्ने राज्ञि राजधर्मोऽपि कलङ्कितो भवति । मोक्षमार्गोऽपि भ्रष्टो भवति । प्रजा अपि दुःखपयोधिमग्ना उद्विजन्ते राजदुःशासनादिति ध्रुवम् । अतश्च दैवशक्ति-सम्पत्त्यै राज्ञो राज्याभिषेकसंस्कार आवश्यक इति सर्वत्रैव संघुष्यते । तद्यथा—

यथा राजन् हस्तिपदे पदानि संलीयन्ते सर्वसत्वोद्भवानि ।
एवं धर्मान् राजधर्मेषु सर्वान् सर्वावस्थान् संप्रलीनान्निबोध ॥

व्यवस्थितार्य्यमर्य्यादः कृतवर्णाश्रमस्थितिः ।
त्रय्या हि रक्षितो देशः प्रसीदति न सीदति ॥
राज्याभिषेकसम्पन्नो दैवशक्तिसमन्वितः ।
कर्मभि र्लोकपालानां प्रजापालनतत्परः ॥
यत्र स्याद्भूपतिः शास्ता क्षात्रभावसमेधितः ।
ब्रह्मानुयायी सततं तत्र स्वः पृथिवीतले, इति ॥ ४७ ॥

द्वितीयं हेतुमाह—

दण्डयितृत्वाच्च ॥ ४८ ॥

तामसीनां पापस्वभावानां प्रजानां पापतो विरत्यै धर्ममार्गपरिष्कृत्यै साधुपरित्राणाय दुष्ट-निग्रहाय धर्मार्थकाममोक्षव्यवस्थित्यै च दण्डविधानमेवैकं साधनं, तच्च राज्ञ एव भुजाश्रयमवलम्बते। स्मृतिशास्त्रे बहुश उद्गीतोऽस्त्यस्य दण्डस्य महिमा—

तस्याथ सर्वभूतानां गोप्तारं धर्ममात्मजम् ।
ब्रह्मतेजोमयं दण्डमसृजत्पूर्वमीश्वरः ॥
तस्य सर्वाणि भूतानि स्थावराणि चराणि च ।
भयाद्भोगाय कल्पन्ते स्वधर्मान्न च्यवन्ति च ॥
स राजा पुरुषो दण्डः स नेता शासिता च सः ।
चतुर्णामाश्रमाणाञ्च धर्मस्य प्रतिभूः स्मृतः ॥
सर्वो दण्डजितो लोको दुर्लभो हि शुचि र्नरः ।
दण्डस्य हि भयात्सर्वं जगद् भोगाय कल्पते ॥
देवदानवगन्धर्वा रक्षांसि पतगोरगाः ।
तेऽपि भोगाय कल्पन्ते दण्डेनैव निपीड़िताः ॥
दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति ।
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदु र्बुधाः ॥

तात्पर्यतो राज्ञो दण्डनेतृत्वात्तस्मिन्निन्द्रस्य यमस्य च पीठाधिवासः समुचित एव । नो चेदेतेषामधिष्ठानाभावात् प्रमादग्रस्तो नरपतिः स्वस्य प्रजानाञ्चोभयेषामेवाहितं कर्तुमुद्यतो भवेत् । असत्कर्मणः सत्कर्मसु प्रवर्तकत्वाद् अधर्मनाशकत्वाच्च गन्धप्रेरकस्य वायोस्तमोनाशकस्य रवेरधिष्ठानं राज्ञि समपेक्षितमेव । अन्यथाऽनयोरधिष्ठानाभावाद्राज्ञः स्वस्य परेषाञ्चासत्कर्मप्रसक्त्याऽज्ञानान्धकारमग्नतया चामङ्गलाधानमव्याहतं स्यात् । प्रजारक्षार्थमग्नेरिव सर्वभागभक्षित्वं रसै र्वरुणस्येव धनैः प्रजापोषणकर्तृत्वमप्यावश्यकं राज्ञोऽन्यथा प्रजानां महती विनष्टिः स्यात् ।

करैश्चन्द्रस्येव स्वगुणकर्मभिः प्रजाह्लादकत्वं कुवेरस्येव प्रजासु धनवितरणाय राज्ञो धनाधिपत्वम् । तदभावे राज्ञा कियती प्रजानां हानिरज्ञानत एव विहिता भवति इति विवेचनीयम् । इत्यतो नरपते राज्याभिषेकसंस्कारसम्पादनमत्यावश्यकम् । यतो हि तस्मिन्ननुष्ठिते हि शरीरमानसे देवबलाधिष्ठानतामाश्रयतः । तदनन्तरञ्च सदाचाराणां स्वधर्मस्य संरक्षणेन च तस्याः शक्तेः परिपालन मवश्यप्राप्तम् ।

स्मृतिषु विषयोऽयं यथावद्विवर्णितः । तथाहि—

भागभाग् रक्षणे दक्षो यथेन्द्रो नृपतिस्तथा ।
वायुर्गन्धस्य सदसत्कर्मणः प्रेरको नृपः ॥
धर्मप्रवर्तकोऽधर्मनाशकस्तमसो रविः ।
दुष्कर्मदण्डको राजा यमः स्याद्दण्डकृद्यमः ॥

अग्निः शुचिस्तथा राजा रक्षार्थं सर्वभागभृत्।
पुष्यत्यपां रसैः सर्वं वरुणः स्वधनैर्नृपः॥
करैश्चन्द्रो ह्लादयति राजा स्वगुणकर्मभिः।
कोशानां रक्षणे दक्षः स्यान्निधीनां धनाधिपः॥
चन्द्रो यथा विना सर्वैरंशैर्नो भाति भूपतिः॥ ४८॥

प्रसङ्गतः पुनः संस्कारशुद्धिमाह—

**अतः सफलमाशौचम्॥ ४९॥**

प्रकृति-वैचित्र्य-वशाद्विविधास्ववस्थासु विविधा हि संस्कारशुद्धि-प्रकारा भवन्ति। इत्यत एव कर्मरहस्य-मर्मज्ञैर्महर्षिभिरनेकधा संस्कारशुद्धिसरणि निदर्शिता धर्म्मशास्त्रेषु तेषु। तत्र वैचित्र्यस्यैकस्योपन्यासमुदाहरणमुखेनेह निर्दिशति—शास्त्रेषु यदाशौचप्रकरणमुपनिबध्यते तस्य पूर्वोक्त-प्रकृति-वैचित्र्येण दैवकारणतश्च सिद्धिरिति।

धर्म्म-शास्त्रेषु जननाशौचमरणाशौचभेदेन हि द्विविधमाशौचमुपन्यस्तम्। तत्र प्रकरणे कालक्रिययोः साहाय्यव्यवस्थानमपि शुद्धिप्रकाराय यत्स्वीकृतं तदप्येतद्विज्ञानमूलकमेव। अस्मिन् मृत्युलोके प्राणिनां जीविताऽवस्थायामेवात्मीयैर्बन्धुवर्गैः सह पारस्परिकः सम्बन्धो निर्णीयते। पूर्वजन्मोपार्जितानामनेकविधानां कर्मणां प्रवाहवेगतो विविधप्रकाराणि कर्माणि संगृह्य जीवानां स्वोपसञ्चितकर्मानुसारं विशेषजातौ विशेषकुले विशेषप्राणिभिः सह विशेषात्मीयसम्बन्धनिर्णयेन सार्धमेव जन्म भवति। स च सर्वविधोऽपि सम्बन्धः स्थूलशरीरसम्बन्धनिदानक एव जन्मकालादारभ्य मरणकालावधिकस्तिष्ठति, मरणानन्तरमेव विच्छिद्यते। इत्यत एव हेतो र्जन्म-मरणयोरुभयोरेव सन्ध्योराशौचपातस्यावश्यकत्वमापतति।

समष्टिव्यष्टिसम्बन्धो यथा सर्वथाऽनुस्यूतोऽस्ति तथैव कुलेन सह तत्कुलोत्पन्नप्राणिनः सम्बन्धो मणिसूत्रवदनुस्यूतस्तिष्ठति।

वर्णाश्रमधर्ममर्य्यादया विशेषतः सुरक्षितपावित्र्याया आर्य्यजाते र्विस्तरशो वर्णनं पूर्वस्मिन् धर्मपादे विवेचितमेव। इत्थम्भूताया आर्य्यजाते र्दैवराज्येन सह सम्पृक्तसर्वसम्बन्धायाः पितृभिः सुरक्षित-कुलविशेष-मर्य्यादापरम्परायास्तस्याः सम्बन्धिनः कस्मादपि कुलात् कस्यचनार्य्यजातिगतस्य प्राणिनो विच्युतिः तस्मिन्नन्यस्य कस्यचन प्रवेशो वा नाल्पप्रयाससंसाध्यः। यतो हि दैवेन साम्राज्येन सम्बन्धभाजां कुलविशेषाणां ह्रासवृद्धि-संकलनव्यवकलनादिसंख्यागणनादिव्यवस्था दैवे जगत्येव तिष्ठति। अपरतश्च कस्यचन वैश्यवर्य्यस्या-

वस्थाविशेषे, धनायवृद्ध्या आनन्दावाप्तिः तद्ध्रासक्रमेण च निरानन्दानुभवः क्रमशोऽनुभूयत इति सर्वप्राणिप्रत्यक्षः पन्थाः। तथैव कुलसम्बन्धजुषः प्राणिनः परलोकगतस्य इहैव स्थितस्य वा स्वकुलवृद्धिह्रासदर्शनेनावश्यं सुखदुःखानुभव इति स्वभावसिद्धो मार्गः।

अन्यतश्च संस्कारराज्ये कर्मजगति चैवम्भूतस्य परिवर्तनस्य कुलनिर्गमन-कुलान्तरप्रवेशरूपस्य सन्धिद्वयस्य महान् आघातप्रत्याघातो जरीजृम्भयते। यद्यपि सर्वत्र न समानरूपतयैवात्रातप्रत्याघातोद्गमो भवति, तथापि पितृलोके मृत्युलोके तु महतः परिवर्तनस्यावसर उपतिष्ठत्येवेति सर्वैरप्यन्तर्जगद्भिज्ञैः परिज्ञायत एव। सत्येतादृशे परिवर्तनसमये संस्कारशुद्धि-क्रिया शुद्धि-सम्पादकं संयमानुष्ठानं कर्मविज्ञानानुमोदितमिति सर्ववादिसिद्धम्।

इत्यतोऽनयोर्जननमरणसन्ध्योः शास्त्रोक्ताशौचविधानाङ्गीकारेणानेके उपकाराः सफलिता भवन्ति, तद्यथा—

कुलात्मकसमष्टिकाये रागाभिनिवेशजन्यस्यान्तःकरणावरणस्यापक्षयेण-ततो विमुक्तिः। कुलदेवस्य कुलपितृवर्गस्य च सम्बर्द्धनम्। उभयोरपि सन्ध्योः संयमानुष्ठित्याऽऽत्मसंशुद्धिः, कुलसमष्टिसम्बन्धस्य च दार्ढ्य मित्याद्यनेके लाभोद्गमा भवन्तीत्यतः सन्ध्योर्द्वयो राशौचानुष्ठानमावश्यकम्।

ननु जीवन्मुक्तस्य शत्रुत्वमुपगतस्य प्रियतमस्य चात्मसम्बन्धिनो मृत्युजवियोगे कथमेकविधमेवाशौचानुष्ठानम्? समानकुलयोरेव बालवृद्धयो र्मरणाशौचे कथम्पार्थक्यम्, विवाहितायाः पतिगृहस्थितायाः कन्यायाः कथमाशौचाभावः? इति प्रश्ने समाधत्ते—

संस्कारमूलकस्याशौचविज्ञानस्यान्तर्जगत्सम्बद्धस्य संस्कारस्य विमुक्त्यैव तस्याशौचस्य विमुक्ति र्नितरां सम्बद्धा इत्यतस्तस्य जीवन्मुक्तस्य शत्रुतामाश्रितस्य आहो प्रेमपात्रतातिशयमधिगतस्य वा आत्मीयस्य मरणाशौचे कुलजन्यसंस्कारनियमसाम्यान्न तारतम्यम्, बालवृद्धयोश्च समानकुलयोरपि संस्कारसम्बन्धपार्थक्यादाशौचपार्थक्यं तदीयविज्ञानमूलन्न विजहाति। विवाहितायाश्च कन्यायाः स्वस्वत्वनिवृत्तिपूर्वकपरसत्वोत्पादनात्मकस्य दानविधेरनुष्ठानात् सर्वथा गोत्रसम्बन्धादिभेदतः कुलसम्बन्धविच्छेदो जायते। यद्येतन्न स्यात्तर्हि दानविधिरेवासफलितो भूत्वा विवाहसंस्कारमेव न साधयेत्।

स्वगोत्राद् भ्रश्यते नारी-विवाहात्सप्तमे पदे।
पतिगोत्रेण कर्तव्यस्तस्या ऊर्ध्वविधिस्ततः॥

इत्यादि स्मृतयोऽपि कन्यायाः स्वपितृकुलात्सम्बन्धत्यागमेवोद्गिरन्ति । इत्यादि प्रश्नसमाधानविमर्शनेनैतत आशौचविज्ञानप्रकरणं सिध्यति ॥ ४६ ॥

विज्ञानमिदं स्पष्टयितुमाह—

**तत्तारतम्यं चातुर्वर्ण्ये ॥ ५० ॥**

तस्य आशौचस्य तारतम्यं विभागशो ह्रासवृद्धिव्यवस्थानं चातुर्वर्ण्ये चतुर्णां वर्णानां भावश्चातुर्वर्ण्यं तस्मिन् ब्राह्मण-क्षत्रिय-वैश्य-शूद्रेषु इति सूत्रार्थः ।

स्मृतिशास्त्रेषूपलभ्यमानो ब्राह्मण-क्षत्रिय-वैश्य-शूद्राणामाशौचकालविभेदोऽपि आशौचविज्ञानस्य संस्कारमूलकतां साधयति, ब्राह्मण-क्षत्रिय-वैश्य-शूद्रा श्चत्वारोऽपि वर्णाः चतसृणां श्रेणीनां संस्कारैर्निर्धारिताः । येषु वर्णेषु समधिगतजन्मसु जीवेषु यादृक् कुलसंस्कार-प्रभावस्ताद्वगेव जातिसंस्कारप्रभावः समुद्भवति । अतस्तेषां वर्णानां स्वाध्यात्मिकाधिकारानुरूप एवायमाशौचशुद्धौ कालविभागः । कुत्रचनाशौचकालनिर्णये समुपलभ्यमानोऽप्याचार्य्याणां परस्परमतभेद आशौचस्य मौलिकविज्ञानविषये न कमपि विभेदमातनुते । वस्तुतो वर्णधर्मानुसारतो यः शास्त्रेषु आशौचभेद उपलभ्यते । तत्र प्रकृतिवैषम्यमाध्यात्मिकस्थितिवैषम्यञ्च हेतुरित्यवश्यमभ्युपेयम् ॥ ५० ॥

अन्यथाऽपि विज्ञानमिदं सुस्पष्टयति—

**तत्र विशेषतोऽपि वैषम्यम् ॥ ५१ ॥**

तत्राशौचे विशेषतोऽपि विशेषकारणादपि वैषम्यं विभेदो भवति इति सूत्रार्थः । केवलं वर्णानुसारत एव नाशौचकालनिर्णये वैषम्यम्, किन्तु अन्यप्रकारेणापि आशौचकालावधौ वैषम्यं विद्यते । विविधास्ववस्थासु आशौचकालनिर्णये धर्माचार्य्याः स्व-स्वमतानि विभिन्नानि निदर्शयन्ति । अत्रापि पूर्वोल्लिखितं विज्ञानमेव हेतुः ।

कुलसम्बन्धविचारेण कुलपर्य्यायसम्बन्धविवेकेन, आयुर्वर्षसम्बन्धविवेकेन, संस्कार-सम्बन्धोत्पत्तिकालविचारेण, आशौचनिमित्तीभूतानां तत्प्रभावान्वित शरीराणां च शक्तितारतम्य-पर्य्यालोचनया, देशकालपात्रनिमित्तादि पर्य्यालोचनेन च धर्माचार्य्या आशौचकालनिर्णयं व्यवस्थापयन्ति ।

दूरदेशस्थस्य मृतस्य ब्राह्मणजातीयस्य पञ्चत्वं दशगात्रदिवसादूर्ध्वं श्रुतं चेत्तद्दिनमेवाशौचान्तम्, एवं बालकानां कृतेऽन्य-मरणाशौचमल्पीयस्तन्मरणाशौचमन्येषां कृतेऽपि लघीय एव मृतव्यक्तेः शरीरालाभेऽन्यविधैवाशौचव्यवस्था-

इत्यादीनि यावन्त्याशौचव्यवस्थानानि शास्त्रेषूपलभ्यन्ते तावन्ति सर्वाण्येवोभयोः पक्षयोः पर्य्यालोचनया, कर्मगतिविचारेण, पूर्वोक्तविज्ञानानुसारमेव विधीयन्ते ।

प्रकृत्यधिकारावस्थाया वैचित्र्याद्बुद्धेनोः संस्कारशुद्ध्यै, तया च धर्म्मोन्नतिसम्पादनाय च विविधानि साधनानि धर्मशास्त्रादिषु वर्णितान्युपलभ्यन्ते तेषां सम्मिलितानान्तु मूलसिद्धान्तपर्य्यालोचनं कथमपि कर्तुम्पार्य्यते। परन्तु पृथग्विभिन्नानां क्रियाणां सिद्धान्तमीमांसा तु न कथमपि सुशक्येति सर्वज्ञो महर्षिः सूत्रकारस्त्रिगुणभेदभिन्नानां त्रिविधानामेव धर्मसाधनसंस्काराणां मीमांसयाऽस्य गहनस्य विषयस्य दिग्मात्रनिदर्शनमुपक्षिप्तवान् । यथा— आततायिवधे हिंसाजन्यः संस्कारस्तामसिकः । राज्याभिषेकजस्तु राजसिकः आशौचशुद्धिजन्यश्च संस्कारः सात्त्विक इत्युदाहरणान्यूहनीयानि ॥ ५१ ॥

पुनरपि विज्ञानमिदं समर्थयति—

**अन्येऽपि तथा ॥ ५२ ॥**

इदानीं संस्कार-यज्ञानामन्यविधानाञ्च संस्कारशुद्धीनां मीमांसां विधाय वेदशास्त्रान्तरविहितान्यसंस्काराणामपि मीमांसामारभते। तथा हि वैदिक तान्त्रिकमिश्रभेदेन त्रिधा विभिन्नः संस्कार-समूहः । यथा—

> वैदिकी तान्त्रिकी मिश्रा त्रिविधा कर्मचोदना
> स्मार्तं पौराणिकं तान्त्रं त्रिधा कर्मैव तान्त्रिकम् ॥

वेदविहिताः कर्मसंघा वैदिकाः । स्मार्त-पौराणिक-तान्त्रिकाणि च कर्माणि तान्त्रिकाणि, वैदिकानि तान्त्रिकाणि च सम्मिलितानि मिश्रशब्दवाच्यानि भवन्ति । वेद-सम्मताः संस्कारयज्ञा वैदिका वा स्युस्तान्त्रिका वा स्युस्सर्वेऽपि देवानुकम्पाप्रदाः। यतो हि ते सर्वेऽपि वेदविहितविज्ञानमूलकाः शास्त्रीयविज्ञानमूलका श्चेति । मिश्रस्तान्त्रिकश्च संस्कारसंघो वैदिक-संस्कारयज्ञरीतिवत् द्रव्यशुद्धिक्रियाशुद्धिप्रभृतिसप्ताङ्गपरिपूर्णौ भवतः। प्रवृत्तिरोधकौ निवृत्तिपोषकावपि तौ ज्ञेयौ ॥ ५२ ॥

प्रकृतं विज्ञानं द्रढयन्नाह—

**त्रिविधशुद्धिमत्वात् ॥५३॥**

वैदिकाः संस्कारा यथा बुद्धिमनःशरीरेषु त्रिष्वपि स्वप्रभावमासञ्जयन्ति, तथैव तान्त्रिका मिश्रा अपीति सुनिश्चितम् । वैदिकाः संस्कारा यथाध्यात्माधिदैवाधिभौतशुद्धिसम्पादका स्तथैव तान्त्रिका मिश्रा अपि संस्कारा स्त्रिविधशुद्धिविधायका इति न विस्मरणीयम् ॥ ५३ ॥

प्रसङ्ग संप्राप्तां शङ्कासमाधत्ते—

**अवैदिकोऽप्यपूर्णो न निष्फलः संकल्पवत्वात् ॥५४॥**

नन्वेकतो वैदिकमार्गावलम्बिषु बहव ईदृशाः संस्कारा उपलभ्यन्ते ये पूर्वोक्त-सप्ताङ्गपरिपूर्णा न सन्ति ! स्मार्त्ताश्चाचारा अप्यनेकशस्तादृशाः प्राप्यन्ते अन्यतश्च अवैदिकेष्वपि विभिन्नमतोपधर्मावलम्बिषु विविधास्तादृशाः संस्कारा विधीयमानाः समवलोक्यन्ते येषु पूर्वोक्त-सप्ताङ्गपूर्णता कथमपि नासाद्यते । तत् किं ते सर्वेऽपि लौकिकाः स्मार्त्तादयोऽवैदिकाः संस्काराः सर्वथा निष्फला एव ? उताहो तत्रास्ति कियदपि फलतारतम्यमिति शङ्कायाः समाधानमाह—

अवैदिको वेदभिन्नोऽपूर्णः पूर्णफलाभाववानपि संकल्पवत्वात् संकल्पशालित्वात् न ( सर्वथा ) निष्फलः फलशून्यो ज्ञेय इति सूत्रार्थः ।

यद्यपि वेदानां तत्सम्मतशास्त्राणाञ्च कर्मविज्ञानेन विहीनासु संस्कारक्रियासु पूर्वोक्तानि सप्ताङ्गानि नोपलभ्यन्ते, नापि तत्र त्रिविधानां शुद्धीनामस्ति क्रमः; तथापि तत्र सर्वास्वपि संस्कारक्रियासु संकल्पस्यावश्यं विद्यमानत्वात् तज्जन्यफलावश्यम्भावः स्वतः सिद्ध एव, यतो हि संस्काराणां संकल्पमूलकत्वात् संकल्पेनान्तःकरणेऽवश्यं संस्काराः संगृह्यन्ते । इत्यतोऽवैदिकाः संस्कारराशयोऽपूर्णाः पूर्णफलप्रदत्वशक्तिविरहिता अपि नैकान्ततो निष्फलाः फलशून्याः ॥ ५४ ॥

संस्कारभेदानाह—

**स द्विविधः स्थूल-सूक्ष्म-जन्यत्वात् ॥५५॥**

संसारोऽयं सूक्ष्मस्थूलभेदेन द्विधा विभक्तस्तत्र सूक्ष्मं देवराज्यं स्थूलरूपो मृत्युलोकश्च तयोरुदाहरणं ज्ञेयम् । उभयोरनयोः परस्परसम्बन्धस्यातिघनिष्ठतयैव स्थूलाभ्यामन्नजलाभ्यां सम्पादिते श्राद्धतर्पणे सूक्ष्मजगदधिष्ठितानात्मनोऽन्यत्र वा क्वचन जगत्यां गृहीतजन्मन आत्मनस्तर्पयतः ।

अन्यतश्च मानसिकसपर्य्यया तत्फलमिह लोके समुपलभ्यते । ततश्चोपासनाकार्य्य-सिद्धिरपि सत्वरं सञ्जायते इत्यत एव संस्कारसृती द्विविधे स्मृते ययो र्विशेषेण वर्णनमग्रे वक्ष्यते ॥ ५५ ॥

तत्र प्रथमं सूक्ष्मसम्बन्धं विशदयति—

**दीक्षा-सन्यासादयः सूक्ष्मसम्बद्धाः ॥ ५६ ॥**

प्रथमसृतौ दीक्षा-संन्यासादय उदाहर्तव्याः । यतो हि दीक्षायां प्रवृत्तिमार्गीयस्त्यागजः संकल्पः, इष्टदेवेन सहातिशयितः सम्बन्धस्तस्मिन्नात्मसमर्पणञ्च एतानि सूक्ष्मराज्यसहायतया संसिध्यन्ति ।

तथा संन्यासे संकल्पबलेन ऊर्ध्वाधोमध्यलोकत्यागः शारीरिकधारणात्यागश्चाप्यन्तःकरणसाहाय्यतः संसाध्येते। इत्येवमेनाद्दशस्तृतिगाः संस्काराः साक्षात्सूक्ष्मजगतैव सम्बन्धजुषो भवन्ति।

विज्ञानस्यास्य स्पष्ट-प्रतिपत्तये इत्थमूह्यम् यत्-दीक्षाया गुरूपदिष्टो मन्त्रः संन्यासस्य प्रेषमन्त्रश्च—गुरुमुखोच्चारितो भूत्वा साक्षादेव कर्णविवरेण शिष्यान्तःकरणे प्रविश्य तत्र पूर्णतया फलं प्रसूते। उक्तयोरनयोः संस्कारयोः सिद्धिलब्ध्यै कस्यापि स्थूलपदार्थस्य स्थूलाया बहिष्क्रियाया वा नापेक्षते सत्ताम्। दीक्षायां गुरुमन्त्रस्य कर्णकुहरेणान्तःकरणे प्रवेश आवश्यकः प्रेषमन्त्रस्य च संन्याससंस्कारे श्रवणमेव मुख्यमिति न विस्मर्तव्यम्॥ ५६॥

सम्प्रति द्वितीयस्य वर्णनमारभते—

अन्त्येष्टि-प्रभृतयोऽन्य-सम्बद्धाः॥ ५७॥

द्वितीयश्रेणिस्थोदाहरणाय अन्त्येष्टिक्रियाप्रभृतयः संस्कारा ऊहनीयाः। अन्त्येष्टिक्रियायामन्तर्जलावासेन प्राणवायव ऊर्ध्वमेव गच्छन्ति। पवित्रतमेषु गङ्गातटादिषु च यथाविधि मृतदेहस्यान्त्येष्टिक्रियासम्पादनेन परलोकगतस्यात्मनः स्थूलशरीरे पावित्र्याधानेन शान्तिलाभो भवति।

अन्त्येष्टिक्रियायाः पूर्वाङ्गक्रियासम्पादनतः स्थूलशरीरप्रभावः सूक्ष्मशरीरे तथाऽऽसज्यते यथा परलोकवासिना जीवेनोर्ध्वगति र्ध्रुवमासाद्यते। विज्ञानसिद्धमिदं यत्प्राणमयः कोशस्त्रिभिरन्यैः कोशैः सह जीवात्मानमूर्ध्वमुन्नीयान्नमयकोशात्मकं स्थूलशरीरं परित्यज्य लोकान्तरं गच्छति।

अन्यतश्च प्रत्यक्षसिद्धमेतत् यत् स्थूलतरं तत्त्वं सूक्ष्मक्रियां बाधितुमर्हतीति नियमानुरूपं नाभिं यावत् अर्धकायं जलमग्नञ्चेत् प्राणमयकोशात्मकमातिवाहिकं सूक्ष्मं शरीरं नाभितो नाभेरधोमार्गेण वा कदापि न निर्गच्छति। अपि तु तत उपरितनेभ्य एव मार्गेभ्यो निःसरतीति जीवात्मन ऊर्ध्वगतिरावश्यकी।

अन्त्येष्टिक्रियाया द्वितीयाऽवस्था केवलं स्थूलशरीरेणैव सम्बध्नाति। तथा हि यदि परलोकान्तरितस्य जीवात्मनः स्थूलशरीरं शीघ्रमेव गङ्गाजलेनानलेनान्येन वा पवित्रवस्तुना सम्पर्कमासाद्य स्वयमपि पूततामासादयेत्, अथवा तस्य स्थूलदेहस्य परमाणवो रूपान्तरमासादयन्तो दैवबलेनापि पावनत्वजुषः स्युस्तर्हि संस्कारेणानेन तत्सम्बन्धिनः परलोकमधिगतस्य जीवात्मन आध्यात्मिकोन्नताववश्यं कियत्यपि बलवृद्धिरुपैतीति ध्रुवमङ्गीकरणीयम्।

विज्ञानस्यास्य सुस्पष्टप्रतिपत्तये पुनर्विशदयति यत्-स्थूलदेहेन सहातिघनिष्ठसम्बन्धभाजित्वात् परलोकान्तरितो मृतात्मा स्वस्थूलशरीरत्यागानन्तरमपि तत्रैवात्मदृष्टिमासज्जयति । तदा च तस्य स्थूलदेहस्तदीयाः परमाणवो वा यदि पावनत्वमासादयन्ति तदा तज्जन्यः संस्कारस्तत्रात्मन्यप्यवश्यमासज्जतीति विज्ञानसिद्धम् । यतो हि यादृशं पदार्थमन्तःकरणं गृह्णाति, तादृगेव संस्कारस्तस्मिन्नुदेति । इत्यतोऽस्य द्वितीयश्रेणिस्थस्य संस्कारस्य प्रभावः स्थूलशरीरसाहाय्येन सूक्ष्मशरीरेऽपि संसक्तो भवति । एतदेव पूर्वश्रेणिगसंस्कारेण सहास्य संस्कारस्यान्तर्यम् ॥ ५७ ॥

शरीरद्वैविध्यप्रसङ्गेन कोशविकाशरहस्यं निर्वक्ति—

उद्भिज्जादाजरायुजं चतुष्कोशक्रमोन्मेषः ॥ ५८ ॥

चतुर्णां कोशानां क्रमेण उन्मेषो विकास उद्भिज्जाद् उद्भिद्योनितो जरायुजं जरायुजयोनिं यावत् भवतीति सूत्रार्थः ।

स्थूलसूक्ष्मात्मकशरीरद्वयक्रिया-सम्बन्धशालिभ्यां स्वाभाविकास्वाभाविकाभ्यां संस्काराभ्यां युक्तस्यास्वाभाविकस्य संस्कारस्य विस्तृतं वर्णनं कृत्वाऽधुना स्वाभाविकसंस्कार-सम्बन्धिषु विविधेषु पिण्डेषु कोशानां क्रमविकाशरहस्यवर्णनं कर्तुमारभते—

पूर्वस्मिन् येषां संस्काराणां वर्णनं जातं ते सर्वेऽपि अस्वाभाविक संस्कारमध्यगा एवोहनीयाः । यद्यपि वैदिकेषु षोडशसु संस्कारेषु सुकौशलिन्यः कियत्यः क्रिया ईदृश्यः प्रतिविहिताः सन्ति, याभिः स्वाभाविकानामेव संस्काराणां गतिः समेधिता भवति । अस्वाभाविकानान्तु स्थितिर्मूलतो हि निरुद्धा जायते । परन्तु पूर्वोक्तास्तु सर्वेऽपि संस्कारसंघा मनुष्यसंकल्पाधीनत्वात् अस्वाभाविककोटावेवान्तर्भवितुमर्हन्ति ।

ननु पूर्वं स्वाभाविकसंस्कारकोटौ परिगणितानां षोडशानां संस्काराणां कथमिहास्वाभाविक-संस्कारकोटौ परिगणनेति प्रादुर्भूतां शङ्कां समादधाति—मानवसंकल्पजानामस्वाभाविकानां संस्काराणां द्विविधा स्थितिः । एका तु मानव-वासना-जन्या, यत्र स्वाभाविकानां संस्काराणां विकासस्यावसर एव नायाति । द्वितीया च वैदिकप्रेरणया वैधसंकल्पजन्यानां संस्काराणां स्थितिः । यत्र मनुष्यसंकल्पसम्बन्धसत्तायां विद्यमानायामपि च यथाकथञ्चिदस्वाभाविकत्वसत्त्वेऽपि तैरेकतोऽस्वाभाविकानां संस्कारजालानां क्रमशो विनाशोऽपरतश्च मानव-निरङ्कुशसंकल्पतो निस्तेजस्कानां तदीयशक्तीनां क्रमविकासश्चेति ।

विज्ञानमिदमन्यथापि ज्ञातुं शक्यते—यथा स्वाभाविक-संस्काराणां क्रमविकास-धारापरम्परा क्रमश उद्भिज्जयोनितो मानवयोनिं यावन्नियमतो विकासमासादयन्ती मनुष्ययोनाविहागत्य अस्वाभाविकानां संस्काराणां प्रादुर्भावेन स्वत एव निरुद्धा मानवानां जीवन्मुक्तावस्थायां पुनः स्वत एव पूर्णतामासादयति। तथैव अस्वाभाविका अपि संस्कारा इतः पूर्णतया वैपरीत्यमाश्रिता मानवानां स्वाभाविकदशायां स्वपूर्णां शक्तिं प्रकाशयन्ति। वैदिकसंस्कारयज्ञैश्च हीनबला जायन्ते।

इत्यतो हेतोरेतदभिप्रातुं शक्यते यत् बाह्यरूपेण वैदिकसंस्कारसंघा मानवसंकल्पसम्बन्धभागस्वाभाविकसंस्कारसदृशा अपि स्वभावतस्ते स्वाभाविक-संस्कारमूलका एवेति न सन्देहलेशः, इत्यत एव ते मुक्तिप्रदानक्षमा इति पूर्वमप्युक्तम्।

इहास्मिन् सूत्रे आदिसर्गतः सम्बन्धजुषः क्रमाभिव्यक्ते वर्णनं यदुपक्रान्तं तत्सर्वमपि स्वाभाविकसंस्कारबलापेक्षमेवोहनीयम्। स्वाभाविको हि संस्कारश्चिज्जडग्रन्थिसमुत्पत्तिसमकालमवोत्पद्यते। तद्बलेनैव प्रकृतेर्मातुः स्वाभाविकायाः क्रियायाः स्वाभाविकस्पन्दनगतेश्चानुरूपं दैवसाहाय्यमाश्रित्य जीवः स्वत उद्भिज्जयोनितः स्वेदजयोनिं ततोऽपि जरायुजयोनिं तद्वदग्रेऽपि क्रमशो विवर्द्धमानः समेधते।

अस्या एव क्रमोन्नतेः स्वाभाविकनियमानुसारतो दैवबलमासाद्य जीवः क्रमेण स्वस्थूलशरीरे पञ्चकोशानां क्रमाभिव्यक्तिं विदधद् अग्रेसरो भवति। एवञ्चोद्भिज्जयोनौ सत्स्वपि पञ्चसु कोशेषु केवलमन्नमयकोशस्यैवाभिव्यक्तिर्दृश्यते। स्वेदजयोनौ चान्नमयस्य प्राणमयस्येत्युभयोरेव विकासः। अण्डजयोनौ तु त्रयाणामपि अन्नमय-प्राणमय-मनोमयानामभिव्यक्तिः स्फुटं प्रतीयते। जरायुजयोनौ चान्नमय-प्राणमय-मनोमयविज्ञानमयानां चतुर्णां कोशानां पूर्णाभिव्यक्तिं र्भवति ॥ ५८ ॥

सर्वेषां कोशानां कुत्र विकास इत्युपदिशति—

## सर्वविकासोऽन्तिमे ॥ ५९ ॥

क्रमाभिव्यक्त अरमोऽवधिर्मनुष्ययोनिरस्ति। स्वाभाविकसंस्कारबलेन क्रमशोऽग्रे संसरञ्जीवो यदास्यां मानवयोनौ समुपतिष्ठते। तदा स पूर्णो भूत्वा पञ्चानामपि कोशानां पूर्णतामासाद्यान्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमयानां पञ्चानामेव कोशानां पूर्णाभिव्यक्त्या सम्पन्नो नितरां नन्दति। तदानीं

पूर्णतामधिगतः स जीवः पूर्णावयवसम्पन्नतया धर्माधर्मविवेकाधिकारवान् भवति । स्मृतिश्च--

पितरः ! पञ्चकोशा वै सर्वपिण्डप्रतिष्ठिताः ।
आवृण्वन्तो विराजन्ते मत्स्वरूपं न संशयः ॥
मध्यमासु निकृष्टासु तथोच्चैर्दैवयोनिषु ।
सर्वास्वप्यवतिष्ठन्ते पञ्च कोशा न संशयः ॥
एतावांस्तत्र भेदोऽस्ति नूनं निम्नासु योनिषु ।
पञ्चकोशा विकाशन्ते नैव सामान्यतोऽखिलाः ॥
निखिलानान्तु कोशानां मर्त्यपिण्डेषु निश्चितम् ।
विकासः सर्वतः सम्यग् जायते नाऽत्र संशयः ॥ ५६ ॥

प्रसङ्गतः प्रथमाया योनेराधारं निर्दिशति --

**क्षित्येकाश्रयत्वमुद्भिदः ॥ ६० ॥**

उद्भिद् उद्भिज्जयोनेः क्षितिरेव एकः केवल आश्रय आधारो यस्य तस्य भावः तत्त्वम् इति सूत्रार्थः । स्वाभाविकसंस्कारबलेन समुत्पन्नायाः पिण्डसृष्टेः साहाय्येन जीवानां क्रमाभिव्यक्तेः विज्ञानं विस्पष्टयितुं, स्थावरत्वमधिगतानां जीवानामाश्रयं विवरीतुं च सूत्रयामासेदम् महर्षिः ।

चिज्जडग्रन्थिसमुत्पन्नो जीवः प्रथमश्रेणिगतं पिण्डमुपलभ्य तादृग् जडभावापन्नो भवति । यथा तत्र सत्स्वपि पञ्चसु कोशेषु चतुर्णामेवमप्रकाशस्तिष्ठति यथा नाणुरपि तेषां तत्राभिव्यक्तिप्रभावो भासते । केवलमेकस्यान्नमयकोषस्यैव सर्वथा तत्र विकासप्रभाव उपलभ्यते । तत्र जडत्वप्राधान्यात्स्थावर्य्याच्च स केवल-क्षितितत्त्वाश्रय एव तिष्ठति । यतो हि अन्नमयकोशे पृथिवीतत्त्वस्यैव प्राधान्यम् । अत्र प्रत्यक्षमेवेदं यत् मृत्योः पश्चात् परलोकगतस्यात्मनः शरीरमस्यामेव पृथिव्याम् विलीयते ॥ ६० ॥

उदाहरणतो विज्ञानमिदं समर्थयति—

**ब्रह्माण्डपिण्डयोस्तथादर्शनात् ॥ ६१ ॥**

प्रथमाभिव्यक्तिरूपा उद्भिज्जा जीवा विविधा भवन्ति । तत्र कियन्तः पिण्डाश्रयाः कियन्तश्च ब्रह्माण्डाश्रया भवन्ति । वृक्षा लतागुल्मा ओषधयश्चेमे उद्भिज्जा जीवा ब्रह्माण्डमाश्रित्य तिष्ठन्ति । यतो ह्येमे समष्टिमृत्तिकामुपभुञ्जते । अत्र ब्रह्माण्डशब्देन मृत्युलोको ज्ञेयः । यतो हि मृत्युलोक एव पृथिवीतत्त्वप्रधानो भवति ।

पिण्डेनापि सम्बन्ध उद्भिज्जानां जीवानामभिहितस्तत्रान्य-जीवशरीरेष्वपि विविधानामुद्भिदामुत्पत्तिर्भवतीति हेतुरूहनीयः । यथा पृथिवीतलस्थ-वृक्षादिबीजैः पृथिवीतलं विभिद्याङ्कुरत्वमधिगम्यते, तथैव मनुष्यादिजीवपिण्डानां चर्मादि भित्त्वा विविधा उद्भिज्जा जीवा उत्पद्यन्ते इति प्रत्यक्षसिद्धम् । सर्वमिदमघटनघटनापटीयस्या मायाया विलासवैचित्र्यानन्त्यमूलकमेवाऽवगन्तव्यम् ॥ ६१ ॥

स्वाभाविकसंस्कारज-द्वितोयकोटिगानां जीवानामाश्रयमाख्याति—

स्वेदजो जलाग्निवाय्वाकाशाश्रयः ॥ ६२ ॥

यदा स्वाभाविक-संस्कारबलेन जीव उद्भिज्जकोटितोऽग्रे वद्धर्धते तदा दैवं साहाय्यमाश्रित्य स्वेदजकोटिमारोहति । तत्र च तस्मिन् प्राणमयकोशस्याविर्भावः पूर्णतामासादयति । तदा तस्य कृते साक्षात् पृथ्वीतत्त्वस्य सहायता नापेक्षणीया भवति । सोऽन्येषां जलादि-चतुर्णां तत्त्वानामाश्रयेणात्मानं गोपायति । प्राणमयकोशस्याभिव्यक्त्या तत्कोटिगजीवेषु सामर्थ्यातिशयादेवंविधस्वरक्षाशक्तिरेवोदेति । येन ते सर्वत्र स्वात्मानं गोपितुं समर्था भवन्ति । सर्वत्रैव च त उपलभ्यन्तेऽपि ॥ ६२ ॥

स्वेदजानां जीवानां वैलक्षण्यं साधयति—

गुणभेदादनेकधा ॥ ६३ ॥

प्राणमय-कोशानां विकासेन त्रिगुणानां पृथक् पृथक् प्रकाशस्तत्र दृष्टिगोचरतामेति । स च सृष्टि-स्थिति-लय-कार्य्याणां सहायको भवतीत्येतदेवास्य वैचित्र्यम् । अन्येषु पिण्डेषु सृष्टि-स्थितिलयात्मकेषु कार्य्येषु एतेषां साक्षाद्रूपतः साहाय्यम् । अतस्ते त्रैगुण्यभेदादनेकधा भिद्यन्ते । स्वेदजा जीवा व्योमादिसर्वभूतेषु विचरन्तोऽपि विविधश्रेणिस्थपिण्डेषु विद्यमानाः सन्तः स्वालौकिक्या शक्त्या तेषां पिण्डानां सृष्टि-स्थिति-लयेषु साहाय्यमाचरन्तीति तेषामपि पिण्डश्रेणिभेदादनेकत्वम् ॥ ६३ ॥

विज्ञानमिदं पुनर्द्रढयति—

ब्रह्माण्डपिण्डयोरोगारोग्यप्रदाः ॥ ६४ ॥

ते हि स्वेदजा जीवाः पिण्डानामन्तर्बहिश्च स्थित्वा समष्टिव्यष्टिरूपतो रोगाणामुत्पत्तिविनाशयोर्निदानतामाश्रयन्ति ।

जीवानां स्थूलशरीरविनाशाय समष्टिव्यष्टिविशेषोत्पादकास्ते स्वेदजा विशेषजातिगा निर्धारिताः सन्ति । ते हि सततं समष्टिवायौ विचरन्तो जीवानां समष्टिस्वास्थ्यं गोपायन्ति । महामारीप्रभृतिषु समष्टिरोगोत्पत्तये च त एव समष्ट्या निदानत्वमुपेत्य सर्वत्र रोगविस्तारमाचरन्ति । एवञ्च जीवानां स्थूलशरीरेषु तिष्ठन्तो विशेषश्रेणिगाः स्वेदजाः स्वप्राणसमर्पणेन तेषां स्वास्थ्यरक्षणं विदधति । सर्वरोगत आरोग्योपलब्धौ त एव सहायका भवन्ति । किम्बहुना रोगाणामुत्पत्त्या यच्छरीरविनाशो भवति तदपगत्या च यच्छरीरपुष्टिर्भवति तत्रोभयत्रैव ते निदानतामावहन्तीति तेषां विचित्रेयं प्राणशक्तिरलौकिकोऽयं तस्या महिमेति किं वक्तव्यमिति ॥ ६४ ॥

तत्रापि विशेषं ब्रूते—

अतीन्द्रिया अपि ॥ ६५ ॥

सर्वश्रेणिस्थेभ्यो जीवेभ्यस्तेषां वैचित्र्यमिदमन्यद् यत्ते अतीन्द्रिया इन्द्रियगोचरतामतीता अपि बहवो भवन्ति । तेषु विविधश्रेणिगेषु स्वेदजेषु बहव एवंविधाः सूक्ष्मा भवन्ति ये दर्शनेन्द्रियगोचरतां नैवाश्रयन्ति । ते च यथाक्रमं कियन्तो निर्दिश्यन्ते—वायुमण्डले भ्रमन्तः स्वेदजाः प्राणवायुमार्गमाश्रित्य नासिकारन्ध्राभ्यामन्तः प्रविशन्तः स्वास्थ्यं रक्षन्ति । जलकणिकासु संस्थिताः कियन्तस्ते प्राणपोषणमाचरन्ति । शारीरकत्वग्रक्तमांसरजोवीर्य्यप्रभृतिषु धातुषु विद्यमानास्ते नित्यं सृष्टिस्थितिलयात्मकं कार्य्यं सम्पादयन्ति । ते सर्वेऽपि अतीन्द्रिया एवेति स्मृतिसिद्धम् तथा हि—

सूक्ष्मयोनीनि भूतानि तर्कगम्यानि कानिचित् ।
पक्ष्मणोऽपि निपातेन येषां स्यात् स्कन्धपर्य्ययः ॥
जलेषु वायुधारासु रक्त-मांसत्वगस्थिषु ।
विद्यन्ते बहवो जीवाः स्वेदजाः सूक्ष्मकारणाः ।
ये स्वप्राणोपयोगेन प्राणान् रक्षन्ति शाश्वतम् ।
प्राणिनां रोगनाशेन रोगोत्पत्त्या निरन्तरम् ॥
हेतुतां यन्ति जीवानां शरीरविलये तथा ।
इत्यादि महाभारतप्रभृति स्मृत्यन्तरतो ज्ञेयम् ॥ ६५ ॥

सम्प्रति योनिभेदानभिधत्ते--

योनेरानन्त्येऽपि पञ्चधा ॥ ६६ ॥

जीवानां योनिषु यत्रानेकधा शङ्काः समुद्यन्ति। तयोरुद्भिज्जस्वेदजयो र्वर्णनं पूर्वमेव विस्तरशोऽभिहितम्। तथा हि उद्भिज्जानां स्थावरतया तत्र जीवस्थितावेव सन्देहः। स्वेदजानान्तु अतीन्द्रियतया तद्योनिसत्तायामेव सन्देहः। सन्दिग्धस्थितिकयोरुद्भिज्ज-स्वेदजयो र्जीवयो र्विशेषवर्णनमभिधायेदानीं सर्वश्रेणिगानां जीवयोनीनां विशिष्टवर्णनमभिधत्ते।

स्वाभाविकस्य संस्कारस्य क्रमाभिव्यक्तिकारिणा परिणामेन पूर्वमुद्भिज्जासु विविधयोनिषु तदनन्तरञ्च स्वेदजास्वनेकासु योनिषु संसरञ्जीवः कथमग्रे पूर्णपरिणाममासादयति ?

कथञ्च जीवानामियं क्रमाभिव्यक्तिः? कतिधा स्वाभाविकसंस्कारधारया विभिद्यते इति सर्वस्यापि ज्ञातव्यस्य स्फुटं प्रतिपत्तये सूत्रमिदमाविश्चकार।

जीवाभिव्यक्तिमार्गाश्रितानां योनीनाम् अनन्तविस्तारसत्त्वेऽपि पञ्चधात्वमेव उद्भिज्ज-स्वेदजाण्डज-जरायुज-मनुष्ययोनिभेदाद्भवितुमर्हतीति सूत्रार्थसंक्षेपः ॥ ६६ ॥

चित्कलाविकासविवेकतः प्रथमामुद्भिज्जयोनिं वर्णयति—

उद्भिदेककलः ॥ ६७ ॥

चिज्जडग्रन्थिपर्य्यालोचनया ततः समुत्पन्नस्य जीवस्य पञ्चस्वन्यासु योनिषु कथं चित्कलाया विकासो भवतीति निदर्शयति।

षोडशसु कलासु विभक्तायाश्चिच्छक्ते रत्रोद्भिज्जयोनावेककलाया एव विकासः। पञ्चकोशपरिपूर्णाया अप्यस्या योने र्जडांशप्राधान्यादेककलयैव स्थितिश्चिच्छक्तेर्भवतीति सुनिश्चितम्। परन्तु कलयैकया स्थितापि चिच्छक्तिरत्रोद्भिज्जयोनौ कीदृशी कार्यकारिणीति स्मृतिः परिशीलनीया।

तथा हि—

> उष्मतो म्लायते वर्णं त्वक् फलं पुष्पमेव च।
> उद्भिदः शीर्य्यते चापि स्पर्शस्तेनाऽत्र विद्यते ॥
> वाय्वग्न्यशनिनिर्घोषैः फलं पुष्पं विशीर्य्यते।
> श्रोत्रेण गृह्यते शब्दस्तस्माच्छृण्वन्ति पादपाः ॥
> वल्ली वेष्टयते वृक्षं सर्वतश्चैव गच्छति।

नह्यदृष्टेश्च मार्गोऽस्ति तस्मात्पश्यन्ति पादपाः ॥
पुण्यापुण्यैस्तथा गन्धैर्धूपैश्च विविधैरपि ।
अरोगाः पुष्पिताः सन्ति तस्माज्जिघ्रन्ति पादपाः ॥
पादैः सलिलपानाच्च व्याधीनाञ्चापि दर्शनात् ।
व्याधिप्रतिक्रियत्वाच्च विद्यते रसनं द्रुमे ।
वक्त्रेणोत्पलनालेन यथोर्ध्वं जलमृच्छति ।
तथा पवनसंयुक्तः पादैः पिबति पादपः ।
सुखदुःखस्य ग्रहणाच्छिन्नस्य च विरोहणात् ।
जीवं पश्यामि वृक्षाणामचैतन्यं न विद्यते । इति ॥ ६७ ॥

इदानीं द्वितीयमाह—

स्वेदजो द्विकलः ॥ ६८ ॥

स्वेदजेषु जीवेषु भगवतश्चित्कलाया अंशद्वयेन विकासो भवति । अस्य कलाद्वयस्य विकासनैतेषु जीवेषु यादृशीनां शक्तिनां सञ्चारो भवति स्व-स्वप्रकृतिवशगास्ते कलाद्वयसंयोग-बलेन यादृशं विलक्षणमाश्चर्यकरं कार्य्यं संसाधयितुं समर्था भवन्तीत्यादि विस्तरशो वर्णितं प्राक् ॥ ६८ ॥

साम्प्रतं तृतीयं निरूपयति—

अण्डजस्त्रिकलः ॥ ६९ ॥

अण्डजेषु जीवेषु अन्नमय-प्राणमय-मनोमयानां कोशानां प्रकाशेन सह चित्सत्तायाः कलात्रयस्यापि विकासो भवति । तत्र कोशत्रयविकासत एवाण्डजेषु जीवेषु मानसिकस्य सर्वस्यापि कार्य्यजातस्य विलक्षणं लक्षणं परिदृश्यते ।

मनोवृत्तीनामाकर्षणविकर्षणजन्ययो रागद्वेषयोर्विलक्षणं चिह्नमेषु स्पष्टमेवोपलभ्यते । अत्युन्नतानां प्राणिनां याः पवित्रतमा मनोवृत्तयो भवन्ति, ता अप्यण्डजेषु प्राणिषूपलभ्यन्त एव ॥ ६९ ॥

अधुना चतुर्थं निर्वक्ति—

चतुष्कलो जरायुजः ॥ ७० ॥

जरायुजेषु प्राणिषु स्वाभाविकस्य संस्कारस्य प्रभावतः प्राथमिकानां चतुर्णां कोशानां विकासेन सह चित्कला अपि अंशचतुष्टयेनैव विकाशन्ते । इत्यत एवैतादृशेषु प्राणिषु विज्ञानमयकोशविकाशाद्धेतोर्बुद्धितत्त्वस्य सर्वाण्यपि चिह्नानि स्फुटं पर्य्यालोच्यन्ते । स्मृतिश्च—

# सूर्योदयः ।

( विविधविषयविभूषितं संस्कृतमासिकपत्रम् )

षष्ठे वर्षे } वैशाखस्य पूर्णिमा सं० १९८८ । { एकादश संख्या


## संस्कृत-भाषाभ्युदय-विमर्शः ।

—— o*o ——

वैदुष्यभूषिततनुं विदुषां विवेकं,
    पैशुन्यशून्यमनसामपि हन्त ! मन्ये ॥
दौर्जन्य-जन्यदुरितान्तरितान्तरात्मा,
    कालुष्यभूष्यमकरोत्कलिकाल एषः ॥ १ ॥

यस्मादमी सुकृतिनोऽपि परापकार-
    काराय सम्प्रति सदालमलं यतन्ते ॥
छेत्तुं च चौरकरणैरपि पूज्यपादा,
    उत्साह-पूर्णमपि शिष्यगणाभिलाषम् ॥ २ ॥

येनौचिती वटुगणाय सुतुष्टिद्रव्यं ( इनाम )
    तत्तोषणाय ददती विमना बभूव ॥
शिष्याश्च सम्प्रति परं प्रहताभिलाषा,
    बाधानुविद्धमनसोऽध्ययनात्प्रमत्ताः ॥ ३ ॥

तन्मन्महे न भविताभ्युदयः सुराणाम्,
    वाचां विधातृ-कृपया ध्वसितौजसां वै
अद्यापि किन्तु विबुधाः सदया यदि स्यु-
    स्तद्वर्धयितृनिवहाय तु तद्भवेद्वै ॥ ४ ॥

वार्त्तोऽस्ति को भवति या भवितव्यता सा,
    चेदस्तु सा प्रयतनेन बुधाः ! मुधैव ॥
किन्त्वर्थये कलिमहं हतपुण्यपुञ्जः
    पापं दयाद्विडवधेहि निशम्य वाचम् ॥ ५ ॥

वर्तस्व कर्मणि निजे सुतरामिदानीं,
    त्वत्काल एष समवादयि धर्मधारिन् !
धर्मे निजे निधनमप्युदयस्य बीज-
    मेतज्जनार्दनवचो न च विस्मरेति ॥ ६ ॥


—जगल्लाल त्रिपाठी,
"व्याकरणाचार्य्यः" पटना सिटी ।

# महामण्डलम् राष्ट्रियमहासभा च।

निरन्तरस्य नियमतः प्रचालितस्य शुभप्रवृत्तिशालिनः सदुद्योगस्य साफल्यमवश्यं स सर्वान्तर्यामी विश्वात्मा सम्पादयतीति सर्वानुभूत नियमात् महामण्डलस्यापि सर्वलोकहितैषिणः सदुद्योगस्यैकस्य साफल्यं सम्प्रति सूर्य्योदयपाठकान् प्रति श्रावयामः।

जनवरीमासे श्रीभारतधर्ममहामण्डलसञ्चालकैः श्रीमता भारतीय सम्राट्प्रतिनिधिना श्रीइर्विनमहोदयेन सह यः पत्रव्यवहारो भारतीयधार्मिकव्यवस्थास्वातंत्र्य-संरक्षणविषये विहित आसीत्तस्य प्रतिलिपिः सूर्य्योदयपाठकानामन्तिके उपस्थितैव स्यात् तथा हि--

"सर्वथा क्रान्तिमयेऽस्मिन् समये भारतीय-शासनपद्धतेः सुरक्षायै द्वे मुख्ये पद्धती अवश्यमाश्रयणीये। एका तु इयं यद्—

धर्मभूमाविह भारतवर्षे कस्या अपि जातेः समाजस्य वा धार्मिकव्यवस्थायां न भारतसम्राट्प्रतिनिधिना स्वयं हस्तक्षेपः करणीयो नाप्यन्येषां तत्करणायावसरो देय इति। द्वितीया तु यथा--

सर्वेषामेव भारतवर्षस्थानां सनातनधर्म्मावलम्बिनां स्व-स्वधार्मिकव्यवस्थायां स्वातन्त्र्यं स्यात्। ये यथाऽभिलषेयुस्तथा स्वधर्ममर्य्यादां पालयेयुस्तथा प्रचारयेयुः। यं धर्ममाश्रयितुमभिलषेयुस्तं गृह्णीयुस्तत्र विषये राजकीयः कोऽपि निरोधो न स्यात्, प्रत्युत तेषां स्व-स्वधर्म प्रचार-विषये राजकीयं समुचितं साहाय्यमेव स्यादिति।" एतस्य सत्परामर्शस्यासादनेन तादृगेव व्यवहर्तुं तदा भारतसम्राट्प्रतिनिधिना प्रतिज्ञातम्, यद् अग्रे या शासनपद्धतिः भारतवर्षे स्थिरीभविष्यति तत्रावश्यमनयोः पद्धत्योराश्रयणं भविष्यतीति। स्वीकृतिपत्रमपि तदानीमेव तेन महामण्डलसञ्चालकानां सविधे प्रहितमासीदिति हर्षास्पदम् महामण्डलीयसदुद्योगसाफल्यावाप्तेः।

सम्प्रति च कराचीस्थराष्ट्रियमहासभायाः सभापतिसविधेऽपि य आशीर्वादात्मकः प्रस्तावो महामण्डलाधिष्ठातृवर्गैः प्रहितोऽभूत्तस्य प्रतिलिपिरधो निर्दिश्यते। तथा हि—

"अयि कराचीस्थ राष्ट्रियमहासभासभापते!

अयं हि भारतधर्ममहामण्डलः सर्वेषामेव भारतीयसनातन-हिन्दुधर्मावल-

निवनां प्रतिनिधिभूतः सर्वेषामेव भारतीयानां सुखशान्त्यर्थमाध्यात्मिकोन्नतये च प्रयतमानः परमेश्वरे स्वदृढविश्वासं प्रकटयन् राष्ट्रियमहासभाया अधिवेशनस्य सर्वथा साफल्यं समभ्यर्थयते।

भारतवर्षमिदं समेषामेव देशानां धार्मिकाध्यात्मिकविषये गुरुस्थानमासादयति। अत्रत्या मानवा धर्मनिमित्तमाश्रित्य सर्वस्वत्यागं कर्तुमर्हन्ति। अतो राष्ट्रियमहासभायाः स्वीयपूर्वपुरुषाणां पवित्रधार्मिक-पद्धतेराश्रयणं तथा पवित्रभूमेरस्या जनताया धार्मिकभावसमादरणे समानपक्षाश्रयणमिति प्राथमिकं कृत्यम्। यथा हि मूर्खस्य चतुरस्य वा स्वसन्तानस्य कृते जनकः समानं वात्सल्यमादधाति तथैव राज्ञा जनतानायकेनापि समानतयैव सर्वेभ्योऽल्पेभ्यो बहुभ्यो वापि स्वाश्रितेभ्यः प्रजावर्गेभ्यः साहाय्यदानमिति। एवं सत्येव राज्ञो जनतानायकस्यापि प्रभावः पक्षो वा सर्वैः समाद्रियते, इति नीतिसमाश्रयेणैव राष्ट्रियमहासभा सकलजनसमाजपक्षप्रियपात्रतामासादयिष्यति येनातिशीघ्रमेव तदनुष्ठेयं साफल्यभागवश्यमेव भवितेति।" मन्त्री (सेक्रेटरी)

श्रीभारतधर्ममहामण्डलस्य,"

हर्षास्पदमिदं यद्राष्ट्रिय-महासभापि महामण्डलस्य सत्-परामर्शमङ्गीकृत्य स्वभाविनियमनिर्माणे द्वितीयस्यां धारायामिमेव नियमं स्थिरीकृतवती—यद् भविष्यच्छासनपद्धतौ भारतीयाः शासकवर्गाः कस्यामपि धार्मिकव्यवस्थायां कथमपि कदापि हस्तक्षेपं नैवाधास्यन्तीति।

इत्येवं भारतीयवर्तमानसम्राट्प्रतिनिधिना भाविन्या च भारतशासिकया राष्ट्रियमहासभया च प्रतिज्ञातस्य धार्मिकस्वातन्त्र्यस्य प्रतिपालनेन महत्स्याद् भारतीयं कल्याणमिति। उभयमपि भाविशुभसूचकं राजप्रतिनिधेः राष्ट्रियनेतृवृन्दानाञ्च धर्मविषयिणी सुबुद्धिर्महामण्डलसञ्चालकानाञ्चोभयत्रापि स्वप्रयत्नसाफल्येन धर्मकृत्ये स्वोत्साहवृद्धिरिति।

## संस्कृत-परीक्षा-परिणामः।

अयि संस्कृतप्रणयिनो विद्वांसोऽन्तेवासिनश्च! सूर्योदयोऽयं सुरसरस्वत्याः समृद्धिं समाचरन् श्रीमतां समुचितां सेवां विदधद् दैनंदिनमधिकाधिकं स्वीयाभ्युन्नतये प्रयतते इति नास्ति श्रीमतामगोचरम्, इति विचारणीयैवैषमः काशीस्थराजकीय-संस्कृतपरीक्षाणां सर्वासाञ्च श्रेणीनां सत्वरं परिणामाङ्कान् निःसार्य्याकिञ्चनानां फलजिज्ञासायाञ्च परमोत्सुकानां विद्यार्थिनां कीदृगनिर्वचनीयमुपकारं कृतवानिति विमृशन्तु। यतो नास्ति पञ्चाणकान् सम्प्रे-

ष्य राजकीयगजट्पत्रानयनस्येदानीं श्रीमतां प्रयोजनम्। नापि गजट्पत्रप्रकाशनावधिकाल-विलम्बप्रतीक्षणस्यैवापेक्षेति।

अत्रार्थिकव्ययेन सह परीक्षापरिणामाङ्कासादनादि-प्रयासगौरवस्य तत्परिशोधनप्रकाशनादि-प्रयत्नस्य च परिशीलनं श्रीमद्भिरेव करणीयम्। यदि श्रीमन्तः स्वसहजौदार्य्येणास्य ग्राहक-संरक्षकादिवृद्धयानुग्रहीष्यन्ति तदैवायं समये समये एवंविधाभिः सेवापरम्पराभिः श्रीमतामनर्घमुपकारमाचरिष्यति। अयं हि निदाघ-समयः। सर्वेऽपि संस्कृतच्छात्रा इदानीं गृहीतविद्यालयविरामाः शिथिलितपठनप्रयासाः स्व-स्व-स्थाने विश्राममुखमनुभवन्ति। ते हि यदि प्रतिव्यक्ति पञ्चानामेव ग्राहकसंरक्षकादिमहोदयानां संग्रहं कुर्युश्चेन्महान् प्रत्युपकारः स्यात् सूर्योदयस्य विशेषतः संस्कृतसरस्वत्याश्च। एवञ्च "परस्परं भावयन्तः श्रेयः परमवाप्स्यथ" इति भगवदनुशासनमपि पालितं स्यादिति विरमामः।

## विद्यालयात् संस्कृतशिक्षातिरस्कारः।

साम्प्रतिकानां कलिकत्ताविश्वविद्यालयीयानां शिक्षाध्यक्षाणां कोऽभिप्राय इति तु त एव जानन्ति। परन्तु ते भारतीयसंस्कृतिविद्वेषिण इति तेषां कृत्यकलनया प्रतीयते। पश्यन्तु यत्र सर्वेऽपि भारतीयप्रधाननेतारः संस्कृतशिक्षाया आवश्यकत्वं सर्वेषामेव हिन्दुबालकानां कृते प्रतिपादयन्ति, तत्रैव ते स्वशिक्षालयात् तस्यै अर्धचन्द्रं प्रयच्छन्ति। श्रूयते कलिकत्ता विश्वविद्यालये पूर्वं संस्कृतशिक्षा सर्वेषामेव हिन्दु-( आर्य्य ) बालकानां कृते अनिवार्य्यासीत् परन्तु इत आरभ्याग्रे ऐच्छिकी भविष्यति।

अत्रास्माकमेतावदेव वक्तव्यं विद्यते-यत् संस्कृत शिक्षाया अनिवार्य्यावस्थायां तु यथाकथमपि महाभारतरामायणयो हिन्दुसंस्कृतिपरिचायकयो ग्रन्थयोः कियतोऽशस्य लेशतो ज्ञानमपि बालकानां भवतिस्म, येन भारतीय-सदाचार शिष्टाचारव्यवहारादीनां छायामात्रपरिचयः सर्वेषामेव वङ्गीयशिक्षित-हिन्दु-( आर्य्य ) सन्तानानां समपद्यतेस्म। इदानीं तज्ज्ञानविरहिताः केवलं पाश्चात्य-शिक्षादीक्षितास्ते स्वसंस्कृतिपरिचयशून्याः सन्तः मेकालेमहोदयस्य "वेषे वर्णे तु प्राच्याः संकल्पे कर्तव्ये तु पाश्चात्या इत्येवंविधा एव पुरुषा मदीयशासनसमर्थकाः, ते च पाश्चात्यभाषाशिक्षया मया सम्पादनीया" इत्याशायाः सर्वथा पूरका भविष्यन्तीति निःसन्दिग्धम्।

अधुनाऽपि संस्कृतभाषाभिज्ञानां वङ्गीयमहापुरुषाणामिदं परमकर्तव्यं यत्ते पूर्ववदेव कलिकात्ताविश्वविद्यालये संस्कृतशिक्षाया अनिवार्य्यत्वं कारयित्वैव विश्राम्यन्तु इति।

# हा ! स्वर्गस्थशिवचन्द्र !

सृजति तावदशेषगुणाकरं पुरुषरत्नमलङ्करणं भुवः
तदपि तत्क्षणभङ्गि करोति चेदहह ! कष्टमपण्डितता विधेः

हा ! कराल !! काल !!! त्वदीयक्रूरकठोरसुदृढनियमपद्धते र्विचित्रा दृश्यते गतिः । नियतिपाशबद्धस्त्वं न विचारयसि कर्तव्याकर्तव्यम् । न गणयसि परकीयसुखदुःखप्रवाहम् । न विमर्शयसि विधेयलाघवगौरवम् । केवलं स्वनिर्धारित-नियमसरणिमाश्रित्य —

"अम्भोधिः स्थलतां स्थलं जलधितां धूलीलवः शैलतां
शैलो मृत्कणतां तृणं कुलिशतां वज्रं तृणक्षीणताम् ।
अग्निः शीतलतां हिमो दहनतामायाति यच्चक्रतो
लीलादुर्ललिताद्भुतव्यसनिने कालाय तुभ्यन्नमः ।"

इति कस्यापि महाकवेरुक्तदिशाऽकिञ्चनं राजानं राजानञ्चाकिञ्चनं शून्यगृहं सम्भृतसज्ञानं सम्भृतसद्मानञ्च शून्यगेहं विदधन्निरन्तराभ्यस्तनिज-नियतकौटिल्यात् पौर्वापर्य्यमगणयन् इदानीं तं सकलदीनजनोपकारिणं चिकित्सया धिक्कृतधन्वन्तरिदेवं पीयूषपाणिं मोदफलपुरस्थ-संस्कृतकलाशालाया (कालेज) आयुर्वेदशास्त्राध्यापकं शिवचन्द्रमिश्रं कवलयन् कियत् क्रौर्य्यं नैघृण्यमाचरितवानिति पर्य्यालोच्य शतधा विदीर्य्यते हृदयम् ! किमत्र मोऽधुनाऽऽत्मनोदुःखदग्धान्तःकरणवैक्लव्यम् । यदा यदा तस्य महात्मनः स्मृतिरुदेति तदैव दृष्टिपथोऽन्धकाराच्छन्नो जायते ।

हा ! हन्त ! तेन महात्मना सह कदाचित्सञ्जातपरिचयानामस्माकं तदीयनिधनश्रुत्यैवं वैकल्यं वर्द्धते, तर्हि तेषां तद्गुरुवर्य्याणां चरकसुश्रुतमुनिकल्पानां वृद्धप्रवराणां श्रीव्रजविहारिचतुर्वेदमहोदयानां कीदृशी मनोव्यथा स्याद् ये चाशैशवात्सुतनिर्विशेषं शिवचन्द्रं लालयन्त आयुर्वेदमध्याप्य सर्वथा सर्वतः चिकित्सकाग्रणीमकार्षुरिति ।

किं कथयामः शिवचन्द्रो हि जीवद्दशायां स्वामोघया चिकित्सया सर्वानेव रुजार्दितान्नीरोगानकरोत् । विविधैश्चोपकारैः सर्वानर्थिनः सन्तोषितवान्, परन्तु कालाहिग्रस्तं तं मोचितुं कोऽपि नालमभूदिति तस्य विषये—

पीयूषेण सुराः श्रिया मुररिपुर्मर्य्यादया मेदिनी ।
शक्रः कल्परुहैः शशाङ्ककलया श्रीशङ्करस्तोषितः ॥
मैनाकादिनगा नगारिभयतो यत्नेन संरक्षिता
मच्चूलीकरणे घटोद्भवमुनिः केनापि नो वारितः ॥ इति

पयोधिविलापमेव स्मृतिपथमारोहति । अस्तु, इदानीं कुसमये तं सर्वान्तर्यामिणं श्रीकाशीविश्वेश्वरमेव समभ्यर्थये यत् तदीयात्मने शान्तिं प्रयच्छन् तत्कुटुम्बवर्गेभ्यः, तदीयक्षेत्रिय-व्याधिचिकित्सने व्यापृताय सर्वथा सर्वदा तत्सेवाभिरतात्मने श्रीकालिकाप्रसादशर्मणे, तेभ्यः ख्यातनामभ्यश्चतुर्वेदमहोदयेभ्यश्च तद्वियोगसहनक्षमं धैर्यं वितरत्विति ।

# काशीस्थ राजकीय-संस्कृतकालेज-प्रथमपरीक्षाफलम् ।

## ( सन् १९३१ )

[प्रथमायां प्रथमश्रेण्याम् ।]

[ अत्र योग्यतानुसारेणाङ्कतारतम्यं विज्ञेयम् ]

३५९, २२०५, ४८५, [२०५, २७५] १८०, [३०७ १७४०] ११२२, १२४, ४५१, २०४२, [३१४, २४५४] २०५२, ११८, २१९०, २३, [३१५, १६९६, २०५१] [३१३, ११७०, २०४५, २०४७, २४८२] ४३८, [३०८, ३४८, २२५६] [३११, २६४३] १३०७, २४२८, ३०९, २०८७, ११४६, [१५७०, २०४१] [३१०, ३५०, १७४३, १७५३, २०९८] [१२०, २०६४] १९०२, [५८८ ६२१, १३९१, २४३८, ३०६०] १६५०, [५१२, १५०१] [५०९, १७३४, १८९०] १४६६, ३१२, १४३१, १८४४, २५९२, २९१७] १०४८, १५०४, [१३७, ४६८, १०८१] ४८८ १६१३, १६८५, २२९८, २७६१, २६८३] [७८९, १५६८, १६०१] ।

प्रथमपरीक्षायाम् [ द्वितीयश्रेण्याम् ]

२, ३, ११, १७, १९, २०, २१, २६, २७, ३०, ३८, ३९, ४०, ४१, ४३, ४४, ४५, ४६, ४७, ४८, ५२, ५३, ५५, ६१, ६६, ७२, ८१, ८२, ९१, ९३, ९५, ९६, ९७, ९८, ९९, १००, १०७, १०८, १०९, ११०, १११, ११४, ११६, ११९, १२१, १२५, १२९, १३८, १४०, १४१, १४३, १४५, १५२, १५४, १५५, १५६, १५७, १५८, १६१, १६४, १६५, १६८, १७१, १७३, १७५, १७९, १८१, १९०, १९२, १९३, १९७, १९८, १९९, २००, २०३, २०६, २०८, २०९, २११, २१४, २१५, २१७, २१८, २१९, २२०, २२७, २२८, २२९, २३०, २३२, २३३, २४१, २४२, २४४, २४५, २५८, २६०, २६४, २६७, २६८, २७७, २७८, २७९, २८१, २८२, २८३, २८४, २९०, २९३, २९४, २९५, २९६, ३००, ३०१, ३०३, ३०४, ३०६, ३२१, ३२४, ३३५, ३३९, ३४०, ३४१, ३४३, ३४५, ३४६, ३४९, ३५१, ३५२, ३६०, ३६१, ३६४, ३६८, ६६९, ३७६, ३७९, ३८२, ३८३, ३८९, ३९०, ३९६, ३९७, ३९८, ४००, ४०१, ४०४, ४०६, ४०८, ४०९, ४१०, ४११, ४१३, ४१७, ४१८, ४२०, ४२२, ४२३, ४२८, ४३०, ४३१, ४३३, ४३५, ४४०, ४४१, ४४२ ४४७, ४४८, ४५८, ४६६, ४६९, ४७२, ४७४, ४७५, ४८३, ४८४, ५०२, ५०७, ५०८, ५१४, ५१८, ५२०, ५२१, ५२३, ५२४, ५२५, ५३०, ५३१, ५३२, ५३७, ५४१, ५४२, ५४३, ५४५, ५४६, ५५३, ५७६, ५८१, ५८४, ५९०, ५९२, ५९४, ५९६, ६०६, ६०९, ६१२, ६१३, ६१६, ६२०, ६२१, ६२६, ६२८, ६३५, ६३७, ६४१, ६४२, ६४३, ६४८, ६५०, ६५२, ६५३, ६५५, ६५८, ६६१, ६६४, ६६६, ६८०, ६८३, ६८७, ६८९, ६९१, ६९२, ६९३, ६९४, ६९५, ७०१, ७०५, ७०८, ७१५, ७२२, ७२३, ७२४, ७२९, ७३९, ७४२, ७४४, ७४८, ७५०,

७५१, ७५३, ७५४, ७५८, ७५९, ७६०, ७६६, ७६७, ७६८, ७७०, ७७१, ७७२, ७७४, ७७६, ७८०, ७८२, ७८४, ७९०, ७९६, ७९९, ८०४, ८०९, ८११, ८१९, ८२३, ८२५; ८२६, ८२७, ८३८, ८४०, ८४२, ८६०, ८६४, ८६९, ८७०, ८७१, ८७३, ८७४, ८७६, ८७७, ८७८, ८९१, ८९२, ८९४, ८९५, ९०२, ९०३, ९०५, ९०८, ९१४, ९१९, ९२८, ९३३, ९३४, ९३६, ९३८, ९४६, ९४७, ९४९, ९५०, ९५१, ९५३, ९५७, ९५८, ९५९, ९६०, ९६४, ९७१, ९८४, ९८७, ९८८, ९८९, ९९६, ९९८, ९९९, १००९, १०१४, १०१५, १०१६, १०२८, १०३५, १०३८, १०३९, १०४० १०४१, १०४२, १०४३, १०४६, १०४९, १०५०, १०५२, १०५५, १०५६, १०६२, १०६३, १०६४, १०७५, १०७७, १०८२, ११००, ११०५, ११०६, ११०९ ११२०, ११२६, ११२७, ११३३, ११३५, ११३७, ११३९, ११४०, ११४३, ११४१, ११४७, ११४८, ११४९, ११५०, ११५१, ११५२, ११५४, ११५६, ११५७, ११५८, ११६६, ११६७, ११६८, ११७१, ११८०, ११८५, ११९६, १२०८, १२११, १२१६, १२१७, १२१८, १२१९, १२२१, १२२२, १२२९, १२३१, १२३३, १२३५, १२४४, १२४५, १२४६, १२४७, १२४९, १२५२, १२५८, १२५९, १२६५, १२६६, १२६९, १२७३, १२७४, १२७६, १२८६, १२९६, १२९८, १२९९, १३००, १३०८, १३१०, १३१४, १३१६, १३२४, १३२६, १३३०, १३३४, १३३५, १३३६, १३३८, १३४२, १३४३, १३५८, १३५९, १३६०, १३६१, १३६८, १३७०, १३७६, १३८१, १३८२, १३८६, १३८८, १३९०, १३९२, १३९७, १४०१, १४०६, १४१६, १४१७, १४२३, १४२६, १४२९, १४३०, १४३८, १४५५, १४५६, १४५७, १४६१, १४६३, १४६४, १४६८, १४६९, १४७४, १४७६, १४८१ १४८३, १४८६, १४८७, १४९०, १४९९, १५००, १५०३, १५११, १५१५, १५१६, १५२२, १५२३, १५३०, १५३४, १५३७, १५४१, १५४५, १५५१, १५५२, १५५५, १५६७, १५६९, १५७९, १५८३, १५८४, १५८६, १५८७, १५८८, १५९०, १५९३, १५९४, १५९५, १५९६, १६०२, १६०३, १६०६, १६१५, १६१६, १६१८, १६२२, १६२३, १६२५, १६३७, १६३९, १६४०, १६४१, १६४२, १६४३, १६४७, १६५१, १६५३, १६६२, १६६३, १६७०, १६७२, १६७७, १६८१, १६८४, १६८७, १६९०, १६९३, १६९४, १७००, १७१५, १७२३, १७२४, १७२५, १७२६, १७२७, १७२९, १७३२, १७३६, १७३८, १७४६, १७४९, १७५०, १७५२, १७५५, १७५७, १७५८, १७५९, १७६०, १७६२, १७६४, १७८६, १७८८, १७८९, १७९२, १७९८, १८०२, १८०३, १८०४, १८०५, १८०६, १८०७, १८१८, १८२७, १८३९, १८४१, १८४२, १८४७, १८५०, १८५१, १८५५, १८५९, १८६०, १८६६, १८६८, १८७१, १८८३, १८८५, १८९१, १८९८, १८९९, १९००, १९०३, १९०७, १९१९, १९२७, १९३४, १९४०, १९४१, १९४७, १९५०, १९५२, १९५६, १९६१, १९६७, १९७५, १९७७, १९७८, १९८६, १९९०, १९९१, १९९३, १९९८, १९९९, २०००, २००३, २०१३, २०१५, २०१८, २०१९, २०२०, २०२१, २०३३, २०३४, २०४०, २०४३, २०४६, २०४९, २०५३, २०५४, २०५५, २०५९, २०६५, २०६६, २०६७, २०६८, २०७०, २०७४, २०७५, २०७७, २०७८, २०८४, २०९१, २०९३,

---

# काशीस्थ राजकीय-संस्कृतकालेज परीक्षाफलम् ।

## ( सन् १९३१ )

### ( व्याकरण मध्यमायां प्रथमखण्डे )

### ( द्वितीय श्रेण्याम् )

२, ३, ४, १४, १६, १८, १९, २०, २१, २५, २६, २८, २९, ३०, ३२, ३३, ३४, ३९,
४१, ४७, ४९, ५१, ५२, ५५, ५६, ५८, ६३, ६४, ६६, ६८, ७०, ७१, ७६, ७७, ७९,
८१, ८४, ८६, ८८, ९२, ९७, १०३, १०५, १०६, १०७, १११, ११२, ११३, ११६,
११९, १२०, १२३, १२५, १२८, १२९, १४०, १४३, १४९, १५१, १५२, १६०, १६२,
१७४, १७६, १८०, १८१, १८२, १८४, १८५, १८७, १९१, १९२; १९३, १९५, १९६,
१९७, २००, २०२, २०३, २०५, २०६, २०७, २०९, २११, २१३, २१४, २१७, २१८,
२१९, २२०, २२१, २२२, २२५, २२८, २२९, २३०, २३२, २३३, २३५, २३६ २३७,
२३८, २४०, २४१, २४२, २४४, २४६, २४७, २५२, २५४, २५६, २५९. २६२, २६५,
२६६, २६७, २७०, २७१, २७३, २७५, २८१, २८२, २८३, २८५, २८८, २९३, २९४, २९९,
३००, ३०४, ३०५, ३०६, ३०७, ३०८, ३११, ३१२, ३१३, ३१५, ३१७, ३१९, ३२२,
३२४, ३२५, ३२६, ३२८, ३३१, ३३२, ३३४, ३३५, ३३८, ३४१, ३४२, ३४३, ३४५,
३४८, ३६३, ३६४, ३७६, ३७९, ३८२, ३८६, ३९०, ३९३, ३९४, ३९५, ४००, ४०५,
४०७, ४०८, ४११, ४१४, ४१६, ४१८, ४२२, ४२५, ४३०, ४३१, ४३३, ४३४, ४३५,
४३६, ४३७, ४३८, ४४१, ४४५, ४४७, ४४८, ४४९, ४५०, ४५१, ४५४, ४५५, ४५८,
४५९, ४६१, ४६२, ४६३, ४६४, ४६९. ४७०, ४७१, ४७४, ४७६, ४७८, ४७९, ४८०, ४८३,
४८४, ४८५, ४८६, ४८९, ४९१, ४९३, ४९८, ५०१, ५०४, ५०६, ५०८, ५२२, ५२७,
५२९, ५३७, ५४३, ५४४, ५५२, ५५३, ५५७, ५५८, ५६५, ५६८, ५७०, ५७३, ५७५,
५७७, ५७८, ५८९, ५९०, ५९१, ५९६, ५९७, ५९९, ६००, ६०१, ६०४, ६०७,
६२३, ६२४, ६२७, ६३२, ६३३, ६४०, ६४१, ६४२, ६४३, ६५१, ६५३, ६६२, ६६३,
६६४, ६६६, ६६७, ६६८, ६६९, ६७०, ६७१, ६७२, ६७७, ६८१, ६८३, ६८४, ६८५,
६८९, ६९०, ६९१, ६९४, ६९६, ६९८, ६९९, ७०३, ७०९, ७१०, ७११, ७१२, ७१८,
७२०, ७२२, ७२३, ७३१, ७४६, ७५६, ७६०, ७७०, ७७२, ७७५, ७७६, ७८१, ७८३,
७८७, ७९५, ८०४, ८१९, ८२१, ८३०, ८३३, ८३५, ८३६, ८३८, ८४०, ८४६, ८४७,
८५४, ८५५, ८५७, ८५९, ८६०, ८६४, ८६६, ८७४, ८७८, ८८०, ८८३, ८८५, ८८६,
८९३, ८९७, ९०३, ९१३, ९१४, ९१९, ९२८, ९३८, ९३९, ९४०, ९४१, ९४४, ९४६, ९४७,
९५२, ९५४, ९५६, ९६४, ९७२, ९८०, ९८४, ९८५, ९८९, ९९६, ९९७, ९९८, ९९९,
१०००, १००१, १००२, १००४, १००६, १००७, १०१४, १०१६, १०१७, १०१८,
१०२०, १०२१, १०२३, १०२४, १०२७, १०२९, १०३०, १०३१, १०४३, १०५४,

१०५८, १०५९; १०६०, १०६१, १०६६, १०६८, १०६९, १०७५, १०८०, १०८५, १०८७, १०८९, १०९५, १०९७, १०९८, १०९९, ११००, ११०६, ११०७, १११३, १११४, १११५, १११६, ११२०, ११२१; ११२२, ११२३, ११२४; ११२६, ११३१ ११३६, ११४२, ११४४, ११४८, ११५८, ११६३, ११६४, ११६५, ११७२, ११७६, ११८३, ११८७, ११८८, ११९१, ११९३, ११९४, ११९५, ११९८, १२००, १२०३, १२०४, १२०५; १२०७, १२१०, १२१२, १२१४, १२१६, १२१७, १२१८, १२१९, १२२३, १२२४, १२२६, १२२७, १२२८, १२३४, १२३६, १२३८, १२४३, १२४७, १२४८, १२४९, १२५०, १२५१, १२५३, १२५४, १२५६, १२६०, १२६७, १२६८, १२६९, १२७१, १२७२, १२७३, १२७५, १२७८, १२८३, १२८४, १२८७, १२८८, १२८९. १२९१, १२९२, १२९४, १२९५, १२९९, १३०३, १३०४, १३०५, १३०७, १३१३, १३१४, १३१६, १३२४, १३२७, १३२८, १३३२, १३३३, १३३४, १३३७, १३४०, १३४३, १३४४, १३४६, १३४७, १३४९, १३५०, १३५२, १३५३, १३५४, १३५५, १३६१, १३६७, १३६९, १३७१, १३७४, १३७६, १३८६, १३९१, १३९४, १३९७, १४००, १४०५, १४०८, १४१०, १४११, १४१२, १४१३, १४१८, १४२०, १४२२, १४२३, १४२५, १४२६, १४२९, १४३१, १४३३, १४३४, १४३६, १४३८, १४३९, १४४०, १४४५, १४४७, १४४८, १४४९, १४५०, १४५२, १४५४, १२५५, १४५६, १४६०, १४६३, १४७२, १४७४, १४७६, १४७७, १४८४, १४८५, १४८७, १४८८, १४९१, १४९२, १४९४, १४९६, १४९७, १५०१, १५०२, १५०४, १५०७, १५०९, १५१२, १५१३, १५१९, १५२१, १५२४, १५२६, १५२७, १५२९, १५३३ ।

प्रथमखण्डे—४३०६ (A), ४३०६ (I)

साहित्यप्रथमखण्डे—

१५३९, १५४०, १५४३, १५४४, १५५५, १५५६, १५६१, १५६८, १५७६, १५८५, १५८७, १५८८, १५८९, १५९२, १५९४, १५९९, १६००, १६०७, १६११, १६१४, १६१९, १६२०, १६२२, १६२३, १६२७, १६२८, १६३२, १६३६, १६३९ ।

न्याय प्रथमखण्डे—

१६४०, १६४२, १६४५, १६४७, १६४८, १६५२ ।

ज्यौतिष प्रथमखण्डे—१६६७, १६६८, १६७५, १६७८ ।

वेदप्रथमखण्डे ।

१६८१, १६८२, १६८४, १६८५, १६८६, १६८७, १६८८ ।

व्याकरण द्वितीयखण्डे ।

१६९९, १७००, १७०१, १७०५, १७०६, १७०८, १७०९, १७१०, १७१२, १७२०, १७२१, १७२७, १७२९, १७३१, १७३२, १७३५, १७३६, १७३८, १७४२, १७४४, १७४६, १७४७, १७४९, १७५१, १७५२, १७५३, १७५४, १७५५, १७५७, १७५८, १७५९, १७६१, १७६२, १७६३, १७६६, १७६८, १७६९, १७७१, १७७४,

१७८०, १७८२, १७८७, १७९२, १७९३, १७९९, १८०२, १८१०, १८११, १८१२,
१८१३, १८१५, १८१६, १८१९, १८२०, १८२१, १८२२, १८२३, १८२४,
१८२६, १८२७, १८२८, १८२९, १८३०, १८३१, १८३२, १८३५, १८३७,
१८३९, १८४२, १८४३, १८४६, १८४९, १८५२, १८५३, १८५५, १८५६, १८५७,
१८५९, १८६२; १८६९. १८७३, १८७६, १८७९, १८८०, १८८१, १८८२, १८८३,
१८८४, १८८५, १८८७, १८९०, १८९९, १९०१, १९०२, १९०३, १९०७,
१९०८, १९०९, १९१०, १९१४, १९१५, १९१६, १९२०, १९२१, १९२२,
१९२३, १९२५, १९२६, १९२८, १९२९, १९३१, १९३५, १९३६, १९४३, १९४४,
१९४५, १९४६, १९४७, १९४९; १९५२, १९५५, १९५८, १९५९, १९६०, १९६१,
१९६३, १९६४, १९६५, १९६६, १९६८, १९६९ १९७०, १९७२, १९७३, १९७४,
१९७५, १९८४, १९९०, १९९१, १९९३, १९९४, १९९५, १९९७, १९९८, २००३,
२००४, २००८, २००९, २०११, २०१२, २०१३, २०१५, २०१६, २०१७, २०१९,
२०२०, २०२२, २०२३, २०२४, २०२७, २०३०, २०३१, २०३४, २०३६, २०३७,
२०४२, २०४३, २०४४, २०४५, २०४८, २०४९, २०५०, २०५१, २०५४, २०६३,
२०६५, २०६६, २०६७, २०६९, २०७०, २०७१, २०७२, २०७५, २०७७, २०७८,
२०८१, २०८२, २०८५, २०८७, २०८८, २०९०, २०९३, २०९४, २०९६, २०९९, २१००,
२१०१, २१०३, २१०४, २१०६, २१०७, २१०९, २११०, २१११, २११२,
२११३, २११४, २११५, २११७, २११८, २११९, २१२०, २१२२, २१२४, २१२६,
२१२७, २१२८, २१२९, २१३०, २१३३, २१३५, २१३६, २१३७, २१३८,
२१४०, २१४३, २१४४, २१४७, २१४८, २१५१, २१५४, २१५५,
२१५६, २१५७, २१५८, २१६१, २१६३, २१६४, २१६५, २१६८, २१६९,
२१७०, २१७३, २१७४, २१७५, २१७७, २१७८, २१७९, २१८०, २१८१, २१८३,
२१८४, २१८५, २१८६, २१८७, २१८८, २१८९, २१९०, २१९३, २१९४, २१९६,
२१९७, २१९९, २२००, २२०१, २२०३, २२०४, २२०६, २२०७, २२०८, २२०९,
२२१०, २२११, २२१२, २२१३, २२१४, २२१६, २२२१, २२२२, २२२९, २२३७,
२२३९, २२४०, २२४१, २२४२, २२४३, २२४६, २२४८, २२५१, २२५२,
२२५३, २२५४, २२५६, २२५७, २२५८, २२५९, २२६०, २२६१, २२६३, २२६९,
२२७१, २२७२, २२७४, २२७६, २२७७, २२७९, २२८३, २२८४, २२८५, २२८७,
२२८८, २२९०, २२९३, २२९४, २२९७, २२९९, २३००, २३०१, २३०२,
२३०३, २३०४, २३०५, २३०६, २३०७, २३०८, २३०९, २३१०, २३११, २३१२,
२३१६, २३१८, २३१९, २३२१, २३२४, २३२५, २३२६, २३२७, २३३०, २३३३,
२३३५, २३३६, २३३७, २३३८, २३४२, २३४३, २३४५, २३४६, २३४८, २३४९,
२३५०, २३५१, २३५२, २३५४, २३५५, २३५६, २३५८, २३५९, २३६१, २३६२,
२३६६, २३६७, २३६८, २३६९, २३७०, २३७१, २३७३, २३७४, २३७६, २३७७,
२३७८, २३७९, २३८१, २३८२, २३८३, २३८५, २३८७, २३८८, २३८९, २३९३,
२३९५, २३९६, २३९७, २३९८, २४००, २४०१, २४०३, २४०४, २४०६, २४०७,

२४०८, २४११, २४१२, २४१४, २४१५, २४१८, २४१९, २४२१, २४२२, २४२३, २४२४, २४२५, २४२६, २४२९, २४३०, २४३१, २४३२, २४३३, २४३४, २४३६, २४३७, २४४१, २४४३, २४४४, २४४८, २४५१, २४५३, २४५४, २४५५, २४५६, २४५७, २४५९, २४६१, २४६३, २४६५, २४६८, २४७०, २४७१, २४७२, २४७५, २४७६, २४७७, २४७८, २४७९, २४८२, २४८६, २४८७, २४९०, २४९१, २४९३, २४९९, २५०२, २५०४, २५०५, २५०७, २५०९, २५११, २५१२, २५१६, २५१८, २५२२, २५२३, २५२५, २५२६, २५२७, २५२८, २५३२, २५३३, २५४३, २५४७, २५४८, २५४९, २५५१, २५५३, २५५४, २५५५, २५५६, २५५७, २५६२, १५६३, २५६५, २५७१, २५७३, २५७५, २५७६, २५७८, २५७९, २५८०, २५८१, २५८३, २५८८, २५९२, २५९४, २५९५, २६००, २६०१, २६०२, २६०४, २६०५, २६०६, २६०७, २६०८, २६०९, २६१३, २६१६, २६१७, २६१९, २६२०, २६२२, २६२३, २६२६, २६२७, २६२८, २६२९, २६३०, २६३१, २६३२ २६३८, २६३९, २६४०, २६४२, २६४३, २६४४, २६४६, २६४८, २६५२, २६५६, २६५९, २६६०, २६६१, २६६३, २६६८, २६७०, २६७१, २६७२, २६७३, २६७५, २६७६, २६७७, २६८०, २६८१, २६८३, २६८७, २६८८, २६९०, २६९२ ।

द्वितीयखण्डे—४३०६ (H)

साहित्य द्वितीयखण्डे—२७००, २७०१ ।

न्याय द्वितीयखण्डे—२७०६, २७०७ ।

ज्यौतिष द्वितीयखण्डे—२७०८, २७०९, २७१०, २७११ ।

वेद द्वितीयखण्डे—२७१६, २७१७, २७१८, २७१९, २७२०, २७२१, २७२२ ।

व्याकरण तृतीयखण्डे ।

२७२५, २७२६, २७२७, २७२८, २७२९, २७३३, २७३७, २७३९, २७४२, २७४६ २७५०, २७५२, २७५८; २७५९, २७६०, २७६३, २७६४, २७६५, २७६७, २७६८, २७६९, २७७२, २७७३, २७७४, २७७७, २७८१, २७८३. २७८६, २७९८, २७९९, २८०३, २८०५, २८०६, २८०७, २८०८, २८०९, २८१०, २८११, २८१३, २८१४, २८२२, २८२५, २८३२, २८३७, २८३८, २८४०, २८४२, २८४६, २८५१, २८५३, २८५४, २८५५, २८६२, २८६३, २८६८, २८८०, २८८४. २८८९, २८९१, २८९२, २८९३, २८९४, २८९५, २८९६, २८९७, २८९९, २९००, २९०१, २९०५, २९१३, २९१७, २९१९, २९२२, २९३२, २९३४, २९३५, २९३८, २९४०, २९४३, २९४४, २९४५, २९४७, २९४८, २९५०, २९५२, २९५३, २९५४, २९५५, २९५६, २९५७, २९५८, २९६३, २९६५, २९६८, २९७६, २९७८, २९८२, २९८३, २९८५, २९८७, २९८८, २९८९, २९९१, २९९२, २९९३, ३००१, ३००२, ३००३, ३००४, ३००६, ३००७, ३००८, ३०१०, ३०१३, ३०१६, ३०२१, ३०२३, ३०२४, ३०२५, ३०२६, ३०२७, ३०२९, ३०३१, ३०३८, ३०४१, ३०४३, ३०४४, ३०४५, ३०४६, ३०५१, ३०५२,

३०५५, ३०५८, ३०५९, ३०६०, ३०७४, ३०७५, ३०७७, ३०८५, ३०८९, ३०९७, ३१०१, ३१०७, ३११०, ३१११, ३११२, ३११४, ३११५, ३१३४, ३१३६, ३१४०, ३१४१, ३१४२, ३१५६, ३१५७, ३१५८, ३१६४, ३१६६, ३१६९, ३१७०, ३१७१ ३१७३, ३१८१, ३१८२, ३१८३, ३१८६, ३१८७, ३१८९, ३१९०, ३१९२, ३१९८, ३२०२, ३२०४, ३२०६, ३२०७, ३२०८, ३२०९, ३२१०, ३२११, ३२१२, ३२१६, ३२१८, ३२२०, ३२२४, ३२२९, ३२३०, ३२३६, ३२४०, ३२४२, ३२४३, ३२४६, ३२४७, ३२४८, ३२४९, ३२५०, ३२५३, ३२५४, ३२५५, ३२५८, ३२५९, ३२६०, ३२६४, ३२६५, ३२६९, ३२७२, ३२७३, ३२७४, ३२७५, ३२७७, ३२७९, ३२८१, ३२८२, ३२८४, ३२८५, ३२८७, ३२८८, ३२८९, ३२९१, ३२९२, ३२९३ ३२९४, ३२९५, ३२९६, ३२९७, ३२९८, ३२९९ ३३००, ३३०१, ३३०२, ३३०३, ३३०७, ३३०८, ३३१०, ३३१३, ३३१७, ३३२२, ३३२४, ३३२६, ३३२८, ३३२९, ३३३०, ३३३३, ३३४२, ३३४६, ३३४८, ३३४९, ३३५१, ३३५३, ३३५४, ३३५५, ३३५७, ३३६०, ३३६१, ३३६२, ३३६३, ३३६५, ३३६६, ३३६८, ३३७०, ३३७७, ३३७९, ३३८०, ३३८१, ३३८३, ३३८४, ३३८५, ३३८७, ३३८८, ३३८९, ३३९०, ३३९१, ३३९२, ३४०३, ३४०४, ३४०६, ३४०७, ३४१४, ३४१७, ३४२१, ३४२२, ३४२४, ३४२६, ३४२७, ३४२९, ३४३१, ३४३५, ३४३६, ३४३७, ३४३९, ३४४१, ३४४२, ३४४६, ३४५१, ३४५४, ३४५५, ३४५६, ३४५८, ३४६४, ३४६९, ३४७०, ३४७२, ३४७४, ३४८०, ३४८४, ३४८९; ३४९०, ३४९३, ३४९४, ३४९५, ३४९९, ३५०५, ३५०६, ३५१०. ३५११, ३५१२, ३५१३, ३५१८, ३५२२, ३५२५, ३५२७, ३५२९, ३५३०, ३५३१, ३५३३, ३५३५, ३५३६, ३५३७, ३५४१, ३५४३, ३५४४, ३५४८ ३५५०, ३५५१, ३५५३, ३५५७, ३५५९, ३५७४, ३५७८, ३५८०, ३५८३, ३५८५, ३५८६, ३५८७, ३५९०, ३५९१, ३५९२, ३५९३, ३५९४, ३५९६, ३५९८, ३६०३, ३६०४, ३६०६, ३६०७, ३६१२, ३६१६, ३६२०, ३६२२, ३६२४, ३६३२, ३६३४, ३६३५. ३६३६, ३६३७,

साहित्य तृतीयखण्डे—

३६३८, ३६४०, ३६४१, ३६४२, ३६४४, ३६४५, ३६४६, ३६४७, ३६४८, ३६४९, ३६५१ ३६५२, ३६५३, ३६५४, ३६५६, ३६५७, ३६५९,

न्याय तृतीयखण्डे—

३६६३ ।

ज्यौतिष तृतीयखण्डे—

३६६४, ३६६९, ३६७०, ३६७१,

वेद तृतीयखण्डे—

३६७३, ३६७५, ३६७६, ३६७७, ३६७८ ।

## व्याकरण चतुर्थखण्डे

३६८१, ३६८२, ३६८४, ३६८५, ३६८६, ३६८८, ३६९१, ३६९२, ३६९४, ३६९५, ३६९६, ३६९७, ३७००, ३७०२, ३७०३, ३७०७, ३७०८, ३७१०, ३७११, ३७१२, ३७१३, ३७१४, ३७१५, ३७१६, ३७२१, ३७२३, ३७२४, ३७२६, ३७३०, ३७३३, ३७३४, ३७३५, ३७३६, ३७३७, ३७३८, ३७३९, ३७४०, ३७४२, ३७४३, ३७४४, ३७४५, ३७४६, ३७४७, ३७४८, ३७४९, ३७५०, ३७५२, ३७५३, ३७५४, ३७५५, ३७५६, ३७५७, ३७५८, ३७५९, ३७६०, ३७६१, ३७६२, ३७६३, ३७६४, ३७६६, ३७६७, ३७६८, ३७६९, ३७७०, ३७७२, ३७७३, ३७७४, ३७७५, ३७७६, ३७७७, ३७७८, ३७७९, ३७८०, ३७८१, ३७८३, ३७८६, ३७८७, ३७८९, ३७९०, ३७९१, ३७९३, ३७९४, ३७९६, ३७९७, ३७९९, ३८००, ३८०१, ३८०४, ३८०६, ३८०८, ३८०९, ३८११, ३८१२, ३८१३, ३८१४, ३८१६, ३८१७, ३८१८, ३८१९, ३८२०, ३८२२, ३८२४, ३८२५, ३८२६, ३८२८, ३८३०, ३८३२, ३८३३, ३८३५, ३८३६, ३८३७, ३८३८, ३८३९, ३८४०, ३८४१, ३८४२, ३८४३, ३८४४, ३८४६, ३८४७, ३८४८, ३८५०, ३८५१, ३८५२, ३८५३. ३८५४, ३८५५, ३८५८, ३८५९, ३८६०, ३८६१, ३८६२, ३८६३ ३८६४, ३८६५, २८६६, ३८६७, ३८६९, ३८७०, ३८७१, ३८७३, ३८७४, ३८७५, ३८७९, ३८८६, ३८८७, ३८८८, ३८८९, ३८९०, ३८९१, ३८९२, ३८९३, ३८९५, ३८९८, ३८९९, ३९००, ३९०१, ३९०२; ३९०४, ३९०८, ३९०९, ३९१०, ३९११, ३९१२, ३९१४, ३९१५, ३९१६, ३९१७, ३९१८, ३९१९, ३९२१, ३९२२, ३९२३, ३९२४, ३९२५, ३९२७, ३९२८, ३९३०, ३९३२, ३९३३, ३९३५, ३९३६, ३९३७, ३९३९. ३९४१, ३९४२, ३९४३, ३९४४, ३९४५, ३९४८, ३९४९, ३९५१, ३९५२, ३९५३, ३९५४, ३९५५, ३९५६, ३९६०, ३९६२, ३९६५, ३९६६, ३९६७, ३९६८, ३९६९, ३९७०, ३९७१, ३९७४, ३९७६, ३९८०, ३९८१, ३९८५, ३९८६, ३९८७, ३९९३, ३९९४, ३९९५, ३९९६, ३९९७, ३९९९, ४००५, ४००९, ४०१४, ४०१५. ४०१९, ४०२०, ४०२२, ४०२४, ४०२५, ४०२७, ४०२९, ४०३१, ४०३३, ४०३४, ४०३५, ४०३६, ४०३८, ४०३९, ४०४६, ४०४८, ४०४९, ४०५०, ४०५१, ४०५२, ४०५३, ४०५५, ४०५३, ४०५८, ४०६०, ४०६१, ४०६६, ४०६७, ४०६९, ४०७१, ४०७३, ४०७५, ४०८०, ४०८३, ४०८४, ४०८५, ४०८६, ४०८८, ४०८९, ४०९०, ४०९१, ४०९३, ४०९४, ४०९५, ४०९७, ४०९९, ४१००, ४१०१, ४१०२, ४१०३, ४१०४, ४१०८, ४१०९, ४११०, ४१११, ४११२, ४११३, ४११६, ४११७, ४११८, ४११९, ४१२०, ४१२१, ४१२२, ४१२६, ४१२७, ४१२९, ४१३०, ४१३१, ४१३२, ४१३५, ४१३७, ४१३९, ४१४२, ४१४६, ४१४९, ४१५०, ४१५१, ४१५२, ४१५३, ४१५४, ४१५५, ४१५६, ४१५८, ४१६०, ४१६१, ४१६३, ४१६४, ४१६६, ४१६७, ४१६८, ४१७३, ४१७४, ४१७६, ४१७९, ४१८०, ४१८१, ४१८५, ४१८६, ४१८७, ४१९४, ४१९५, ४१९६, ४१९८, ४१९९, ४२०१, ४२०४, ४२१०, ४२११, ४२१२, ४२१९, ४२२०, ४२२१, ४२२४,

४२२५, ४२२६, ४२२७, ४२२८, ४२२९, ४२३३, ४२३७, ४२४०, ४२४१, ४२४२, ४२४३, ४२४५, ४२४६, ४२४९, ४२५०, ४२५१, ४२५२, ४२५३, ४२५५, ४२५६, ४२५९, ४२६०, ४२६२, ४२६३, ४२६४, ४२६७, ४२७०, ४२७३, ४२७७, ४२७८, ४२७९, ४२८०, ४२८१, ४२८६, ४२८७, ४२९० ।

साहित्य चतुर्थखण्डे ।

४२९३, ४२९४, ४२९७ ४२९८, ४२९९, ४३०१ ।

न्याय चतुर्थखण्डे ।

४३०३ ।

[ व्याकरण मध्यमायां प्रथमखण्डे ( प्रथमश्रेण्याम् ) ]

१५, ३५, ६०, ११५, ११८, १५२, १५५, १७१, १७२, ३१०, ४२८, ५२४, ५२५, ५२६, ५३४, ५५४, ५८१, ६०८, ६२२, ६२६, ६८८, ७१७, ७२६, ८३७, ८९४, १०१५, १०२२, १०८४, ११४७, ११४९, १२२१, १२३५, १२३७, १२७९, १३५१, १३५६, १३५९, १३६८, १३७०, १४०४, १४१७, १४१९, १४७८, १४९०, १४९५, १५३७.

साहित्य मध्यमायां प्रथमखण्डे (प्रथमश्रेण्याम)

१५४२, १५८६, १५९६, १६१३,

न्याय प्रथम खण्डे (प्रथमश्रेण्याम्)

१६४३, १६५३, १६५७,

व्याकरण द्वितीयखण्डे-( प्रथमश्रेण्याम् )

१६९७, १६९८, १७१६, १७४५, १७५६, १७७२; १७७७, १७८१, १७८३, १७९१, १७९४, १८२५, १८३४, १८८८, १८९३, १९३०, १९५३, १९६२, १९७६, १९८३ १९८५, २००६, २०१८, २०२१, २०५२, २०५४, २०८४, २०८९, २०९१, २०९२, २१२५, २१७९, २१८२, २२०२, २२२८, २२६६, २२६७, २२९५, २३१५, २३४७, २३६५, २३९१, २३९९, २४०२, २४०५, २४१६, २४१७, २४२०, २४३५, २४४५, २४४७, २४६७, २५५२, २६२४, २६४९,

साहित्य द्वितीयखण्डे-( प्रथमश्रेण्याम् )

२६९८,

न्यायद्वितीयखण्डे-(प्रथमश्रेण्याम)

२७०४,

ज्योतिषद्वितीयखण्डे-( प्रथमश्रेण्याम् )

२७१२, २७१४,

व्याकरण तृतीयखण्डे ( प्रथमश्रेण्याम् )

२७४५, २७६२, २७६६, २७७९, २८०२, २८७४, २९९९, ३००९, ३०११, ३०२२, ३१९१, ३२५१, ३२९०, ३३०२, ३३०४, ३३१२, ३३६९, ३३९६, ३४७७, ३५१७, ३५४२, ३६१०, ३६१५,

साहित्यतृतीयखण्डे ( प्रथमश्रेण्याम् )

३६५०,

ज्यौतिष तृतीयखण्डे ( प्रथमश्रेण्याम् )

३६६५, ३६६७,

व्याकरण चतुर्थखण्डे ( प्रथमश्रेण्याम् )

३६८३, ३६८७, ३६८९, ३६९०, ३६९७, ३७०४, ३७१७, ३७१९, ३७२०, ३७२५, ३७२९, ३७३२, ३७६५, ३७८८, ३७९५, ३७९८, ३८०७, ३८४५, ३८४९, ३८७७, ३९८८, ४०३२, ४०४७, ४०८७, ४०९६, ४१०७, ४२२२, ४२६१,

साहित्य चतुर्थखण्डे ( प्रथमश्रेण्याम् )

४२९४, ४२९५, ४२९६,

ज्यौतिष चतुर्थखण्डे ( प्रथमश्रेण्याम् )

४३०५,

---

इमे सर्वेऽपि परीक्षाफलाङ्काः सर्वथा सम्यक् संशोध्य प्रकाश्यन्ते । अत्र प्रमादिसम्भावनायां राजकीय 'गेजेट' पत्रमेवावलोकनीयम् । व्यवस्थापकः (सूर्योदयस्य) ।

मममैवैका कला शक्तेरुद्भिज्जेषु विकाशते ।
स्वेदजेषु कला द्वैत मण्डजेषु कलात्रयम् ।
चतस्रश्च कला भान्ति जरायुजगणेऽखिले ।
पञ्चकोशप्रपूर्णत्वान्मर्त्येषु प्रायशोऽमराः ।
आकला-पञ्चकादष्ट कला नूनं चकाशति ।
नवभ्यः षोडशीं यावत् कलाः सर्वा यथायथम् ।
संविकास्यावतारेषु नानाकेन्द्रोद्भवेष्वपि ।
कुत्रचिन्मे प्रपूर्य्यन्तेऽवतारे पूर्णसंज्ञके ॥ ७० ॥

इदानीं पञ्चम्यां प्रवेशप्रकारमाह—

**तत्र गोसिंहमर्कटतो मानवो गुणभेदात् ॥ ७१ ॥**

प्राक्तनीनां चतसृणां योनीनामभिव्यक्तिप्रकारं निरूप्य सम्प्रति जरायुजानां जीवानां पूर्णविकासात्मिकायां मानव्यां योनौ प्रवेशप्रकारं सूत्रेणानेन निर्दिशति ।

स्वाभाविकस्य संस्कारस्य प्रभावतः प्रकृतिदेव्याः साहजिकनियमानुकूलतः स्वेदजाण्डजजरायुजासु योनिषु यथानियमं यथाक्रमञ्च संवर्द्धमाना जीवाश्चरमायां जरायुजयोनौ गुणत्रयस्य स्वाभाविकपरिणामवशाद् वानर-सिंह गोजातिषु समागत्य विश्राम्यन्ति । इदञ्च भेदत्रयं तमोरजःसत्त्वात्मकस्य गुणत्रयस्य यथाक्रमपरिणामतो ज्ञेयम् । जीवानामस्याः स्वाभाविक्या गते र्हेतुः स्वाभाविकः संस्कारः स्वाभाविको गुणत्रयस्य परिणामोऽवसेयः । देवानां साहाय्येन चेयं गति र्नियोजिता भवतीत्यवधेयम् ।

कर्मणो जड़त्वात् स्वाभाविकस्य संस्कारस्य जीवसंकल्पजन्यत्वाभावात् प्रत्येकयोनिरक्षकाः तत्सञ्चालकाश्च पृथक्‌विभिन्ना देवा विद्यन्ते । यथा चैकयोनितो द्वितीय-योनिप्रापणाय प्रत्येक-योनिश्रेणिस्थानां जीवानां संरक्षणाय च प्रत्येक-ब्रह्माण्डसंरक्षकस्य मूर्तित्रयात्मकस्येश्वरस्याज्ञयाऽन्ये देवाः सदा व्यापृता इति दैवीमीमांसादर्शने विस्तरशो वर्णितम् ।

यद्यपि मर्कट सिंह-गावो जरायुजा एव जीवा मानवोऽपि जरायुज एव जीवस्तथापि तेषु केवलं कोशचतुष्टयस्य कलाचतुष्टयस्यैव च विद्यमानत्वात् मानवयोनौ च कोशपञ्चकस्यापि पूर्णविकाश-सत्त्वात् तस्या योनेश्च पूर्णावयव-सम्पन्नत्वात् तस्यां योनौ प्रापणतः पूर्वं तदधिकारनियुक्ता देवाः पूर्वोक्त-मर्कट-सिंहगोयोनिगानां जीवानां शरीरावसाने जाते विशेषव्यवस्थया मानवयोनौ तान् प्रापयन्तीति हेतो रनार्य्यमानवजातावपि गुणत्रयस्य श्रेणिविभागो दृश्यते ॥७१॥

अधुना पञ्चमं विवेचयति—

पञ्चकलः सः ॥ ७२ ॥

प्रकृतितरङ्गाणां स्वाभाविकनियमतोऽग्रे समेधमानो जीवोऽस्यां मानवयोनौ समेत्य स्वत एव पञ्चकोशविकाशमासाद्य चित्कलायाः पञ्चभि रंशैः परिपूर्णो भवतीत्यत्र स्वाभाविकस्य संस्कारस्य प्रभावः प्रकृतिदेव्याश्च स्वाभाविकः परिणामो हेतु रवसेयः । अत्र च योनौ समेत्य जीवः स्वाधीनो भूत्वा स्वपिण्डाधीश्वरो भवन् पूर्वोक्त-प्रकृतिपराधीनतां विजहाति ॥ ७२ ॥

इदानीं प्रसङ्गसङ्गत्याऽस्वाभाविकानां संस्काराणामुत्पत्तिं गतिञ्चाभिदधाति—

तद्धर्म्मसम्बद्धत्वात् पूर्णकलत्वमस्य ॥ ७३ ॥

तत् तस्माद् हेतोः धर्मेण सम्बद्धः तस्य भावस्तस्माद् अस्य स्वाभाविकस्य संस्कारस्य पूर्णा कला यस्य तस्य भावस्तत्वमित्यर्थः । अर्थात् स्वाभाविको हि संस्कारः धर्मसम्बद्धश्चेत् पूर्णाभिः कलाभिः समन्वितो भवतीति सूत्रार्थः ।

स्वाभाविकस्य संस्कारस्य प्रभावेणैव जीव उद्भिज्ज-योनितः संसरन् मानवयोनिमुपैति । इह मानवयोनौ समागत्य जीवः स्वपिण्डेश्वरो भूत्वा स्वसंकल्प-सम्बन्धादिना स्वाधीनतामधिगत्य स्वतन्त्रः सन् धर्म्माधर्म्मोपार्जनाधिकारवान् अस्वाभाविकानपि संस्कारान् समुपार्जयति ।

विज्ञानमिदमन्यथापि बोद्धुमुपार्य्यते । यथा-मानवयोनितः पूर्वयोनिषु सर्वास्वपि यां क्रमोन्नतिमासादयन् जीवः समेधमान आसीत्, सा सर्वाऽपि क्रमोन्नतिरिह मानवयोनावागत्य निरुध्यते । तत्रेदं प्रधानं कारणमवगन्तव्यम् यत् प्रकृतिपराधीनोद्भिज्जादि-श्रेणिगो जीवः केवलं स्वाभाविकसंस्कार-प्रभावेनैव यां नियमितां क्रमोन्नतिमासादयन् समेधते सा क्रमोन्नतिरिह मनुष्ययोनौ निरुध्यते । यतो हि इह मानवयोनौ समेत्य जीवः पूर्णत्वमधिगत्य नूतनान् संकल्पान् विदधद् यान् अस्वाभाविकान् संस्कारान् समुपार्जयति, ते हि पापपुण्यात्मका धर्माधर्ममूलकाः संस्कारा जीवान् गमागमचक्रे पातयित्वा भ्रामयन्ति । इत्यत एवोद्भिज्जादियोनिषु निर्बाधं प्रसरन्ती क्रमोन्नतिरत्र विहन्यते । अतश्चेश्वरवद्यथा मानवो यदाऽधर्म्मं विहाय धर्म्ममाचरति तदा चित्कलायाः पूर्णत्वमधिगत्य निःश्रेयसमप्याश्रयितुं समर्थो भवति ॥ ७३ ॥

कथं सम्यक् विकासो भवतीत्याह—

तद्विकासो विशेषतः ॥ ७४ ॥

यद्यपि मानवधर्म्माणां साधारणविशेषासाधारणापद्धर्म भेदेन चत्वारो

भेदाः प्रथममभिहितास्तथापि तेषु विशेषधर्मप्रभावेणैवाभ्युदयगतिरबाधं प्रवर्त्ततेऽत एवान्यत्रापि स्मृतिशास्त्रे विशेषधर्मं तुष्टुवु र्महर्षयः ।

यं पृथग् धर्मचरणाः पृथग्धर्मफलैषिणः ।
पृथग्धर्म्मैः समर्चन्ति तस्मै धर्मात्मने नमः ॥

अस्य विशेषधर्म्मस्य स्तुतावयमभिसन्धिर्यत्-पुरुषो नारी वा स्यात् यस्य कस्यापि वर्णस्याश्रमस्य वान्तर्गतः स्यात्, प्रवृत्तिमार्गाश्रितो निवृत्तिपथप्रवृत्तो वा स्यात् । यस्मिन्कस्मिन् वाऽधिकारे संसक्तो जीवः स्वाधिकारप्राप्तधर्मानुष्ठानपरायणश्चेत्तदोर्ध्वगतिस्तस्यावश्यकी । अग्रे चित्कलायाः क्रमशो विकासमासादयन् सोऽवसाने पूर्णकलासमधिगत्या निःश्रेयसमप्यधिगच्छति ॥ ७४ ॥

प्रसङ्गसङ्गत्या योनीनां विशेषविवेचनां करोति—

उद्भिदन्नमयविकाशः ।

योनीनां विशेषविवेचनां दित्सुः प्रथममुद्भिज्जयोनिमेव परिचाययति । पञ्चीकृतपञ्चमहाभूताश्रयेण पूर्णतमोगुणावस्थायां प्रथमं परिणाममासाद्य या प्रकृतिस्तरङ्गान्विता सती प्रवाहसम्पन्ना भवति तस्यामेव प्रकृति-विवर्तनदशायां चिज्जडग्रन्थिरुदेति । एतद्विषयकं विस्तृतं विवेचनं पूर्वमेव विवृतम् ।

प्रकृति-परिणामश्च स्थूलताश्रयेण सूक्ष्मताभिमुखं प्रवर्तत इति जीवोत्पत्त्या सार्द्धं पञ्चकोशोत्पत्तौ सत्यामपि प्रथममन्नमयकोशस्यैव विकाशो भवतीत्यतः कारणाद् उद्भिज्जश्रेणिगा जीवाः स्थावरतामेवाश्रितास्तिष्ठन्ति ॥ ७५ ॥

तत्रोद्भिज्ज-वैशेष्यम्ब्रूते—

तस्य जलमन्नम् ॥ ७६ ॥

अन्नमयकोशस्य प्राधान्यमाश्रिता उद्भिज्जयोनिगा जीवा जलेनैव परिपुष्टा भवन्तीति तदन्नास्ते । "यदन्नेन पुष्यते जन्तुस्तदन्नः स हि सम्मतः" इति नियमात् जलपुष्टानामुद्भिदां जलमेवान्नम् इत्यत्र न कोऽपि सन्देहः । पृथिवीतत्त्वीयस्थूलशरीरस्य जलतत्त्वेन सान्निध्यात्तदनन्तरं तस्यैव द्वितीयतया सत्त्वात् स्थूलशरीरवत्तामुद्भिज्जानामन्नं जलमेवेति निश्चयः ।

ननु पार्थिवमेव स्थूलशरीरं सर्वेषामेव पार्थिवानामिति कथञ्च तेषामपि जलमेवान्नम्, इति प्रश्ने उत्तरयति, मनुष्यादिपार्थिवशरीरधारिणां जीवानां प्राणरक्षार्थे किञ्चित्साहाय्यं जलमवश्यमाचरति यथोद्भिज्जानां वृक्षादीनामवकरमृत्तिकादि । परन्तु मनुष्याणां प्रधानतया यथा दुग्धगोधूमाद्यन्नादीनामपेक्षा तथैव वृक्षाद्युद्भिज्जानां जलस्यापेक्षेति तस्यैव जलमन्नं नान्येषाम् ।

मानवशरीरस्य पञ्चकोश-परिपूर्णतया तत्र तदुपयोगिनामन्नानां प्रभावस्तदीयविज्ञानमयानन्दमयकोशौ यावदुपैतीति शुद्धान्नै र्मानवाना मन्तःकरणमपि पुष्यतितरामिति शास्त्रादिषु प्रसिद्धमेव । एवमन्यासु योनिष्वपि तत्तदुपयोगिकोशानां विकाशेन सह जलातिरिक्तानामन्यविधानामन्नानामपेक्षा भवति तैरेवान्नैस्तेषां पुष्टिरपि जायते । अत्रोद्भिज्जयोनिषु तु अन्नमयकोशस्यैव प्राधान्येन सत्त्वात् तस्यैव पोषणाय जलमात्रस्यैवान्नतयापेक्षोदेति इति संक्षेपः ॥ ७६ ॥

अन्यदपि—

एकस्मादन्यत् ॥ ७७ ॥

पूर्वविज्ञानपरिपुष्टये प्रमाणयति यदुद्भिज्जयोनिषु केवलमन्नमयकोशस्यैव विकाशो भवति नान्यस्य । प्रत्यक्षमुपलभ्यते प्रमाणमप्यत्र यदेकस्यैवोद्भिज्जयोनिग-जीवशरीरस्य खण्डशो विभागेनानेकशस्तदीयशरीरधारिणो जीवा उत्पद्यन्ते । यथा—कस्यचन वृक्षस्य शाखावपनेनैवान्यस्तत्सदृशो वृक्ष उदेति कस्याश्चिल्लतायाः खण्डं विधाय यावत्यो लता भूमावारोपिताः स्युस्तावत्य एव तत्र तादृश्यो लताः समुदिताः स्युरिति । एवं कस्यचन वृक्षस्य कन्दत एव पुनर्वृक्षान्तरमारोहतीति ध्रुवं तेषामन्नमयकोशविकाशे प्रमाणम् ॥ ७७ ॥

एतन्निदानमाह—

तत्र व्यापकत्वादात्मनः ॥७८॥

उद्भिज्जयोनेर्वैशिष्ट्यमिदं यत् तत्र केवलमन्नमयकोशस्यैव विकाशो भवति, येनोद्भिज्जयोनिकमात्मतत्त्वं तदीयस्थूलशरीरेणैव सम्बध्नाति । इत्यत एवोद्भिज्जशरीरस्यैकस्यैव च्छेदेनानेकशरीरनिर्मित्या बहूनां जीवानां पृथक् स्थितिस्तत्र योनौ सुलभा इति निर्णीतं प्राक्तनेन सूत्रेण । नेयं स्थितिर्मानवादि-शरीराणाम् ।

पञ्चकोशात्मक-शरीरविलीनस्य जीवस्येदं रहस्यम्-यद् सच्चिदानन्दमयस्य ब्रह्मणः सर्वव्यापित्वात्पूर्णत्वाच्च परमात्मनो विभो र्निर्लिप्ता चित्सत्ताऽपि सर्वव्यापिनीति । केवलं पञ्चकोशात्मकदेहोपाधिपरिच्छिन्नो हि जीवो मठाकाशे घटाकाशवत्तत्र सर्वव्यापिन्यां चित्सत्तायां परिच्छिन्नः प्रतीयते । तस्याः सर्वव्यापिन्या निर्लिप्ताया ब्रह्मणश्चित्सत्तायाः प्रतिबिम्बग्राहि जीवान्तःकरणम् । अन्यजीवेषु पञ्चानां कोशानां विकाशेन सह यदहंतत्त्वस्य व्यापकतोदेति ततश्चान्तःकरणस्य व्यापकता ह्रसति । उद्भिज्जयोनौ तु केवलस्यान्नमयस्य कोशस्यैव विकाशाद्धेतोः तदीयमन्तःकरणं सर्वत्रैव स्थूलशरीरे व्याप्तं

तिष्ठति । इत्यत एव यदा तस्य प्रसूतान्तःकरणस्योद्भिज्जस्थूलदेहस्य कोऽप्यंशः स्वमूलांशतः पृथग्भूत्वा यथाकथमपि प्राणरक्षोपयोगिनमाश्रयमासादयति तदैव तत्तज्जीवरक्षकदेव-साहाय्येन स्वतन्त्राणां जीवानामुत्पत्याश्रयतामधिगच्छति ।

दैवीमीमांसादर्शनस्य सर्वमान्यसिद्धान्तादिदं विज्ञायते यन्मनुष्येतरेषां सर्वेषामपि उद्भिज्ज स्वेदजादियोनिगजीवानां पृथक् विभिन्ना देवाः संरक्षकाः सन्ति ।

यथा च स्वाभाविकसंस्कारमूलक-प्राकृतिकक्रियया प्रथमा चिज्जडग्रन्थिरुदेति तथैव तेनैव स्वाभाविकक्रमेणास्या मभिव्यक्तिदशायामपि एकस्माज्जीवादनेकस्य जीवस्याविर्भवनं विज्ञानसिद्धमिति ॥ ७८ ॥

शङ्कासमाहितिभ्यां विज्ञानमिदं द्रढयति ।

**तथा दृश्यते योगिषु ॥ ७९ ॥**

तथा अनेक-जीवाविर्भावो योगिषु योगसिद्धिमुपेतेषु मानवेषु दृश्यते उपलभ्यते इति सूत्रार्थः ।

नन्वेकतः सर्वेषु जीवकेन्द्रेषु विभिन्नानामेवात्मनां सत्त्वात्कथमेकस्माज्जीवादनेकस्य जीवस्याविर्भाव इति प्रवला शङ्कोदेति । अपरतश्चैकस्मादेव वृक्षाल्लताया वा तच्छाखाकाण्ड-प्रकाण्डादिप्ररोहतो वृक्षान्तरलतान्तराणां बहूनामुत्पत्तिदर्शनेनैकस्माज्जीवाद्बहूनां जीवान्तराणामाविर्भूतिः प्रत्यक्षत एवावलोक्यत इत्यादि जिज्ञासासामञ्जस्यविधानार्थमेवास्य सूत्रस्यावतारः । तथाहि-

योगदर्शनसिद्धान्तानुसारं योगी यदा समाधिसिद्धो भूत्वा पूर्णसिद्धिमुपेत्य स्वान्तःकरणं स्वायत्तीकृत्य स्वीयास्मितताया अपि आधिपत्यं समश्नुते तदा स स्वप्रभावात्कायव्यूहरचनया स्वपूर्वार्जित-सञ्चितकर्मफलं भुङ्क्ते। एतस्यालौलिकाद्भुतस्य कर्मणः सम्पादनाय योगिभिः स्वान्तःकरणं स्वसंकल्पायत्तं स्वस्मितायाश्च जीवत्वनिदानीभूताया आधिपत्यं स्ववशे विधीयते । स्थूलशरीरस्य सूक्ष्मशरीराधीनत्वात् देवतोपदेवताप्रेतादिभिश्च यथाकार्यं यथेच्छं स्थूलशरीरधारणं क्रियते । तदा हि दैवशक्ति- सम्पन्नेन जीवेन स्वान्तःकरणसंकल्पबलेनैव नानादेहव्यूहो निर्मातुं शक्यते ।

योगिनस्तु इतोऽपि विलक्षणं महत्त्वम् यतो हि स्वसूक्ष्मशरीरस्य स्वान्तःकरणस्य चाधिपत्यमाश्रित्य योगी स्वचिदाकाशे समेतान् संस्कारराशीन् स्वेच्छया विभेद्य बहून् जीवाधारदेहान्निर्माति । अस्मितताया उपरि स्वाधिकारप्रभावेण च जीवानां केन्द्रस्वरूपमन्तःकरणमपि यथेच्छं यथाकार्यं निर्माति ।

ब्रह्मणश्चित्सत्ताया विभुत्वात् सर्वेषु नूतनेष्वन्तःकरणेषु स्वतन्त्रतया-चिज्जडग्रन्थिरूपस्यानेकस्याभिप्रेतस्य तावतो जीवकेन्द्रस्य स्वत एव निर्मितिर्जायते। इत्थमेकोऽपि योगी स्वयोगसमृद्ध्या विविधान् जीवान् सृजति विलापयति तदावासक्षमाणि विचित्रकर्मभोगनिदानीभूतानि शरीराणि चानेकानि विरचय्य पुनस्तिरस्करोतीति तन्महिम्नो वैशिष्ट्यम् ।

उद्भिज्जजीवेषु नैवं शक्तिवैशिष्ट्यमलौकिकत्वं वा तिष्ठति । परन्तु तेषामस्मिताया अन्तःकरणस्य च स्थूलशरीरेषु सर्वत्रैवौतप्रोतत्वम् । यतो हि उद्भिज्जयोनिषु केवलस्यान्नमयकोशात्मकस्यैव स्थूलशरीरस्य प्राधान्यं विराजते अन्ये कोशास्तु तस्मिन् काये गौणतयाऽन्तर्भूतास्तिष्ठन्ति । इत्यतो यदा तस्योद्भिज्ज-जीवस्य स्थूलशरीरीयः कोऽप्यंशो विच्छिद्यान्यत्र मृत्तिकासु रोप्यते जलादिना च सिच्यते तदा तत्स्थान्तःकरणानुस्यूतस्थूलशरीरव्यापचिदाकाशसाहाय्येन तत्रैव चिज्जडग्रन्थिमयं जीवकेन्द्रं निर्मीयते। इत्येतदेवास्य विज्ञानस्य माहात्म्यं वैचित्र्यञ्चेति संक्षेपः ॥ ७६ ॥

स्वेदजेषु कियतां कोशानां विकाश इत्याह —

स्वेदजे विकाश उभयोः ॥ ८० ॥

स्वेदजे जीवशरीरे उभयोरन्नमयप्राणमयकोशयोः विकाश उपलभ्यते। जीवो यदोद्भिज्जयोनेरनेकश्रेणिषु पर्य्यटन् क्रमशोऽभिवर्द्धमानः स्वेदजयोनिमुपैति । तदा तस्मिन् जीवे क्रमाभिव्यक्तेः प्रभावतः प्राणमयकोशस्यापि पूर्णतया विकाशः सम्पद्यते। उद्भिज्जयोनिजे तस्मिन्नेकस्यान्नमयकोशस्यैव विकाशस्तिष्ठति । इह तु स्वेदजे तस्मिन् अन्नमयप्राणमययोः उभयोरपि कोशयोर्विकाशो भवति । अत एव तस्य जीवस्याधुना स्थावरत्वमपगच्छति तस्मिंश्च जङ्गमता समुपैति । यतस्स सर्वत्र गतागताधिकारितामासाद्य विकाशपथानुगो भवति ॥ ८० ॥

तस्य वैशिष्ट्यमाह—

तस्माद्द्दृश्यते द्विविधम् ॥ ८१ ॥

स्थावरतया प्रत्यग्रजङ्गमताश्रयेण बहवः स्वेदजाः स्थावरताविशिष्टा एव दृश्यन्ते । तथाहि बहुत्रैवमुपलभ्यते उत् कियतां स्वेदजानां शरीरादूर्ध्वं स्थावरतोपेतं स्थितिशीलमक्रियं शरीरादूर्ध्वञ्च स्वेदजत्वगुणविशिष्टं गतिमद्भवतीति ।

तात्पर्य्यतः स्थावरतात्यागेन प्रथमतः स्वेदजत्वोपलब्ध्यै यदा जीवोऽग्रे-सरति तदा तस्य प्राथमिकावस्थायां यः प्राणमयकोशविकाशो भवति। तत्र स स्थावरत्वजङ्गमत्वोभयस्वरूपशाली एव तिष्ठति क्रमशश्च प्राणक्रियाभिवृद्ध्या क्रमशोऽभिव्यक्ति-सिद्ध्या तदनुसारं पूर्णजङ्गमतामधिगच्छति ॥ ८१ ॥

तत्स्वरूप-पूर्णतादिदृक्षया तस्याधिकारं विवेचयति—

**ब्रह्माण्डपिण्डयोरधिकारः प्राणशक्तिमत्वात् ॥ ८२ ॥**

उद्भिज्जयोने मृत्तिकासम्बन्धसम्बलितत्वेन स्थावरत्वाधिक्येन च सर्वत्र तस्याः स्थितेरसम्भवः। स्वेदजयोनेस्तु प्राणमय-कोशविकाशेन तत्स्थजीवानां गतिः स्थितिश्चान्य-जीवकायाभ्यन्तरे बहिः, पृथिव्या माकाशे सर्वत्रैव, ब्रह्माण्ड-पिण्डयोर्द्वयोर्दृश्यते। ते च स्वेदजा जीवा मानवादिजीवदेहे पिण्डात्मके स्थितिजुषस्तदीय-स्वास्थ्यरक्षां कुर्वन्ति केचन तज्जातीयास्तत्रस्थितिभृतस्तत्रैव पीडामुत्पादयन्ति। केचन तु तत्रस्थ-रोगाणुकीटान् विनाशयन्तस्तस्य सर्वतो रक्षां विदधति।

ब्रह्माण्डे चैवं तेषु केऽपि स्वेदजा जीवाः पृथिवी-जलाकाशादिषु स्वेच्छया भ्रमन्तो जनसङ्घादृष्टतो महामारीप्रभृति-जनपदविध्वंसकान् गदानुत्पादयन्ति! तेष्वेव केचन जनपदशुभादृष्टतः प्रेर्य्यमाणास्तान्रोगोत्पादकान् कीटाणून् निहत्य जगति स्वास्थ्यं शान्तिञ्च विस्तारयन्तीत्येतदेव स्वेदजजीवाना मलौकि-कत्वम् ॥ ८२ ॥

इदानीमण्डजयोनिषु कोशविकाशस्थितिमाह—

**कोशत्रय-विकाशोऽण्डजे ॥ ८३ ॥**

स्वाभाविकसंस्कार-बलेन जीवो यदा क्रमाभिव्यक्तिसाहाय्येनाग्रेसरी-भूत्वाऽण्डजयोनिश्रेणि मुपैति तदा मनोमयकोशविकाश-पूर्णतया कोशत्रयस्य विकाशः स्फुटं परिलक्ष्यते। तद्योनिगजीवक्रियापर्य्यवेक्षणतः कोशत्रयस्य विकाश-चिह्नं प्रत्यक्षत एवोपलभ्यते ॥ ८३ ॥

एतत्प्रमाणं लक्षयति—

**तस्मादुपलभ्यते मनः ॥ ८४ ॥**

अण्डज श्रेणिगेषु जीवेषु अन्नमय-प्राणमय-मनोमय-कोशानां विकाशो-पलब्धेस्तत्र मनसः कार्य्यकर्तृत्वं सुतरां दृष्टिगोचरीक्रियते।

यथोद्भिज्जयोनिगतेषु जीवेषु पञ्चकोशस्थितावपि केवलस्यान्नमय-कोश-स्यैव विकाशः पूर्णतया भवति। तस्यैव च स्पष्टतो लक्षणमप्युपलभ्यते। स्वेदजे-

स्वपि सत्यामपि पञ्चकोशबीजसत्तायां स्थूलस्यान्नमयकोशस्य विकाशेन सह तदन्यस्य प्राणमयस्यापि विकाशः पूर्णतयोपलभ्यत इत्यभिहितमेव पूर्वम् तथैवेहापि अण्डजश्रेणिगेषु जीवेषु पञ्चानामपि कोशानामस्तित्वसत्वेऽपि प्राथमिकानां त्रयाणामेव कोशानां पूर्णविकाशो भवति । इत्यत एव तत्र मनोमयकोशस्याभिव्यक्त्या तदीयविकाशस्य सुस्पष्टं पूर्णलक्षणं प्रतीयते ।

यथा च स्वेदजश्रेणिगता जीवाः स्वप्रकृतिपरवशा विचित्रालौकिकप्राणक्रियासमूहं प्रकाशन्तीत्यभिहितं प्राक् । तथैवेमेऽपि अण्डजश्रेणिगा जीवा निजप्रकृतिपरतन्त्रा मानसिकीनां क्रियाणा मलौकिक मसाधारणं चमत्कारं दर्शयन्ति । तथाहि—रथाङ्गनाम्नोरद्वितीया प्रेम-प्रवृत्तिः । सर्पजातेरतुलनीयं स्वपुत्रादनात्मकं खलत्वं, प्रतिहिंसाप्रवृत्तिश्च । कपोतानां स्ववासस्थानात्यासक्तिरित्यादीनि मनोमयकोशाभिव्यक्ते र्जागरूकतराण्युदाहरणानि निभालनीयानि ॥८४॥

अधुना जरायुजयोनिषु कोशसंख्याविकाशमाह—

**चतुष्कोशविकाशो जरायुजे ॥ ८५ ॥**

सहजाद्वितीय-स्वाभाविक-संस्कार-बलेन क्रमशः क्रमाभिव्यक्तिमासाद्यज्जीवो यदाऽण्डजयोनिकोटितो जरायुजश्रेण्यां प्रविशति । तदा तत्रान्नमय-प्राणमय-मनोमय-विज्ञानमयानां चतुर्णामपि कोशानां विकाशो भवति ॥८५॥

तदेव प्रमाणयति—

**तत्राल्प-विकाशो बुद्धेः ॥ ८६ ॥**

यथाऽण्डजश्रेणिगेषु जीवेषु मनोधर्म्मप्रोद्भूत्या त्रयाणां कोशानां विकाशस्य प्रमाणमुपलभ्यते, तथैवेहापि जरायुज-श्रेणिगेषु जीवेषु बुद्धि-धर्मोपलब्ध्या चतुर्णां कोशानां विकाश-प्रमाणमासाद्यते । तत्राश्वहस्तिप्रभृतिजरायुजजीवेषु बुद्धिकृत्यं स्पष्टत एव प्रकाशत इति नास्ति बहुविवृतेरावश्यकत्वम् ॥ ८६ ॥

इदानीं पूर्णावयवात्मिकाम्मनुष्ययोनिं वर्णयति—

**हास्यलक्षणः पञ्चकोशविकाशो मानवे ॥ ८७ ॥**

मानवे मनुष्ययोनिगे जीवे हास्यं लक्षणं चिह्नं यस्य सः तथोक्तः पञ्चानां कोशानां विकाशो ज्ञेयः । मानवे कोशपञ्चकस्यापि विकाशो भवति । यतस्तत्र अन्तिमस्यानन्दमयकोशस्य कार्य्यं हास्यात्मकं समुपलभ्यत इति सूत्रार्थः ।

दैवराज्यसञ्चालका देवगणाः क्रमशो जीवान् योनितो योन्यन्तरं प्रापयन्तः स्वाभाविक-संस्कारवशतोऽग्रे सम्बर्द्धयन्तो मानवयोनिं प्रापयन्ति । तत्र च मनुष्ययोनावुपेत्य जीवः पञ्चभिरपि कोशैः परिपूर्णो भूत्वा स्वाधीनो भवति ।

यतो हि मानवयोनाविह अन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमयानां पञ्चानामपि कोशानां विकाशो भवति । आनन्दस्य हास्यं लक्षणं तच्च मनुष्ययोनावेव-स्फुटं परिलक्ष्यते । इत्यत आनन्दमयान्तकोशानां मानवयोनौ विकाशो भवतीति सिध्यति । यद्यपि मनुष्येतरप्राणिनामप्यानन्दानुभवो भवत्येव । ते च स्वलाङ्गूल चालनोत्प्लवनादिभिः स्वानन्दानुभवं प्रकाशयन्त्यपि । तथापि तेषु प्राणिषु केषुचिदपि हास्यस्य लक्षणञ्च परिलक्ष्यते, इति मानवयोनावेव पञ्चानामपि कोशानां पूर्णविकाशो भवतीति सर्वसम्मतो मार्गः ॥ ८७ ॥

प्रसङ्गत आनन्दमयकोशस्य पूर्णतारहस्यं प्रतिपादयति—

**आनन्दमयस्य पूर्णकलौपयिकत्वं चन्द्रवत् ॥ ८८ ॥**

मानवयोनितः प्राक्तनावस्थायां जीवोऽस्वाधीनः प्रकृतिपराधीनोऽग्रे संसरन् क्रमाभिव्यक्त्या नियमत एवेह मानवयोनौ समुपतिष्ठते, इति पूर्वमेव विस्तरशो विवृतम् । चरमस्याऽनन्दमयस्य कोशस्याभिव्यक्ति रिह मानवयोनौ स्वत एव भवति । परन्तु आनन्दमयकोशेन सहात्मनः साक्षात्सम्बन्धभागित्वात् तस्य क्रमशः सम्यग् विकाशो जन्मजन्मान्तरेण कलाविकाशसाहाय्येन चन्द्रवज्ज्ञेयः । यथा चन्द्रः प्रतिपदाया आरभ्य क्रमशोऽभिवर्द्धमानः पूर्णिमायां पूर्णकलो भवति । तथैव जीवो मानवयोनौ शुभानां जैवसंस्काराणां साहाय्येन उत्तरोत्तरमाध्यात्मिकभूमावग्रे समेधमानो जन्म-जन्मान्तरेण क्रमश आनन्दमयकोशं परिष्कुर्वन् आनन्दकलां संवर्द्धयन् मोक्षपद मासादयतीति ॥ ८८ ॥

तस्य चरम मुदर्कमभिधत्ते—

**कलाविकाशतः कैवल्यम् ॥ ८९ ॥**

जीवानामानन्दमयकोशो यावतीम्पूर्णता मासादयति तावदेव स पुष्पवद् विकाशमासादयति । यावन्तमेव स पोषमासादति तावत्येव तस्मिन् ब्रह्मानन्दसत्ता प्रकाशते । ब्रह्मानन्दस्य पूर्णसत्तानुभव एव तु कैवल्यं मुक्तिर्वोच्यते ।

जीवेषु पूर्वोक्तसंस्कारशुद्धिसाहाय्यतः यावदेव चिद्विलासरूपं ज्ञानं क्रमशः समेधते तावदेव ते बाहुल्येन ब्रह्मानन्दानुभूतिमश्नुवते । विषयानन्दानुभवोऽपि ज्ञानिनोऽज्ञानिकृतानुभवतो विलक्षण एव भवतीति स्वीकरणीयमेव । एवमेव ज्ञानवृद्ध्या सह विषयानुभवेऽपि वैलक्षण्यं समेधते । इत्येवमन्ते स्वाभाविकस्याऽद्वितीयस्य संस्कारस्य क्रमविकाशेन सार्धमानन्दमयकोशः पूर्णतामधिगच्छति । तस्मिंश्च पूर्णताजुषि स्फुटं विकासमुपगते सति जीवः सच्चिदानन्दमयस्य स्वस्वरूपस्योपलब्ध्या मुक्तो भूत्वा नन्दति ॥८९॥

कलाविकाशसभेदानाह—

द्विविधस्तद्विकाशो गुणवत्वात् ॥ ६० ॥

सत्त्व-रजस्तमस्सु त्रिष्वपि गुणेषु केवलं रज एव सञ्चालकम् । यदा सत्त्वगुणापेक्षि रजो भवति तदा सात्त्विकी क्रिया प्रवर्तते । यदा च तमोगुणापेक्षि रजो भवति तदा तामसी क्रिया प्रचलति । इत्यत एव जीवदेहे मुक्तिप्रदस्य सहजस्य स्वाभाविकस्य संस्कारस्य गति द्विविधा प्रवहति । तत्त्वतस्तस्य संस्कारस्य विकाशो द्विधा विभिन्नः सत्त्वगुणमूलकस्तमोगुणमूलश्च भवति । विज्ञानमिदमन्यथापि वोद्धुं सुशकम् तथाहि—मुक्तिप्रदायी संस्कारो जीवानां सात्त्विकदशायां तामसिकदशायाञ्च साहाय्यमाचरन् जीवांश्चाग्रे सञ्चालयन् कैवल्यपथम्प्रापयति इति ॥ ६० ॥

विज्ञानमिदमन्यथापि स्पष्टयति—

मिथो द्वन्द्वता ॥ ६१ ॥

स्थूल-सूक्ष्मात्मिका सर्वाऽपि सृष्टिर्द्वन्द्वमूलिकैवेति सुनिश्चितम् । यथा बहिर्जगति अहोरात्रद्वन्द्वोऽन्तर्जगति रागद्वेषद्वन्द्व इति सर्वेषामेव प्राकृतिकानां पदार्थानां द्वन्द्वमूलकत्वम् । तत्र द्वन्द्वप्रयोजनमपि सुस्पष्टमेव । तथा हि यदि रात्रिर्न स्यात्तर्हि दिवसस्योपयोगफलञ्च प्रतीयेत । दिवसाभावे रात्रिरपि सुतरामनुपयुक्ता स्यात् । एतद्विज्ञानानुरूपं जगतो यावन्तः पदार्थाः सन्ति ते सर्वेऽपि द्वन्द्व-मूलकाः । तदनुसारेण च गुणमूलकानां संस्काराणामपि द्वैविध्यम् सुस्पष्टमेव सिध्यति । तथा चानयोर्द्वयोरपि पारस्पर्यं सापेक्ष्यं साहचर्य्यञ्च सुसिद्धम् । वस्तुतस्तु इमौ द्वावपि परस्परं साहाय्यमाश्रितौ प्राकृतिक-गुणपरिणामतो जीवानामभ्युदयकरौ सम्पद्येते इति ॥ ६१ ॥

पुनर्विभागमाख्याति—

त्रिभावतस्त्रैविध्यम् ॥ ६२ ॥

यथा गुणानुसारेण स द्विधा विभक्तस्तथैव भावानुसारेण स त्रिविधः प्रख्यातः । भावाश्चाध्यात्माधिदैवाधिभौतभेदेन त्रिविधाः परिसंख्याताः । प्रकृतिमवलम्ब्य यथा गुणपरिणामो भवति तथैवात्मावलम्बेन त्रिभावात्मिका स्तिस्रोऽवस्था अपि प्रकाशीभवन्ति । ताश्च संस्कारजन्या इति नात्र सन्देहः । यतो हि—संस्काराः कर्ममूलानि । संस्कारमूलमन्तरा कापि क्रिया न संभवतीति पूर्वमेव प्रतिपादितम् ।

यथा च बीजवापमन्तरा न कस्यापि वृक्षस्य प्ररोहः । तथैव संस्कारमन्तरा न कस्या अपि क्रियायाः समुत्पत्तिः । इत्यतः सिद्धमिदं यद् गुणाश्रयेण यथा भेदद्वयन्तथा भावाश्रयेणापि भेदत्रयं भवति ।

विकाशमूलकाः संस्कारा गुणसम्बन्धेन द्विविधा भावसम्बन्धेन च त्रिविधा भवन्ति । एतत्स्वरूपपरिज्ञानायेदं पर्य्याप्तमस्ति यत्—

स्वाभाविकः संस्कारो य एकोऽद्वितीयोऽस्ति, तस्य विकाशकारणस्वरूपा एवेमे भवन्तीति । स्वाभाविकाऽस्वाभाविकयोः संस्कारयोरयं मौलिको भेदोऽवसेयो यद्—अस्वाभाविकः संस्कारो जीवसंकल्पतः समुद्भवात् प्राकृतिकीं स्वाभाविकीं गतिं निरुणद्धि जटिलां वा विदधाति । स्वाभाविकश्च संस्कारः प्रकृति-प्रवाह-गतिमधिकतया सरलयति । यतश्च स्वाभाविकसंस्कारबलेनैव जीवः क्रमशोऽग्रे प्रवर्द्धमानो यथोद्भिज्जयोनितो मानवयोनिं यावदायाति तथैवेहापि मनुष्ययोनौ शनैः प्रवर्द्धमानो मुक्तिभूमिमुपतिष्ठति ।

सर्वमपीदमद्वितीयस्य स्वाभाविकस्य संस्कारस्य कार्य्यरूपाया पूर्वोक्तावस्थाया भेदमात्रम् । पूर्णावयवसम्पन्नमानवयोनिगजीवे तु उभयसंस्कारानुसारिण्येव क्रिया प्रचलति । जीवन्मुक्तदशायाञ्च केवलः स्वाभाविक एव संस्कारः कार्य्यकृत् प्रकीर्तित इति विभेदः ।

उदाहरणतो यथा मनुष्यजातौ जात्यायुर्भोगा अस्वाभाविक-संस्कारबलेनैवोत्पद्यन्ते । वैदिकाश्च षोडशसंस्कारयज्ञाः स्वाभाविकसंस्कारगतिं प्रकाशयन्तीति पूर्वमेव प्रमाणितम् । स एव मुक्तिप्रदः स्वाभाविकः संस्कार एवं गुणभावसाहाय्यमासाद्य प्रवर्द्धमानो मुक्तिपथं निष्कण्टकं सरलञ्च करोति ॥ ६२ ॥

त्रयाणामपि स्वरूपं स्पष्टयितुमाह—

त्रिषु वैलक्षण्यम् ॥ ६३ ॥

एषां त्रयाणां स्वरूपे किमप्यन्यदेव वैलक्षण्यम् । यतो हि—एकं ज्ञानमूलकम् द्वितीयं कर्ममूलकं, तृतीयं स्थूलशरीरमूलकमिति । स्वाभाविकस्य संस्कारस्यानुरूपो य आध्यात्मिकः परिणामः प्रकाशते, स च सर्वभूतानामैक्यसम्पादकत्वान्मुक्तिप्रदानक्षमत्वाच्च ज्ञानमूलको भवति । आधिदैविको यो हि परिणामः प्रकाशते, तेन क्रमशः कर्तव्यपरायणता–सकामराहित्ययोरधिकार आसाद्यते । आधिभौतिकेन च परिणामेन मलराहित्यं सत्वगुणवर्द्धिकाऽवस्था चाधिगम्येते ।

एवञ्च आसां तिसृणामवस्थानां मध्ये एका ज्ञानमूलिका, द्वितीया कर्ममूलिका, तृतीया च स्थूलशरीरमूलिकेति परस्परमतिवैलक्षण्यम् ॥ ६३ ॥

उभयोराकर्षणोपकरणम्ब्रूते—

रजोवीर्य्याभ्यामुभयाकृष्टिः ॥ ६४ ॥

उभयोः स्वाभाविकाऽस्वाभाविकयोराकृष्टिः आकर्षणं रजश्च वीर्य्यञ्च ताभ्यां भवतीति सूत्रार्थः। मातापित्रो रजोवीर्य्यसाहाय्येनोभयश्रेणिगाविमौ संस्कारौ समाकृष्येते। तत्र शरीरस्थेषु सप्तसु धातुषु वीर्य्यं हि सर्वोत्तमः सप्तमो धातुः। ते च सप्तापि धातवो मानवदेहे यथाक्रमं समुपलभ्यन्ते। स्त्रीकाये तु तेषां रूपान्तरं भवतीत्यतस्तत्र सप्तमस्य भेदद्वयं समासाद्यते तत्र द्वितीयस्य भेदस्य रज इत्याख्या। एवञ्च स्त्रीकायभेदात् सप्तमस्यापि धातो वीर्य्य-रजोभेदेन भेदद्वयं भवति। अस्मादेव हेतोरायुर्वेदाचार्य्यैः स्त्रीकायेऽष्टानां धातूनां स्थितिरङ्गीक्रियते।

मानवानां हि भोगायतनं कर्मार्जननिदानं स्थूलशरीरं मातापित्रो रजोवीर्य्याभ्यां पितॄणां साहाय्येनैव सम्पाद्यते। योगशास्त्रसिद्धान्ततो वायुमनोवीर्य्याणामेकतत्त्वाम्नानेन अन्तःकरणस्य वीर्य्येण सह साक्षात्सम्बन्धभागित्वात् पुरुषाणां नारीणाञ्च वीर्य्यस्य रजसश्च यथाक्रमं सर्वधातुसारतया पूर्वोक्तौ द्वावपि संस्कारौ जीवशरीरे स्वत एव रजोवीर्य्याभ्यामाकृष्येते।

गुणानां स्थूलशरीरमाधारो भावानाञ्चान्तःकरणमाश्रयइति मातापित्रोर्गर्भाधानसंस्कारकालिक-शरीरान्तःकरणस्थिति-साहाय्यवशेन सन्ताने ते संस्कारसमूहाः समाकृष्यन्ते।

कथमस्वाभाविके संस्कारे स्वाभाविकस्य तस्य समावेश? इत्यादि विविधायाः शङ्कायाः समाधानमाह—बन्धनगमागमचक्रयोरस्वाभाविकसंस्कार एव हेतुः। मुक्तिनिदानञ्च स्वाभाविकः संस्कारः। वैदिकाश्च संस्कारयागाः स्वाभाविक-संस्कारपोषका इति प्रागेवाभिहितम्। इदानीञ्च गुणभावसम्बन्धिनः संस्कारसमूहा अपि स्वाभाविकस्यैव संस्कारस्याङ्गभूता निगद्यन्ते। अपरञ्च स्वाभाविकस्य संस्कारस्य एकत्वमद्वितीयत्वम् अस्वाभाविकस्य चानन्तत्वम्, अपि प्रागेव प्रमाणितम्।

स्वाभाविकस्य संस्कारस्यैकतयाऽद्वितीयतयाऽच तस्य गतिः स्थितिश्च जीवस्योत्पत्तित आरभ्य मुक्तिं यावत्तिष्ठति इत्यङ्गीकरणीयमेव। स्वाभाविको हि संस्कारः चिज्जडग्रन्थिसमुत्पत्त्या सहैव समुत्पद्यते। उद्भिज्ज-स्वेदजाण्डज-

जरायुजात्मकचतुरशीतिलक्षयोनिषु सोऽद्वैतरूपेण तिष्ठति । तस्य गतिश्च सर्वत्रैवाप्रतिहतैव भवति । तस्य पूर्णविकाशश्च जीवन्मुक्तदशायां भवति । अस्वाभाविकस्तु संस्कारो जीवस्य मानवयोनिसमागमनकालत एवोत्पद्यते तत्र चानन्ततामाश्रित्य अनेकपथेन परिणममानो जीवाननेकधा सुखदुःखमयानन्तगमागमचक्रे भ्रामयन् तेभ्यो मोक्षमवसरन्नार्पयति ।

मनुष्ययोनाविहागतस्य स्वाभाविकास्वाभाविकयोरुभयोरपि संस्कारयोरेतदेव पार्थक्यम् यद् – बन्धनदशायामस्वाभाविकस्य संस्कारस्य प्राधान्यम् स्वाभाविकस्य चाप्राधान्यम् । जीवन्मुक्तावस्थायान्तु स्वाभाविकस्यैव संस्कारस्य प्रधान्यम् अस्वाभाविकस्य च गौणत्वं विद्यत इति ।

सुखदुःखमयस्य शुभाशुभप्रवृत्तिजन्यभोगस्य भुक्तिदशायामहो विविधेषु आवचलोकेषु परिभ्रमणेन यद्भोगवैचित्र्यमासाद्यते तत् सर्वमनन्तरूपतामाश्रितस्यास्वाभाविकस्यैव संस्कारस्य परिणामः । गमागमचक्रे परिभ्रामिकायां गतौ ऊर्ध्वगमिप्रवाहात्मिकाया क्रियायाः कारणं तु स्वाभाविकस्य संस्कारस्य शक्तिरेव । इत एव जीवन्मुक्तदशायां महापुरुषा अस्वाभाविकसंस्कारसमुत्पन्नफलं समश्नुवते । स्वाभाविकसंस्काराधीनाः सन्तः सुखदुःखात्मकद्वन्द्वं समानतयैवानुभवन्तः स्वान्तःकरणप्रवाहं ब्रह्मानन्दात्मकानन्तार्णवे विलापयितुं समर्था भवन्ति ।

ननु कथं रजोवीर्य्याभ्यामेवोभयोः संस्कारयोराकर्षणं भवतीति पुनराशङ्कते—यतो हि-रजो वीर्य्यञ्च सप्तानामपि धातूनां साररूपतया जीवानां स्थूलशरीरस्य बीजात्मकमुपादानकारणं भवतु नाम, परन्तु भाव-गुण-मूलकस्य स्वाभाविकस्य संस्कारस्याकर्षणनिदानं कथं भवितुमर्हतीति शङ्कितुरभिसन्धिः । तत्रोत्तरयति, यदेवं भूतायाः शङ्कायाः समाहितिः सरला स्फुटतरैव तथा हि— चिज्जडग्रन्थिरूपात्मकस्य जीवस्य प्रथमाविर्भावावस्थायामेव स्वाभाविकः संस्कार उत्पद्यते । यस्य प्रधानं कार्य्यमेतदेवास्ति यत् जीवानुत्तरोत्तरं उन्नतावस्थायां प्रापयन्नभ्युदयप्रदानेन निःश्रेयसमार्गे समारोहयन्नधः पतितुमवसरं न लम्भयेदिति । उदाहरणतो यथा-जीवो यदा आम्राद्युद्भिद्-योनितः चलदलयोनिं व्रजति । हस्तियोनितो वा गोयोनिमभ्येति । तदा तस्य क्रमोन्नतिरियं उत्कोन्नतयोनिसम्बन्धिस्थूलशरीरसाहाय्येनैव समेधते । स्थूलशरीरं हि न केवलं भोगायतनमेव, किन्तु जीवानां क्रमोन्नतेरवलम्बनीयं क्षेत्रमपि तदेवाङ्गीक्रियते । यतश्च मानवो यदा एकशरीरतः शरीरान्तरं गृह्णाति । तदैव स क्रमोन्नतिपथपथिको

भवति । इत्थञ्च स्थूलशरीरमेव क्रमोन्नत्या मुक्तिपथप्रापकं क्षेत्रमिति तस्मिन्नेव स्वाभाविकस्य संस्कारस्याङ्गीभूतयोरुक्तयोः संस्कारयोराकर्षणसम्भव इति ॥६४॥

प्रसङ्गतो वर्णधर्मोपयोगितां साधयति—

**अतो बलीयस्त्वं वर्णस्य ॥ ६५ ॥**

अतो रजोवीर्य्यशुद्धिप्रतिपालनात् वर्णस्य वर्णधर्म्मस्य बलीयस्त्वम् दृढत्वमिति सूत्रार्थः ।

वर्णधर्म्मे रजोवीर्य्यशुद्धिविवेकः सर्वाभ्यर्हित इति पूर्वमेवोक्तम् । एतदपि पूर्वप्रकरणे सप्रमाणं संसाधितम् यत् यस्मिन्मानवसमाजे वर्णाश्रमधर्मो विद्यते तस्य न कदापि महाकालगर्तनिपातः । नापि तदीयनियमपालनतोऽस्य समाजस्याधःपातः, प्रत्युत क्रमोन्नतिरेव तदीया समेधते ।

तस्य विज्ञानस्य पुनर्दार्ढ्याय सूत्रकृन्महर्षिराख्याति यद् रजोवीर्य्याभ्यां पूर्वोक्तस्य मुक्तिप्रदस्य स्वाभाविकस्य संस्कारस्य गुणभावसम्बन्धिनामङ्गानामाकर्षणं भवतीति । एवञ्च रजोवीर्य्यशुद्धिप्रयोजनात्मकस्य वर्णाश्रमधर्म्मस्य प्रतिपालनं परमावश्यकम् मनुष्यसमाजस्य कृतेऽस्य धर्मस्य प्रतिपालनममृतस्वरूपमित्यप्यूहनीयम् ॥ ६५ ॥

प्रसङ्गप्राप्तमप्याह—

**न प्रतिलोमविवाहो धर्मसम्बद्धः ॥ ६६ ॥**

स्मृति-शास्त्रेषु रजोवीर्य्यशुद्धिरक्षार्थं सवर्णविवाहस्य सर्वाभ्यर्हितत्वं प्रमाणितम् । अनुलोमज-विवाहस्य कामजन्यत्वेऽपि कथञ्चिद्धर्मसङ्गतत्वमपि स्वीकृतम् । परन्तु प्रतिलोमजविवाहस्य तु सर्वथाऽधर्मजनकत्वं धर्मविरुद्धत्वमेव प्रमाणितम् ।

तथा हि बहुत्र स्मृतिषूपलभ्यते—

सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्मणि
कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः ।
शूद्रैव भार्य्या शूद्रस्य सा च स्वा च विशःस्मृते ।
ते च स्वा चैव राज्ञः स्युस्ताश्च स्वा चाग्रजन्मनः ।

अनुलोमविषयिणीयमाज्ञा प्रतिलोमसम्बन्धे त्वित्थमुपलभ्यते । तथा हि—

क्षत्रियाद्विप्रकन्यायां सूतो भवति जातितः
वैश्यान्मागधवैदेहौ राजविप्राङ्गनासुतौ ।

शूद्रादायोगवः क्षत्ता चाण्डालश्चाधमो नृणाम् ।
वैश्यराजन्यविप्रासु जायन्ते वर्णसङ्कराः ।

वर्णधर्मस्य पूर्णतासंरक्षणायेदं परमं प्रधानञ्च कर्तव्यं यद् ब्राह्मण-क्षत्रिय-वैश्य-शूद्राः स्वसवर्णकन्या एवोपयच्छेयुः । यदा ते स्वसवर्णकन्योपयमनं कुर्वन्ति तदैव रजोवीर्य्यशुद्धिः पूर्णतया सम्भवति । जीवस्य क्रमोन्नति सम्बन्धतो मुक्तिद्वारमप्युद्घाटितं भवति । पूर्वमप्यभिहितमिदम् ।

मोक्षविचारं परित्यज्य कामार्थवासनापरवशो मनुष्यो यदि सवर्णां कन्यां विहायानुलोमजरीत्या स्वाधोवर्णसम्भवामन्यां परिणयति चेत् कथमपि स धर्मबहिर्मुखो न भवति । यतो हि तत्र वीर्य्याश्रयापेक्षया रजसोऽधिकरणस्य न्यूनतया तेन सह तस्य समानताया अभावात् निकृष्टक्षेत्रोप्तवीजाङ्कुरवत् पूर्णविकाशाभावेऽपि सामान्यतो वीर्य्यशुद्धिरसन्दिग्धा । परन्तु प्रतिलोमज विवाहे तु उच्चवर्णसमुद्भवायाः कन्याया अधोवर्णभवेन पुंसा सङ्गमनाद् रजसोवीर्य्यस्य चोभयोरपि अशुद्धिसम्पातदोषात् प्रतिलोमजविवाहस्य सर्वथा-गर्हितत्वं महर्षिभिर्निर्धारितम् ।

लौकिकोदाहरणतो विज्ञानमिदं सारल्येनैव समर्थितुं पार्य्यते । तथा हि यथेष्टजलसंयोगसम्वलितायां पूर्णायां भूम्यामङ्कुरोत्पत्तेर्नियमाद् जलहीनभूम्यामाहोस्विद् अल्पजलाप्लुतायामपि भूमौ अङ्कुरोत्पत्ति र्भवत्येव । परन्तु अत्यधिकजलाप्लुतायां भूमौ वीजमुप्तं चेद् विकृतमेव तद्भवति । अङ्कुरोत्पत्तिस्तु दूरे । तथैव निम्नश्रेणिगरजसि वीर्य्यसंयोगेन कथंचित् तस्य शुद्धौ सत्यामपि प्रतिलोमजविवाहे तु रजोवीर्य्ययोरुभयोरेवाशुद्ध्या सृष्टिक्रम एव विच्छिन्नो भूत्वा नष्ट-भ्रष्टो जायते । एवञ्च सृष्टिक्रमविरोधिनः सृष्टिविनाशकस्य च व्यापारस्यावश्यमधर्मजनकत्वम् । इत्यत एव प्रतिलोमजविवाह आर्य्य संस्कृतौ विरुद्धः ॥ ६६ ॥

प्रसङ्गतोऽपरमप्यभिधत्ते—

**सपिण्डा सगोत्रा वयोज्येष्ठा च कन्या परिवर्जनीया ॥ ६७ ॥**

रजोवीर्य्यशुद्धिविज्ञानानुरूपमेव धर्मशास्त्रादिषु महर्षिभि रादिष्टम् यद्—सपिण्डसगोत्रवयोज्येष्ठकन्यापरिणयेऽधर्मसंसर्गः तथा हि—

असपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥

अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ।
अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ॥

रजोवीर्य्यशुद्धिर्हि पूर्वोक्तभूमिबीजोदाहरणत एवावगमनीया । येन वैज्ञानिकेन हेतुना प्रतिलोमजो विवाहो निषिद्धः स एव हेतुरेषां त्रयाणां विवाहानामपि निषेधेऽवसेयः । यतो हि रजोवीर्य्यशुद्धिस्त्रिभिरप्येतै रधर्म्मकार्य्यैर्विनश्यत्येवेति । यथा वर्णाश्रमधर्मभ्रंसतो मनुष्यजातिः कालकवलिता भवति, तथैवैभिर धर्मकृत्यैः कुलानि नष्टभ्रष्टानि भवन्ति । सपिण्डा हि स्वकुलसन्निहिता निगद्यते तस्याः स्वगोत्रजायाश्च पाणिपीडने रजो-वीर्य्यशक्तिरेव क्रमशः क्षीयते । सपिण्ड-सगोत्रयोरेकार्थकत्वात् स्वगोत्रजेय कन्याऽतिसन्निता सती सपिण्डा कथ्यते--स्मृतिषु सपिण्डा लक्षणं यथा—

सपिण्डता तु पुरुषे सप्तमे विनिवर्तते–
लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् ॥ इति ॥

यदि भूमेरेकस्मिन्नेव प्रदेशे बहूनि बीजान्युप्तानि स्युस्तदा तत्क्षेत्रं तानि बीजानि चोभयमपि विफलितमेव भवति इति न प्रत्युत उभयमपि अपवित्र्यं जुषाणं सत् सद्यिन्तस्त्रमेव प्रतिबध्नाति । तथैव यदि समानकुलसमुत्पन्नस्त्रीगर्भे समानकुलपुरुषस्यैव वीर्य्यनिषेकः सर्वदा स्यात्तदा तयोः क्षेत्रबीजयोरवश्यं वैफल्य मवसाने च कालान्तरेण तस्य वंशस्यैव विच्छेदोऽप्यवश्यम्भावी ।

अपरतश्च विज्ञानसिद्धो विचारणीयोऽयं विषयो यद्-स्त्रिय आकर्षण शक्तिविशिष्टत्वात् पुरुषस्य च विकर्षणशक्तिमत्वाद् उभयोर्विरुद्धभावापन्नत्वं स्वीकर्तव्यमेव एवञ्चोभे अपि यदि एकस्मादेव केन्द्रात् पौनः पुन्येन नियुक्ते स्यातां तर्हि उभे अपि क्षीणबले स्याता मित्यत्र कः सन्देहः । अन्यच्चेह आधिदैविकं कारण मतिविलक्षणमूहनीयम् तथाहि—

अर्य्यमाद्यो नित्य-पितृगणाः वर्णकुलार्य्यत्वानां त्रयाणामपि रक्षकाः तत्र त्रिष्वपि कुलस्य मध्यवर्तित्वादुभयो रादिमान्त्ययो र्वर्णार्य्यत्वयोः सहायकत्वं सुसिद्धम् । तत्र कुलस्य गोत्रेण सह साक्षात् सम्बन्ध इति कुलपवित्रतया मानवसमाजे आर्य्यत्वस्य पावनत्वं तस्य पावनतया च वर्णत्वस्य पावित्र्यमक्षुण्णं तिष्ठति । इत्यतश्च कुल-पावित्र्य-रक्षा तस्य प्रवाह-धारायाश्च स्थिरीकरणं उभयमपि पितृगणानां मुख्यं कर्तव्यम् ।

जलस्य प्रवाहगति स्तदैव स्थिरा भवति यदा भूमिगात निम्नगा स्यात्,

श्रीविश्वनाथो जयति ।

सर्क्यूलर नं० ५५७

# श्रीमहामण्डलकी कार्य प्रणाली ।

अखिल भारतवर्षीय सनातन धर्मावलम्बियोंकी एक मात्र विराट् धर्म-सभा श्रीभारतधर्ममहामण्डलकी नियमावली जिन्होंने नहीं देखी है, लगातार ३०-३२ वर्षोंकी उसकी धर्म सेवा और देश सेवाका अनुशीलन नहीं किया है, उसके संग्रह किये अप्रकाशित ग्रन्थोंका महत्व नहीं समझा है और अप्राप्त तथा मौलिक प्रकाशित ग्रन्थोंको नहीं पढ़ा है, उसकी विस्तृत और व्यापक देश व्यापी और जगद्व्यापी कार्यावली पर ध्यान नहीं दिया है, वे सज्जन श्रीमहामण्डलके सम्बन्धमें नाना प्रकारकी शङ्काएं किया करते हैं और उनकी शङ्काओंका समाधान होने योग्य कोई साधन भी उनके पास उपलब्ध नहीं रहता। ऐसे ईर्षा-द्वेष-शून्य निष्पक्ष लोगोंको ज्ञात करानेके लिये श्रीमहामण्डलकी कार्य प्रणालीका कुछ दिग्दर्शन इस लेखके द्वारा करा देना हम उचित समझते हैं।

१-अनेक प्रकारकी गवेषणा, अनेक प्रकारका विचार विनिमय और अनेक प्रकारके संघर्ष होनेके बाद अब ब्रिटिश गवर्नमेन्ट तथा भारतके नेतृवृन्द मिल कर यह सिद्धान्त कर रहे हैं कि, भारतके कल्याणके लिये यहां के नृपति वृन्द और प्रजावर्ग सबके सम्मेलनसे एक "फेडरल गवर्नमेन्ट" कायमकी जाय, जिसमें देशी राजन्यवर्ग और सब श्रेणीका प्रजावर्ग सम्मिलित रहे। राजनीतिक क्षेत्रके बड़े बड़े विचारशील व्यक्तियोंने इतने दिनोंमें जो सिद्धान्त कर पाया है, उस सिद्धान्तके मूलका अन्वेषण भी महामण्डलके सञ्चालकोंने ४० वर्ष पूर्व ही किया था। और यह निश्चय किया था कि भारतवर्षकी धार्मिक तथा सामाजिक उन्नति और हिन्दुजातिका अभ्युदय ऐसी भारतवर्षीय संस्थाके द्वारा हो सकता है, जिसमें सब श्रेणीके हिन्दु राजन्यवर्ग, सब श्रेणीकी हिन्दुप्रजा और सब श्रेणीके हिन्दु धर्माचार्य सहयोग कर सकें। भारतवर्षके वर्तमान वातावरणके लिये ऐसा संघटन ही सम्भव और कार्यकारी हो सकता है। इसी सिद्धान्तपर श्रीमहामण्डल स्थापित हुआ था और इसी सिद्धान्त पर उसकी कार्यप्रणाली बांधी गई है। इससे श्रीमहामण्डलकी ज्ञान-शक्तिका अनुमान किया जा सकता है।

२—हिन्दुजातिमें एक सर्वव्यापक संघशक्ति उत्पन्न करनेके विचारसे श्रीमहामण्डलके कार्यकर्ताओंने भारतवर्षके सब प्रान्तोंमें सैकड़ों धर्म सभाएँ स्थापितकी और करायी हैं। सैकड़ों धर्म सभाओं, सैकड़ों विद्यासम्बन्धीय संस्थाओं और सैकड़ों जाति समाज तथा विभिन्न धर्मकार्य सम्बन्धी सभाओंके साथ अपना सम्बन्ध स्थापन किया है और उनका एक रजिस्टर प्रधान कार्यालय काशीमें बनाकर भारतवर्ष व्यापी श्रृंखलाका बीजारोपण किया है। इस रजिस्टरमें सहस्राधिक सभाओंके नाम दर्ज हो चुके हैं।

३—भारतव्यापी शृंखलाको सहायतादेनेके लिये, भारतवर्षको कई प्रान्तों में विभक्त करके, उन प्रान्तोंमें प्रान्तीय कार्यालय स्थापन कर, विज्ञ और प्रतिष्ठित मन्त्रियोंकी योजनाकी हैं, जिनसे यथा समय सहायता ली जाती है।

४—श्रीमहामण्डलके अनेक कार्य विभाग हैं, यथा,—धर्मप्रचार विभाग, धर्मालय संस्कार विभाग, संस्कृत-विश्वविद्यालय विभाग, शास्त्रानुसंधान-विभाग, मानदान विभाग, रक्षा-विभाग, शास्त्रप्रकाशन विभाग, समाजहितकारी-कोश विभाग, तुलनात्मक गवेषणा विभाग, धर्मशिक्षा विभाग, वर्णाश्रम संघ विभाग, देवसेवा और यज्ञानुष्ठान विभाग इत्यादि। इन सब विभागोंका स्वतन्त्र स्वतन्त्र रूपसे प्रतिवर्ष कार्य होता है, जो महामण्डल वार्षिक विवरणीके रूपसे श्रीमहामण्डल डाइरेक्टरीमें महामण्डल खण्डके नामसे प्रकाशित होता है।

५—श्रीमहामण्डल डाइरेक्टरी एक ऐसी वार्षिक पुस्तक प्रकाशित होती है, जिसमें गृहस्थके जानने योग्य अनेक विषय होते हैं और वह प्रत्येक गृहस्थके घरमें रखने योग्य है। धार्मिक भाव तथा हिन्दी राष्ट्रीय भाषाका प्रचार भी उस स्वजातीय डाइरेक्टरीका उद्देश्य है।

६—श्रीमहामण्डलके रक्षाविभागका ही यह कार्य है कि, नियमित और प्रबल उद्योगसे भगवती श्रीगंगाजीकी धारा अब तक अक्षुण्ण रखायी गयी है और हरद्वार तथा नरोराके बन्धनोंमें जो धारा बिलकुल रोक दी गई थी वह स्थायी रूपसे खुलवा दी गई है। अब भी बड़े बड़े पर्व दिनोंमें श्रीमहामण्डलके ही परामर्शसे वह नियमित धारा बढ़ायी भी जाती है। इसी प्रकार इस विभाग के द्वारा वर्णाश्रम-धर्म विरोधी अनेक कानूनोंको रोकनेका भी यथेष्ट परिश्रम समय समय पर होता रहा है और अब भी होता है। वर्णाश्रमकी सर्वत्र रक्षाके सब कार्योंपर यह विभाग सदा ध्यान रखता है।

७—श्रीमहामण्डलके धर्मालय संस्कार विभागकी साक्षात् और परोक्ष मददसे अनेक तीर्थों तथा मठ-मन्दिरोंका संस्कार और उद्धार हुआ और हो रहा है। जोशीमठके उद्धारका कार्य, गंगोत्रीके संस्कारका कार्य, श्रीकेदारनाथके जीर्णोद्धारका कार्य, श्रीरामेश्वरके जीर्णोद्धारका कार्य, कुरुक्षेत्र जीर्णोद्धारका कार्य गोवर्धनमठ, शारदामठ आदिकी रक्षाका कार्य, जैसे कार्योंमें यह विभाग दृढतासे भाग लेता रहा है और इसमें उसने सफलता प्राप्तकी है। काशी आदिके अनेक तीर्थोंके जीर्णोद्धारमें भी श्रीमहामण्डलने भाग लिया है। धर्मालय रक्षाके लिये कई प्रान्तोंमें जो कानून बन रहे हैं, उसमें श्रीमहामण्डलने यथेष्ट भाग लिया है और उसकी कमेटीमें अपने सदस्य भी भेजे हैं। यहां तक कि, सिक्खपन्थके पटना आदि तीर्थोंके उद्धारमें भी श्रीमहामण्डलने सफलता पूर्वक उद्योग किया था। इस प्रकार यह विभाग अनेक उपकारी कार्य कर रहा है।

८—श्रीमहामण्डलके मानदान विभागसे, हजारों गुणी व्यक्तियोंका सन्मान किया गया है। धर्मोपाधि, राजधर्मोपाधि, कुलांगना धर्मोपाधि, संस्कृत विद्योपाधि, साधारण विद्योपाधि, भाषा विद्योपाधि, संगीत विद्योपाधि, विज्ञान-शिल्पोपाधि, धर्मोपदेशक विभिन्न उपाधि तथा कई प्रकारके मानपत्रों और पदक आदिसे प्रतिवर्ष सैकड़ों गुणवान राजा, महाराजा, धर्माचार्य, कुल महिलाएं,

विभिन्न विषयाके स्वदेशी तथा विदेशी विद्वानों और गुणिजनको उत्साह इस मानदान विभाग द्वारा बढ़ाया जाता है। इस विभागका प्रभाव केवल स्वदेशमें ही नहीं, यूरोप अमेरिका आदि अन्य विदेशोंमें भी है। और प्रत्येक सालके मान प्राप्त व्यक्तियोंकी सूची महामण्डल डाइरेक्टरीमें प्रकाशित होती है।

९—प्रकाशन विभागके लिये दश लाखके मूलधनसे एक कम्पनी खोली गयी है, जिसका नाम श्रीभारतधर्म सिण्डिकेट लिमिटेड है। उसके ४-५ लाखके शेअर बिक भी गये हैं। सिण्डिकेटका अपना मकान, प्रेस, बुकडिपो आदि हैं। यह संस्था हिन्दुजातिके स्वजातीय मुद्रांकनका काम करती रहेगी। श्रीमहामण्डलके शास्त्र प्रकाशनका कार्य भी यही संस्था करती है।

१०—वेदके दो पदार्थवाद दर्शन, दो सांख्य प्रवचन दर्शन और तीन मीमांसा दर्शन शास्त्र थे। उनमेंसे न तो सबके टीका ग्रन्थ मिलते थे और न दो मीमांसा दर्शन ही उपलब्ध थे। सनातनधर्मकी भित्ति अन्य धर्मोकी तरह कल्पना प्रसूत नहीं है। दर्शन शास्त्र ही उसकी भित्ति है। श्रीमहामण्डलके अनुसन्धान विभागने कर्ममीमांसा दर्शनका उत्तरार्ध, जिसमें १ हजार सूत्र होंगे और वेदके उपासना काण्डका मीमांसा शास्त्र, जिसमें भी लगभग १००० सूत्र होंगे, खोज करके वैदिक सप्तदर्शनोंकी पूर्णता कर दी है। ये ग्रन्थ संस्कृत तथा हिन्दीमें भाष्य सहित अलग अलग छप रहे हैं। इसके अतिरिक्त इन सातों दर्शन शास्त्रों पर अलग अलग वर्तमान देश काल पात्रोपयोगी भाष्य तथा टीका ग्रन्थ बने हैं और छप रहे हैं। इस कार्यके द्वारा सनातनधर्मकी भित्ति दृढ़ होगी और हिन्दु जाति पुनः जगद्गुरुपदको प्राप्त करेगी। इन दार्शनिक ग्रन्थोंका संस्कृत और हिन्दी संस्करण तो प्रकाशित होगा ही, किन्तु भारतकी अन्य भाषाओं तथा अंग्रेजी भाषामें भी प्रकाशित करनेका विचार है।

११—सनातनधर्मका एक वृहत् ज्ञान कोष जो बड़े बड़े आठ खंडोंमें समाप्त हुआ है और जिसके रायल साइजके कई हजार पृष्ठ हैं, श्रीमहामण्डलने प्रकाशित किया है। यह धर्मका विश्वकोष हिन्दी राष्ट्रभाषाकी पुष्टि करने और सनातनधर्मके यावत विषयोंको प्रकाशित करनेमें पूर्ण समर्थ हुआ है, यह इस ग्रन्थके पाठ करनेसे विदित होगा।

१२—स्कूल और कालेजोंमें सनातनधर्मकी शिक्षाका विस्तार करनेके लिये श्रीमहामण्डलके शास्त्र प्रकाशन विभागने कई दर्जन पुस्तकें सीरीज (माला) के रूपसे प्रणयन की हैं और प्रकाशित कराई हैं। इसके द्वारा सब श्रेणीके बालकों और बालिकाओंकी धर्मशिक्षाका प्रबन्ध हो सकता है।

१३—श्रीमहामण्डलके धर्म प्रचार विभागके निमित्त कई दर्जन पुस्तक पुस्तिकाएं प्रणीत होकर छप चुकी हैं। जिनमें से बहुतसी बिना मूल्य बांटी जाती हैं और बहुत सी स्वल्प मूल्यमें दी जाती हैं।

१४—श्रीमहामण्डलके तुलनात्मक गवेषणा विभागसे दार्शनिक ग्रन्थोंपर और गीता, चण्डी, उपनिषद् आदि ग्रन्थोंपर समन्वय टीका ग्रन्थ प्रणीत होकर प्रकाशित हुए और हो रहे हैं जिनके देखनेसे पाठकोंको इनकी अपूर्वता और महत्व ज्ञात होगा।

१५—इसी विभागके द्वारा अंग्रेजी भाषाके कई ग्रन्थ प्रणीत होकर प्रकाशित होरहे हैं, इनके द्वारा सनातनधर्मके यथार्थ स्वरूप पूज्यपाद महर्षियों की गवेषणाके महत्त्व और भारतवर्षके जगद्गुरु पद प्राप्तिके अधिकारके विषय में जगत्के अंग्रेज भाषाभाषी यथार्थ ज्ञान प्राप्त कर सकेंगे। इस विभागसे जो वर्ल्ड्स इटर्नल रिलिजन नामक ग्रन्थ प्रकाशित हुआ है, वह जर्मनीमें जर्मन भाषा में अनूदित होकर छपा है और उसका वहां बहुत आदर हुआ है।

१६—युरोप, अमेरिका आदि देशोंसे जो हजारों यात्री प्रतिवर्ष आते हैं, वे सनातनधर्म, उसके तीर्थों और क्रिया कलाओंके विषयमें अज्ञानसे और मूर्ख गाइडोंके समझानेसे निन्दनीय संस्कारोंको लेकर वापस लौटा करते हैं। और अन्य देशोंमें जाकर यहां की मिथ्या निन्दा किया करते हैं। इस दुःख जनक कार्यको दूर करनेके लिये अंग्रेजी भाषामें श्रीमहामण्डलसे अंग्रेजीमें छोटी २ गाइडें प्रकाशित की जाती हैं और उन यात्रियोंको विना मूल्य बांटी जाती हैं।

१७—वर्तमान समयमें पुराणशास्त्रके द्वारा ही हिन्दू धर्मकी सुरक्षा हो रही है और पुराण शास्त्रके सम्बन्धमें ही नाना प्रकारकी शंकाएं होती हैं। वे शंकाएं स्वदेशी-विदेशियों और स्वधर्मियों-अन्यधर्मियों, दोनों प्रकारके लोगोंसे होती है। इस कारण पुराणोंपर जितने प्रकारकी शङ्काएं होती हैं, उन सबके निराकरणके लिये पुराणों पर टीका प्रकाशितकी जा रही हैं। वह टीका हिन्दी, संस्कृत दोनों भाषाओंमें प्रकाशित हो रही हैं, जिसके पढ़नेसे इसका महत्व पाठक गण समझ सकेंगे।

१८—धर्म प्रचार विभागके लिये तथा श्रीमहामण्डलकी शृंखलाकी सफलता के लिये महामण्डलके द्वारा उचित शिक्षा देकर सैकड़ों धर्मोपदेशक प्रस्तुत किये गये हैं और प्रस्तुत किये जा रहे हैं। जिन्होंने धर्मप्रचारके क्षेत्रमें बहुत कुछ काम किया है और कर रहे हैं। महामण्डलके दफ्तरके रजिस्टरमें इनकी संख्या सैकड़ोंकी है।

१९—श्रीमहामण्डलको चिरस्थायी और दृढ़ बनानेके लिये और विद्यापीठ तथा धर्मपीठ काशीपुरीमें उसकी नीव दृढ़ करनेके लिये काशी प्रधान कार्यालय-की दृढ़ता निम्नप्रकारसे की गयी है।

( क ) श्रीविश्वेश्वर ट्रस्टके नामसे एक ट्रस्ट कायम करके एक विशाल भवन काशीके मध्यभागमें प्रसिद्ध जगतगञ्ज चौराहेके ऊपर खरीद किया है। भवन लाइब्रेरी चित्रशाला आदिका वर्तमान मूल्य चार लाखके लगभग होगा।

(ख) अखिल-भारतवर्षीय-संस्कृत-विश्वविद्यालय और तुलनात्मक सर्व धर्म गवेषणा मन्दिरके प्रधान कार्यालयके लिये इसी चौराहेपर कई टुकड़े जमीन संग्रह करके चौकोर स्थान उपलब्ध किया है। इसकी वर्तमान कीमत चार लाख रुपयेसे ऊपर होगी। इसके लिये भी श्रीमहामण्डलके सञ्चालकने एक ट्रस्टका मसविदा बनाया है। यथा समय इसकी रजिस्टरी होगी।

(ग) श्रीमहामण्डलके सञ्चालकने ऊपरके दोनों ट्रस्टोंके अनुसार श्रीअन्न-पूर्णाट्रस्टके नामसे एक ट्रस्ट बनाया है। जिस ट्रस्टकी रजिस्टरी हो गयी है। उसमें पचास साठ हजार रुपये कीमतका एक विशाल भवन, बगीचा आदि

और २० हज़ार रुपयेके शेयर न्यस्त है। इस ट्रस्टके द्वारा अनाथ आर्यमहिलाओंके रहने, भरण पोषण और शिक्षाका कार्य होगा। इस ट्रस्टमें एक आर्य महिला अन्नसत्र भी सम्मिलित है।

(घ) श्रीमहामण्डलके सञ्चालकने महामाया ट्रस्टके नामसे एक चतुर्थ ट्रस्ट भी अपनी गुरुदक्षिणाके धनसे रजिस्टर कराया है। इसमें करीब तीन लाखके शेअर और रुपया मौजूद है। इस ट्रस्टकी आमदनीसे देशसेवा, यज्ञानुष्ठान, शास्त्रप्रकाशन आदि कार्य किये जायंगे।

(ङ) श्रीमहामण्डलके स्थायी कोष स्थानके लिये तथा अखिल भारतवर्षीय संस्कृत विश्वविद्यालय, सर्व धर्म तुलानात्मक गवेषणा मन्दिर और भारतवर्षके स्कूल कालेजोंमें धार्मिक शिक्षा प्रचारके शुभ अभिप्रायसे श्री भारत सम्राट् ट्रस्ट नामसे एक पांचवां ट्रस्ट स्वर्गीय श्रीमहाराजाधिराज दरभंगाने स्थापित किया है, जिसकी रजिस्टरी भी हो गयी है। इस ट्रस्टमें स्वर्गीय हिन्दुसूर्य श्रीमान् महाराणा साहब उदयपुरने डेढ़ लाख रुपया दान किया है, जिसका सूद मिलता है और कुछ अधिक रुपया देनेका उन्होंने अभिवचन भी दिया था; जो उनके सुयोग्य पुत्र वर्तमान हिन्दुसूर्य श्रीमान् महाराणा साहब पूर्ण करेंगे। इसके अतिरिक्त वर्तमान महाराजाधिराज दरभंगा नरेशने भी डेढ़ लाख रुपया देना स्वीकार किया है।

(च) श्रीमहामण्डल प्रधान कार्यालयमें श्रीमहामण्डल कार्यालयके अतिरिक्त आर्यमहिलाओंके कल्याणार्थ आर्यमहिला हितकारिणी महापरिषद्का कार्यालय है और दीन दुखियोंके दुःखोंको दूर करने और साधुसेवा तथा अतिथि सेवाके उद्देश्यसे स्थापित श्रीविश्वनाथ अन्नपूर्णा दानभंडार स्थापित है। ये दोनों संस्थाएं रजिस्टर्ड हैं और श्रीमहामण्डलसे सम्बन्धयुक्त हैं। दोनोंकी आमदनी अलग है।

(छ) इन सब ट्रस्टोंमें बड़े-बड़े राजा, महाराजा, रईस, सेठ, साहूकार आदि ट्रस्टी हैं। श्रीमहामण्डलकी एक फाइनेन्स कमेटी है, जो प्रधान कार्यालयके धनका निरीक्षण और सुप्रबन्ध करती है।

(ज) श्रीमहामण्डल प्रधान कार्यालयके संचालनके लिये एक स्थानीय मन्त्रिसभा है, जो सब प्रबन्धके ऊपर ध्यान रखती है।

२०–प्रचार विभागकी सहायताके लिये (क) भारतधर्म और निगमागम चन्द्रिका द्वैभाषिक मासिक पत्र, (ख) सूर्योदय संस्कृत मासिक पत्र, (ग) आर्यमहिला स्त्रीशिक्षोपयोगी मासिक पत्र और (घ) श्रीमहामण्डल डाइरेक्टरी हिन्दी वार्षिक पुस्तक इस प्रकार चार मासिक पत्र पुस्तकें नियमित प्रकाशित होती हैं। जिनका निरीक्षण प्रधान कार्यालयसे होता है।

२१–सनातनधर्मके शास्त्रीय ग्रन्थोंके बहुल प्रचारके लिये आर्यमहिलामें सटीक पुराण, सूर्योदयमें संस्कृतके अप्रकाशित दार्शनिक ग्रन्थ और भारतधर्ममें हिन्दीके अप्रकाशित दार्शनिक ग्रन्थ खण्डाकारसे नियमित प्रकाशित होते हैं, जिससे ग्राहकोंके घर घर ये बहुमूल्य ग्रन्थ अनायास संगृहीत होते रहते हैं।

२२–अखिल भारतवर्षीय संस्कृत विश्वविद्यालयकी स्थापना बीजारोपण

रूपसे कर दी गयी है। इस विभागका उद्देश्य यह है कि, सनातन धर्म तथा प्राचीन संस्कृत विद्याका विस्तार भारतवर्षके सब नगरोंमें, राजधानियोंमें परीक्षाकेन्द्र स्थापन करके और काशीमें विद्यालय स्थापित किया जाय। भारतवर्षके सब स्कूल और कालेजोंमें बालक बालिकाओंको छात्रवृत्तिका आकर्षण देकर सनातनधर्मकी परीक्षामें शामिल कराया जाय और संस्कृत विद्वानों और राष्ट्रभाषाके ज्ञाताओंकी संख्या बढ़ायी जाय और उनका सम्मान तथा उपयोगिता भी बढ़ायी जाय। प्राचीन याग-यज्ञ प्रणाली और शास्त्रीय कर्मकाण्डकी शैलीकी रक्षा, आयुर्वेद आदि शास्त्रोंको उत्साह देना भी इस विभागका कर्तव्य है। इस विश्वविद्यालयसे आयुर्वेदकी परीक्षा नियमित हो रही है और अन्यान्य परीक्षाओंका आयोजन हो रहा है। इसके केन्द्र लगभग ६० खुल गये हैं और धनसंग्रहका भी प्रबन्ध हो रहा है। १०० केन्द्र खुलने पर अन्य परीक्षाओंका कार्य आरम्भ कर दिया जायगा। इसका विवरण इसके मुखपत्र सूर्योदयमें नियमित प्रकाशित होता रहता है।

२३—श्रीमहामण्डलकी भारतवर्षव्यापी शृंखलाकी सफलताके निमित्त भारतीय गवर्नमेण्ट, प्रान्तीय गवर्नमेण्टों, हिन्दु स्वाधीन राजन्यवर्ग, सब संप्रदायोंके हिन्दु धर्माचार्यों, ब्राह्मण नेतृवृन्द, क्षत्रिय नेतृवृन्द, वैश्य नेतृवृन्द, अन्यान्य राजा, महाराजा तथा सेठ साहूकारोंसे लेखबद्ध सहायक घोषणाएं प्राप्तकी गयी हैं। जो महामण्डल सर्कुलर और मुखपत्रमें द्रष्टव्य हैं। जिनसे भारतधर्ममहामण्डल सर्वमान्य संस्था है, यह सिद्ध होता है।

२४—श्रीमहामण्डलके संरक्षक संघमें प्रायः सब सम्प्रदायोंके धर्माचार्य और सब श्रेणीके हिन्दु स्वाधीन नरपति सम्मिलित हैं। उसके प्रतिनिधि संघमें भारतके सब प्रान्तोंके गण्यमान्य सनातनधर्मी सम्मिलित हैं। जिनमेंसे भारतवर्षीय मन्त्रिसभाका चुनाव होता है और सबके पास श्रीमहामण्डलके सर्कुलर आदि सम्मति ग्रहणके लिये पहुंचा करते हैं। श्रीमहामण्डलके पदधारियोंमें अनेक धर्माचार्य और अनेक प्रसिद्ध राजा महाराजा और देशके गण्यमान्य व्यक्ति सम्मिलित हैं।

२५—श्रीमहामण्डल प्रधान कार्यालय काशीमें एक सुप्रसिद्ध यज्ञमंडप स्थायी रूपसे प्रतिष्ठित है। जिसमें नियमित रूपसे वैदिक, स्मार्त और तान्त्रिक यज्ञ हुआ करते हैं। अबतक उस यज्ञ-मंडपमें लगभग १२५ के यज्ञ हो चुके हैं और उनमें ऐसे भी यज्ञ हुए हैं, जिनमें ४० हज़ार रुपयों तक व्यय हुआ है और १० हजार तक ब्राह्मण भोजन हुआ है। इन यज्ञोंकी समाप्तिमें काशीके वैदिक विद्वानोंकी वसन्तपूजा करनेका भी नियम रक्खा गया है, जिससे वैदिक विद्वानोंको उत्साह मिलता रहे और यज्ञोंका प्रचार बना रहे।

२६—देशसेवा और यज्ञ विभागके सम्बन्धसे प्रधान कार्यालयमें जो पांच देवस्थापन हैं उनकी नियमित सेवा पूजा होती है। वर्षके २४ पर्व दिनोंमें घटस्थापन पूर्वक विभिन्न प्रकारकी देवाराधना की जाती हैं। दोनों नवरात्रोंमें पूजा हवनादि पूर्वक श्रीमहामण्डल ध्वजाका षाण्मासिक संस्कार किया जाता है। इस प्रकार दैवी जगत्से सम्बन्ध दृढ़ रखनेका भी महामण्डल यथा सम्भव आयोजनकर रक्खा है। जो इस घोर समयके लिये अत्यावश्यक है।

२७—सनातनधर्मियोंके मध्यवृत्ति सद्गृहस्थोंकी दरिद्रताका हाल सब पर विदित है। इस कारण श्रीमहामण्डलके धनहीन सभ्योंकी उनके यहाँकी शादी और गमीके समय यथा सम्भव आर्थिक सहायता मिल सके और उनका यथा सम्भव कष्ट दूर हो सके, इस पुण्यमय अभिप्रायसे श्रीमहामण्डलने समाज हितकारी कोष नामक एक सुकौशल पूर्ण विभाग खोला है। उसके नियम बहुत ही सुगम रक्खे हैं। इस विभागसे जो चन्दा आता है, वह मेम्बरोंकी शादी और गमीके समय पर उन्हींको बाँट दिया जाता है। इस विभागकी सफलता मेम्बर वृद्धि पर निर्भर करती है। इस प्रकारसे सामाजिक सहायता पहुंचानेका भी श्रीमहामण्डलने नियम बनाया है। परन्तु हिन्दु प्रजाको जैसा इस ओर ध्यान देना चाहिये वैसा ध्यान न दिया जानेसे इस संघटनकी उन्नति नहीं हो सकी है।

२८—वर्णाश्रमधर्मकी रक्षाका कार्य इस समयके देश काल पात्रके विरुद्ध है। इस कारण महामण्डलके धर्म कार्यों में प्रतिपद पर देवासुर संग्रामके कारण बाधा हुआ करती है। असुविधा तथा बाधाओंको सहकर श्रीमहामण्डलका धर्मकार्य नियमित अग्रसर हो ही रहा है। इस देवासुर संग्राममें श्रीमहामण्डल की नीति उच्छृङ्खल प्रजावर्ग, गवर्नमेंट, राजनीतिक नेतृवृन्द, मुसलमान, ईसाई आदि सबके साथ प्रेम और सहानुभूतिकी रक्खी गयी है। माननीय गवर्नमेंट और कांग्रेस दोनोंकी भावी कार्य प्रणालीमें दोनोंसे श्रीमहामण्डलके प्रस्तावित किसीके धर्ममें हस्तक्षेप न करनेकी नीति श्रीमहामण्डलके शुभ उद्योगसे स्वीकार करायी गयी है।

२९—श्रीमहामण्डलके कार्य विभागोंमें गोरक्षिणी सभाओंको यथा सम्भव सहायता देने और गोरक्षाके कार्यमें यथा सम्भव भाग लेनेका कार्य भी सम्मिलित किया गया है। और श्रीमहामण्डलके उद्योगसे भारतकी कई म्युनिसिपल्टियोंकी हदमें गोहत्या करनेका कार्य बन्द भी कराया गया है।

३०—सङ्गीत विद्याके साथ सनातनधर्मके उपासना कांडका घनिष्ठ सम्बन्ध रहनेके कारण इसकी उन्नतिमें श्रीमहामण्डलने नियमित रूपसे उत्साह दिया है। इसी प्रकार अनेक धर्म कार्यों में पत्रादिसे सहायता देकर और कृत कार्य व्यक्तियोंको मानादिसे पुरस्कृत कर श्रीमहामण्डल प्रधान कार्यालय उद्योग करनेमें पराङ्मुख नहीं हुआ है। यह वार्षिक कार्य विवरणसे विदित होगा।

३१—सनातन धर्मके सम्प्रदायोंमें परस्पर प्रेम स्थापन और उनमें साम्प्रदायिक विरोध दूर करनेके शुभ अभिप्रायसे श्रीमहामण्डलके शास्त्र प्रकाशक विभागने अनेक अप्रकाशित गीता ग्रन्थ और संहिता ग्रन्थ हिन्दी अनुवाद सहित प्रकाशित किये हैं। जो महामण्डल डायरेक्टरीकी पुस्तक सूचीमें द्रष्टव्य हैं। इसी प्रकार जगत्में धर्ममतोंकी शत्रुता दूर करके शान्ति स्थापनके अभिप्रायसे सर्व-धर्म-गवेषणा विभाग द्वारा कई एक अंग्रेजी ग्रन्थ प्रकाशित हुए हैं, जिनका आदर युरोपमें भी हुआ है।

३२—प्रचार विभागके अन्तर्गत श्रीमहामण्डलके द्वारा बड़े बड़े महाधिवेशन और वार्षिक अधिवेशन होते रहे हैं। ऐसे ऐसे अखिल भारतवर्षीय महाधि-

वेशन हुए हैं जिनमें अनेक बड़े बड़े धर्माचार्य और नृपतिगण सभापति रूपसे सम्मिलित हुए हैं।

३३—बनारसमें स्थानीय धर्मप्रचार तथा तीर्थोद्धारकार्यके निमित्त प्राचीन लुप्त भारतवर्षीय आर्यधर्म प्रचारिणी सभाका उद्धार करके और उसके साथ पिशाच-मोचन जीर्णोद्धार कमेटी और अन्यान्य तीर्थोद्धार कमेटियोंके सम्बन्धसे एक दृढ़ स्थानीय केन्द्र स्थापित कर दिया गया है। जिसके ट्रस्टमें २० हजार रुपयोंसे अधिक धन है और जिसका कार्यालय भारतधर्म सिण्डिकेटभवनमें स्थापित है।

३४—श्रीभगवान शंकराचार्यके भारतवर्षकी चार दिशाओंके चार मठों से पश्चिमका शारदामठ कुछ विपन्न हो रहा है। पूर्वके गोवर्धनमठका मुकद्दमा चल रहा है। इन दोनोंके स्वास्थ्य सम्पादनकी आशा है। उत्तरका जोशीमठ बिलकुल उच्छिन्न और नष्ट भ्रष्ट हो गया है। जोशीमठका स्थान वनाकीर्ण हो गया था। उस मठकी जमीनमें से कुछ जमीन महामण्डलने खरीदी है और कुछ गवर्नमेंन्टसे प्राप्त की है। वहांके मन्दिरोंका जीर्णोद्धार कार्य जारी है और उसके लिये भी एक स्वतन्त्र ट्रस्ट बनने वाला है।

३५—श्रीमहामण्डलकी धन सम्बन्धीय व्यवस्था अभी तक सन्तोषजनक नहीं है। प्रधान कार्यालयके ट्रस्टोंसे प्रधान कार्यालयकी मजबूती अवश्य हो गयी है। परन्तु नियमित मासिक व्ययमें आमदनीकी कमी रहती है। इसका कारण यह है कि, एक दशांश मेंबर भी अपना नियमित चन्दा नहीं देते हैं। यदि सनातनधर्मावलम्बी अपनी धार्मिक महासभाको सच्चे हृदयसे अपनावें और इसके मेंबरगण नियमित चन्दा देना अपना कर्तव्य समझें, तो श्रीमहा-मण्डल धर्म, स्वसमाज़ और विद्या सम्बन्धी अनेक कार्य सुगमतासे करनेमें समर्थ हो सकता है। धनके लिये काशीके प्रसिद्ध व्यक्तियोंकी एक फाइनेन्स कमेटी नियुक्त है। नियमित हिसाबकी जांच होती है। सालाना बजट रजि-स्टर्ड नियमानुसार पास कराया जाता है और उसके अनुसार खर्च होता है।

३६—राष्ट्रभाषा हिन्दीकी पूर्णता सम्पादनके लिये श्रीमहामण्डलके शुभ उद्योगसे लगभग २० हजार पृष्ठ मौलिक ग्रन्थ प्रकाशित हो चुके हैं और इससे अधिक संख्यामें छपनेको तैयार हैं। इसके अतिरिक्त भारतधर्म सिण्डिकेट लिमिटेडके द्वारा हिन्दी विश्वकोष अर्थात् हिन्दी भाषाका सच्चा इंसाइक्लोपी-डिया प्रकाशित करनेका निश्चय किया गया है। इस "शब्द-ज्ञानार्णव" नामक विश्वकोषका आकार डबलक्रौन चौपेजी १५ हजार पृष्ठोंसे अधिक होगा। इसमें हिन्दी और संस्कृतके सब शब्द आ जायंगे और जो वैज्ञानिक अंग्रेजी शब्द हिन्दी भाषामें लानेकी आवश्यकता है, उनका भी संग्रह किया जायगा। जिन जिन दार्शनिक, वैज्ञानिक, ऐतिहासिक आदि मतों पर विरुद्ध मतोंके लोगोंका आक्षेप अथवा मतभेद है तुलनात्मक गवेषणा द्वारा उस ग्रन्थमें निरपेक्ष सच्चे मतका प्रतिपादन किया जायगा। यह बृहत् ग्रन्थ स्वराष्ट्र, स्वधर्म और स्वसमाजकी भित्तिको दृढ़ करेगा।

गोविन्दशास्त्री दुगवेकर,
अण्डर सेक्रेटरी,

# सूर्योदयः ।

षष्ठे वर्षे } ज्येष्ठस्य पूर्णिमा सं० १९८८ । { द्वादश संख्या

## सम्पादकीया अभिप्रायाः ।

——०:※:०——

### श्रीविश्वनाथमभ्यर्थयामहे ।

मान्यवर-पण्डितप्रवरश्रीलक्ष्मणशास्त्रिद्राविड़महोदयानां वाराणस्याम-स्याम् आषाढकृष्ण-चतुर्थ्यां गुरुवासरे दिने द्वादशवादने शिवसायुज्यप्राप्त्या वयं सर्वेऽपि काशीवासिनो विद्वांसो निरतिशयां हार्दिकीं व्यथामनुभवामः। एतेषां वियोगेन धर्मः सदाचारश्च निराश्रयो जात इति मन्महे। व्यतीतेषु कियत्सु वर्षेषु धर्मद्रोहिभिः स्वदेशीयैर्विदेशीयैश्च चेक्रियमाणं सनातनधर्म-ह्रासं दर्शं दर्शमेतैः भारतवर्षे प्रतिप्रान्तं प्रतिनगरं प्रतिग्रामञ्च धर्मप्रचारार्थं मह-दान्दोलनमान्दोलितमिति के न जानन्ति। वर्णाश्रम-स्वराज्यसङ्घस्य जलगांव-सम्पद्यमानमहासम्मेलनानन्तरम् इमे नितरां दुर्बला अपि ग्रामेषु खर्वटेषु च महता परिश्रमेण बम्भ्रम्यमाणाः कुत्रचन सक्तुं कुत्रचन केवलं तक्रमेव पिबन्तः शरीरस्वास्थ्यमनादृत्य धर्मप्रचारं विहितवन्तः। कारणेनैतेनैव रुधिरे क्षीणतां गते शास्त्रिमहाभागाः कुटिलेन करालकालेन कवलिता इति बलवान् विश्वा-सोऽस्माकम्। शास्त्रिमहोदयेषु सर्वविधं शास्त्रीयं प्रगाढपाण्डित्यमासीदेव, किञ्चान्येऽपि संख्यातीता गुणा आसन्, यैः समाकृष्टाः भारतवर्षीया राजानो महाराजाः, धनिनो विद्वांसः, साधवः, संन्यासिनो, धर्माचार्याः, गृहस्थाः, विद्यार्थिनः, अध्यापकाः; किम्बहुना बहुज्ञा अल्पज्ञाः सर्वेऽपि मानवाः पूज्यशास्त्रिणां वशीभूता अभूवन्। शास्त्रिमहाभागैः महामहोपाध्याय-पूज्यपाद-स्वर्गीय-कैलासचन्द्रशिरोमणिभट्टाचार्यमहाशयेभ्यः प्रधानरूपेण दर्शनशास्त्र-मधीतम्। त एवैतेषां प्रधानगुरवः। दिगन्तव्याप्तां विद्वत्तामाकर्ण्यैव कलि-कतागवर्नमेण्टसंस्कृतकालेजे तदधिकारिभिः वेदान्तादिदर्शनशास्त्राणा-मध्यापनार्थं ते सादरमाहूताः। शास्त्रिमहोदयैस्तु भारतवर्षस्य तत्तत्प्रान्तेषु संख्यातीतानि संस्कृतविद्याप्रचार-धर्मोद्धार-कार्याणि समनुष्ठितानि, किन्तु तेषु कलिकतास्थं श्रीशिवकुमारभवनं, वाराणसेयः साङ्गवेदविद्यालयश्च प्रधानभूतौ।

श्रीशिवकुमारभवनेन साङ्गवेदविद्यालयेन च अमरभारत्याः सनातनधर्मस्य कीदृशो महोपकारः सम्पद्यत इति तद्विदो जानन्त्येव । भारतविख्यातपण्डितेषु प्रथमे त एव सन्ति, ये किल सनातनधर्मह्रासमसहमानाः तद्रक्षार्थं बद्धपरिकराः सन्तः कार्यक्षेत्रेषु समवातरन् । एतेषामुद्योगेनैव धार्मिकसंस्थानस्य निखिलभारतीय-ब्राह्मणमहासम्मेलनस्य राजनैतिकसंस्थायाः वर्णाश्रमस्वराज्यसङ्घस्य च प्रादुर्भावोऽभूत् । यद्यपि संस्थानयोरुभयोः कार्यप्रणाल्याः सुमहानस्ति मतभेदोऽस्माकं तथापि लक्ष्ये मतैक्यमेवेति निर्विवादम् । किमन्यत् वयं शोकसन्तप्ता अतोऽधिकं लिखितुं न पारयामः । पुत्रवियोगव्यथितायास्तदीयमातुः, तत्पुत्र-पण्डितराज श्रीराजेश्वरशास्त्रिणः, तद्‌-भ्रातुः पण्डितवेंकटेशशास्त्रिणः, अन्येषां च तत्पारिवारिकपुरुषाणां सन्निधाने स्वीयामान्तरिकीं समवेदनामावेदयन्तो वयं शास्त्रिणां शिवत्वप्राप्तये भगवन्तं काशीपुरपतिं श्रीविश्वनाथमभ्यर्थयामहे ।

## भारते धर्मशिक्षा प्रसारायोजनम् ।

अखिलभारतवर्षीयसंस्कृत-विश्वविद्यालयं द्वारीकृत्य भारतीये स्कूल कालेजादौ प्रयासमन्तरेणैव वर्त्तमानदेशकालपात्राविरुद्धधर्मशिक्षाप्रसारोपायाः श्रीभारतधर्ममहामण्डलस्य क्षत्रियमहासभायाश्च सहयोगेन निर्द्धारिताः । ते च नीचैः प्राकट्यं नीयन्ते—

( १ ) सम्पूर्णेऽपि भारतवर्षे बृटिशराज्येषु देशीयराज्येषु च यावन्तः स्कूल-कालेजादयः सन्ति, तेषु तेषु संस्थानेषु तत्तत्संस्थानीयाधिकारि-सम्मत्या परीक्षाकेन्द्राणि संस्थापयिष्यन्ते; तैश्च विशिष्टरूपेण धार्मिक्यो विविधाः परीक्षाः प्रारप्स्यन्ते । विषयेऽत्र भारतशासकस्य ( Indian Government ) पूर्णा सहानुभूतिरप्यधिगताऽस्ते ।

( २ ) सर्वा अपि परीक्षाः सुनिश्चिते समये प्रतिवर्षं सम्भविष्यन्ति । तादृशः प्रयत्नोऽनुष्ठास्यते, येन प्रतिनगरं प्रतिमण्डलं प्रतिराजधानि च नितरां सौविध्येन सर्वा अपि परीक्षाः प्रसारमेष्यन्ति ।

( ३ ) वाराणसीवासिनो विद्वांसो हि परीक्षकपदे नियुक्ता भविष्यन्ति, तेषां मण्डली संस्कृतविश्वविद्यालयस्य अङ्गभूताऽवगन्तव्या ।

( ४ ) परीक्षोपयोगिनां धार्मिकपुस्तकानां निर्माणभारं भारतधर्ममहामण्डलं वहते, तानि च पुस्तकानि वाराणस्यां लप्स्यन्ते ।

( ५ ) प्रतिवर्षं समस्तेऽपि भारते यावन्तो बालका बालिका वा एताः

परीक्षा उत्तरिष्यन्ति, तत्र कतिभ्यः स्वोयार्थिकपरिस्थित्यनुकूलं छात्रवृत्तयोऽपि प्रदास्यन्ते। सा च छात्रवृत्तिः रूप्यकत्रयादारभ्य त्रिंशद्रूप्यकावधि निर्द्धारिता।

(६) अखिलभारतवर्षीय-संस्कृतविश्वविद्यालयसमित्यैव छात्रवृत्ति-निर्णेष्यते। छात्रवृत्तिकोषे धनाढ्या ये महापुरुषा धनसाहाय्यं विधास्यन्ति तेन धनेन तेषां नाम्ना छात्रवृत्तिप्रदानं व्यवस्थापितम्। वृत्तिप्रदानावसरे दातृभ्यः परामर्शोऽपि सादरं सबहुमानं च ग्रहीष्यते।

(७) देशीयेषु राज्येषु तत्तदिच्छानुगुण्यं तत्प्रदत्तच्छात्रवृत्तिषु किमपि वैशिष्ट्यं विधास्यते, अर्थात् देशीयानि राज्यानि यदि समीहेरन् तदा तदीय-राज्येष्वपि तत्प्रदत्तच्छात्रवृत्तौ विशेषता सम्पादिता स्यात्। तथैव यदि केऽपि धनिकाः स्वजातिहितार्थं स्वप्रदत्तवृत्तौ काञ्चित् विशेषतां संरक्षितु-मीहेरन्, तदा तदीयदानानुकूलं सापि भवितुमर्हेत्।

(८) अस्य विभागस्य या विस्तृता नियमावली निर्मास्यते, तत्र विषयेऽपि तत्तद्दातॄणां सम्मतयो ग्रहीष्यन्ते।

× × × ×

## पूज्य श्रीलालजी महाराजस्य धर्मप्रचारसञ्चारः।

सनातनधर्मजगत् श्राव्यं श्रावमिममाशास्पदं संवादं नितरां प्रसीदति यदस्माकं परमपूज्या धर्माचार्या अद्यत्वे वेदशास्त्राणां सनातनधर्मस्य च रक्षार्थं बद्धपरिकराः परिदृश्यन्ते। श्रीनाथद्वारा-धर्मसंस्थानस्य आचार्यप्रभूणामुत्त-राधिकारिणः स्वधर्मप्रेमाणः सुयोग्या उदाराशयाः परमपूज्याः श्रीमन्तो विद्या-सुधाकराः चिरञ्जीविगोस्वामिवर-'श्रीलालजी'-श्रीदामोदरलालजी महा-राजाः परमोत्कृष्टधर्मोत्साहप्रेरिता धर्मप्रचारार्थं गुर्जर-काठियावाडप्रभृति प्रान्तेषु सञ्चरन्ति। अखिलभारतवर्षीय-संस्कृत-विश्वविद्यालयस्य कृते यथेष्ट-धनसंग्रह एव तत्सञ्चरणप्रधानहेतुः। आशास्महे, यदेते श्रीमन्तः पूज्यप्रवरा यद् यत् स्थानमलङ्कुर्युः, तत्र तत्र निवसन्तः सनातनधर्माणः सज्जनशिरोमणयो-ऽपि प्रबलेनोत्साहेन तेषां सर्वविधं समुचितसाहाय्यं विदधानाः पुण्यं यशश्च प्राप्नुयुरिति।

## आनन्दजनकं संघटनम्।

अखिलभारतवर्षीय-क्षत्रियमहासभाया महाधिवेशनं पन्ना-नरेशस्य सभापतित्वे झांसी-नगरे, मैथिलमहासभायाश्च महाराजाधिराज-श्रीदरभंगा-नरपतेः साभापत्ये परमोत्साहेनैषम एषु दिवसेषु सुसम्पन्नमिति निरतिशयं प्रमोदास्पदमस्माकम्। द्वयोरेव महाधिवेशनयोरसाधारणं साफल्यं श्रूयते। एवमेव यदि तत्तज्जाति-सम्प्रदायपक्षपातिनः सज्जना निजनिज-जातीयमहा-सभासंग्रन्थनेन सुसंघटिताः सन्तो वर्णाश्रमधर्मरक्षार्थं दृढसंकल्पाः स्युस्तदा हिन्दुजातेर्भारतस्य च सर्वविधा समुन्नतिः सुतरां सम्पद्येत।

# शोकाश्रु-बिन्दवः *

—:o*o:—

हा ! हा ! हन्त ! नितान्तमन्धतमसे मग्नाऽधुना काशिका ।
शोकावेगकवोष्णबाष्पमलिना हा ! हा ! विदां मण्डली ॥
वाग्देवी करुणं मुहुर्विलपति प्रोच्छूननेत्रा सती ।
याते लक्ष्मणशास्त्रिपण्डितवरेऽकस्मात् पदं शाम्भवम् ॥ १ ॥
निर्वाणोऽद्य सुवर्णयष्टिकलितो रत्नप्रदीपः स्वयम् ।
उच्चैः शोचति हन्त ! वञ्चितमति र्लोकोऽप्यनालोकवान् ॥
कालेनाऽकृपचेतसा कवलिते विद्वद्वरे लक्ष्मणे ।
जीर्णारण्यमिवेदमुज्झितभयं शून्यं जगल्लक्ष्यते ॥ २ ॥
कालेऽस्मिन् कलिकश्मले कतिपये स्वाचारधूर्धारकाः ।
अत्यल्पाः किल तेषु वैदिकपथोद्धाराध्वरे दीक्षिताः ॥
श्रद्धेयो जनताऽतिमानितवचास्तत्रैक एवाग्रणी-
रासील्लक्ष्मणशास्त्रिपण्डितवरः सोऽप्यद्य हा ! ऽस्तंगतः ॥ ३ ॥
दीना सम्प्रति भारती, भरतभूरालोकशून्याऽधुना ।
धर्मोऽस्त्यस्तधृतिः श्रुतिर्भगवती श्रुत्येकशेषाऽभवत् ॥
स्मार्तोऽध्वा स्मरणीयतामुपगतो नष्टं पुराणं रणे ।
हा ! हा ! लक्ष्मणशास्त्रिणा सममभी याताः समस्ताः किमु ॥ ४ ॥
को वा नास्तिकमण्डलेन विवदेताव्याकुलो युक्तिमान् ।
कस्माद्भीतिमुपेत्य धार्मिकविधौ भूपस्तटस्थो भवेत् ॥
विश्वासादपि कस्य लक्षनिचयं दद्युर्धनेशाः स्वयम् ।
हा ! हा ! लक्ष्मणशास्त्रिणा विरहिता जाता निराशा वयम् ॥ ५ ॥
आबाल्यात्सुरभारती भगवती निर्व्याजमाराधिता ।
वृत्तिः पुष्कलवेतना तृणमिव त्यक्ता पदव्या सह ॥
धर्मोद्धारमनर्गलं घटयितुं येनार्पितं जीवनम् ।
धर्मो मूर्त इवैष लक्ष्मणसुधीर्वाचा कया वर्ण्यताम् ॥ ६ ॥
वस्वष्टाङ्कशशाङ्कसंमिततमे संवत्सरे वैक्रमे ।
मास्याषाढपरे दले च बहुले प्रातश्चतुर्थ्यां गुरौ ॥
त्यक्त्वा देहमकल्मषं शिवपुरे विद्वद्वरो लक्ष्मणो ।
विश्वेशस्य सरूपतामुपगतो भक्त्या मुहुर्वन्द्यते ॥ ७ ॥
तनयो नयपारगः पितुः सदृशः पण्डितराज उच्चकैः ।
सुजनैः स्पृहया प्रतीक्ष्यते बुधराजेश्वरशास्त्रिसत्तमः ॥ ८ ॥

शोक-विह्वलाः श्रीगीर्वाणवाग्वर्द्धिनी सभासदस्याः ।

---

* श्रीरामनाथ जोशी महाशयेन शोकसभायां पठिताः ।

प्रातःस्मरणीय-धर्मप्राण-पण्डितप्रवर-श्रीमल्लक्ष्मणशास्त्रि-चरणानां
शिवसायुज्याप्तेः पूर्वावस्था—



हा ! हा ! हन्त ! नितान्तमन्धतमसे मग्नाऽधुना काशिका ।
शोकावेगकवोष्णवाष्पमलिना हा ! हा ! विदां मण्डली ॥
वाग्देवी करुणं मुहुर्विलपति प्रोच्छूननेत्रा सती ।
याते लक्ष्मणशास्त्रिपण्डितवरेऽकस्मात् पदं शाम्भवम् ॥ १ ॥

# शोकषट्पदी ।

—:०ॐ०:—

अहह ! क गतोऽधुना सना-तनधर्मोद्धरणे दृढव्रतः ।
सुकृती कृतलक्षणः कृती विजयी द्राविड-लक्ष्मणः सुधीः ॥१॥
कलिकालवशादिदं ध्रुवं समभूदद्य, यतो दुराशयः ।
सहते न कलिः कदापि हा ! गुणहीनो गुणिनां समुन्नतिम् ॥२॥
शरणं कमसौ सनातनो बत ! धर्मोऽद्य गमिष्यति क्षितौ ।
अधिभूमि ! शुचाऽऽकुलो जनः कथमेतां नु धुरं धरिष्यति ॥३॥
अहहाऽवसरे विधीयतां कठिनेऽस्मिन्निह किं निराश्रयैः ।
धृतधर्मभरैर्बुधैर्मही–सुरसम्मेलनमण्डलाश्रयैः ॥ ४ ॥
अधिकाशि जनस्य दुर्विधेः सहसाऽऽत्यन्तिकमस्तमभ्यगात् ।
धरणीतलभूषणायितो द्युतिमान् धर्मदिवाकरोऽद्य हा ! ॥ ५ ॥
अथ भारतवासिनो जना ननु दुःखेऽपि सुखं वहन्त्यमी ॥
बुधलक्ष्मण ! बोधय तावकाऽऽत्मज–राजेश्वरपण्डितं भुवि ॥६॥

—श्रीयुक्तानन्तरामशास्त्रिणो वेतालस्य ।
( साहित्याचार्यस्य )

---

# अहो निष्ठुरता दैवस्य !!!

अद्य प्रातरेव समाचारपत्रे तत्रभवतां दर्शननिष्णातानां महामहोपाध्यायानां पूज्यपादानां लक्ष्मणशास्त्रिणां परलोकगमनवृत्तं पठित्वाऽपि मोहपरवशेन 'एवं किं कथं वा सम्भाव्यत' इति तर्कवितर्काकुलो बहुकालमासिषम् । वैचित्र्यमयेऽस्मिन् संसारे किं न सम्भाव्यते अथवा 'मरणं प्रकृति'रिति तर्कसनाथेन मनसा निश्चित्य मोहनिद्राच्युतस्तेषां पवित्रगुणानां स्मरणेनैव मोहापनोदः कर्त्तव्यो नास्त्यन्या गतिरित्यवाधारयम् ।

अहो निष्ठुरता दैवस्य ! अद्यापि महामहोपाध्यायानां पूज्यचरणानां नैयायिक-प्रवराणां वामाचरणभट्टाचार्याणां सुरलोकगमनजनितदुःखं प्रत्यग्रमेवास्ति तद्विधिनाऽघटनसंघटनपरायणेनापरेण तीव्राघातेन पुनरपि प्रहारः कृतः । को वा वज्रप्रहारममुं सोढुं समर्थः ? कस्य वा हृदि तादृश एव निष्ठुरो भावो येन कम्पिते वर्णाश्रमकेतावचलितस्तिष्ठेत् ? प्राचीनसाम्प्रदायिकपाण्डित्यप्रकाशराहित्येन कथमधुना काशतां काशी ? केषां स्थितिमात्रेणैव वा वर्णाश्रम-

विद्वेषिणामवैदिक-शास्त्रप्रचारकाणां निष्ठुराक्रमणं परिसह्य सर्वथाऽऽत्मानं निरुपद्रवमधुना मन्येत काशी? कथं वा तेषां कुतर्काननायासेनैव निराकृत्य ब्राह्मणादीनां वैदिकमतावलम्बिनां शास्त्राणाञ्च व्यवस्थां सुदृढ़ां रक्षितुं शक्नुयात् काशी? मन्ये भट्टाचार्यशास्त्रिवर्यौ वैदिकमार्गानुगामिनौ विद्याप्रकाशेन सममेव वर्णाश्रमव्यवस्थासंरक्षकावाजीवं कालं नीतवन्तौ। युगधर्मानुरोधेन धर्मविद्वेषिणां वर्धमानां शक्तिं विलोक्य धर्मरक्षणार्थमेव सुरलोके बद्धप्रतिज्ञेन धर्मसंरक्षकेण सह गूढ़परामर्शं कर्त्तुमेव गतवन्तौ। अथवा कलेः वर्धमानं प्रभावं समीक्ष्य 'धर्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः। ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयता' मित्युक्त्याचार्यवाक्यानामन्यथात्वमसम्भाव्य 'स्वराज' प्राप्तिसमकालमेव चतुर्वर्गलोपो भविष्यतीति निश्चित्यात्मनः समक्षमेव क्रियारसेन परिवर्धितानां धर्मार्थकाममोक्षवृक्षाणामुन्मूलनमसहमानौ पूर्वमेव दिव्यलोकं गतवन्तौ। अथवा मर्त्यलोकहितकाङ्क्षया सुरलोके देवैः कृतायां गोष्ठ्यां मर्त्यलोकस्यावितथामवस्थां साक्षीरूपेण निवेदितुं सुरैः सविनयमाहूतौ तत्र प्राप्तवन्तौ। भविष्यत्येव यद्भावि। किन्त्वधुना प्राचीनशास्त्रपरिपाटी लुप्ता, वर्णाश्रमव्यवस्था सर्वथाऽरक्षिता सम्पन्ना, शून्या काशी, पण्डितमण्डली सुमेरुरहिता मालेव खण्डिता। शोकाच्छन्नायां काश्यामपि आधुनिकपाश्चात्यसभ्यतानिमग्ना भारतीया दर्दुरा इव कोलाहलं कुर्वन्तु। अहम्मन्याः, अर्धपण्डिता अपि शास्त्रतत्त्वज्ञानामभावे स्वच्छन्दं विचरन्तु। किं बहुना लोचनानामभावे शास्त्राणि अगाधे कूपे पतिष्यन्त्येव सर्वेषामाधारः शरणार्थिनां शरण्यः काशी विश्वनाथो यदि तत्र न स्यादिति।

—श्री उमेशमिश्रः ( प्रोफेसर )

विश्वविद्यालय, प्रयाग

---

# शोकोद्गारः।

अहह! क्षितिमण्डनायिता-
 खिलभूपार्चितपादपङ्कजः॥
विदुषामधिभूः स लक्ष्मणः!
 क गतः सम्प्रति नैव दृश्यते॥ १॥
विधिचेष्टितमेतदस्ति किं,
 कलिकालाचरितं किमूत वा॥

अथवा सुरराजसद्मनि
त्रिदशेन्द्रार्चित एव सोऽगमत् ॥ २ ॥
अयि भारतभूमि ! ते प्रिय
स्तनयः सम्प्रति धर्मकर्मणि ॥
निरतः सहसाऽभ्यगादितो
जनमान्यः क्व नु केन हेतुना ॥ ३ ॥
भवतो विरहेण हा ! सना-
तनधर्मः किल दुःखमाप्स्यति ॥
भवदाश्रयमागतोऽधुना
स कथं स्थास्यति वा निराश्रितः ॥ ४ ॥

धर्मप्राण ! बुधेन्द्र ! लक्ष्मण ! तवाऽद्याऽऽस्यन्तिका दर्शनं ।
स्मृत्वा दुःसहशोकभारविवशा वाराणसेया वयम् ॥
बिभ्राणाः समवेदनां तव परीवारेण साकं भृशं ।
श्रीराजेश्वरमेव धर्मविषये कार्यक्षमं मन्महे ॥ ५ ॥

— होशिङ्ग श्रीजगन्नाथशास्त्रिणः [ साहित्याचार्यस्य ] ।

---

## अनभ्रो वज्रपातः ।

प्रकृत्या प्रेमाण्डधदधिकदूनेन मनसा,
समुन्मीलच्छीलः समयसरिता रोधसि गुणी ।
गलन्मूलं धर्मद्रुममभिविलोक्याशु तरसा,
रसावेशो यो वै कृशमपि करालम्बनमदात् ॥

हा हन्त ! साक्षात्कृतशब्दब्रह्मणां सुगृहीतनाम्नां म० म० श्रीलक्ष्मण-शास्त्रिणां नलिनीदलगतजलबिन्दुभङ्गुरं जीवनमपहरता कृतान्तेन, महापुरुषान् जिगणयिषता सचेतसामद्य रिक्तीकृतमादिममङ्गुलिपर्व । हन्त ! हन्त !! तरस्विना कालानिलेन सुकृतवल्लेरातपत्रतामापन्नोऽपनीतो धाराधराडम्बरः । अहो पुरातन संस्कृतियोषितश्चलद्दीक्षणखञ्जनोऽद्य पङ्करजनि । स्मारं स्मारं केषां हृदयं न लिप्यत उरुजवैरुष्णैर्निःश्वासैः । अस्त्वलं शुचा, स्मरणीयां गतिमापन्नानामेषां मुक्तिलाभाय परिवारस्य च शान्तिसलिलोपसेकाय निटिलतटचुम्बदञ्जलिपुटैः समवेदनैर्देवो मृडानीपतिः प्रतिपलं प्रार्थ्यत एव । सम्प्रति पं० राजेश्वर शास्त्रिणम्प्रति परितः प्रस्नुतस्नेहस्पृशा दृशा वीक्ष्यायमञ्जलिः प्रहीयते ।

पीडानीडभवन्मनाः समधिकक्षारावलीढव्रण—
स्तारल्यं कलयन्नलञ्च जगतः कालस्य लौल्यं मुहुः ।
अंसन्यस्त समस्ततद्गुरुभरः पश्चाद् गरीयान् गुणैः
पूज्ये गच्छति, मञ्चमञ्चति निजं कौलं कनीयान् जनः ॥

—श्रीजयकिशोरनारायणसिंहः साहित्याऽलङ्कारः,
ग्राम पकरी मुजफ्फरपुर ।

# काचित्की परिवर्त्तना परिवर्द्धना च।

प्रणेता—श्रीदीनानाथशर्म्मा सारस्वतशास्त्री।
('मुल्तान' स्थ-श्रीसनातनधर्म्मसंस्कृतकालेजाऽध्यापकः)

'सूर्य्योदय'स्य षष्ठसप्तमाऽङ्कयोः 'टिप्पणे टिप्पणम्' इति मत्सन्दृब्धनिबन्धस्तस्य पाठकैरवलोकित एव स्यात्। तत्र सप्तमाऽङ्के काचित्कानि परिवर्त्तनानीत्थमवसेयानि।—

'आञ्चिकत्' इत्यत्र 'आञ्चकत्' इति पाठो बोद्धव्यः। तत्रेयं टिप्पण्यपि ज्ञेया—"अङ्कपदे लक्षणे च (चु० उ० से० स०) अदन्तः। तस्माण्णिचि (स्वार्थिके) अतो लोपे प्राप्ते 'ओः पुयण्–' इत्यत्र वर्णादिग्रहणेन † लब्धया 'णिचि अच आदेशो न स्यात् द्वित्वे कार्य्ये' इत्युक्त्याऽल्लोपस्याऽभावे, 'सनाद्यन्ता' इति धातुत्वे, लुङि, तिपि, शपं बाधित्वा च्लौ, तस्य 'णिश्री' ति चङि 'अजादे र्द्वितीयस्य' इत्यधिकृतौ 'चङि' इति 'ङ्क' शब्दस्य द्वित्वे प्राप्ते 'नकारजावनुस्वारपञ्चमौ झली' ति ङकारस्य नकारजत्वाद् 'नन्द्रा' इति तस्य द्वित्वप्युदासे, 'क' इत्यस्य द्वित्वे, उत्तरखण्डे द्वित्वस्याऽकार्य्यत्वादतो लोपे, णिलोपे, अभ्यासस्य चुत्वे, नस्य अत्वे, अङ्गस्य आटि वृद्धौ च, 'आञ्चक् अत्–' इत्यवस्थायां संहितायाम्–आञ्चकत्। अग्लोपित्वेन सन्वद्भावाभावाच्च इत्वदीर्घौ। एवमेव 'प्रार्त्तथत' इत्यादयोऽपि ज्ञेयाः, आत्मनेपद एव भेदः।

'निरदीक्षत' इत्यप्यशुद्धं मुद्रितम्। तत्र 'निरदिक्षन्त' इति ज्ञेयम्। अत्रेदमूह्यम्—निरुपसृष्टाद् दिशते ≍ कर्म्मणि लुङि, झे, च्लौ, तस्य सिचि प्राप्ते, अनिट्त्वे तदपवादत्वात्—'शल इगु–' इति क्से, कित्वाद्गुणाऽभावे, 'व्रश्चे' ति षत्वे 'षढो' रितिकत्वे, कषयोः संयोगे षत्वे, अङ्गस्याऽटि, क्सस्याऽदन्तत्वाद् 'आत्मनेपदेष्वनत' इत्यस्याऽप्राप्तौ, झस्य हलादित्वाच्च 'क्सस्याचि' इत्यस्याऽप्राप्तौ 'झोऽन्त' इत्यन्तादेशे, 'क्सस्याची'त्यकारलोपे' झलादित्वाभावाच्च 'झलोझलो' त्यस्याऽप्राप्तौ 'निरदिक्षन्त' इति कर्म्मणि साधु, कर्त्तर्य्यपीयमेव प्रक्रिया। आत्मनेपदं तत्र केवलं स्वरितेत्त्वप्रयुक्तमेव न तु 'भावकर्म्मणो' रिति शिष्टम्। इति परिवर्त्तनम्।

† यदि णौ द्वित्वे कार्य्येऽपि अच आदेशो भवेत्; तर्हि 'अबीभवद्' इत्यादिषु 'भू–णि' इतिस्थिते, अच आदेशे (वृद्धौ), आवि, उपधा ह्रस्वे, 'भव्' इत्यस्य द्वित्वे 'सन्वतः 'दीर्घो लघो' रितीत्वादिना ईप्सितरूपनिष्पत्तौ 'ओः पुयण्–इत्युकारस्य इत्वं वैयर्थ्यमाटीकेत। तेन न भवति णौ, द्वित्वे कार्येऽच आदेशः। द्वित्वे कृते तु भवत्येवाऽभ्यासोत्तरखण्डे॥

अथाऽतः परिवर्द्धना तु इत्थमवसेया—

श्रीमाधवशास्त्रिभाण्डारिणां "वैदिकवाङ्मयनिबन्धे" ( अखिलभारतीय-प्राच्यविद्वत्परिषदर्थं निर्मिते ) पृ० ५ पं० १० उपात्तुम्, पृ० ७ पं० १० अनुकुरुते, इति पदे चिन्त्ये । पूर्वत्र उपाङ्पसृष्टो ददातिरभिसंहितः, तस्य तुमुनि 'अच उपसर्गात्तः' इत्यस्याऽप्राप्तिः, तस्य तादिकिद्विषयत्वात्, तुमुनश्च तादवस्थ्या-( कित्त्वा- )ऽभावात्, तेन तत्र 'उपादातु' मित्येव न्याय्यम् । न च तत्र प्रत्यवसानार्थस्य अदृधातोः प्रयोगः सङ्गच्छते; तत्र 'ग्रहीतु' मित्यर्थस्याऽभिसंहितत्वात् । धातूनामनेकार्थकत्वे तु सर्वमर्यादोच्छेदापत्तिः, स्थितेष्वेव प्राक्तु प्रयोगेषु तत्समर्थनसत्त्वाद् । 'सिद्धस्य गतिश्चिन्तनीया' इति तु भाण्डारिणामपि मतम् ।

परत्र च 'अनुपराभ्यां कृञः' कर्तृगेऽपि क्रियाफले गन्धनादौ च परस्मैपदेनैव भाव्यम् । एवमेव पृ० ४ पं० १२ चित्तं आकाश' इत्यादिभाण्डारिप्रयोगेऽप्यनुपपत्तिः, हल्येव मोऽनुस्वारविधानात्, अत एव 'किम्युक' मित्यत्र 'यत्वस्याऽसिद्धत्वान्नानुस्वारः' इति दीक्षितवचनं कौमुद्यामर्थवत् । एवम् पृ० ३ 'अवभाण्ड' 'युगुल' इत्यादीनि तदीयचिन्त्यपदान्युपेक्ष्यन्त एवाऽस्माभिः ।

'अमरभारती-' पत्रेऽपि तदीये 'ब्राह्मणानां भूदेवत्वम्' इति प्रबन्धे 'धर्मेना सञ्चेरुः' 'त अनिच्छन्तोऽपि' इत्यादि पदानि चिन्त्यानि । पूर्वत्र-'समस्तृतीयायुक्ताद्' इत्यात्मनेपदप्राप्तेः, परत्र च 'एङः पदान्तादति' इत्यस्य च प्राप्तत्वात् ।

अधुना कौमुद्यां कानिचिदपराण्यपि पदानि विविच्यन्ते—

१-भ्वादिगणे 'स्पश बाधनस्पर्शनयो' रित्यत्र 'स्पर्शनं ग्रथनम्' इति पाठः केषुचित् कौमुदी-पुस्तकेषु दृश्यते, तत्र 'ग्रन्थनम्' इत्येवेष्यते ग्रथिधातोर्ग्रन्थधातोर्वा नकारलोपस्य तत्र कथमप्यप्राप्तत्वात् ।

२-जुहोत्यादिगणे दिवादिगणे च 'अथ आगणान्ताः परस्मैपदिनः' इति बहुषु कौमुदी-पुस्तकेषु दृश्यमानः पाठोऽप्रामाणिकः । आङ्योगे 'पञ्चम्यपाङ्' इति पञ्चम्यापत्तेः । अव्ययीभावत्वे तु 'आगणान्तम्' इति पाठेन भवितव्यम् ।

३-चुरादिगणेऽदन्तधातुषु 'सूच पैशुन्ये' धातोर्लुङि प्रायः सर्वेषु पुस्तकेषु 'असूसुचत्' इति प्रयोगो दृश्यते, परं स चिन्त्यः । अल्लोपस्य स्थानिवद्भावेन नाऽत्रोपधा ह्रस्वप्राप्तिः । अग्लोपित्वेन सन्वद्भावाभावाच्च न 'दीर्घो लघोः' इति । तत्र 'असुसूचद्' इतीष्यते ।

४-नामधातुप्रक्रियायां सर्वेषु पुस्तकेषु 'आमुमुमायत्' इति प्रयोगो

दृश्यते ; परं स चिन्त्यः। तत्र 'आमुमुमुआयत' इति मुकारत्रय्येव इष्यते, अजादेर्धातोर्द्वितीयस्याऽचो द्वित्वप्रसङ्गात्।

५—लकारार्थप्रक्रियायां 'लिङ्चोर्ध्वमौहूर्तिके' इति सूत्रे 'मुहूर्तादुपरि उपाध्यायश्चेद्—' अत्र 'मुहूर्ताद्' इत्यत्र दृष्टा पञ्चम्यपि चिन्त्या उपरि शब्द-योगे 'षष्ठ्यतसर्थप्रत्ययेन' इति षष्ठ्याः प्राप्तत्वात्, तेनाऽत्र 'मुहूर्तादूर्ध्व' मिति पाठ एव श्रेयान्।

६-ण्यन्तप्रकरणे 'ऐर्ष्यियत्' 'सन्नन्ते च ईर्ष्यियिषति' इति प्रयोगौ बहुषु पुस्तकेषु दृश्येते। ते अपि न। 'ईर्ष्यतेस्तृतीयस्य' इति तृतीयस्य द्वित्व-पक्षत्वाद् 'ऐर्ष्ययत' 'ईर्ष्यियषति' इति प्रयोगावेव इष्येते। इकारविशिष्टस्य यकारस्य द्वित्वं तु न दृष्टम्।

७—एवं 'धिन्वन्ति' इत्यत्र उवङं बाधित्वा यण् कथं जात इत्यपि कौमुद्यां न विचारितम्।

८-पूर्वार्द्धे 'मांसि' इत्यत्र 'नपुंसकस्य झलचः' इति नुम् हलन्तमांस शब्दे भवति न वा ; भवति चेत् स कथं विलीयते, इत्यपि कौमुद्यां न विचारितम्।

श्रीभाण्डारिमहाभागान् प्रार्थये ; अस्मिन् सर्व्वस्मिन्नेव विषये विविच्य सूनृतया वाचा प्रकाशं कुर्व्वन्तु। विशिष्टविचारस्तु पुनः कदाचित्॥ त्रुटिर्मर्ष-णीया। अस्य पूर्व्वस्य च निबन्धस्योत्तरं 'सूर्य्योदय' एव प्रह्येलिमम्॥ *॥इति॥

---

## "ऊढायाः पितृगेहे प्रसवमरणयोरशुचित्वव्यवस्था"‡

प्रश्नोऽयं समुपातिष्ठतास्माकमपि सविधे यदूढायाः कन्यायाः पितृगेहे प्रसवमरणयोः पित्रादीनां तत्सपिण्डानां च कियत्कालपर्यन्तमशुचित्वमिति। तत्र-आकरग्रन्थ-प्रकरणग्रन्थालोचनेनायमभिसन्धिरुद्भवति। तथा हि—एत-द्विषयप्रतिपादकानि, विष्णुस्मृतौ, मनुस्मृतौ-ब्रह्मपुराणे, कूर्मपुराणे च चत्वारि प्रमाण-वाक्यानि समधिगतानि। यथा—

१ "स्त्रीणां विवाहः संस्कारः। संस्कृतासु स्त्रीषु नाशौचं भवति पितृपक्षे।

---

* प्रह्येलिमम्। प्रोपसृष्टाद् 'हि' धातोः केलिमरि 'एरनेकाच' इति यण्। प्रहेलिम-मिति तु अपपाठ एव प्रेषणार्थे। तत्र त्यागार्थको जहातिः। प्रेषणार्थकस्तु प्रहिणोतिरेव।

‡ लेखोऽयं विदुषां संमत्यर्थं प्रकाश्यते। अत्र शास्त्रानुसारेण विचारो विधेय इति

—लेखकः

तत्प्रसवंमरणे चेत् पितृगृहे स्यातां 'तदैकरात्रं त्रिरात्रं च"। इति विष्णुः सूत्रमाह स्म ।

२ "विवाहितापि चेत्कन्या म्रियते पितृवेश्मनि । तस्या स्त्रिरात्राच्छुद्ध्यन्ति बान्धवा नात्र संशयः" ॥ इति मनुवचनं गोविन्दानन्दः शुद्धिकौमुद्यामुदाजहार ।

३ "दत्ता नारी पितुर्गेहे सूयते म्रियतेऽथवा । स्वमशौचं चरेत्सम्यक्पृथक्स्थाने व्यवस्थिता ॥ तद्बन्धुवर्गस्त्वेकेन शुद्ध्यते जनकस्त्रिभिः" ॥ इति ब्रह्मपुराण-वाक्यम् ।

४ इदं वाक्यं रघुनन्दनभट्टाचार्यैः शुद्धितत्त्वे आदिपुराणनाम्ना समुद्धृतमिति ज्ञेयम् "गृहे मृतासु कन्यासु स्यात्त्र्यहं पितुः" इति कौर्मवचनम् ।

अत्र विष्णुसूत्रमपहाय प्रायः सर्वाणि प्रमाणवचनानि एकवाक्यतामापन्नानि परस्परमविरुद्धानीति पूर्वं विष्णुसूत्रमालोचयामः यथा विष्णुसूत्रमुल्लिख्य मिताक्षरायां विज्ञानेश्वरो ब्रूते-'विवाहादूर्ध्वं तु विष्णुना विशेषो दर्शितः । संस्कृतासु स्त्रीषु नाशौचं पितृपक्षे । तत्प्रसवमरणे चेत्पितृगृहे स्यातां तदैकरात्रं त्रिरात्रं वेति । तत्र प्रसवे एकाहः । मरणे त्रिरात्रमिति व्यवस्थेति ।

माधवाचार्यो रघुनन्दनभट्टाचार्यश्च पराशरमाधवीये शुद्धितत्त्वे च ब्रह्मपुराणवचनेन विष्णुसूत्रस्यैकवाक्यतया पितुस्त्रिरात्रं भ्रात्रादीनां च पितृपक्षीयाणामेकरात्रमशौचमाहतुः । तद्यथा शुद्धितत्त्वे —

'दत्ता नारी पितुर्गेहे सूयते म्रियतेऽथवा ।
स्वमशौचं चरेत्सम्यक् पृथक्स्थानव्यवस्थिता ।
तद्बन्धुवर्गस्त्वेकेन शुद्ध्येत्तु जनकस्त्रिभिरिति ।

अत्र सूयेताथ म्रियेत वेतिमाधवीये पाठः । स्वमशौचं चरेदित्यर्धं च तत्र नास्ति; शुद्ध्येत्तु इत्यत्र 'शुचिस्तदि'ति च पाठः । शुद्धितत्त्वे च कश्चिदिदं वचनमादिपुराणमितिपाठेनोद्धृतम् । एवं च विष्णुस्मृतौ "तत्प्रसवमरणे" चेदिति कृतसमासप्रसवमरणपदार्थाभ्यां कृतसमासस्यैकरात्रं त्रिरात्रं वेति, तस्यैकैकक्रमेणान्वयस्य व्युत्पत्तिविरोधात् , पुराण-वचनविरोधाच्च मिताक्षराकृन्मतं न समीचीनमिति प्रतिभाति । किं च यथा-'नहि भवति घटपटयोर्नीलिमा, पीतिमावेत्यनेन घटे नीलिमा पटे पीतिमेत्येवं प्रतीतिस्तद्वत् मिताक्षरानुसारेण विष्णुसूत्रस्य 'प्रसव एकरात्रं, मरणेत्रिरात्रमिति' न प्रतीतिः । यदि च "दत्तानारी पितुर्गेहे प्रधाने सूयते यदि । म्रियते वा तदा तस्याः पिता शुद्ध्येत्त्रिभिर्दिनै"रिति कल्पतरूद्धृतवचनैकवाक्यतया पितुः प्रधाने गृहे प्रसव एव त्र्यहाशौचम्, अन्यत्रैकरात्रं पितृगृहे इति निर्णीयते तथापि

पितृगृहान्तरे मरणेऽपि न त्रिरात्रप्राप्तिः प्रधान इत्यनेन संकोचात्। विष्णु-सूत्रे च समस्तासमस्तयोः क्रमिकान्वय-व्युत्पत्तिविरोधस्य तथाप्यनुद्धाराच्च। तस्मात्कल्पतरूद्धृतवचने 'पितुर्गेहेऽप्रधान' इत्यकारप्रश्लेषो युक्तः। अप्राधान्यं चैकगृहशयनादिसंसर्गशून्यताद्योतकम्। अत एव शुद्धितत्त्वोद्धृतपुराणवचने 'पृथक्स्थानव्यवस्थितेतिपाठः। तदर्थश्च—पितृगृहे प्रसूता कन्या स्वजननीप्रयुक्तमाशौचं चरेत्। पित्रादिसंसर्गशून्या चेत्तस्याः पित्रादीनां त्रिरात्राशौचम्। पित्रादिना संसर्गे तु तदीयाशौचं सूत्याशौचं पित्रादेरपीति। संसर्गशून्यताहेतावप्रधानपितृगृहे प्रसवे तु पितुस्त्रिरात्रमशौचमिति पर्यवसितः। यद्वा "प्रधान" इति पितुःस्वत्वास्पदत्वबोधकम्। तेन जामातृस्वत्वास्पदगृहमधिवसतः पितुः शयनगृहादौ प्रसवे त्रिरात्रमाशौचं पितुर्नास्तीति। अथवा-"प्रधान" इति असाधारण्यबोधनाय। तेन पितृदत्ते पतिगेहे प्रसवे पित्रादेर्नाशौचम्, इति रघुनन्दनभट्टाचार्यमतेनार्थविवेकः।

इत्थं च ब्रह्मपुराणादिसहैकवाक्यतानुकूल्येनायमर्थो विष्णुसूत्रस्य पर्य्यवसितो यत्—ऊढायाः पितुर्गेहे प्रसवे मरणे च मातापित्रोस्त्रिरात्रम्। भ्रात्रादेरेकरात्रमिति। यथा च ब्रह्मपुराणे सुस्पष्टमुच्यते—

'दत्ता नारी पितुर्गेहे सूयेताथ म्रियेत वा।
तद्बन्धुवर्गस्त्वेकेन शुचिस्तज्जनकस्त्रिभिः॥

अत्र जनकशब्देन जनन्या अपि ग्रहणं जननकर्तृत्वाविशेषात्।

तद्बन्धुवर्गः-तस्याः कन्याया बन्धुवर्गो भ्रात्रादिः। एकाहेन शुचिः। नन्वत्र बन्धुवर्गपदमुपात्तं तेन वर्गशब्देन के के गृह्यन्ते इति सुस्पष्टमुच्यतामिति चेदुच्यते। सर्वेषां धर्मशास्त्र-निबन्धग्रन्थानामेकवाक्यतायाः पर्यालोचनेन बन्धुवर्गशब्दस्य एकक्रियापन्ना एकाश्रमस्था भ्रातृवैमात्रेयपितृव्यतत्पुत्रास्तेषां पुत्राश्चेत्यर्थो गृह्यते।

अत्र प्रमाणभूतानि बहूनि धर्मशास्त्रीय-निबन्धग्रन्थजातानि विद्यन्ते। तेषां निबन्धग्रन्थानां सन्दर्भाः पृथक् पृथक् प्रामाण्योपस्थापनाय निर्दिश्यन्ते। यथा मैथिलरुद्रधरकृतशुद्धि*विवेके-स्त्र्यशौचप्रकरणे—

विवाहितासु विशेषमाह ब्रह्मपुराणे—

दत्ता नारी पितुर्गेहे सूयते म्रियेतऽथवा।
स्वमशौचं चरेत्सम्यक् पृथक् स्थानव्यवस्थिता।
तद्बन्धुवर्गस्त्वेकेन शुद्ध्यते जनकस्त्रिभिः॥

* दिवाकर लीथो प्रेस बनारस १९२० सम्वत्सरे मुद्रणम्।

अत्र जनकस्त्रिभिरिति जनकशब्देन जननकर्तृत्वोपलक्षणात् जनन्या अपि त्रिरात्रेण शुद्धिः। तथा हि—सिद्धिवत्पारिजातरत्नाकरयोर्मातापित्रोस्त्रिरात्र- मित्युक्तम्।

हारलताकारेणापि तत्रैव हेतुपूर्वकमलेखि। बन्धुवर्ग इत्यत्रापि वर्गशब्देन एकक्रियापन्ना एकाश्रमस्था भ्रातृवैमात्रेय-पितृव्यतत्पुत्रास्तेषां पुत्राश्च गृह्यन्ते तेषामेकाहः। अत एव सिद्धवत्पारिजातहारलतारत्नाकरेषु भ्रात्रादीनामेकाह इत्युक्तम्। पितुर्गेहे इति सनाभिगृहोपलक्षणम्। निजगृहेऽसपिण्डमरणेऽपि तत्र तत्राशौचश्रवणादत्रापि भ्रात्रादिगृहमरणमपि विवक्षितम्। मरणसाहचर्यादत्र जननमपि तादृग्लभ्यते। एतच्च पारिजातस्यानुमतमेव। तथा हि निजव्याख्याने विशेषमनभिधाय "पितृगृह" इति पितृशब्दस्य विवक्षितत्वात् भ्रात्रादिगृहे निवसन्त्याः प्रसवे मरणे च सत्यशौचं न भवतीति प्रकाशकार इत्युक्तमतः प्रकाशकारस्य मतमेतत्। मम तु मते—पितृशब्दस्याविवक्षितम्। किन्त्वशौच भागिगृहं विवक्षितमिति तस्यार्थो लभ्यते विशेषाभिधानात्। रत्नाकरस्वर- सोऽप्येष लक्ष्यते इति। तदियमत्र व्यवस्था—विवाहिता स्त्री यदि पितृगृहे सूयते म्रियते वा तदा मातापित्रो स्त्रिरात्रमशौचम्। एकाश्रमवासिनां भ्रातृ- वैमात्रेयपितृव्यपुत्राणां तत्पुत्राणां च पितृव्यस्य चैकरात्रम्। पितुर्भिन्नाश्रमवा- सिनां भ्रात्रादीनामशौचं न भवतीति। पितुरभावे मातृगृहे दुहितृमरणे प्रसवे वा मातुस्त्रिरात्रमेव। मातुरभावे भ्रातृगृहे भगिन्याः प्रसवे मरणे च भ्रात्रादीना- मेकरात्रमेवाशौचं भवति।" रुद्रधरः।

२—गोविन्दानन्द‡ कृतशुद्धिकौमुद्यां च—[पृष्ठ ३२-३३]:

'विवाहे दत्तायाः कन्यायाः पितृप्रधानगृहे यदि प्रसवमरणे स्यातां तदा- भ्रात्रादीनामेकरात्रं मातापित्रोस्त्रिरात्रम्। तथा चादिपुराणम्—दत्ता नारी पितुर्गेहे म्रियते सूयतेऽथवा। स्वमशौचं चरेत्सम्यक् पृथक्स्थानव्यवस्थिता॥ तद्बन्धुवर्गस्त्वेकेन शुद्ध्येत्तु जनकस्त्रिभिः। पृथक्स्थाने व्यवस्थिता पितुरप्रधान- गृहे प्रसवे स्वमशौचं भर्तृसम्बन्ध्यशौचं नार्येव चरेत्, न तु पित्रादिः। म्रियते इत्यस्यापि यथायोग्यमन्वयः। पितुः प्रधानगृहे प्रसवमरणे बन्धुवर्गस्यैकरा- त्रम्। पितुस्त्रिरात्रम्। बन्धुवर्गः सहवासी=भ्रातृ-भ्रातृपुत्राः पितृव्यादिः जनकप- देन जनन्यपि ग्राह्या जननकर्तृत्वाविशेषात्। हारलताशुद्धिविवेकयोरप्ययमेव स्वरसः। वाचस्पतिमिश्रोऽपि पृथक्स्थाने स्त्रं ज्ञातिरेवाचरेत्, न पित्रादिरिति

‡—बिब्लोथिक इण्डिकाख्यग्रन्थमालायां १९०२ ई० वर्षे कमलकृष्णस्मृतिभूषणेन प्रकाशिता]

व्याचख्यौ । स्वं स्वकुलमिति कुवेरवलभद्रौ । तथा च कल्पतरुलिखितं व्यासवचनम्—'दत्ता नारी पितुर्गेहे प्रधाने सूयते यदा । म्रियते वा तदा तस्याः पिता शुद्ध्येत्त्रिभिर्दिनैः । मनुः—'विवाहितापि चेत्कन्या म्रियते पितृवेश्मनि ।

तस्या त्रिरात्राच्छुद्ध्यन्ति बान्धवा नात्र संशयः ॥, इति ॥

३—पद्मनाभकृते शुद्धिभास्करे[1] च–"अथ पौरस्त्यनिबन्धगतो विशेषो लिख्यते—

विवाहिता स्त्री यदि पितृगेहे सूयते म्रियते वा तदा मातापित्रो स्त्रिरात्रमशौचम्, एकाश्रमवासिभ्रातृवैमात्रेयपितृव्यपुत्राणां तत्पुत्राणां पितृव्यस्य चैकरात्रं पितुर्भिन्नाश्रमवासिनां त्वेषामाशौचाभावः ।

४—काशीनाथोपाध्यायविरचिते धर्मसिन्धौ[2] पृष्ठे ३४२मिते—

'पितृगेहे कन्याप्रसूतौ पित्रोस्तद्गृहवर्तिभ्रातृणां चैकाहः । पितृगृहवर्तिपतृव्यादीनां सर्वेषां पितृसपिण्डानामेकाह इति स्मृत्यर्थसारे । एवंभ्रात्रादिगृहे भगिन्यादिप्रसवेऽपि तेषामेकाहः । माधवस्तु--पितृगृहे कन्यायाः प्रसूतौ पित्रोस्त्रिरात्रम् । तद्गृहवर्त्तिभ्रातृणामेकाह इत्याह । कन्यायाः पतिगृहे प्रसवे पित्रादीनां नाशौचम् ।

इत्थमुक्तेषु धर्मशास्त्रीय निबन्धेषु सर्वत्र 'बन्धुवर्ग" शब्देन पितृगृहवर्तिभ्रातृतत्पुत्रपितृव्यादयो गृह्यन्ते । नतु पितुर्भिन्नगृहवासिनः सपिण्डाः इति निपुणमालोचनीयम् । किंच निम्नलिखितेषु ग्रन्थेष्वपि बन्धुवर्गशब्देन भ्रात्रादिरेव गृहीतो न तु सनाभिवर्गः ।

५ यथा—अनिरुद्धकृत हारलतायां ऽऽयशौचप्रकरणे—

"शङ्खलिखितौ 'एकाहं' कन्यायामूढायां' पुनर्गोत्रतः पिण्डाशौचयोर्निवृत्तिः । कन्यायामकृतवाग्दानायां ऊढायाम् विवाहितायां पुनर्गोत्रतः पितृकुले पिण्डनिवृत्तिरशौचनिवृत्तिश्च । अत्रैव श्राद्धमाशौचं च कर्तव्यम् न पित्रादिभिरित्यर्थः । पित्रादीनामाशौचं नास्तीति व्यक्तमाह विष्णुः । 'स्त्रीणां' विवाहः संस्कारः । संस्कृतासु स्त्रीषु नाशौचं पितृपक्षे । तत्प्रसवमरणे पितृगृहे चेद्भवेतां तदैकरात्रं त्रिरात्रं वा । पितृगेहे प्रसवे मरणे सति भ्रात्रादिनामेकरात्रं पितुस्त्रिरात्रं मातुश्च जननकर्तृत्वविशेषात् । यथा कूर्मपुराणे–'गृहेमृतासु दत्तासु कन्यासु स्यात्त्र्यहं' पितुः ।" मृतासु चेति प्रदर्शनार्थं प्रसूतासु चेत्यपि बोद्धव्यम् । मनुयाज्ञवल्क्यशङ्खलिखित-विष्णु-कूर्मपुराण-वचनानां यथा व्याख्यातार्थो व्यक्तमादिपुराणे दर्शितः । "दत्ता नारी पितुर्गेहे सूयते म्रियतेऽथवा । स्वमशौचं चरेत्सम्यक् पृथक्स्थाने व्यवस्थिता । तद्बन्धुवर्गस्त्वेकेन शुद्ध्येत्तु जनकस्त्रिभिः । इत्यादि । पितुर्गेहे यदा सूयते म्रियते वा तदा स्वमशौचं भर्तृसम्बन्धि दशरात्रादिकं कुर्यात् । पृथक्स्थाने पितुः शयनभोजनदेवार्च्चनव्यतिरिक्तगृहे व्यवस्थिता । तद्बन्धुवर्गो भ्रात्रादिरेकाहात् शुद्ध्यति । जनकः पिता त्र्यहात् शुद्ध्यति । जनकतुल्यन्यायतया जनन्यपि त्र्यहाच्छुद्ध्यति । इति ।"

---

[1]—विद्याविकास यन्त्रालये मुद्रितः ॥ [2]-१९६४ वि० वर्षे वेङ्कटेश्वर यन्त्रालये मुद्रितः ॥

६—रघुनन्दनभट्टाचार्यकृते शुद्धितत्त्वे च—सारः—स्त्र्यशौचप्रकरणे—

'पृथक्स्थान व्यवस्थिता, पृथक्स्थाने पित्रादिसंसर्गशून्ये पितृगेहे स्थिता चेत्तदा तद्बन्धुवर्गो भ्रात्रादिरेकाहेन जनकस्त्र्यहेण शुद्ध्यति। शुक्रशोणितसम्बन्धरूपजननकर्तृत्वाविशेषाज्जनन्यपि च।

७—दक्षिणदिङ्मान्यनीये देवलभट्टकृते सम्मतिचन्द्रिका[1] ग्रन्थे-पृष्ठे ३३मिते—

"अथवा प्रसवे मरणे बान्धवानामेकरात्रम्, पित्रादेस्त्र्यहमिति व्यवस्थया विष्णुवचनं व्याख्येयम्।'दत्ता नारी" इति ब्रह्मपुराणे व्यवस्थयैवाभिधानात्"। इति।

८—कमलाकरभट्टकृते निर्णयसिन्धौ च ऊढानां तु विष्णुराह—'संस्कृतासु नाशौचं पितृपक्षे, तत्प्रसवमरणे चेत्पितृगृहे स्यातां तदैकरात्रं त्रिरात्रं च। इति प्रसवे एकरात्रं, मरणे त्रिरात्रमिति विज्ञानेश्वरापरार्कौ। माधवस्तु प्रसवेऽपि त्रिरात्रं पित्रोः, एकरात्रं भ्रात्रादिबन्धुवर्गस्य। 'दत्ता नारी पितुर्गेहे सूयेताथ म्रियेतवा। तद्बन्धुवर्गस्त्वेकेन शुचिस्तज्जनकस्त्रिभिः। इति ब्राह्मोक्तेरित्याह। यत्तु कश्चिदाह—पक्षान्तरेण भ्रातरो गृह्यन्ते। वाक्यान्तरेण भगिनीमृतौ त्रिरात्रोक्तेरिति तच्चिन्त्यम्। तदभावे 'तद्विरोधाच्च। भ्रातुःप्रसवे' एकाहः। मृतौ त्रिरात्रमिति केचित्। युक्ता तु पक्षिणी। 'परस्परमृतौ भ्रातृभगिन्योः पक्षिणी भवेत्" इति ब्राह्मात्। भ्रातृभिन्नानामेकाहः। वर्गोक्तेः। इतरेषां तु यथाविधि इति वक्ष्यमाणवचनाच्च। यत्तु प्रधानगृहे मृतौ पित्रोः पूर्णं भ्रातुस्त्र्यहः इति कश्चित्, स निर्मूलत्वात्, "नाशौचं पितृपक्षे च" इत्येतद्विरोधाच्च भ्रान्तः। "दत्ता नारी पितुर्गेहे प्रधाने सूयते यदा म्रियते वा तदा तस्याः पिता शुद्ध्येत्त्रिभिर्दिनैः। इति कल्पतरौ शुद्धितत्त्वे च। पतिगृहे प्रसवे तु पित्रादीनामशौचं नास्ति। मृतौ पित्रोस्त्रिरात्रमस्त्येव।"

९—शुद्धिमयूखे नीलकण्ठोऽपि 'बन्धुवर्गो भ्रात्रादि' रित्येवव्याचख्यौ।

१०—आशौचनिर्णयत्रिंशच्छ्लोक्यां मरकरिमनोप्याग्मृतीर्थमहोदया अपि हिन्दीभाषायां, सुस्पष्टमूचुर्यत् पित्रोस्त्रिरात्रं सहोदरभ्रातुरेकरात्रं चेति।

इत्थं विविधिग्रन्थपर्यालोचनेनायं सारांशः प्रतिभाति यत् ऊढायाः पितृगेहे प्रसवे मरणे च पित्रोस्त्रिरात्रमशुचित्वम्। पितुरेकाश्रमवासिभ्रात्रादीनामेकरात्रमशुचित्वम्। पितुर्भिन्नाश्रमवासिनां, सपिण्डानां, त्वशौचाभावः। इति। यदि भ्रातापि पितुर्भिन्नाश्रमवासी स्यात्तदा तस्या भ्रातुरपि नाशुचित्वम्, अन्येषां, पितुर्भिन्नाश्रमवासिनां सपिण्डानां तु कथैव दूरापेता, इति प्रामाणिकग्रन्थेषु प्रतिपादितं, प्रागेव। इति शम्।

—श्रीनन्दकिशोरशर्मा, साहित्याचार्यः

( रिसर्च स्कालर, सरस्वती भवन-पुस्तकालय, काशी )

१—युनिवर्सिटी आफ माइसोरे १९२१ ई० वर्षे मुद्रिता।

२—अत्र भ्रातृभिन्नानां—भ्रातृपुत्रतत्पुत्रपितृव्यादीनां पितुरेकाश्रमवासिनामित्येवार्थो गृह्यते, न तु सपिण्डानामिति। "भ्रातृभिन्न, शब्दस्य सपिण्डार्थकत्वबोधकत्वे तु अनवस्थापातः। तथात्वे च समानगोत्राणामपि ग्रहणोपप्रसक्तिश्च।

जलस्य च सदाऽनुकूल्यं स्यादिति । एवञ्च यथा जलवेगस्य विकर्षणशक्तिः निम्नगश्चितेश्चाकर्षणशक्ति रुभे अपि सम्मिलिते जलधारां स्थिरीकुरुतः । तथैव पितृगणा अपि यदा पुरुषं स्त्रियञ्च पृथग् गोत्रोद्भवं प्राप्नुन्ति तदैव आधिभौतिकसम्बन्धविशिष्टस्य कुलस्य नियतं प्रवाहं स्थिरीकर्तुमर्हन्ति । यतो हि पितृगणानां स्वकर्तव्यानुष्ठाने परस्पर-विरुद्धगोत्रोद्भवावेव दम्पती साहाय्यमाचरतः ।

अन्यतश्च वयोज्येष्ठायाः कन्यायाः परिणयनिषेधस्यापि इदमेव कारणम्, यद् आयुषा सह आधिभौतिकस्य बलस्यापि वृद्धिः परिपुष्टिश्च भवति । क्षेत्रस्य बीजाश्रयत्वात् क्षेत्रबलं यदि बीजबलादधिकं स्यात्तदा क्षेत्रात्मकस्त्रीधाराया एव प्राबल्यं भवेत् । पुरुषधारा च गौणी भूत्वा कालान्तरेण पुरुषसृष्टिव्यपेक्षया स्त्रीसृष्टिमेव वर्द्धयिष्यति । तत्कुलं पुरुष-विहीनं भूत्वा स्त्रीप्रधानमेव भविष्यति । स्त्रियाः पुरुषापेक्षयाऽल्पीयसेवावस्थेति पूर्वमेवोक्तम् । वयोज्येष्ठायाः कन्याया विवाहनिषेधविज्ञानमपि तद्विज्ञानत एव सिध्यति ॥ ६७ ॥

प्रसङ्गतोऽऽन्यदप्याह—

वर्णसङ्करो नेष्टः ॥ ६८ ॥

अनेन पूर्वोक्त-रजोवीर्य्यशुद्धिविज्ञानानुसारेण वर्णसङ्करः शुभप्रदो न भवितुमर्हति । यतो हि वर्णसाङ्कर्य्ये रजो वीर्य्यशुद्धिः खपुष्पकल्पैव । रजोवीर्य्यशुद्धिविरहात् पूर्वोक्तस्य गुणसम्बन्धिनो भावसम्बन्धिनश्च मुक्तिप्रदस्य स्वाभाविकस्य संस्कारस्य विकाशो निरुध्यते, पितृगणस्य साहाय्यं च नासाद्यते । यतो हि पितृगणा रजोवीर्य्यशुद्ध्या, कुलपवित्रतया संस्कारशुद्ध्या च विशेषतो मानवकुलमनुगृह्णन्ति । वर्णसङ्करी सृष्टिस्तु धर्मजसृष्टिभिन्नतयाऽपि अनिष्टकर्त्री । विशेषतश्च वर्णसङ्करीणां प्रजानां नैमित्तिक-पितृगणत एकपद एव सम्बन्धविच्छेदो भवति । उक्तञ्च श्रीगीतोपनिषत्सु—

सङ्करो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥
दोषैरेतैः कुलघ्नानां वर्णसङ्कर-कारकैः ।
उत्साद्यन्ते जातिधर्म्माः कुलधर्माश्च शाश्वताः ॥ इति ॥

वर्णधर्म्मे साङ्कर्य्यदोषापातेन कथमधर्म्मसंग्रह इति अन्यथाऽपि विवृणोति । वर्णधर्म्मसाङ्कर्य्यस्य स्वाभाविको भेदस्त्रिविधो ज्ञेयः । एकस्तु अन्य जात्या सह रजोवीर्य्यसंमिश्रणरूपः । द्वितीयो नीचवर्णताश्रयणम् । तृतीयस्तु नीचवर्णस्योच्चवर्णत्वग्रहण-प्रयत्नः, इति त्रिष्वपि भेदेषु उच्चवर्णस्य नीचवर्णा-

श्रितानामाचाराणां ग्रहणेन केवलाया आधिभौतिक्या एव क्षतेः सम्भव इति सा व्यक्तिगा क्षतिः। यतो हि शुद्धाचारिणो विप्रस्य पुत्रः पुनः शुद्धतरो ब्राह्मणो भवितुमर्हतीति अनया आधिभौतिक्या अपवित्रतया केवलमेकपुरुषावधिकैव सङ्करता आपततीति लघीयानयमपराधः ।

नीचवर्णो यदोच्चवर्णत्वमात्मन आश्रयितुमिच्छति तदा आध्यात्मिकी अपवित्रता सम्वर्द्धते । यतो हि नीचवर्णगः पुमान् स्वोच्चाभिलाषोन्मादग्रस्तोऽवश्यं स्वात्मानं स्वसमाजाश्रितं समुदायं वा उच्चवर्णस्थ पुरुषाचारान् पालयितुमागृह्णाति ।

तत्र यथाकथमपि न्यूनाधिकभावेन उच्चवर्णीयानाचारान् स्वयमाचरन् अन्यैश्चाचारयन् यदोच्चवर्णश्रेणिम्प्रविशति तदाऽनेके दोषाः समुद्भवन्ति । येन तद्व्यष्टिसमष्ट्युभयात्मनो महती मानसी क्षति र्जायते । यतो हि सर्वाभ्योऽपि हानिभ्य आध्यात्मिक्या हानेरप्रतिमत्वस्य सर्वैरभ्युपगतत्वात्। शरीरक्षति र्हि धार्मिकविवेचनया न तादृशी प्रबला संमता यथाऽध्यात्मिकी क्षतिः । बुद्धिमनोऽहङ्कारात्मकस्यान्तः करणस्यावनति र्हि गुरुतराङ्गीकृता बुद्धैः ।

अन्यच्चेदमपि विमर्शनीयम्—यद् आधिभौतिकी क्षतिशक्ति र्हि तत्पुरुषावधिकैव तिष्ठति । आध्यात्मिकक्षतिप्रभावस्तु तस्या व्यक्तेः तदीयसमाजस्य वा शाश्वतिकीमेव हानिं विदधत् सर्वथा सर्वकालिकं पातकं तद्व्यक्तौ तदीयसमाजे चासञ्जयति । आध्यात्मिकोन्नतौ च साक्षात् बाधको भवति ।

इत्येवमियं हि तस्य क्षतिः स्थिरा शाश्वतिकी गण्यते । यतो हि स आध्यात्मिक्यानयाऽपवित्रतया स्ववर्णतो विच्युतो भवति। उच्चवर्णाधिकारमपि नास्वादयति। उपरितश्च पितृगणानां साहाय्यबलमपि ह्रसति, येन तस्योन्नतिमार्गो निरुध्यते। इत्थञ्च वृथोच्चत्वाभिलाषी स मानवो मानवसमाजो वा स्वाचरणेन वर्णाश्रमधर्मशालिमानवसमाजे महान्तं विप्लवमुत्थापयति । ईदृश-धार्मिक-सामाजिक-विप्लव हेतु र्भूत्वा स मानवो मानवसमाजो वा स्वभावविरुद्धं वृहदाघातमधिगत्य स्वात्मनते रेव निदानतामेति ।

अपरतश्च रजोवीर्य्य साङ्कर्य्येण आधिभौतिकहाने राघातस्तु दुःसहो निश्चित एव । रजोवीर्य्यशुद्ध्या कथं पितृगणानामनुकम्पा समुदेतीति विस्तृ विवेचितमेव पूर्वम् । समासतः पितृगण—साहाय्यात्मकेन दैवबलेन विरहिता साङ्करी प्रजा स्ववर्णधर्मसंरक्षण—मार्गतो विच्युता स्वोन्नतिमार्गमेव निरोधयति। तथा च वर्णाश्रमधर्मसम्बन्धिनां सर्वेषामेवोन्नतमार्गाणामधिकाराप्राप्तये सर्वमपि क्षेत्रजातं तस्या व्यक्तेः तस्य वा समाजस्य कृते मसुकरं सम्पद्यते इति ॥ ३८ ॥

अन्यथाऽपि विज्ञानमिदं पुष्णाति—

**स न धार्मिकः ॥ ९९ ॥**

वर्णसङ्करी प्रजा न धर्मानुगा भवतीति प्रत्यक्षत एवोपलभ्यते । साधारणतो जगति दृश्यतेऽपीदृग् यद् वर्णसङ्करीषु प्रजासु धार्मिकानुष्ठानस्यात्यन्ताभाव एवास्तीति ।

पूर्वविज्ञानपरिपुष्ट्यै एव सूत्रकारः सूत्रमिदमाविश्चकार । प्रथमतो हि वर्णसङ्करी प्रजा पूर्वकथितविज्ञानानुसारतो रजोवीर्य्यशुद्धिन्तु गोपायितुमेव नार्हति । साङ्कर्य्यां सृष्टौ यथायोग्याधिकारवतो वीर्य्यात्मकस्य बीजस्य यथायोग्याधिकारवतो रजोरूपस्य क्षेत्रस्य चाभावात् सृष्टिविपर्य्ययस्यावश्यकत्वात् ।

द्वितीयतश्च मुक्तिसहायकस्य स्वाभाविकस्य संस्कारस्य गुणभावात्मकप्रवाहगति र्नहि सुचारुतरा भवति । तृतीयतः कर्मबीजस्य संस्कारस्य संङ्करसृष्टौ दूषितत्वेनास्वाभाविकस्यापि संस्कारस्य तथात्वम् । यतो हि मातापित्रोरुभयोरपि स्व-स्वजात्यभिमानस्य सुस्थिरत्वेन जैवस्यास्वाभाविकस्य संस्कारस्यापि परिशुद्ध्यभावः । इत्यादिकारणसमुदयात् सङ्करसन्तानस्य धार्मिकत्व-सम्भावनाऽसम्भवः ॥ ९९ ॥

तस्य कारणमभिधत्ते—

**नैसर्गिकी प्रवृत्तिरस्याधर्मे ॥ १०० ॥**

संस्कारो हि कर्मणां बीजम् । यथासंस्कारमेव क्रिया समुत्पद्यते । वर्णसङ्करसन्तानस्योत्पत्तिवेलायां तदीयमातापित्रोरन्तःकरणे सदाचारभ्रष्टतायाः संस्कारस्तु अवश्यमेवान्त र्निगूढस्तिष्ठति ।

"आदित्य-चन्द्रावनिलोऽनलश्च ।
द्यौर्भूमिरापो हृदयं यमश्च ॥
अहश्च रात्रिश्च उभे च सन्ध्ये ।
धर्मश्च जानाति नरस्य वृत्तम्" ॥

इति स्मृत्युक्तदिशा हृदयस्य सर्वनरवृत्तसाक्षित्वेन अन्तःकरणस्य चित्तात्मके भागे सदाचारभ्रष्टतारूपाधर्मसंस्कारोऽङ्कितो भवति । ततश्च मनोवायुवीर्य्याणां सामानाधिकरण्य-सम्बन्धाश्रितत्वेन तेनैवाऽधर्मसंस्कारेण संबलितमेव गर्भाधानम्भवति । मातापि तेनैव संस्कारेण संबलिता गर्भभरणं करोति अतश्च ततो जायमाना सृष्टिः स्वभावत एवाऽधर्मे प्रवर्तते इत्यत्र कः सन्देहलेशः ॥ १०० ॥

प्रसङ्गतोऽन्यप्रकारेणापि प्रतिपादयति--

**सृष्टिक्रमाननुकूलभावात् ॥ १०१ ॥**

सृष्टेः सर्गस्य क्रम आरोहः तस्य, न अनुकूलम् अननुकूलम् तस्य भावः तस्मात् विपर्य्ययादित्यर्थः।

या हि क्रिया सृष्टिस्वाभाविक-क्रमानुसारिणी तया धर्म्मोत्पत्तिर्भवति। या च सृष्टिक्रमविरोधिनी तया चाऽधर्मवृद्धिर्भवतीति धर्माधर्मयोरेता-दृगेव सम्बन्धोऽभ्युपगतः पूर्वाचार्य्यैः। धर्माधर्मयोर्विस्तरशो विवेचितं लक्षणं पूर्वम्। तदनुशीलनतः स्पष्टमेव त्सध्यति यत् मानवयोनितः प्राक्तनयोनिषु जीवः केवलस्वाभाविकसंस्कार-परवशो मानवाभिमानविरहितः प्रकृतेर्मातुः क्रोडे लाल्य-मानः पाल्यमानः स्व-स्वयोन्युचितधर्म्ममनुतिष्ठन् निर्बाधमाध्यात्मिकयामुन्नतौ पुरःसरो भवति। तत्र तस्य जीवस्य क्रमाभिव्यक्तौ निरन्तराय मिदं कारणं यत् स स्वाहङ्कारविरहितः प्रकृतिनियमतः सृष्टिक्रमेणैव परिचाल्यते। यतो हि सृष्टि-क्रमनियमतो गच्छतो व्यवहरतो वा जीवस्य क्रमोन्नतिरावश्यकी। अन्यत्र योनौ जीव स्तमोगुणावस्थातः क्रमशः सत्त्वाभिमुखो भवन् निर्बाधं तमो ह्रासयन् सत्त्वमभिवर्द्धयन् संसरति पुरः पुर उन्नतिमार्गे।

एवञ्च स्वाभाविक-संस्कारवशतः समेधमानो यदा मानवयोनावुपैति तदा तमोगुणाभिवर्द्धकैः पापकर्मभिस्तस्योर्ध्वगति र्निरुध्यते सत्त्ववर्द्धकैश्च पुण्यकर्मभिः तदीयोर्ध्वगतिः सरला सुगमा सम्पद्यते। तमोवर्द्धकस्य कर्मण एवाधर्माभिधानात् सत्त्ववर्द्धकस्य च धर्मसंज्ञकत्वात् सृष्टेश्च क्रमशः जीवस्य तमोऽवस्थातः सत्त्वाभिमुखप्रापणैककर्मकत्वात् अवसाने च क्रमेण पूर्णसत्त्वोद्रे-कात्मकमुक्तिपदप्रापणरूपान्तिमकर्तव्यत्वात् क्रमशः सत्त्वाभिव्यक्तिरेव सृष्टिनिय-मानुकूलेति स्वयं सिद्धः पन्थाः।

वर्णसङ्करी प्रजा तु प्रत्यक्षत एवैतन्नियमविरुद्धा भवति। वर्णाश्रमधर्म्मश्च सृष्टिनियमसंरक्षणे साहाय्यमाचरति। तेन चेयमार्य्यजातिः सृष्टिनियमसंरक्षण-प्रधाना आत्माभिमुखी क्रमशः कथमूर्ध्वगतिशालिनी समेधते इति विस्तरशो विमर्शितं पूर्वम्। इत्थञ्च सृष्टिनियमोल्लंघिनी वर्णसङ्करी प्रजा अधर्म्मप्रधानेति निःसन्दिग्धः सिद्धान्तः ॥ १०१ ॥

विज्ञानमिदमन्यथापि प्रमाणयति--

**आद्धव्याहृतेर्यवनजमेतवत् ॥ १०२ ॥**

गर्भाधानवेलायां मातापित्रोरन्तःकरणसंस्कारेण सार्द्धं भाविनः सन्तानस्य कीदृक् घनिष्ठः सम्बन्ध इति निदर्शयितुं दृष्टान्तमुखेनाह--

कश्चन धर्माचार्य्यः संन्यासी कस्यचन सद्गृहस्थस्य ब्राह्मणस्य गृहे भिक्षाचर्य्यार्थमाहूतोऽतिथिरूपेण रात्रिमेकामुवास । रात्रौ च भोजनानन्तरं निद्रिते सन्यासिनि निशीथे कश्चन तद्गृहगः प्रेतो मनुष्यवेशगतः सन्यासिनं बोधयामास । सन्यासी तु तं चौरं मन्यमानो गृहस्थितान् पुरुषान् सम्बोध्य यावत् पृष्टवान्, तावत् तस्य प्रेतस्याट्टहासेन विस्मितो गृहस्थपुम्भिश्च बोधितोऽमुं तदीयवंशपरम्पराप्राप्तः कश्चन सम्बन्धी मृत्वा प्रेतयोनिमाश्रितोऽस्तीति निश्चिकाय ।

ततश्च स महात्मा दयावशंवदो भूत्वा स्वप्रभावातिशयेन तं प्रेतं तस्या योनेर्मोक्तुकामः विविधान् प्रश्नान् पप्रच्छ । स च तं महात्मानं स्वोपकारपरायणं बुध्वा स्वपूर्ववृत्तान्तं सर्वमेव निवेदयामास ।

तथाहि बद्धाञ्जलिः प्रेतो मुक्तकण्ठः तं सन्यासिनं विज्ञापयामास यन्मदीया माता कदाचन मार्गे गच्छन्ती केनचन यवनतरुणेन धर्षिता गर्भं दधार। पश्चाच्च लज्जापरवशा तद्वृत्तान्तं निगूहन्ती मां जनयामास। तेन गर्भेण गृहीतजनुरहं सर्वमप्यायु र्यथाशास्त्रविधानं यापयमानोऽन्ते वार्द्धक्ये मृत्युपरवशः स्वसन्तानैः विहितान्त्येष्टिक्रियोऽपि प्रेतयोनिमुपेतोऽस्मि। न केनापि सनातनधर्मीयविधानेन प्रेतत्वं विमोक्तुमर्हामि । यदि श्रीमान्मदीयोर्ध्वगतिं चिकीर्षति चेदन्यमेव कञ्चनोपायं विरचयतु। इत्युक्त्वा तुष्णीं बभूव । स च सन्यासी श्रुततत्प्रेताखिलोदन्तोऽन्येनैव विधानेन तं प्रेतयोनिमुक्तं कृत्वा तदीयेन सकलगुप्तरहस्येन तं सद्गृहस्थं बोधयित्वा यथागतं जगाम।

इत्यनेन सूच्यते—यद् यवनजनकवीर्य्यसंस्कारतः समागतो यवनसंस्कारो न केनापि सनातनधर्मशास्त्रविधानेन विमुक्तो भवितुमर्हति यथा तस्य यवनप्रेतस्य बभूवेति मातृपितृजन्यरजोवीर्य्य-सम्बन्ध-युक्तसंस्कारप्राप्तेरयमपूर्वो दृष्टान्तः ॥ १०२ ॥

पुनः प्रसङ्गतो वर्णशुद्धिमहिमानमाख्याति—

**वर्णविशुद्धया विवृद्धिर्धान्यवत् ॥ १०३ ॥**

पूर्वं वर्णाश्रमधर्मस्य महिमानमभिहितवान् विस्तरेण सूत्रकृन्महर्षिः । इदानीं रजोवीर्य्यशुद्धि-विज्ञानप्रस्तावेन पुनस्तन्महत्वमुदीरयन् धान्योदाहरणमुखेन रजोवीर्य्यशुद्धिमूलकतां तस्य प्रख्यापयति ।

कदाचन कालदुर्विपाकतो धरातलस्थिते सर्वस्मिन्नपि धान्ये विनष्टे सत्येकमपि यदि शुद्धतरं धान्यमवशिष्टं स्यात्तर्हि तेनैवैकेनापि धान्येन पुनः कालक्रमेण शनैः शनैः सर्वापि मेदिनी धान्यपूर्णा भवितुमर्हति । तथैव शुद्धरजो-

वीर्य्यप्रभावशालिनी स्वल्पाऽपि ब्राह्मण क्षत्रिय वैश्य-शूद्र वर्णाभिमानिनी प्रजाऽवशिष्टा स्यात्तर्हि कालान्तरे तत एव पुनः वर्णाश्रमाचारवतीभिरार्य्यप्रजाभिः सम्पूर्णाऽपि मेदिनी सम्भृता स्यादित्यत्र नाणुरपि सन्देहलेशः ॥ १०३ ॥

इदानीं शुद्धित्रयस्याऽप्युपयोगं समाचष्टे—

**शुद्धित्रैविध्यमपेक्ष्यं धातुत्रय-साम्यवत् ॥ १०४ ॥**

आयुर्वेदानुकूल-वातपित्तकफात्मकधातुत्रयसाम्यतो यथा शरीरस्य स्थितिः साध्वी नीरुग् निगद्यते तदन्तर्गो जीवश्चोन्नतो भवति, तथैवाध्यात्मादिशुद्धित्रयेण संस्कारशुद्धिमासादयञ्जीवोऽभ्युदयनिःश्रेयसावपि विन्दति ।

आयुर्वैदिकोऽयं सर्वविदितः सिद्धान्तो यद् वातपित्तकफानां त्रयाणामेकस्यापि शुद्धौ ह्रासश्चेच्छरीरे रोगाभियोग आवश्यकः । त्रयाणां समानशुद्धौ सत्यां न काऽपि शारीरिकी पीडा पुमांसं स्त्रियं वाऽऽक्रामति ।

आयुर्वेदशास्त्रसम्मतोऽयमपि सिद्धान्तोऽस्ति यद् वातपित्त-कफानां त्रयाणामपि समानशुद्ध्या नरो मुक्तिमप्यायासविरहितामेवाधिगच्छति । तथैव वर्णाश्रितां त्रिविधां शुद्धिमुपेत आर्य्यगणोऽभ्युदयमश्नुवानोऽन्ते निःश्रेयसमप्याश्रयति । तत्र वर्णधर्मनिर्वाहे शुद्धित्रयमध्ये एकस्या अपि ह्रासश्चेत्तदा तत्रन्यूनत्वस्यावश्यं सम्पातः । अतस्तिसृणामपि शुद्धीनां समानतयैवोपयोग आवश्यकः । स्मृतिष्वपि निर्दिष्टोऽयमुपरितनो विषयो यथा —

> अभ्रकं तव बीजं तु मम बीजं तु पारदः ।
> उभयोर्मेलनं देवि ! मृत्युदारिद्र्य-नाशनम् ॥
> कालार्थ-कर्मणां योगो हीनमिथ्यातिमात्रकः ।
> सम्यग् योगश्च विज्ञेयो रोगारोग्यैककारणम् ॥
> रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता ।
> तपः श्रुतं च योनिश्चेत्येतद् ब्राह्मणकारणम् ॥
> तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः । इति ॥ १०४ ॥

विज्ञानमिदं पुष्यतितराम्—

**तद्वर्णाश्रमरक्षकं हिमालयवदैश्वर्य्यस्य ॥ १०५ ॥**

सूत्रकृद्धि महर्षिः पूर्वतनमेव विज्ञानमुदाहरणतः पोषयति । यथा हि नगाधिराजो हिमालयोऽखिलानामपि लौकिकैश्वर्य्याणां गोपायिता तथैवाध्यात्माधिदैवाधिभौतिकशुद्धित्रयमपि वर्णाश्रमिणां मानवानां सर्वस्याप्यभ्युदयकरस्य कार्य्यजातस्य रक्षितृ । हिमालय-पर्वताश्रिता एव धरातलस्थाः सर्वे उद्भिज्जाः

प्राणिनः प्राणन्ति । केऽपि पशुपक्षिणो नालोक्यन्ते ये हिमालयस्य विशाले काये नाश्रयमाश्रित्य क्रीडन्ति । यथा हि पर्वतपतिः हिमालयः सुवर्णादिसर्वप्रकाराणामपि धातूनामाश्रयः, हीरकादीनां सर्वेषामपि रत्नानामाकरः, तथैव वर्णस्य त्रिविधाभिरपि शुद्धिभिः वर्णानामाश्रमाणां चोभयेषामपि धर्माणां शुद्धिः परिरक्षिता भवति । आर्य्यजातिश्च शाश्वतं जीवन्ती यज्ञादिस्वाभ्युदयकरान् धर्मान् अनुतिष्ठन्ती स्वार्य्यत्वं सनातनमभिरक्षति । यज्ञादिशुभकर्मानुष्ठानेन देवर्षिपितृगणानामप्यभ्युदयः समेधते । वस्तुतः शुद्धित्रयेष्वेव सर्वमप्याश्रितं वर्णाश्रमधर्मस्येति विवेकः ॥ १०५ ॥

कथं गुणसंस्कार-क्षय इति वर्णधर्मविज्ञानपरिपुष्टये प्रतिपादयति—

## गुण-संस्कार-ह्रासं परिणामात् ॥ १०६ ॥

गुण-संस्कार विकाशस्य शरीरेण सह साक्षात् सम्बन्धः । तत्रापि गुणविकाशस्य स्थूलशरीरमेवाधार इति गुणसंस्कारेण सह स्थूलशरीरस्यैव सन्निहितः सम्बन्धः । इत्यत एव धर्माचार्य्यै र्जन्मनैव सह वर्णधर्मस्य घनिष्ठः सम्बन्धो निरूपितः । तथा च मनुः—

> अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत् ।
> प्रणीतश्चाप्रणीतश्च यथाग्नि र्दैवतं महत् ॥

श्रीमता भगवतापि—

अविद्यो वा सविद्यो वा ब्राह्मणो मामकी तनुरिति । निजमुखेनैव प्रस्तुतम् ।

विज्ञानमिदमन्यथाऽपि बोद्धुं शक्यते । तथा हि-पूर्वजन्मार्जितप्रारब्धपरिणामतो जात्यायुर्भोगप्रकृतिप्रवृत्तिरूपपञ्चानां तत्त्वानामुपलब्धिर्भवति । तत्र तत्त्वपञ्चके त्रीणि प्रधानानि द्वे चाप्रधाने सम्मते । अत एव मुख्यगौणविचारणया प्रथमानां त्रयाणां स्थूलशरीरेणैव सन्निहितः सम्बन्ध उत्तरयो र्द्वयोस्तु सूक्ष्मशरीरेणैव नैकटिकः सम्बन्धः । अत्रापि गुणसंस्कार एव कारणम् । शरीरपरिणामेन सार्धं गुणसंस्कारस्य ह्रासः इति साधारणो नियमः ।

अपरतश्च यावत्स्थूलशरीरस्थितिस्तावत् प्रारब्धजन्यगुणसंस्कारेण सार्धं जीवो दृढवद्धस्तिष्ठति । यदा च तस्य शरीरस्य विच्युतिर्जायते तदैव तस्मात् संस्कारात् पूर्णतया तस्य विमोको भवति ।

उदाहरणतो यथा-सत्त्वप्रधानत्वेन ब्राह्मणस्य, रजःसत्त्वप्रधानतया क्षत्रियस्य, रजस्तमःप्रधानत्वाद्वैश्यस्य, तमःप्राधान्येन च शूद्रस्येत्येवं चतुर्णामपि वर्णानां मध्ये क्षत्रियस्योदाहरणमाश्रित्यावगमनीयञ्चेदित्थम्—यथा क्षत्रिय-

शरीरे रजःसत्त्वस्य यत् प्राधान्यम् वर्तते । तस्मादेव हेतोः तत्प्रभावो जात्यायुर्भोगप्रकृतिप्रवृत्तिषु च यदवलम्ब्यते तस्यास्तित्वं जीवस्य सर्वास्वप्यवस्थासु कयापि विधया तिष्ठत्येव । केवलं परिणामत एव तस्य, ज्ञानं सम्पद्यते । इत्यत एव हेतो ब्राह्मणशरीरधारिणः क्षत्रियशरीरधारिणश्चावतारस्य, तथा ब्राह्मण-क्षत्रिय-शरीरधारिणो र्जीवितेऽप्याचारव्यवहारयो र्महान् भेदः प्रतीयते । सर्वेऽपीमे संस्कारा यथायोग्यं यथासमयं परिणामत एव दृश्यन्ते ॥ १०६ ॥

प्रसङ्गतः शङ्कासमाहिती ब्रूते—

तल्लङ्घनमसाधारणनियमात् ॥ १०७ ॥

तस्य संस्कारस्य लङ्घनम् अतिक्रमणम् असाधारणनियमाद् भवतीति सूत्रार्थः ।

ननु संस्कार-रहस्यस्यातिदृढतयाऽपरिवर्तनशीलत्वात् कथं विश्वामित्रस्य क्षत्रियशरीरस्यापि सतो ब्राह्मणत्वाभिसम्पत्तिः ? कथं वा नन्दिकेश्वरो महात्मा मनुष्यशरीरस्य गुणसंस्कारेण विरहितो भूत्वा देवत्वमुपजगाम, कथञ्च परशुरामावतारो ब्राह्मणशरीरसम्पन्नोऽपि क्षत्रियत्वलक्षण-सम्पन्नो बभूव ? इत्यादि शङ्कायाः समाहितौ सूत्रकृदभिदधाति । यद्—असाधारणतपःशक्त्या तथैव च योगशक्त्या तथाविधयैव वैदिककर्मशक्त्या चेदृशगुणसम्बन्धिनः संस्कारस्य परिवर्तनं भवितुमर्हति । तपसो माहात्म्यं हि सर्वश्रेष्ठं जगीयते । सर्वोऽप्ययं संसृतिविलासस्तपःपरिणाम एवेति यजुर्वेदीय-तैत्तरीयोपनिषद्—

"सोऽकामयत बहु स्यां प्रजायेयेति ।
स तपोऽतप्यत स तपस्तप्त्वा ।
इद ँ सर्वमसृजत यदिदं किञ्च ।
तत् सृष्ट्वा तदेवानुप्राविशत् ।"

एवमेवाथर्वण-वेदीय-मुण्डकोपनिषदि प्रतिपादितम् ।

तपसा चीयते ब्रह्म ततोऽन्नमभिजायते ।
अन्नात् प्राणो मनः सत्यं लोकाः कर्मसु चाऽमृतम् ।

स्मृतावपि—

यद्दुस्तरं यद्दुरापं यद्दुर्गं यच्च दुष्करम् ।
तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम् ।

इत्यादि तपोमहिमा केन तिरोहितः ।

एवञ्च महर्षे विश्वामित्रस्यामानवं तपश्चर्य्यं महात्मनो नन्दिकेश्वरस्यालौकिकं योगवलं, श्रीमद्भगवदवतारस्य श्रीपरशुरामस्य गर्भवासावतरणवेलायामेव दैव्या क्रियया वैदिकयज्ञीयचरौ वैशेष्याधानम् । सर्वमप्येतद् असाधारणनियमस्यैव जाज्वल्यमानो जागरूको दृष्टान्तः ॥ १०७ ॥

इदानीमन्यादृशस्य संस्कारस्य सम्बन्धेऽपीदमभिदधाति—

भावे स्वातन्त्र्यम् ॥ १०८ ।

गुण-संस्कारहाने यत्काठिन्यम् न तद्भावसंस्कारहाने आधिभौतभावस्याधिदैवभावे तस्याप्याध्यात्मभावेऽथवा परस्परं सर्वेषामप्येषामेकस्यान्यस्मिन् भावे संस्कारपरिवर्तनं सरलम् । सर्वमप्येतद्भावात्मकसंस्कार-परिवर्तनम् अभ्यासतः शनैः शनैः साधनेन सम्पद्यते । ज्ञानबलसाहाय्यमाश्रित्य तु द्रुतमेव सम्पद्यते । अशनायोदन्ये हि जीवानां प्रधानं जीवनावलम्बनम् । तच्च स्वीयं भोजनं 'ममेदं भोज्यमिति' बुद्धिं विहाय "यद्ददासि यदश्नासि यज्जुहोषि करोषि यत् यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणमिति" भगवदनुशासनानुरूपं श्रीमद्भगवते समर्प्य तदीयप्रसादबुद्ध्या ग्रहीतुं भगवद्भक्ताः चिराभ्यासतः संसाधयितुमर्हन्ति । एवं हि, मदीया स्त्री मद्भोग्येति, मतिमन्तर्धाय—

'स्त्रियः समस्ताः सकला जगत्सु' ।

इति शास्त्रानुशासनानुकूलं कालान्तरेणोपासकः सर्वास्वपि नारीषु ब्रह्मप्रकृतित्वधारणामेव स्थिरीकर्तुं क्षमन्ते । तद्वदेव तत्त्वज्ञानी पुमान् स्वज्ञानबलसाहाय्यमाश्रित्य स्वशरीरेऽपि दृश्यबुद्धिमधिगच्छति । फलत आधिभौतिके आध्यात्मभावपरिवर्तनं प्रतिक्रियञ्च दैवसम्बन्धस्थापनया आधिभौतिकभावे आधिदैविकभावपरिवर्तनं विदधाति । एवञ्च सर्वत्रैव सर्वस्यापि विनियमनं द्रुतमेव कर्तुमर्हति । तेन च प्रकृतिचक्रगतिं निर्बाधमतिक्रामन् मुक्तिपथं परिष्करोतीति ॥१०८॥

पुरुषधर्मेण सह तेषां सम्बन्धं सूचयति—

शक्तित्रयमपेक्ष्यं पुरुषे उद्भिद्बीजवत् ॥ १०९ ॥

गुण-परिणामे भावपरिणामे चाशुतरं साफल्यावाप्तये पुरुषे त्रिविधभावशक्तिप्राप्तिरावश्यकी ।

यथा हि—उद्भिज्जश्रेणिगेषु जीवेषु बीजात् फलोपलब्धये पृथिवीजलकालानां त्रयाणामेव शक्तिराकाङ्क्षिता, तथैव पुरुषाणामपि निःश्रेयसोपलब्धये

त्रयाणामेवावश्यकत्वम् । स्त्रीजातेरभ्युदयनिःश्रेयसोपलब्धये या सुगमा सरला पद्धतिरपेक्ष्यते पुरुषाणां कृते तु सा दुर्गमा । इत्यत एव त्रिविधशुद्धिविचारः पुरुषधर्मे एव गृह्यते ॥ १०६ ॥

पुरुषधर्मरहस्यमुक्त्वेदानीं वर्णाश्रमधर्मरहस्यमुच्यते ।

**एकेनान्यस्य योगसमापत्तिः ॥ ११० ॥**

केवलेन त्रिविधशुद्धिविवेकेन तु पुरुषवर्गस्याध्यात्मिकोन्नतिः सम्भाव्यते। परन्तु तस्यैवाभ्युदयनिःश्रेयसयो र्ध्रुवोपलब्ध्यै मानववर्गस्य चाधःपातनिरोधाय निश्चितमार्गमभिधत्ते ।

यदा जीवो भाव-संस्कारेण सह गुणसंस्कारस्य यथायोग्यं संयोगं कृत्वा उन्नतो भवति तदैवेदृशस्यालौकिकस्य सार्वजनीनस्य फलस्याधिगमो भवति। एतद्विज्ञानमूलकमेव वर्णाश्रमधर्मसंस्थापनमूहनीयम् ॥ ११० ॥

तदेव विज्ञानं विस्पष्टयितुमाह—

**वर्णधर्मेणैकस्य ॥ १११ ॥**

संस्कारसमापत्तिविचारणया वर्णधर्मो हि सर्वाभ्यर्हितः । यतो हि वर्णधर्मेण गुणसम्बन्धिनः संस्कारस्य सम्पादनं भवति । अद्सीयं विज्ञानन्तु पूर्वमेव निर्धारितम्—यद् रजोवीर्याभ्यां गुणसंस्कारः समाकृष्यते । भोगेन च तद्धानं भवति, हाने सति मुक्तिमार्गः सरलः सम्पद्यते ।

वर्णधर्मस्याचारो हि एवंविधैरेव कौशलपूर्णक्रियाङ्गैः निर्णीतो विद्यते येन तदनुष्ठानतः स्वत एव गुणसंस्कारस्य भावसंस्कारसम्पर्कतोऽस्वाभाविकस्यांशस्य क्षयेण स्वाभाविकांशस्य चाभिव्यक्त्या च जीवो मुक्तिभूमिमारोहति ॥ १११ ॥

सम्प्रति द्वितीयस्य तदाह—

**आश्रमधर्मेणान्यस्य ॥ ११२ ॥**

वर्णधर्मस्य शक्तिरहस्यं पूर्वसूत्रे सम्यगभिधायेदानीमाश्रमधर्मस्य माहात्म्यं प्रख्यापयितुमाह । आश्रमधर्माचारसङ्घतो भावसंस्कारेण गुणसंस्कारसंम्पर्कः । वर्णधर्मः प्रवृत्तिरोधक आश्रमधर्मस्तु निवृत्तिपोषक इति पूर्वमप्यभिहितम् । वर्णधर्मतो गुणसंस्कारस्याश्रमधर्मतो भावसंस्कारस्य चाकृष्ट्या स्वत एव क्रमशो हानं भवति । ततश्च जीवः सर्वेषामेव संस्काराणां विलयनात्मकं निर्विकल्पस्वरूपमधिगन्तुं स्वत एवाग्रेसरो भवति । इत्यत एवाख्यातं जाबालश्रुतौ—

ब्रह्मचर्य्यं परिसमाप्य गृही भवेत् ॥
गृही भूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेत् ॥

अतश्च यो हि मानवस्तदीयसमाजो वा वर्णाश्रमधर्मं यथार्थतः परिपालयितुं बद्धपरिकरो भवति । तस्योभयोः संस्कारयोः सहैव सम्पर्कतया क्रमश आध्यात्मिकभूमौ क्रमाभ्युदयो निश्चित इति वर्णाश्रमधर्मस्यानिर्वचनीयमनुल्लङ्घनीयञ्च महत्त्वम् ॥ ११२ ॥

यद्येवं न स्यात्तर्हि--किं भवेदित्याह--

अन्यथाऽधःपातो निर्बन्धप्रवाहवत् ॥११३॥

यदि कश्चन जिज्ञासुरित्थमाशङ्केत यद् यो हि मानवो मानवसमाजो वा वर्णाश्रमधर्मं नाङ्गीकरोतिः का स्यात्तदीयाऽवस्थेति—शङ्कामिमां समाधातुमेवेदं सूत्रमसूत्रयत्सूत्रकारः ।

तथा हि–यथा सेतुं बध्वा जलप्रवाह उद्गमस्थानात् गन्तव्यस्थानं यावत् प्राप्यते । परन्तु मध्ये सेतु–भग्नतायां जलप्रवाहो विचलितो भूत्वा निम्नपथप्रसृतो नष्ट-भ्रष्टो जायते, न स प्रवाहः स्वगन्तव्यस्थानं प्राप्नोति, तथैव मानवसमाजस्य क्रमोन्नतिप्रवाहकृते सेतुस्वरूपो वर्णाश्रमधर्मो यस्मिन् मानवसमुदाये नाङ्गीक्रियते, स हि मानवसङ्घः कालान्तरेण धरातलादुच्छिन्नो नष्टभ्रष्टो भूत्वा स्वनामशेषमेव करोति ।

स्वाभाविकस्य संस्कारस्य मुक्तिजनकत्वम् अस्वाभाविकस्य च बन्धननिदानतेति पूर्वमेव संसाधितम् । प्रथमतोऽस्वाभाविकस्य संस्कारस्य हानानन्तरं स्वाभाविकस्य क्रमविकाशो भवति, ततश्च क्रमशस्तस्यापि स्वाभाविकस्य हानेन गुणातीतं भावातीतमद्वैतं कैवल्यं पदं प्राप्यते । इयं हि मानवी क्रिया वर्णाश्रमधर्मस्वभावत एव सुतरां सम्पाद्यते । इत्यत एव वर्णाश्रमधर्मानुगा मानवजातिर्निर्बाधमेवाभ्युदयनिःश्रेयसाभिमुखी संसारयात्रामतिवाहयति ।

ननु वर्णाश्रमधर्माभिमानिनी आर्य्यजातिः कथमधःपातमध्याश्रयतीत्युत्तरयति—यथा हि सत्यत्रेताद्वापरकलियुगात्मकचतुर्युगानामभ्युदयः क्रमशः समेधते तथैव कालक्रमेणार्य्यजातिरपि रजोगुणबहुला जाग्रती सत्वाभिमुखी सम्पद्यते तदा हि तस्यां ज्ञानोद्यमशक्तिशान्त्यादिसमुन्नतानि लक्षणानि प्रकाशीभवन्ति । यदा च सा कालक्रमेण तमोगुणाच्छन्नाऽर्य्यजाति निद्राभिमुखी भूत्वा प्रमादालस्याज्ञाननिरुद्यमाशक्तिद्वेषाशान्तीर्प्यानैक्यानुदारतादितमोगुणवृत्तिमधितिष्ठति स एवाधःपातस्तदीयो निगद्यते । यथा हि मानवो दिने जागर्ति रात्रौ च निद्राति तथैवार्य्यजातिरपि कालप्रभावतश्चक्रनेमिक्रमेण कदाचिज्जागर्ति कदाचन स्वपिति । परन्तु तस्या वर्णाश्रमपक्षपातिन्या आर्य्यजाते र्न कदापि नाशो रूपान्तरं वा भवति ।

यस्यां मानवजातौ त्रिलोकपावनो वर्णाश्रमधर्म्मो न विद्यते रजोवीर्य्यशुद्धे-र्भावशुद्धेर्वा क्रमो नास्ति, सा हि कालस्य करालिकाया दुर्दमनीयाया वा गतेः प्रभावेण कालान्तरतोऽसभ्याऽनार्य्या भूत्वा नष्टभ्रष्टा विच्छिन्ना धरातल एव विलीयते ।

स्मृतिरपि प्रमाणयति—

यतो वर्णाश्रमैर्धर्मैर्विहीना सर्वथा ननु ।
असौ सृष्टिर्मानवानां कालिकायाः प्रभावतः ॥
प्रकृतेर्मे लयं याति कुत्रचित्समये स्वतः ।
धत्ते रूपान्तरं वासौ नात्र कार्य्या विचारणा ॥ ११३ ॥

प्रसङ्गत आर्य्यजाते र्लक्षणमभिधत्ते—

**आर्य्यजातिरुभयोपेता ॥ ११४ ॥**

उभाभ्यां वर्णधर्माश्रमधर्माभ्यामुपेता युक्ता आर्य्यजातिः ज्ञेयेति सूत्रार्थः । सर्वेषु मानवसङ्घेषु पूर्णावयवोपेतधर्माधिकारवत्या मानवजातेः श्रेणि-द्वयम् । एकाऽर्य्यजातिः द्वितीयानार्य्यजातिरिति । तत्र यस्यां जातौ वर्णधर्म आश्रमधर्मश्चेति द्वयोरपि धर्मयोरभ्युपगमः सा हि आर्य्यजातिः । मनुष्यजातौ जीवनमरणयोराध्यात्मिकशक्तेर्विद्यमानताभावयोर्यथा सन्निवेशस्तथैव वर्णाश्रम धर्मसम्बन्धोऽपि गुम्फितो विद्यते । एवञ्च तदनुकूलतया मानवजातेर्नाम-करणौचित्यचर्चायां वर्णाश्रमधर्माचारवत्या जातेरार्य्यजातिरिति पूर्वाचार्यैः कृता संज्ञा ।

तथा च स्मृतौ—

"कर्तव्यमाचरन् काममकर्तव्यमनाचरन् ।
तिष्ठति प्रकृताचारे स तु आर्य्य इति स्मृतः" ॥

अपरञ्च—

येवं सदाचारवर्णाश्रमधर्मानुगामिनी ।
सर्वस्वं मनुते वै । सार्यजातिरिति स्मृतिः ॥

निरुक्तकारो यास्कमुनिरपि "आर्य्य ईश्वरपुत्र" इति सञ्जगौ ॥ ११४ ॥

इदानीं विरुद्धधर्म्मावलम्बिनीरन्यजातीर्लक्षयति—

**तद्विपरीताऽनार्य्या ॥ ११५ ॥**

यत्र जातौ वर्णाश्रमधर्मौ नाश्रियेते सा हि अनार्य्यजातिरुच्यते । धरा-तलस्थासु अन्यमानवजातिषु पूर्वोक्त-धर्मसम्भावनयैवाचार्य्यैरिता जातीरनार्या

आहुः। तादृशी अनार्य्यकोटिस्थिता मानवजातिर्वलैश्वर्य्याद्यधिभौतिकोन्नति-विचारणया कियतः कालस्य कृते महाप्रभावशालिनी स्यादपि, परन्तु कालान्तरेण तस्या रूपान्तरस्य विलयनस्य चावश्यम्भावमालोच्यैवानार्य्याख्यया तामाह्वयन्ति पुराणाचार्य्याः।

स्मृतावपि—

एतद्भिन्नानार्य्यजातिः सदाचारविवर्जिता।
अन्यदप्येवमेवोह्यं नोच्यते विस्तृतेर्भयात्॥ ११५॥

जातिभेदप्रसङ्गेन मानवभेदमाह—

**मानवा देवासुरराक्षसास्त्रैगुण्यात्॥ ११६॥**

मनुष्यजातेः श्रेणिविभागं विधायाधुना महर्षिः सूत्रकारो लक्ष्यनिर्णयधिया मानवश्रेणीनां विचारपद्धतिमाह—

आर्य्यास्वनार्य्यासु वा जातिषु स्वाधिकारानुरूपम् उत्तममध्यमाधमभेदेन त्रैविध्यमवश्यमूहनीयम्। आर्य्यजातौ जन्मग्रहणाभिमानेनाहङ्काराश्रयणेनोन्नति-पथो न निरुद्धः स्यादिति द्वयोरपि श्रेण्योः पुरुषो वा नारी वा स्यादुभावपि गुणत्रयभेदतस्त्रिविधां श्रेणिमाश्रयत एव। सात्त्विकौ देवश्रेणिगौ राजसिका-वसुरश्रेणिगौ, तामसिकौ राक्षसश्रेणिस्थाविति। श्रीमद्भागवते भगवद्वाक्यम्—

एधमाने गुणे सत्त्वे देवानां बलमेधते।
असुराणां च रजसि तमस्युद्धव! रक्षसाम्॥

अन्यत्रापि—

त्रिधा ज्ञेया नरा नार्य्यो भेदात्त्रैगुण्यगोचरात्।
भवन्ति पितरस्तेषु सात्त्विका गुणमोहिताः॥
राजसा रूपमुग्धाश्च तामसाः काममोहिताः।
उर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः॥ ११६॥

तेषां प्रवृत्तीराह—

**परार्थ-स्वार्थ-परापकारपरताप्रवृत्तिः॥ ११७॥**

सत्त्वगुणावलम्बी देवकोटिगो मानवः परार्थी, रजोगुणाश्रयोऽसुरश्रे-णिस्थः स्वार्थी, तमोगुणाश्रितो राक्षसप्रकृतिकः परापकारपरायण इति त्रिधा मानवानां प्रवृत्तयो लक्ष्यन्ते। तत्र यः पुमान् या च नारी पराभ्युदयमङ्गलोन्न-त्यादिभिः स्वात्मानं कृतार्थं सम्मन्वाते परकीयैहलौकिकपारलौकिकाभ्युदय-

सम्पादनैकपरा एव कालं नयतः ताविह देवदेवीशब्दवाच्यौ । यौ च केवलं स्वार्थ-परायणौ स्वात्मन एव स्वार्थं सुखमभ्युदयं वा सहमन्येते तावेतावसुरसंज्ञाभाजौ । यौ च परापकारपरायणौ परेषामपकृत्याऽऽनन्दमश्नुवाते तौ राक्षससंज्ञकौ गर्हितौ मानवसमाजे हेयात्मानौ निगदितौ ।

प्राक्तनाः पूज्या महर्षयः कीदृशाः पक्षपातशून्या विश्वजनहितविधायकाः समदर्शिन आसन्निति सूत्रस्वारस्यम् । अनयाऽऽर्य्यानार्य्यसंज्ञया पूर्वोक्तयाऽत्यवै-ज्ञानिक-युक्तिसिद्धया कदाचन बुद्धिभेदमाश्रित्योभयोरप्यनयोर्जात्योः अन्यतरस्या वाऽपकारप्रवृत्तिः सम्भवेदिति द्वयोरपि याथार्थ्यतत्त्वविमर्शीकरणाय त्रिविधमा-नवश्रेणिरहस्यं प्राचीकशत् सूत्रकारः ।

स्मृतयोऽप्यमुमर्थमनुधावन्ति--

एके सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये ।<br>
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये ।<br>
तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये ।<br>
ये निघ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥<br>
त्रिधाः प्रकृतयो नृणामुत्तमाधममध्यतः ।<br>
देवोऽसुरो राक्षसोऽथ गुणभेदेन गीयते ॥<br>
आर्य्यानार्य्योभयास्तु सर्वत्रैवोपलभ्यते ।<br>
वर्तितव्यं प्रयत्नेन तत्प्रकृत्यनुशीलनात् ॥ ११७ ॥

आर्य्यजातेर्वैशिष्ट्यस्य मौलिकं सिद्धान्तं ब्रूते —

## गरीयस्त्वमियदार्य्यजातेः शुद्धित्रैविध्यात् ॥ ११८ ॥

आर्य्यजातेः प्रतिष्ठानिदानं हि शुद्धित्रैविध्यम् । तत्र ज्ञानेनाध्यात्मिकीं शुद्धिं कर्म्मणाधिदैवीं शुद्धिं रजोवीर्य्यपावित्र्येण चाधिभौतिकीं शुद्धिं सम्पादयन्ती आर्य्यजातिस्त्रिविधामपि शुद्धिं समानतयैव प्रतिष्ठापयति । आश्रमधर्म्मगता शिक्षापद्धतिराध्यात्मिक्याः शुद्धेर्जागरूको दृष्टान्तः । वर्णधर्म्मीया आचारा आश्रम-धर्म्मसम्बन्धिनश्च क्रियासिद्धान्तसमुच्चया आधिदैवीं शुद्धिं सम्पादयन्ति इति सर्वसम्मतो मार्गः । अपरञ्च जन्मनैव वर्णधर्म्मस्य दृढसम्बन्धभागित्वात् आर्य्य-नारीषु च आदर्शसतीधर्म्मस्य विद्यमानत्वाद् आधिभौतिकशुद्धिस्तु आर्य्यजातेरेव पैत्रिकी सम्पत्तिरिति नतमस्तकैः सर्वैरपि स्वीकरणीयमेव । कदाचिदार्य्यधर्म्मेतरेषु अन्यमानवकुलेषु वा आध्यात्मिकतया आधिदैव्या वा शुद्धेर्लक्षणं किञ्चिदुपलभ्येत

नाम, किन्तु रजोवीर्य्यशुद्धिः सतीधर्मनिदानीभूताधिभौतिकी शुद्धिस्तु वर्णाश्रम-मर्य्यादापालनपरायामार्य्यजातावेवोपलभ्यत इति सर्ववादिविदितो वृत्तान्तः ।

इत्यतश्चैकस्मिन्नेवार्य्यजातिरूपाधारे त्रिविधाया अपि शुद्धेरुपलभ्यमानतया आर्य्यजातेर्महत्त्वं सर्वाभ्यर्हितमिति सत्यपरायणैरुदारैर्बुद्धिमद्भिरवश्यं स्वीकरणीयमिति ॥ ११८ ॥

आर्य्यजातेरपरं विशेषमाह—

## श्लाघनीया देवानाम् ॥ ११९ ॥

चतुर्दशसु भुवनेषु मृत्युलोकोऽयं चतुर्दशानामपि विभागानां चतुर्थो विभागः । अन्ये त्र सर्वेऽपि लोका भोगभूमय एव । ऊर्ध्वेषु सप्तसु देवभोगस्य निम्नस्थेषु च सप्तसु आसुरभोगस्य नरकप्रेतलोकयोस्तु दुःखभोगस्याधिकारपूर्णत्वात् तेषु लोकेषु कर्माधिकाराभावात् प्रधानतया तत्सम्पादनेनाभ्युदयनिःश्रेयससम्प्राप्त्यवसरानुपलब्धेः ध्रौव्यात् ते लोका न कर्मभूमय इति निश्चितम् । तत्रैवं सति मृत्युलोकस्य कर्मभूमित्वात्तत्रोत्पन्नायामार्य्यजातौ स्वभावत एव त्रिविधशुद्धेः साहाय्योपलब्धेरियमार्य्यजातिरयमार्य्यावर्तदेशश्च देवानामपि श्लाघनीयौ ।

स्मृतावप्युक्तम्—

"गायन्ति देवाः किल गीतकानि धन्यास्तु ते भारतभूमिभागे ।
स्वर्गापवर्गास्पदमार्गभूते भवन्ति भूयः पुरुषाः सुरत्वात् ॥
कर्म्माण्यसङ्कल्पित-तत्फलानि संन्यस्य विष्णौ परमात्मभूते ।
अवाप्य तां कर्ममहीमनन्ते तमालयं ते त्वमलाः प्रयान्ति ॥
जानीम नैतत् क वयं विलीने स्वर्गप्रदे कर्मणि देहबन्धम् ।
प्राप्स्याम धन्याः खलु ते मनुष्याः, ये भारते नेन्द्रियविप्रहीनाः ॥"

अन्यतश्च देवर्षिपितृरूपत्रिविधानामपि देवानां प्रसन्नतया सह वर्णाश्रमधर्म्मावलम्बिन्या आर्य्यजातेः कीदृशो घनिष्ठः सम्बन्ध इत्यस्य जाज्वल्यमानं प्रमाणं दैवीमीमांसादर्शनम्, श्रुतयः स्मृतयः पुराणानि चोहनीयानि ॥ ११९ ॥

अन्यच्च—

## देवसम्बर्द्धितमार्य्याणाम् ॥ १२० ॥

देवलोकसञ्चालका देवास्त्रिधा विभक्ताः सन्ति । तेषां त्रयाणामपि सम्बर्द्धनायोपाया अपि पृथगेव स्वातन्त्र्येण परिच्छिद्य दैवीमीमांसादर्शने परिगणिताः । तथा हि—"ब्रह्मयज्ञादिभिः प्रोजिता ऋषयः"

'देवयज्ञादिभिर्देवाः ।'

'पितृयज्ञादिभिःपितरः ।'

दैवराज्यस्याधर्णनिरुत्तत्र विश्वासस्थैर्य्यम्, दैवराज्यसञ्चालनसम्बर्द्धनःतदनन्तरं विविधानां यज्ञमहायज्ञानामनुष्ठानम् इत्यादयोऽनेके देवप्रसादकरा गुणराशय आर्य्यजातौ विद्यन्त इति आर्य्यजातिर्देवलोकसम्बर्द्धनस्य प्रधानं निदानमिति सिद्धम् ॥ १२० ॥

अन्यमपि विशेषमभिधत्ते—

**धर्म्मपोषकत्वञ्च ॥ १२१ ॥**

वर्णाश्रमधर्म्मप्राणा आर्य्यजातिरेव वस्तुतो धर्मपोषिका । यद्यपि धरातलस्थिता अन्या अपि जातयो विभिन्नधर्म्मलक्षणशालिन्यो दृश्यन्ते, तथापि तासां धर्मस्वरूपस्य संकीर्णभावापन्नत्वात्र तासु साधारणधर्मस्य सर्वाण्यपि लक्षणान्युपलभ्यन्ते । नापि तासु विशेषधर्मस्यापि महत्त्वं प्रकाशितमासाद्यते । तासु चाध्यात्मिकज्ञानसंकीर्णतया आपद्धर्म्मसाधारणधर्म्मयोरपि विज्ञानाद्यगतेरभावः ।

अन्यच्च विचारणीयोऽयं विषयो यद् आधारस्य पूर्णतायामेवाधेयः सर्वथा स्वस्थितिमासादयितुमर्हतीति । इत्थञ्च यस्या जातेः सामाजिकी शृङ्खला वर्णाश्रमधर्म्मात्मकदृढस्तम्भे निबद्धा, यस्यां जातौ रजोवीर्य्यशुद्धिविवेकतो जातीयाधःपातपथोऽवरुद्धः, यस्याश्च जातेः सदाचारेषु आध्यात्मिकलक्ष्यपूर्ण-विचारणया अर्थकामापेक्षया धर्ममोक्षयोरेवादरः सद्योपलभ्यते, यस्याश्च जातेः धर्म्मविज्ञानं साधारणासाधारणापद्विशेषधर्म्मादिसर्वाङ्गपरिपूर्णं तस्याः जातेर्धर्म्मपोषकत्वे कः सन्देहः ॥ १२१ ॥

प्रसङ्गसङ्गत्या जातिनिर्णयविज्ञानमाह—

**जातिनिर्णयो गुणसम्बन्धात् ॥ १२२ ॥**

वर्णाश्रमप्रसङ्गेन जातित्वस्य ततश्च आर्य्यानार्य्यभेदेन तद्विषयविस्तारस्य च वर्णनं निशम्य यदि कश्चन जिज्ञासेत चेद् यदन्यत्र जातिनिर्णयः कथं स्यादिति तत्रोत्तरमाह—गुणानां सत्त्वरजस्तमसां सम्बन्धात् जातेः सर्वविधायाः निर्णयो निश्चयो भवतीति शेषः ।

यथा गुणविचारणया ब्राह्मणत्वजाते विज्ञानं विवृतम्, यथा च आध्यात्माधिभौतलक्ष्यात्मकभेदलक्षणगुणभेदेनैव आर्य्यानार्य्योर्द्वयविभागो विहितः । इत्थमेव गुणविचारेण सर्वेष्वपि भूतसमुदायेषु जातिविभागनिर्णयो भवितुमर्हतीति निःसन्दिग्धः पन्थाः ॥ १२२ ॥